अथमिताक्षराध्यायत्रयानुक्रमणिकाप्रारंभः

श्रीगणेशायनमः श्रीसरस्वत्यैनमः श्रीगुरुभ्योनमः अथयाज्ञवल्क्यस्मृतिमिताक्षरानुक्रमणिकाप्रारंभः अथआचाराध्यायानुक्रमणिकालिख्यते

अथयाज्ञवल्क्यस्मृतिमिताक्षराप्रारभ्यते.

श्रीगणेशायनमः श्रीसरस्वत्यैनमः श्रीगुरुभ्योनमः श्रीमद्ग्रंथकृद्भ्योनमः धर्माधर्मौतिह्रिकाराश्चयोपिक्लेशाः पंचप्राणिनामायतनंते यस्मिन्नेतैर्नैपरामृ-
ष्टईशोयस्तंवंदेविष्णुमोंकारवाच्यम् १ याज्ञवल्क्यमुनिभाषितंमुहुर्विश्वरूपविकटोक्तिविस्तृतम् धर्मशास्त्रमृजुभिर्मिताक्षरैर्बालबुद्धिविधयेविविच्यते
२ याज्ञवल्क्यशिष्यः कश्चित्प्रश्नोत्तररूपंयाज्ञवल्क्यप्रणीतंधर्मशास्त्रंसंक्षिप्यकथयामास यथामनुनोक्तंभृगुः तस्यचायमाद्यश्लोकः योगिनांसनकादी-
नामीश्वरःश्रेष्ठस्तंयाज्ञवल्क्यसंज्ञंसंपूज्यमनोवाक्कायकर्मभिः पूजयित्वामुनयः सामश्रवःप्रभृतयःश्रवणधारणयोग्याअब्रुवन्उक्तवंतः धर्मान्नोस्मभ्यं-
ब्रूहीति कथंअशेषतःकार्त्स्न्येन केषांवर्णाश्रमेतराणां वर्णाब्राह्मणादयः आश्रमाब्रह्मचारिप्रभृतयः इतरेअनुलोमप्रतिलोमजातामूर्धावसिक्तादयः इ

श्रीगणेशायनमः योगीश्वरंयाज्ञवल्क्यंसंपूज्यमुनयोब्रुवन् वर्णाश्रमेतराणांनोब्रूहिधर्मानशेषतः १

तरशब्दस्यद्वंद्वेचेतिसर्वनामसंज्ञाप्रतिषेधः अत्रचधर्मशब्दःषड्विधस्मार्त्तधर्मविषयः तद्यथा वर्णधर्मः आश्रमधर्मः वर्णाश्रमधर्मःगुणधर्मःनिमित्तधर्मः
साधारणधर्मश्चेति तत्रवर्णधर्मोनित्यंमद्यंब्राह्मणोवर्जयेदित्यादिः आश्रमधर्मअग्नींधनभैक्षचर्यादिः वर्णाश्रमधर्मः पालाशोदंडोब्राह्मणस्येत्येवमादिः
गुणधर्मःशास्त्रीयाभिषेकादिगुणयुक्तस्यराज्ञः प्रजापालनादिः निमित्तधर्मोविहिताकरणप्रतिषिद्धसेवननिमित्तंप्रायश्चित्तं साधारणोधर्मः अहिंसादिः
नहिंस्यात्सर्वभूतानीत्याचांडालंसाधारणोधर्मः श्रुत्युक्तः शौचाचारांश्चशिक्षयेदित्याचार्यकरणविधिप्रयुक्तत्वाद्धर्मशास्त्राध्ययनस्यप्रयोजनादिकथनं

नातीवोपयुज्यते तत्रचायंक्रमः प्रागुपनयनात्कामचारकामवादकामभक्षाः ऊर्ध्वमुपनयनात्प्राग्वेदाध्ययनोपक्रमाद्धर्मशास्त्राध्ययनं ततोधर्मशास्त्र
विहितयमनियमोपेतस्यवेदाध्ययनं ततस्तदर्थजिज्ञासाततस्तदनुष्ठानमिति तत्रयद्यपिधर्मार्थकाममोक्षाःशास्त्रेणानेनप्रतिपाद्यंतेतथापिधर्मस्यप्राधा
न्याद्धर्मग्रहणंप्राधान्यंचधर्ममूलत्वादितरेषां नचवक्तव्यंधर्ममूलोर्थोर्थमूलोधर्मइतिअविशेषइति यतोर्थमंतरेणापिजपतपस्तीर्थयात्रादिनाधर्मनिष्प

मिथिलास्थःसयोगींद्रःक्षणंध्यात्वाब्रवीन्मुनीन् यस्मिन्देशेमृगःकृष्णस्तस्मिन्
धर्मान्निबोधत २

त्तिः अर्थलेशोपिनधर्ममंतरेणेति एवंकाममोक्षावपीति १ एवंपृष्टः मिथिलानामनगरीतत्रस्थितःसयाज्ञवल्क्यः योगीश्वरः क्षणंध्यात्वा किंचित्कालंमनःस
माधायएतेश्रवणाधिकारिणोविनयेनपृच्छंतीतियुक्तमेतेभ्योवक्तुमित्युक्तवान्मुनीन् किंयस्मिन्देशेमृगः कृष्णस्तस्मिन्धर्मान्निबोधतेति कृष्णसारोमृगो
यस्मिन्देशेस्वच्छंदंविहरतितस्मिन्देशेवक्ष्यमाणलक्षणाधर्माअनुष्ठेयानान्यत्रेत्यभिप्रायः शौचाचारांश्चशिक्षयेदित्याचार्यस्यधर्मशास्त्राध्यापनविधिः २

शिष्येणतदध्ययनंकर्त्तव्यमितिकुतोवगम्यतइत्यतआह पुराणंब्राह्मादि न्यायस्तर्कविद्या मीमांसावेदवाक्यविचारः धर्मशास्त्रंमानवादि अंगानिव्याकरणा
दीनिषट् एतैरुपेताश्चत्वारोवेदाः विद्याःपुरुषार्थसाधनज्ञानानितासांस्थानानिचचतुर्दश धर्मस्यचचतुर्दशस्थानानिहेतवः एतानिचत्रैवर्णिकैरध्येतव्यानि
तदंतर्भूतत्वाद्धर्मशास्त्रमप्यध्येतव्यं तत्रैतानिब्राह्मणेनविद्याप्राप्तयेधर्मानुष्ठानायचाधिगंतव्यानि क्षत्रियवैश्याभ्यांधर्मानुष्ठानाय तथाचशंखेनविद्यास्थाना
न्यनुक्रम्योक्तं एतानिब्राह्मणोधिकुरुतेसचवृत्तिंदर्शयतीतरेषामिति मनुरपिद्विजातीनांधर्मशास्त्राध्ययनेधिकारोब्राह्मणस्यप्रवचनेनान्यस्येतिदर्शयति निषे

पुराणन्यायमीमांसाधर्मशास्त्रांगमिश्रिताः वेदाःस्थानानिविद्यानांधर्मस्यचचतुर्दश ३ मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोंगिराः
यमापस्तंबसंवर्त्ताःकात्यायनबृहस्पती ४ पराशरव्यासशंखलिखितादक्षगौतमौ शातातपोवसिष्ठश्चधर्मशास्त्रप्रयोजकाः ५

कादिश्मशानांतोमंत्रैर्यस्योदितोविधिः तस्यशास्त्रेधिकारोस्मिन्ज्ञेयोनान्यस्यकस्यचित् विदुषाब्राह्मणेनेदमध्येतव्यंप्रयत्नतः शिष्येभ्यश्चप्रवक्तव्यंसम्यङ्ना
न्येनकेनचिदिति ३ अस्तुधर्मशास्त्रमध्येतव्यंयाज्ञवल्क्यप्रणीतस्यास्यशास्त्रस्यकिमायातमित्यतआह उशनः शब्दपर्यंतोद्वंद्वैकवद्भावः याज्ञवल्क्यप्रणीत
मिदंधर्मशास्त्रमध्येतव्यमितिभावः नेयंपरिसंख्याकिंतुप्रदर्शनार्थमेतत् अतोबौधायनादेरपिधर्मशास्त्रत्वमविरुद्धम् एतेषांप्रत्येकंप्रामाण्येपिसाकां
क्षाणामाकांक्षापरिपूरणमन्यतः क्रियते विरोधेत्वनुविकल्पः ४ ५ ७ ७ ७ ७ ७ ७

इदानींधर्मस्यकारकहेतूनाह देशोयस्मिन्देशेमृगः कृष्णइत्युक्तलक्षणः कालःसंक्रान्त्यादिः उपायःशास्त्रोक्तेतिकर्त्तव्यताकलापः द्रव्यंप्रतिग्रहादिलब्धं गवादि श्रद्धा आस्तिक्यबुद्धिः तदन्वितंयथाभवतितथा पात्रंनविद्यतेस्येवमादिवक्ष्यमाणलक्षणं प्रदीयतेयथानप्रत्यावर्त्ततेतथापरस्वत्वापत्त्यवसानंत्यज्यते एतद्धर्मस्योत्पादकं किमेतावदेवनेत्याह सकलमिति अन्यदपिशास्त्रोक्तंजातिगुणयागहोमादितत्सकलंधर्मस्यकारकं जातिगुणद्रव्यभावार्थात्मकंचतुर्विधंधर्मस्यकारकमित्युक्तंभवति तच्चसमस्तंव्यस्तंवायथाशास्त्रंद्रष्टव्यम् श्रद्धासर्वत्रानुवर्त्ततएव ६ इदानींधर्मस्यज्ञापकहेतूनाह श्रुतिर्वेदः स्मृतिर्धर्मशा-

देशेकालउपायेनद्रव्यंश्रद्धासमन्वितम् पात्रेप्रदीयतेयत्तत्सकलंधर्मलक्षणम् ६ श्रुतिःस्मृतिःसदाचारःस्वस्यचप्रियमात्मनः सम्यक्संकल्पजःकामोधर्ममूलमिदंस्मृतम् ७ ईज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् अयंतुपरमोधर्मोयद्योगेनात्मदर्शनम् ८

स्त्रं तथाचमनुः श्रुतिस्तुवेदोविज्ञेयोधर्मशास्त्रंतुवैस्मृतिरिति सदाचारःसतांशिष्टानामाचारः अनुष्ठानंनाशिष्टानां स्वस्यचात्मनःप्रियं वैकल्पिकेविषये यथागर्भाष्टमेष्टमेवाब्देइत्यादिषात्मेच्छैवनियामिका सम्यक्संकल्पाज्जातः शास्त्राविरुद्धःकामः यथामयाभोजनव्यतिरेकेणोदकंनपातव्यमिति एतेधर्मस्यमूलंप्रमाणं एतेषांविरोधेपूर्वपूर्वबलीयस्त्वं ७ देशादिकारकहेतूनामपवादमाह ईज्यादीनांकर्मणां अयमेवपरमोधर्मः यद्योगेनबाह्यचित्तवृत्तिनिरोधेनात्मनोदर्शनंयाथातथ्यज्ञानम् योगेनात्मज्ञानेदेशादिनियमोनास्तीत्यर्थः तदुक्तं यत्रैकाग्रतातत्राविशेषादिति ८ ॐ ॐ ॐ

कारकहेतुषु ज्ञापकहेतुषु वा संदेहे निर्णयहेतुमाह चत्वारो ब्राह्मणाः वेदशास्त्रधर्मज्ञाः पर्षत् तिस्रो विद्या अधीयंत इति त्रैविद्याः तेषां समूहस्त्रैविद्यं धर्मशास्त्र-
ज्ञत्वमत्राप्यनुवर्त्तते तेन त्र्यापर्षत् सा पूर्वोक्तापर्षत् यं ब्रूते स धर्मः अध्यात्मज्ञानिषु निपुणतमो वेदधर्मशास्त्रज्ञश्च एकोपि वा यं ब्रूते सोऽपि धर्मः ९ इत्युपोद्घातप्रकरणं
एतैर्नवभिश्लोकैः सकलशास्त्रोपोद्घातमुक्त्वा इदानीं वर्णादीनां धर्मान्वक्तुं प्रथमं तावद्वर्णानाह ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारो वर्णाः वक्ष्यमाणलक्षणास्तेषामा-
द्यास्त्रयो ब्राह्मणक्षत्रियवैश्या द्विजाः द्विर्जायंत इति द्विजाः तेषां द्विजानां वै एव न शूद्रस्य निषेकाद्याः निषेको गर्भाधानमाद्यो यासां तास्तथोक्ताः श्मशानं पितृवनं त-

चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा सा ब्रूते यं स धर्मः स्यादेको वाध्यात्मवित्तमः ९ ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः नि
षेकाद्याः श्मशानांतास्तेषां वै मंत्रतः क्रियाः १० गर्भाधानमृतौ पुंसः सवनं स्पंदनात्पुरा षष्ठेष्टमे वा सीमंतो मास्येते जातकर्म च ११ अहन्येकाद
शे नाम चतुर्थे मासि निष्क्रमः षष्ठेन्नप्राशनं मासि चूडा कार्या यथाकुलं १२

त्संबंधि कर्म अंतो यासां ताः क्रिया मंत्रैर्भवंति १० इदानीं ताः क्रिया अनुक्रामति गर्भाधानमित्यनुगतार्थकर्मनामधेयं एवं वक्ष्यमाणान्यपि तद्गर्भाधानमृतौ ऋतु-
काले वक्ष्यमाणलक्षणे पुंसवनाख्यं कर्म गर्भचलनात्पूर्वं षष्ठेष्टमे वा मासि सीमंतोन्नयनं एते च द्वे पुंसवनसीमंतोन्नयने क्षेत्रसंस्कारकर्मत्वात्सकृदेव कार्ये न प्रति
गर्भं यथाह देवलः सकृत्संस्कृता नारी सर्वगर्भेषु संस्कृतेति एते आइते आगते गर्भकोशात्कुमारे जाते जातकर्म एकादशेहनि नामकरणं तच्च पितामहमातामहादिसंबद्धं कुलदेवतासंबद्धं वा यथाह शंखः कुलदेवतासंबद्धं पिता नाम कुर्यादिति चतुर्थे मासि निष्क्रमलक्षणं कर्म सूर्यावेक्षणं कर्म षष्ठे मास्यन्नप्राशनं कर्म चू
डाकरणं तु यथाकुलं कार्यमिति प्रत्येकं संबध्यते ११ १२

एतेषांनित्यत्वेप्यानुषंगिकंफलमाह एवमुक्तेनप्रकारेणगर्भाधानादिभिःसंस्कारकर्मभिः कृतैरेनःपापंशमंयाति किंभूतंबीजगर्भसमुद्भवं शुक्रशोणितसंब
द्धंगात्रव्याधिसंक्रांतिनिमित्तंनतुपतितोत्पन्नत्वादि स्त्रीणांविशेषमाह एताजातकर्मादिक्रियाःस्त्रीणांतूष्णींविनैवमंत्रैर्यथाकालंकार्याः विवाहःपुनःसमंत्र
कः १३ गर्भाधानमवधिंकृत्वाजन्मनोवाष्टमेवर्षेब्राह्मणस्योपनायनंउपनयनमेवोपनायनं स्वार्थेअण्वृत्तानुसारात् अत्रेच्छयाविकल्पः राज्ञामेकादशे वै
श्यस्यसैकेएकादशेद्वादशइत्यर्थः गर्भग्रहणंसर्वत्रानुवर्त्तते समासेगुणीभूतस्यापिगर्भशब्दस्यबुद्ध्याविभज्योभयत्राप्यनुवर्त्तनंकार्यं गर्भादेकादशेराज्ञो

एवमेनः शमंयातिबीजगर्भसमुद्भवम् तूष्णीमेताःक्रियास्त्रीणांविवाहस्तुसमंत्रकः १३ गर्भाष्टमेष्टमेवाब्दे ब्राह्मणस्योपना
यनं राज्ञामेकादशेसैकेविशामेकेयथाकुलं १४ उपनीयगुरुःशिष्यंमहाव्याहृतिपूर्वकं वेदमध्यापयेदेनंशौचाचारांश्चशिक्ष
येत् १५

गर्भाद्विद्वादशेविशइतिस्मृत्यंतरवच-
नात् यथा अथशब्दानुशासनं केषांशब्दानांलौकिकानांवैदिकानामिति अत्रापिकार्यमित्यनुवर्त्तते कुलस्थित्याकेचिदुपनयनमिच्छंति १४ स्वगृह्योक्तविधिना
उपनीयशिष्यंगुरुःमहाव्याहृतिपूर्वकंवेदमध्यापयेत् महाव्याहृतयश्च भूरादिसत्यांताः सप्तपंचवागौतमाभिप्रायेण किंचशौचाचारांश्चवक्ष्यमाणलक्षणान् शिक्षये
त् उपनीयशौचाचारांश्च शिक्षयेदित्यनेनप्रागुपनयनात्कामचारोदर्शितः वर्णधर्मान्वर्जयित्वास्त्रीणामप्येतत्समानं विवाहादर्वाक् उपनयनस्थानीयत्वाद्विवाह
स्य १५

शौचाचारानाह कर्णस्थं ब्रह्मसूत्रं यस्य सतथोक्तः कर्णश्च दक्षिणः पवित्रं दक्षिणे कर्णे कृत्वा विण्मूत्रमुत्सृजेदिति लिंगात् असावहनि संध्ययो
श्च उदङ्मुखो मूत्रपुरीषे कुर्यात् चकाराद्भस्मादिरहिते देशे रात्रौ तु दक्षिणामुखः १६ किंच अनंतरं शिश्नं गृहीत्वा उत्थाय उद्धृताभिरद्भिर्वक्ष्यमाण
लक्षणाभिर्मृद्भिश्च गंधलेपयोः क्षयकरं शौचं कुर्यात् अतंद्रितः अनलसः उद्धृताभिरिति जलांतः शौचनिषेधः अत्र गंधलेपक्षयकरमिति सर्वाश्रमियां
साधारणं शौचमिदं मृत्संख्यानियमस्त्वदृष्टार्थः १७ शुचौ अशुचिद्रव्यासंस्पृष्टे देशे इत्यपादानादुपानच्छयनासनादिनिषेधः उपविष्टः न स्थितः नश

दिवा संध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः कुर्यान्मूत्रपुरीषे च रात्रौ चेद्दक्षिणामुखः १६ गृहीतशिश्नश्चोत्थाय मृद्भिर
भ्युद्धृतैर्जलैः गंधलेपक्षयकरं शौचं कुर्यादतंद्रितः १७ अंतर्जानुः शुचौ देश उपविष्ट उदङ्मुखः प्राग्वा ब्राह्मेण तीर्थे
न द्विजो नित्यमुपस्पृशेत् १८ कनिष्ठादेशिन्यंगुष्ठमूलान्यग्रं करस्य च प्रजापतिपितृब्रह्मदैवतीर्थान्यनुक्रमात् १९

यानः प्रह्वो गच्छन्वा उदङ्मुखः प्राङ्मुखो वेति दिगंतरनिवृत्तिः शुचौ देश इत्येतस्मात्पादप्रक्षालनप्राप्तिः ब्राह्मेण तीर्थेन वक्ष्यमाणलक्षणेन द्विजो न शू
द्रादिः नित्यं सर्वकालं आश्रमांतरगतोऽप्युपस्पृशेत् आचामेत् कथमंतर्जानुः जानुनोर्मध्ये हस्तौ कृत्वा दक्षिणेन हस्तेनेति १८ तीर्थान्याह कनि
ष्ठायास्तर्जन्या अंगुष्ठस्य मूलानि करस्याग्रं च प्रजापतिपितृब्रह्मदेवतीर्थानि यथाक्रमं वेदितव्यानि १९ ७ ७ ७ ७

वारत्रयमपः पीत्वा मुखमंगुष्ठमूलेन द्विरुन्मृज्य खानि छिद्राणि ऊर्ध्वकायगतानि घ्राणादीनि अद्भिरुपस्पृशेत् अद्भिर्द्रव्यांतरासंसृष्टाभिः पुनरद्भिरि-
त्यब्ग्रहणं प्रतिछिद्रमुदकस्पर्शनार्थं पुनस्ता एव विशिनष्टि प्रकृतिस्थाभिः गंधरूपरसस्पर्शांतरमप्राप्ताभिः फेनबुद्बुदरहिताभिः तुशब्दाद्धर्षधा
रागतानां शूद्राद्यावर्जितानां च निषेधः २० हृत्कंठतालुगाभिरद्भिर्यथाक्रमेण द्विजातयः शुध्यंति स्त्री च शूद्रश्च अंततः अंतेन तालुना स्पृष्टाभिः सकृदि
ति वैश्याद्विशेषः चशब्दादनुपनीतोपि २१ प्रातःस्नानं यथाशास्त्रमब्दैवतैर्मंत्रैः आपो हि ष्ठेत्येवमादिभिः मार्जनं प्राणसंयमः प्राणायामः वक्ष्यमा

त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत् अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः २० हृत्कंठतालुगाभिस्तु
यथासंख्यं द्विजातयः शुध्येरन्स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरंततः २१ स्नानमब्दैवतैर्मंत्रैर्मार्जनं प्राणसंयमः सूर्यस्य
चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः २२ गायत्रीं शिरसा सार्द्धं जपेद्व्याहृतिपूर्विकाम् प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंय
मः २३

णलक्षणः ततः सूर्यस्य चाप्युपस्थानं सौरेण मंत्रेण गायत्र्यास्तत्सवितुर्वरेण्यमित्यादेः प्रतिदिवसं जपः कार्यः कार्यशब्दो यथालिं
गं प्रत्येकमभिसंबध्यते २२ गायत्रीं पूर्वोक्तां आपो ज्योतिरित्यादिना शिरसा संयुक्तां उक्तव्याहृतिपूर्विकां प्रतिव्याहृतिप्रणवेन संयुक्तां ॐ भूः ॐ भु
वः ॐ स्वरिति त्रीन्वारान्मुखनासिकासंचारिवायुं निरुंधन्मनसा जपेदित्ययं सर्वत्र प्राणायामः २३ छ छ छ छ

प्राणायामं पूर्वोक्तं कृत्वा तृचेनाब्दैवतेन पूर्वोक्तेनात्मानमद्भिः प्रोक्ष्य सावित्रीं जपन् प्रत्यक् संध्यामासीत अर्थात्प्रत्यङ्मुख इति लभ्यते आतारकोदयात्
तारकोदयावधि प्राक्संध्यां प्रातःसमये एवं पूर्वोक्तविधिमाचरन् प्राङ्मुखः सूर्योदयावधि तिष्ठेत् अहोरात्रयोः संधौ या क्रिया विधीयते सा संध्या तत्र
अहः संपूर्णादित्यमंडलदर्शनयोग्यः कालः तद्विपरीता रात्रिः यस्मिन्काले खंडमंडलस्योपलब्धिः स संधिः २४ २५ ततः संध्योपासनानंतरं द्वयोः संध्य

प्राणानायम्य संप्रोक्ष्य तृचेनाब्दैवतेन तु जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् २४ संध्यां प्राक्प्रातरेवं हि तिष्ठेदा
सूर्यदर्शनात् अग्निकार्यं ततः कुर्यात्संध्ययोरुभयोरपि २५ ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन् २६ गुरुं चैवाप्यु
पासीत स्वाध्यायार्थं समाहितः आहूतश्चाप्यधीयीत लब्धं तस्मै निवेदयेत् हितं तस्याचरेन्नित्यं मनोवाक्कायकर्मभिः २७

योरग्निकार्यं अग्नौ कार्यं समित्प्रक्षेपादि यत् तत्कुर्यात् स्वगृह्योक्तेन विधिना तदनंतरं वृद्धान् गुरुप्रभृतीनभिवादयेत् कथं असौ देवदत्तशर्माहमिति स्वना
मकीर्त्तयन् २६ तथा गुरुं वक्ष्यमाणलक्षणमुपासीत तत्परिचर्यापरस्तदधीनस्तिष्ठेत् स्वाध्यायार्थमध्ययनसिद्ध्यै समाहितोऽविक्षिप्तचित्तो भवेत् आहूतश्चाप्य
धीयीत गुर्वाहूत एवाधीयीत न स्वयं गुरुं प्रेरयेत् यच्च लब्धं तत्सर्वं गुरवे निवेदयेत् तथा तस्य गुरोर्हितमाचरेत् नित्यं सदा मनोवाक्कायकर्मभिः न प्रतिकूलं कुर्यात्
अपिशब्दाद्गुरुदर्शने गौतमोक्तं कंठप्रावरणादि वर्जयेत् २७ ॥ ॥

कृतमुपकारंनविस्मरतीतिकृतज्ञः अद्रोहीदयावान् मेधावीग्रंथग्रहणधारणशक्तः शुचिःबाह्याभ्यंतरशौचवान् कल्पःआधिव्याधिरहितः अनसूयकोदोषानाविष्करणेनगुणाविष्करणशीलः साधुःवृत्तवान् शक्तःशुश्रूषायां आप्तोबंधुः ज्ञानदःविद्याप्रदः वित्तदः अर्पणपूर्वकमर्थप्रदाता एतेगुणाःसमस्ताव्यस्ताश्चयथासंभवंद्रष्टव्याः एतेचधर्मतःशास्त्रानुसारेणाध्याप्याः २८ तथास्मृत्यंतरप्रसिद्धंपालाशादिदंडं अजिनंचकार्ष्णाजिनादि उपवीतंकार्पासादिनिर्मितं मेखलांचमुंजादिनिर्मितां ब्राह्मणादिर्ब्रह्मचारीधारयेत् २९ पूर्वोक्तदंडादियुक्तोब्रह्मचारीब्राह्मणेष्वनिंद्येषु अभिशस्तादिव्यतिरिक्तेषुस्व-

कृतज्ञाद्रोहिमेधाविशुचिकल्यानसूयकाः अध्याप्याधर्मतःसाधुशक्ताप्तज्ञानवित्तदाः २८ दंडाजिनोपवीतानि मेखलांचैवधारयेत् ब्राह्मणेषुचरेद्भैक्ष्यमनिंद्येष्वात्मवृत्तये २९ आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ब्राह्मणक्षत्रियविशांभैक्ष्यचर्यायथाक्रमम् ३०

कर्मनिरतेषुभैक्ष्यंचरेत् आत्मवृत्तये आत्मनोजीवनायनपरार्थं आचार्यतद्भार्यापुत्रव्यतिरेकेण निवेद्यगुरवेतदनुज्ञातोभुंजीत तदभावेतत्पुत्रादाविति नियमात् अन्नचब्राह्मणग्रहणंसंभवेसतिननियमार्थं यत्तुसार्ववर्णिकंभैक्ष्यचरणमितितत्त्रैवर्णिकमात्रविषयं यच्चचातुर्वर्ण्यंचरेद्भैक्ष्यमितितदापद्विषयंकथंभैक्ष्यचर्याकार्याआदिमध्यावसानेषु भवच्छब्दोपलक्षिता भवतिभिक्षांदेहि भिक्षांभवतिदेहि भिक्षांदेहिभवति इत्येवंवर्णक्रमेणभैक्ष्यचर्याकार्या ३० छ छ

पूर्वोक्तेनविधिना भिक्षामाहृत्यगुरवे निवेद्यतदनुज्ञयाकृताग्निकार्योवाग्यतोमौनी अन्नंसत्कृत्यसंपूज्य अकुत्सयन्ननिंदन् अपोशानक्रियापूर्वं अमृतोपस्तरणमसीत्यादिकं पूर्वंकृत्वाभुंजीत अत्रपुनरग्निकार्यग्रहणंसंध्याकालेकथंचिदकृताग्निकार्यस्यकालांतरविधानार्थंनपुनस्तृतीयप्राप्त्यर्थं ३१ ब्रह्मचर्येस्थितः एकान्नंनाद्यादनापदिव्याध्याद्यभावे ब्राह्मणःपुनः श्राद्धेभ्यर्थितः सन् काममश्नीयात् व्रतमपीडयन् मधुमांसपरिहारेण अत्रब्राह्मणग्रहणंक्षत्रियादेः श्राद्धभोजननिवृत्त्यर्थं राजन्यवैश्ययोश्चैवनैतत्कर्मप्रचक्षतेइतिस्मरणात् ३२ मधुक्षौद्रंनमद्यं तस्यनित्यंब्राह्मणोमद्यंवर्जयेदितिनि-

कृताग्निकार्योभुंजीतवाग्यतोगुर्वनुज्ञया अपोशनक्रियापूर्वंसत्कृत्यान्नमकुत्सयन् ३१ ब्रह्मचर्येस्थितोनैकमन्नमद्यादनापदि ब्राह्मणःकाममश्नीयाच्छ्राद्धेव्रतमपीडयन् ३२ मधुमांसांजनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम् भास्करालोकनाश्लीलपरिवादादिवर्जयेत् ३३ सगुरुर्यःक्रियाःकृत्वावेदमस्मैप्रयच्छति उपनीयददद्वेदमाचार्यःसउदाहृतः ३४

षेधात् मांसंछागादेरपिअंजनंघृतादिनागात्रस्य कज्जलादिनाचाक्ष्णोःउच्छिष्टंअगुरोः शुक्तंनिष्ठुरवाक्यंनान्नरसः तस्याभक्ष्यप्रकरणेनिषेधात् स्त्रियमुपभोगे प्राणिहिंसनंजीववधः भास्करस्योदयास्तमयावलोकनं अश्लीलमसत्यभाषणं परिवादः सदसद्रूपस्यपरदोषस्यव्याख्यापनं आदिशब्दात्स्मृत्यंतरोक्तंगंधमाल्यादिगृह्यते एतानिब्रह्मचारीवर्जयेत् ३३ योसौगर्भाधानाद्याउपनयनांताःक्रियायथाविधिकृत्वावेदमस्मैब्रह्मचारिणेप्रयच्छतिसगुरुः यःपुनरुपनयनमात्रंकृत्वावेदंददातिसआचार्यः ३४ ४९

वेदस्यैकदेशंमंत्रब्राह्मणयोरेकं अंगानिवायोध्यापयतिसउपाध्यायः यःपुनःपाकयज्ञादिकंवृतःकरोतिसऋत्विक् एतेचगुर्वाचार्योपाध्याय र्त्वि
जोयथापूर्वंयथाक्रमेणमान्याःपूज्याः एभ्यःसर्वेभ्योमातागरीयसीपूज्यतमा ३५ वेदग्रहणार्थंब्रह्मचर्यावधिमाह यदाविवाहासंभवेवेदानधीत्य
वेदौवावेदंवेतिप्रवर्तते तदाप्रतिवेदं वेदंवेदंप्रतिब्रह्मचर्यंपूर्वोक्तंद्वादशवर्षाणिकार्यं अशक्तौपंच ग्रहणांतिकमित्येकेवर्णयंति केशांतःपुनः गोदा-
नाख्यंकर्मगर्भादारभ्यषोडशेवर्षेब्राह्मणस्यकार्यं एतच्चद्वादशवार्षिकेवेदव्रतेबोद्धव्यं इतरस्मिन्पक्षेयथासंभवंद्रष्टव्यं राजन्यवैश्ययोस्तूपनयन

एकदेशमुपाध्यायऋत्विग्यज्ञकृदुच्यते एतेमान्यायथापूर्वमेभ्योमातागरीयसी ३५ प्रतिवेदंब्रह्मचर्यंद्वादशा
ब्दानिपंचवा ग्रहणांतिकमित्येकेकेशांतश्चैवषोडशे ३६ आषोडशादाद्वाविंशाच्चतुर्विंशाच्चवत्सरात् ब्रह्मक्षत्रवि
शांकाल औपनायनिकः परः ३७

कालवत् द्वाविंशेचतुर्विंशेवाद्रष्टव्यं ३६ उपनयनकालस्यपरमावधिमाह आषोडशाद्वर्षात्षोड
शवर्षंयावत् आद्वाविंशादाचतुर्विंशाद्वर्षाद्ब्रह्मक्षत्रविशां औपनायनिकःउपनयनसंबंधीपरः कालः नातः परमुपनयनकालोस्ति किंतुअतऊर्ध्वंपतंस्ये
तेसर्वधर्मबहिष्कृताःसर्वधर्मेष्वनधिकारिणोभवंतिसावित्रीपतिताःपतितसावित्रीकाभवंतिसावित्रीदानयोग्यानभवंति व्रात्याःसंस्कारहीनाश्च व्रात्यस्तोमाख्य
तोर्विना कृतेतुतस्मिन्उपनयनाधिकारिणोभवंति ३७ ५

३८ आद्यारुत्रयोद्विजाइत्युक्तंतत्रहेतुमाह मातुःसकाशात्प्रथमंजायंतेमौंजीबंधनात्द्वितीयंजन्मयस्मात्तस्मादेतेब्राह्मणक्षत्रियवैश्याद्विजाउच्यंते ३९ वेदग्रहणाध्ययनफलमाह यज्ञानांश्रौतस्मार्त्तानांतपसांकायसंतापरूपाणांचांद्रायणादीनांशुभानांचकर्मणांउपनयनादिसंस्काराणामवबोधकत्वेन वेदएवद्विजातीनांपरोनिःश्रेयसकरःमोक्षकरोनान्यः वेदएवेतितन्मूलत्वेनस्मृतेरप्युपलक्षणार्थं ४० ग्रहणाध्ययनफलमुक्त्वेदानींकाम्यब्रह्मयज्ञा

अतऊर्ध्वंपतंत्येतेसर्वधर्मबहिष्कृताः सावित्रीपतिताव्रात्याव्रात्यस्तोमाहृतेक्रतोः ३८ मातुर्यदग्रेजायंतेद्वितीयंमौंजिबंधनात् ब्राह्मणक्षत्रियविशस्तस्मादेतेद्विजाःस्मृताः ३९ यज्ञानांतपसांचैवशुभानांचैवकर्मणाम् वेदएवद्विजातीनांनिःश्रेयसकरःपरः ४० मधुनापयसाचैवसदेवांस्तर्पयेत्द्विजः पितॄन्मधुघृताभ्यांचऋचोधीतेचयोन्वहम् ४१ यजूंषिशक्तितोधीतेयोन्वहंसघृतामृतैः प्रीणातिदेवानाज्येनमधुनाचपितॄंस्तथा ४२ सतुसोमघृतैर्देवांस्तर्पयेद्योन्वहंपठेत् सामानितृप्तिंकुर्याच्चपितॄणांमधुसर्पिषा ४३

ध्ययनफलमाह योन्वहंऋचोधीतेसमधुनापयसाचदेवान्पितॄंश्चमधुघृताभ्यांतर्पयति यःपुनःशक्तितोन्वहंयजूंष्यधीतेसघृतामृतैर्देवान्पितॄंश्चमधुघृताभ्यांतर्पयति यस्तुसामान्यन्वहमधीतेससोमघृतैर्देवान्पितॄंश्चमधुसर्पिर्भ्यांप्रीणाति ऋगादिग्रहणंसामान्येनऋगादिमंत्रप्राप्त्यर्थम् ४१ ४२ ४३ ५ ५ ५ ५

यः पुनः शक्तितोन्वहं अथर्वांगिरसोधीते स देवान् मेदसा पितॄंश्च मधुसर्पिर्भ्यां तर्पयति यस्तु वाकोवाक्यं वाकवाक्यं संप्रश्नोत्तररूपं वेदवाक्यं पुराणं च ब्राह्मादि चकारान्मानवादिधर्मशास्त्रं नाराशंसीश्च रुद्रदैवत्यान्मंत्रान् गाथाश्च यज्ञगाथेंद्रगाथाद्याः इतिहासान्महाभारतादीन् विद्या-

मेदसा तर्पये द्देवान थर्वांगिरसः पठन् पितॄंश्च मधुसर्पिर्भ्यामन्वहं शक्तितो द्विजः ४४ वाकोवाक्यं पुराणं च नाराशंसीश्च गाथिकाः इतिहासांस्तथा विद्याः शक्त्याधीते हि योन्वहम् ४५ मांसक्षीरौदनमधुतर्पणं स दिवौकसाम् करोति तृप्तिं कुर्याच्च पितॄणां मधुसर्पिषा ४६ ते तृप्तास्तर्पयंत्येनं सर्वकामफलैः शुभैः यं यं क्रतुमधीते सौ तस्य तस्याप्नुयात्फलम् ४७ त्रिर्वित्तपूर्णपृथिवीदानस्य फलमश्नुते तपसोयत्परस्येह नित्यस्वाध्यायवान् द्विजः ४८

श्च वारुण्याद्या विद्याः शक्तितोन्वहमधीते स मांसक्षीरौदनमधुसर्पिर्भिर्देवान् पितॄंश्च मधुसर्पिर्भ्यां तर्पयति ४४ ४५ ४६ ते पुनस्तृप्ताः संतो देवाः पितरश्च एवं स्वाध्यायकारिणं सर्वकामफलैः शुभैरनन्योपघातलक्षणैस्तर्पयंति प्रशंसार्थमाह यस्य यस्य क्रतोः प्रतिपादकं वेदैकदेशमन्वहमधीते तस्य तस्य क्रतोः फलमाप्नोति तथा वित्तपूर्णायाः पृथिव्याः त्रिः त्रिवारं दानस्य यत्फलं परस्य तपसश्चांद्रायणादेर्यत्फलं तदपि नित्यं स्वाध्यायवान् प्राप्नोति नित्यग्रहणं काम्यस्यापि सतो नित्यत्वज्ञापनार्थम् ४७ ४८ ७

शरीरारंभकत्वेन एवंयत्रयत्रसपिंडशब्दस्तत्रतत्रसाक्षात्परंपरयावा एकशरीरावयवान्वयोवेदितव्यः यद्येवंमातामहादीनामपिदशाहंशावमाशौ
चंसपिंडेषुविधीयतइत्यविशेषेणप्राप्नोति स्यादेतत् यदितत्रभक्तानामितरेकुर्युरित्यादिविशेषवचनंनस्यादतश्चसपिंडेषुयत्रविशेषवचनंना
स्तितत्रदशाहमित्येतद्वचनमवतिष्ठते अवश्यंचैकशरीरावयवान्वयेनसापिंड्यंवर्णनीयं आत्माहिजज्ञे आत्मनइत्यादिश्रुतेः तथाप्रजामनुप्रजाय
सेतिच सएवायंविरूढःप्रत्यक्षेणोपलभ्यतइत्यापस्तंबवचनाच्च तथागर्भोपनिषदि एतत्षाट्कौशिकंशरीरंत्रीणिपितृतस्त्रीणिमातृतः
अस्थिस्नायुमज्जानःपितृतः त्वङ्मांसरुधिराणिमातृतइति तत्रतत्रावयवान्वयप्रतिपादनात् निर्वाप्यपिंडान्वयेनतुसापिंड्येमातृसंतानेभ्रातृषु

## अरोगिणींभ्रातृमतीमसमानार्षगोत्रजाम्

चादिषुचसापिंड्यंनस्यात् समुदायशक्त्यंगीकारेणरूढिपरिग्रहे अवयवशक्तिस्तत्रतत्रावगम्यमानापरित्यक्तास्यात् परंपरयैकशरीरावयवा
न्वयेनसापिंड्येयथानातिप्रसंगस्तथावक्ष्यामः यवीयसींवयसाप्रमाणतश्चन्यूनामुद्वहेत्परिणयेत् स्वगृह्योक्तविधिना ५२ विशेषांतरमप्याह
अरोगिणीं अचिकित्सनीयव्याध्यनुपसृष्टां भ्रातृमतींपुत्रिकाकरणशंकानिवृत्तये अनेनापरिभाषितापिपुत्रिकाभवतीतिगम्यते असमानार्ष
गोत्रजां ऋषेरिदमार्षंनामप्रवरइत्यर्थः गोत्रंवंशपरंपराप्रसिद्धं आर्षंचगोत्रंच आर्षगोत्रेसमाने आर्षगोत्रेयस्यासौसमानार्षगोत्रस्तस्माज्जाता-

समानार्षगोत्रजानसमानार्षगोत्रजा असमानार्षगोत्रजातां गोत्रप्रवरौच पृथक्पृथक् पर्युदासो निमित्तं तेनासमानगोत्रजां असमानार्षजामि
त्यर्थः तथाचासमानप्रवरैर्विवाह इति गौतमः तथाच असपिंडाचयामातुरसपिंडाचयापितुरितिमनुः तथामातृगोत्रामप्यपरिणेयांकेचिदिच्छं
ति मातुलस्यसुतामूढ्वामातृगोत्रांतथैवच समानप्रवरांचैव कृत्वाचांद्रायणंचरेदिति प्रायश्चित्तस्मरणात् अत्रचासपिंडामित्यनेनपितृष्वसृ-
मातृष्वस्रादिदुहितृनिषेधः तथा असगोत्रामित्यनेनासपिंडाया अपिभिन्नसंतानजायाः समानगोत्रायानिषेधः असमानप्रवरामित्यनेनाप्यसपिं
डाया असगोत्रायाअपिसमानप्रवरायानिषेधः तथाऽसपिंडामित्येतत्सार्ववर्णिकंसर्वत्रसापिंड्यसद्भावात् असमानार्षगोत्रजामित्येतत्त्रैवर्णिक

पंचमात्सप्तमादूर्ध्वंमातृतः पितृतस्तथा ५३

विषयं यद्यपिराजन्यविशांप्रातिस्विकगोत्राभावात्प्रवराभावस्तथापिपुरोहितगोत्रप्रवरौवेदितव्यौ तथाचयजमानस्यार्षेयान्प्रवृणीतइत्युक्त्वा
पौरोहित्यान्राजविशांप्रवृणीतेइत्याहाश्वलायनः सपिंडासुसमानगोत्रासुसमानप्रवरासु भार्यात्वमेवनोत्पद्यते रोगिण्यादिषुतु भार्यात्वेउत्पन्नेपिदृष्ट-
विरोधएव असपिंडामित्यत्रैकशरीरान्वयद्वारेणसाक्षात्पारंपर्येणचसापिंड्यमुक्तं तच्चसर्वत्रसर्वस्ययथाकथंचिदनादौसंसारे भवतीत्यतिप्रसंगइत्यत-
आह मातृतोमातुःसंतानेपंचमादूर्ध्वं पितृतः पितुःसंतानेसप्तमादूर्ध्वंसापिंड्यंनिवर्त्ततइतिशेषः अतश्चायंसपिंडशब्दोवयवशक्त्यासर्वत्रप्रवर्त्तमानो

एवंसामान्येन ब्रह्मचारिधर्मानभिधायाधुनानैष्ठिकस्यविशेषमाह अनेनउक्तेनप्रकारेणात्मानंनिष्ठांउत्क्रांतिकालंनयतीतिनैष्ठिकः सयावज्जीवमा चार्यसमीपेवसेत् नवेदग्रहणकालोत्तरंस्वतंत्रोभवेत् तदभावेतत्पुत्रसमीपे तदभावेतद्भार्यासमीपे तदभावे वैश्वानरेपि अनेनोक्तविधिनादेहंसा धयन् क्षपयन् विजितेंद्रियः इंद्रियजयेविशेषप्रयत्नवान् ब्रह्मचारी ब्रह्मलोकममृतत्वमाप्नोति कदाचिदिहनपुनर्जायते इतिब्रह्मचारिप्रकरणम्

नैष्ठिकोब्रह्मचारीतुवसेदाचार्यसन्निधौ तदभावेस्यतनयेपत्न्यांवैश्वानरेपिवा ४९ अनेनविधिनादेहंसाधयन्विजितेंद्रियः ब्रह्म लोकमवाप्नोतिनचेहजायतेपुनः ५० गुरवेतुवरंदत्वास्नायीततदनुज्ञया वेदव्रतानिवापारंनीत्वाह्युभयमेववा ५१

४९ ५० यःपुनर्विवाह्यस्तस्यविवाहार्थंस्नानमाह पूर्वोक्तेनप्रकारेणवेदंमं त्रब्राह्मणात्मकम् व्रतानिब्रह्मचारिधर्मान् अनुक्रांतान्वाउभयंवापारंनीत्वासमाप्यगुरवेपूर्वोक्तायवरमभिलषितंयथाशक्तिदत्वास्नायात् अश क्तौतदनुज्ञया भदत्तवरोपि एषांचपक्षाणांशक्तिकालाद्यपेक्षयाव्यवस्था ५१ ७ ७ ७ ७ ७

स्नानानंतरंकिंकुर्यादत आह अविप्लुतब्रह्मचर्यः अस्खलितब्रह्मचर्यः लक्षण्यां बाह्याभ्यंतरलक्षणैर्युक्तां बाह्यानितनुरोमकेशदशनादीनि मनुनोक्तानि आभ्यंतराणिअष्टौपिंडान्कृत्वेत्याद्याश्वलायनोक्तविधिना ज्ञातव्यानि पूर्वस्यांराचौगोष्ठवल्मीककितवस्थानह्रदरणक्षेत्रचतुष्पथश्मशानेभ्योमृत्तिकांगृहीत्वापिंडाष्टकंकर्तव्यं तत्रानुक्रमेणप्रथमेपिंडेस्पृष्टेधान्यवतीभवेत् द्वितीयेस्पृष्टेपशुमतीभवेत् तृतीयेग्निहोत्रशुश्रूषणपराभवति चतुर्थेविवेकिनीचतुरासर्वजनार्जनपराभवति पंचमेरोगिणी षष्ठेवंध्या सप्तमेव्यभिचारिणी अष्टमेविधवाभवेदित्याश्वलायनस्मरणात् स्त्रियंनपुंसकत्वनिवृत्तयेस्त्रीत्वेनपरीक्षितां अनन्यपूर्विकांदानेनोपभोगेनवापुरुषांतरापरिगृहीतां कांतांकमनीयांवोढुर्मनोनयनानंदकारिणीं यस्यां

अविप्लुतब्रह्मचर्योलक्षण्यांस्त्रियमुद्वहेत् अनन्यपूर्विकांकांतामसपिंडांयवीयसीं ५२

मनश्चक्षुषोर्निर्बंधस्तस्यामृद्धिरित्यापस्तंबस्मरणात् एतच्चन्यूनाधिकांगादिबाह्यदोषाभावे असपिंडांसमानएकः पिंडोदेहोयस्याः सासपिंडान सपिंडा असपिंडातां सपिंडताच एकशरीरावयवान्वयेनभवति तथाहिपुत्रस्यपितृशरीरावयवान्वयेनपित्रासहसापिंड्यम् एवंपितामहादिभिरपिपितृद्वारेणतच्छरीरावयवान्वयात् एवंमातृशरीरावयवान्वयेनमात्रातथामातामहादिभिरपिमातृद्वारेण तथामातृष्वसृमातुलादिभिरपि एकशरीरावयवान्वयात् तथापितृव्यपितृष्वस्रादिभिरपि तथापत्न्यासहपत्न्याएकशरीरारंभकतया एवंभ्रातृभार्याणामपिपरस्परमेकशरीरारब्धैः सहैक

पिनिर्मथ्यपंकजादिशब्दवन्नियतविषयएव तथाचपित्रादयः षट्सपिंडाःपुत्रादयश्चषट् आत्माचसप्तमः संतानभेदेपियतः संतानभेदस्तमादायग
णयेद्यावत्सप्तमइतिसर्वत्रयोजनीयं तथाचमातरमारभ्यतत्पितृपितामहादिगणनायांपंचमपुरुषवर्त्तिनीमातृतः पंचमीत्युपचर्यते एवंपितरमारभ्यत
त्पित्रादिगणनायांसप्तमपुरुषसंतानवर्त्तिनी पितृतःसप्तमीति तथाच भगिन्योर्भगिनीभ्रात्रोर्भ्रातृपुत्रीपितृव्ययोः विवाहेद्यादिभूतत्वाच्छारवाभेदो
वगण्यते यदपिवसिष्ठेनोक्तं पंचमींसप्तमींचैवमातृतः पितृतस्तथेति त्रीनतीत्यमातृतः पंचातीत्यच पितृतइतिच पैठीनसिना तदप्यर्वाङ्निषेधार्थंनपु
नस्तत्सार्थमितिसर्वस्मृतीनामविरोधः एतच्चसमानजातीयेद्रष्टव्यं विजातीयेतुविशेषः यथाहशंखः यद्येकजाताबहवः पृथक्क्षेत्राः पृथक्जनाः एक

दशपूरुषविख्यातात्श्रोत्रियाणांमहाकुलात् ।

पिंडाः पृथक्शौचाः पिंडस्त्वावर्त्ततेत्रिषु एकस्मात्ब्राह्मणादेर्जाताः एकजाताःपृथक्क्षेत्राः भिन्नजातीयासुस्त्रीषुजाताः पृथक्जनाःसमानजातीया
सुभिन्नासुस्त्रीषुजाताः तेएकपिंडाःसपिंडाः किंतुपृथक्शौचाः पृथक्शौचमाशौचप्रकरणेवक्ष्यामः पिंडस्त्वावर्त्ततेत्रिषुत्रिपुरुषमेवसापिंड्यमि
ति ५३ पुरुषाएवपूरुषाः दशभिः पूरुषैः मातृतः पंचभिः पितृतः पंचभिर्विख्यातंयत्कुलंतस्मात् श्रोत्रियाणामधीतवेदानां अध्ययनमुपलक्षणं
श्रुताध्ययनसंपन्नानां महच्चतत्कुलंचमहाकुलंपुत्रपौत्रपशुदासीग्रामादिसमृद्धं तस्मात्कन्याआहर्त्तव्येतिनियम्यते ७ ७ ७

एवंसर्वतःप्राप्तौसत्यामपवादमाह संचारिणोरोगाः कुष्ठापस्मारप्रभृतयः शुक्रशोणितद्वारेणानुप्रविशंतोदोषाः पुनःहीनक्रियनिःपुरुषत्वादयो मनुनोक्ताः एतैःसमन्वितात् स्फीतादपिपूर्वोक्तान्महाकुलादपिनाहर्त्तव्या ५४ एवंकन्याग्रहणेनियममुक्त्वाकन्यादानेवरनियममाह एतैरेवपूर्वो क्तैर्गुणैर्युक्तोदोषैश्चवर्जितोवरोभवति तस्यायमपरोविशेषः सवर्णउत्कृष्टोवानहीनवर्णः श्रोत्रियःस्वयंचश्रुताध्ययनसंपन्नः यत्नात्प्रयत्नेनपुंस्त्वेपरी

स्फीतादपिनसंचारिरोगदोषसमन्वितात् ५४ एतैरेवगुणैर्युक्तःसवर्णःश्रोत्रियोवरः यत्नात्परीक्षितःपुंस्त्वेयुवाधीमान् जनप्रियः ५५

क्षितः परीक्षोपायश्चनारदेनदर्शितः यस्याप्सुप्लवतेबीजंह्रादिमूत्रंचफेनिलं पुमान्स्याल्लक्षणैरेतैर्विपरीतैस्तुषंढकइ- ति युवानवृद्धः धीमान्लौकिकवैदिकव्यवहारेषुनिपुणमतिः जनप्रियःस्मितपूर्वमृदुभिभाषणादिभिरनुरक्तजनः रतिपुत्रधर्मार्थत्वेनविवाहस्त्रि विधः तत्रपुत्रार्थोद्विविधः नित्यःकाम्यश्च तत्रनित्येप्रजार्थेसवर्णःश्रोत्रियोवरइत्यनेनसवर्णामुख्यादर्शिता ५५ ७ ७ ७

इदानीं काम्ये नित्यसंयोगे चानुकल्पो वक्तव्य इत्याह यदुच्यते कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वराः इत्युपक्रम्य ब्राह्मणस्य चतस्रो भार्याः क्ष
त्रियस्य तिस्रः वैश्यस्य द्वे इति द्विजातीनां शूद्रावेदनमिति नैतद्याज्ञवल्क्यस्य मतं यस्मादयं द्विजातिस्तत्र स्वयं जायते तज्जाया जाया भवति यदस्यां जा
यते पुनरिति श्रुतेः अत्र च तत्रात्मा जायते स्वयमिति हेतुं वदता नैत्यकपुत्रोत्पादनाय काम्यकपुत्रोत्पादनाय वा प्रवृत्तस्य शूद्रापरिणयननिषेधं कुर्वता
नैत्यकपुत्रोत्पादनानुकूल्ये काम्ये पुत्रोत्पादने ब्राह्मणस्य क्षत्रिया वैश्ये क्षत्रियस्य च वैश्याभ्यनुज्ञाता भवति ५६ इदानीं रतिकामस्योत्पन्नपुत्रस्य

यदुच्यते द्विजातीनां शूद्रा द्दारोपसंग्रहः नैतन्मम मतं यस्मात्तत्रात्मा जायते स्वयम् ५६ तिस्रो वर्णानुपू
र्व्येण द्वे तथैका यथाक्रमम् ब्राह्मणक्षत्रियविशां भार्याः स्वाशूद्रजन्मनः ५७

विनष्टभार्यस्याश्रमांतरानधिकारिणो गृहस्थाश्रमावस्थानमात्राभिकांक्षिणः परि
णयनक्रममाह वर्णक्रमेण ब्राह्मणस्य तिस्रः क्षत्रियस्य द्वे वैश्यस्यैका शूद्रस्य तु स्वैव भार्या भवति सवर्णा पुनः सर्वेषां मुख्या स्थितैव पूर्वस्याः पूर्वस्या
अभावे उत्तरोत्तरा भवति अयमेव च क्रमो नैत्यकानुकूल्ये काम्ये च पुत्रोत्पादनविधौ अतश्च यच्छूद्रापुत्रस्य पुत्रमध्ये परिगणनं विभागकीर्तनं च तथा वि
प्रान्मूर्धावसिक्तो हीत्युपक्रम्य विन्नास्वेष विधिः स्मृत इति च तद्रतिकामस्याश्रममात्राभिकांक्षिणो वानांतरीयकतयोत्पन्नस्य ५७ ७ ७

विवाहानाह ब्राह्माभिधानो विवाहः यस्मिन्नुक्तलक्षणाय वराया हूय यथाशक्त्यलंकृता कन्या दीयते उदकपूर्वकं तस्यां जातः पुत्रः उभयतः पित्रादीन्दश पुत्रादींश्च दश आत्मानं चैकविंशं पुनाति सह हन्तश्चेत् ५८ सदैवो विवाहः यस्मिन्यज्ञानुष्ठाने वितते ऋत्विजे शक्त्यलंकृता कन्या दीयते यत्र पुनर्गोमिथुनमादाय कन्या दीयते स आर्षः प्रथमजो दैवविवाहजः चतुर्दश पुनाति सप्तावरान्सप्तपरान् उत्तरज आर्षविवाहजः षट् पुनाति त्रीन्पूर्वान् त्रीनवरान् ५९ सह धर्मं चरतामिति परिभाष्य कन्यादानं प्राजापत्यः तज्जः षट् पूर्वान् षट् परान् आत्मना सह हेत्येवं त्रयोदश पुनाति ६० आसुरः पु

ब्राह्मो विवाह आहूय दीयते शक्त्यलंकृता तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ५८ यज्ञस्थ ऋत्विजे दैव आदायार्ष स्तु गोद्वयम् चतुर्दश प्रथमजः पुनात्युत्तरजश्च षट् ५९ इत्युक्त्वा चरतां धर्मं सह या दीयतेऽर्थिने स कायः पावयेत्तज्जः षट् षड् वंश्यान्सहात्मना ६० आसुरो द्रविणादानाद्गान्धर्वः समयान्मिथः राक्षसो युद्धहरणात्पैशाचः कन्यकाछलात् ६१ पाणिर्ग्राह्यः सवर्णासु गृण्हीयात्क्षत्रिया शरम् वैश्या प्रतोदमादद्याद्वेदने त्वग्रजन्मनः ६२

नर्द्रविणादानात् गांधर्वस्तु परस्परानुरागेण भवति राक्षसो युद्धेनापहरणात् पैशाचस्तु कन्यकाछलात् छलेन छद्मना स्वापाद्यवस्थास्वपहरणात् ६१ सवर्णादि परिणयने विशेषमाह सवर्णासु विवाहे गृह्योक्तेन विधिना पाणिरेव ग्राह्यः क्षत्रियकन्या तु शरं गृण्हीयात् वैश्या प्रतोदमादद्यादुत्कृष्टवेदने शूद्रा पुनर्वसनस्य दशां यथाह मनुः वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने इति ६२

दातृक्रममाह एतेषांपित्रादीनांपूर्वपूर्वाभावेपरःपरःकन्याप्रदः प्रकृतिस्थश्चेत् यद्युन्मादादिदोषवान्नभवति अतोयस्याधिकारः सोप्रयच्छन्
भ्रूणहत्यामृतावृतावाप्नोति एतच्चोक्तलक्षणवरसंभवेवेदितव्यम् यदापुनर्दातॄणामभावस्तदाकन्यैवगम्यंगमनार्हंसुक्तलक्षणंस्वयमेववरयेत् ६३
६४ सकृदेवकन्याप्रदीयतइतिशास्त्रनियमः अतस्तांदत्वाअपहरन्चोरवद्दंड्यः एवंसर्वत्रप्रतिषेधेप्राप्तेअपवादमाह यदिपूर्वस्माद्वरात्श्रेयान्विद्या

पितापितामहोभ्रातासकुल्योजननीतथा कन्याप्रदःपूर्वनाशेप्रकृतिस्थःपरःपरः ६३ अप्रयच्छन्समाप्नोतिभ्रूणहत्यामृतावृतौ गम्यंत्वभावेदातॄणांकन्याकुर्यात्स्वयंवरम् ६४ सकृत्प्रदीयतेकन्याहरस्तांचोरदंडभाक् दत्तामपिहरेत्पूर्वाच्छ्रेयांश्चेद्वरआव्रजेत् ६५ अनाख्यायददद्दोषंदंडउत्तमसाहसम् अदुष्टांतुत्यजन्दंड्योदूषयंस्तुमृषाशतम् ६६

भिजनाद्यतिशययुक्तोवरआगच्छतिपूर्वस्यचपातकयोगोदुर्वृत्तत्वंवानदादत्तामपिहरेत् एतच्चसप्तमपदात्प्राक्द्रष्टव्यम् ६५ यःपुनश्चक्षुर्भार्यां
दोषमनाख्यायकन्यांप्रयच्छति असावुत्तमसाहसंदंड्यः उत्तमसाहसंवक्ष्यते अदुष्टांतुप्रतिगृह्यत्यजन्उत्तमसाहसमेवदंड्यः यःपुनर्विवाहात्प्रागेव
दोषादिनाभसद्भिःदोषैर्दीर्घरोगादिभिःकन्यांदूषयतिसपणानांवक्ष्यमाणलक्षणानांशतंदंड्यः ६६ ७ ७ ७ ७

अनन्यपूर्विकामित्यत्रानन्यपूर्वा परिणेयोक्ता तत्रानन्यपूर्वा कीदृशीत्याह अनन्यपूर्वा द्विविधा पुनर्भूः स्वैरिणी चेति पुनर्भूरपि द्विविधा क्षता चाक्षता च
तत्र क्षता संस्कारात् प्रागेव पुरुषसंबंधदूषिता अक्षता पुनः संस्कारदूषिता या पुनः कौमारे पतिं त्यक्त्वा कामतः सवर्णमाश्रयति सा स्वैरिणीति ६७ एवं स
र्वप्रकारेणान्यपूर्वापर्युदासे प्राप्ते विशेषमाह अपुत्रामलब्धपुत्रां पित्रादिभिः पुत्रार्थमनुज्ञातो देवरो भर्त्तुः कनीयान् भ्राता सपिंडो वा उक्तलक्षणः सगो
त्रो वा एतेषां पूर्वस्य पूर्वस्याभावे परः परः घृताभ्यक्तसर्वांगः ऋतावेव वक्ष्यमाणलक्षणे इयात् गच्छेत् आगर्भोत्पत्तेः ऊर्ध्वं पुनर्गच्छन् अन्येन वा प्रकारेण प
तितो भवति अनेन विधिनोत्पन्नः पूर्वपरिणेतुः क्षेत्रजः पुत्रो भवेत् एतच्च वाग्दत्ताविषयमित्याचार्याः यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः तामनेन

अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत् ६७ अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया स
पिंडो वा सगोत्रो वा घृताभ्यक्त ऋतावियात् ६८ आगर्भसंभवाद्गच्छेत्पतितस्त्वन्यथा भवेत् अनेन विधिना जातः क्षेत्रजोस्य भवेत्सुतः
६९ हृताधिकारां मलिनां पिंडमात्रोपजीविनीम् परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम् ७०

विधानेन निजो विंदेत देवर इति मनुस्मरणात्
६८ ६९ व्यभिचारिणीं प्रत्याह या व्यभिचरति तां हृताधिकारां भृत्यभरणाद्यधिकाररहितां मलिनां अंजनाभ्यंजनशुभ्रवस्त्राभरणशून्यां पिंडमात्रोपजीविनीं प्राण
यात्रामात्रभोजनां धिक्कारादिभिः परिभूतां भूतलशायिनीं स्ववेश्मन्येव वासयेत् वैराग्यजननार्थं न पुनः शल्यर्थं यत्पुंसः परदारेषु तच्चैनां चारयेद्व्रतमिति पृथक्प्राय
श्चित्तोपदेशात् ७०

तस्या अल्पप्रायश्चित्तार्थमर्थवादमाह परिणयनात्पूर्वंसोमगंधर्ववन्हयः स्त्रियोभुक्त्वायथाक्रमंतासांशौचमधुरवचनसर्वमेध्यत्वानिदत्तवंतः तस्मात्स्त्रियः सर्वत्रस्पर्शनालिंगनादिषुमेध्याः शुद्धाःस्मृताः ७१ नचतस्यास्तर्हिदोषोनास्तीत्याशंकनीयमित्याह अप्रकाशितान्मनोव्यभिचारात्पुरुषांतरसंभोगसंकल्पात् यदपुण्यंतस्यऋतौरजोदर्शनेशुद्धिः शूद्रकृतेतुगर्भेत्यागः ब्राह्मणक्षत्रियविशांभार्याःशूद्रेणसंगताः अप्रजाताविशुध्यंतिप्रायश्चित्तेननेतराइतिस्मरणात् तथागर्भवधेभर्तृवधेमहापातकेचब्रह्महत्यादौ आदिग्रहणाच्छिष्यादिगमनेचत्यागः चतस्रस्तुपरित्याज्याःशिष्यगागुरुगाचया पतिघ्नीचविशेषेणजुं

सोमः शौचंददावासांगंधर्वश्चशुभांगिरम् पावकःसर्वमेध्यत्वंमेध्यावैयोषितोह्यतः ७१ व्यभिचाराद्दतौशुद्धिर्गर्भेत्यागोविधीयते गर्भभर्तृवधादौचतथामहतिपातके ७२ सुरापीव्याधिताधूर्त्तावंध्यार्थघ्न्यप्रियंवदा स्त्रीप्रसूश्चाधिवेत्तव्यापुरुषद्वेषिणीतथा ७३

गितोपगताचयेतिव्यासस्मरणात् जुंगितःप्रतिलोमजस्तस्यकर्मकारादिः त्यागश्चोपभोगधर्मकार्ययोः नतुनिष्काशनंगृहात्तस्याः निरुंध्यादेकवेश्मनीतिनियमात् ७२ द्वितीयपरिणयनेहेतूनाह सुरांपिबतीतिसुरापीशूद्रापि पतत्यर्धशरीरस्ययस्यभार्यासुरांपिबेदितिसामान्येनप्रतिषेधात् व्याधितादीर्घरोगग्रस्ता धूर्त्ताविसंवादिनी वंध्यानिष्फला अर्थ-

घ्नी अर्थनाशिनी अप्रियंवदानिष्ठुरभाषिणी स्त्रीप्रसूःस्त्रीजननी पुरुषद्वेषिणी सर्वत्राहितकारिणी अधिवेत्तव्येतिप्रत्येकमभिसंबध्यते अधिवेदनंभार्यांतरपरिग्रहः ७३ किंच साधिविन्नापूर्ववद्देवदानमानसत्कारैर्भर्त्तव्या अन्यथाऽभरणेमहद्पुण्यंवक्ष्यमाणोदंडश्च नच्चभरणेसति केवलमपुण्यपरीहारः यतःयत्रदंपत्योरानुकूल्यंचित्तैक्यंतत्रधर्मार्थकामानांप्रतिदिनमभिवृद्धिः ७४ स्त्रियंप्रत्याह याभर्त्तरिजीवतिमृतेवायाचा

अधिविन्नातुभर्त्तव्यामहदेनोन्यथाभ्भवेत् यत्रानुकूल्यंदंपत्योस्त्रिवर्गस्तत्रवर्धते ७४ मृतेजीवतिवा पत्यौयानान्यमुपगच्छति सेहकीर्त्तिमवाप्नोतिमोदतेचोमयासह ७५ आज्ञासंपादिनींदक्षांवीरसूंप्रियवादिनीम् त्यजन्दाप्यस्तृतीयांशमद्रव्योभरणंस्त्रियाः ७६

पत्यादन्यंपुरुषंनैवोपगच्छतिसेहलोकेविपुलांकीर्त्तिमवाप्नोति उमयाचसहक्रीडतिपुण्यप्रभावादमुत्रेति ७५ अधिवेदनकारणाभावे अधिवेत्तारंप्रत्याह आज्ञासंपादिनीमादेशसंपादिनींदक्षांशीघ्रकारिणींवीरसूंपुत्रवतींप्रियवादिनींमधुरभाषिणींयस्त्यजति अधिविंदतिसराज्ञाधनस्यतृतीयांशंदाप्यः निर्धनस्तुभरणंग्रासाच्छादनादिदाप्यः ७६

स्त्रीधर्मानाह स्त्रीभिः सदा भर्तृवचनं कार्यं यस्मादयमेव स्त्रिया उत्कृष्टो धर्मः स्त्रीणां स्वर्गहेतुत्वात् यदा तु महापातकदूषितस्तदा आ सुद्धेः संप्रतीक्ष्यः न तत्पारतंत्र्यं उत्तरकालं तु पूर्ववदेव तत्पारतंत्र्यम् ७७ शास्त्रीयदारसंग्रहस्य फलमाह लोके आनंत्यं वंशस्याविच्छेदः दिवः प्राप्तिश्च दारसंग्रहस्य प्रयोजनं कथमित्याह पुत्रपौत्रप्रपौत्रकैः लोकानंत्यमग्निहोत्रादिभिश्च स्वर्गप्राप्तिरित्यन्वयः यस्मात् स्त्रीभ्य एतद्द्वयं भवति तस्मात् स्त्रियः सेव्या उपभोग्याः प्रजार्थं रक्षितव्याश्च धर्मार्थं तथा चापस्तंबेन धर्मप्रजासंपत्तिः प्रयोजनं दारसंग्रहस्योक्तं धर्मप्रजासंपन्नेषु दारेषु नान्यां कुर्वीतेति वदता रतिफलं तु लौकिकमेव ७८ पुत्रोत्पत्त्यर्थं स्त्रियः सेव्या इत्युक्तं तत्र विशेषमाह स्त्रीणां गर्भधारणयोग्यावस्थोपलक्षितः कालः ऋतुः स च रजोदर्शनदिवसादारभ्य षोडशा

स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परः स्त्रियाः आ सुद्धेः संप्रतीक्ष्यो हि महापातकदूषितः ७७ लोकानंत्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः यस्मात्तस्मात् स्त्रियः सेव्याः कर्त्तव्याश्च सुरक्षिताः ७८ षोडशर्तुनिशाः स्त्रीणां तस्मिन् युग्मासु संविशेत् ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत् ७९

होरात्राणि एतस्मिन्नृतौ युग्मासु समासु रात्रिषु रात्रिग्रहणाद्दिवसप्रतिषेधः संविशेद्गच्छेत् पुत्रार्थं युग्मासु इति बहुवचनं समुच्चयार्थं अतश्चैकस्मिन्नपि ऋतौ अप्रतिषिद्धासु युग्मासु सर्वासु रात्रिषु गच्छेत् एवं गच्छन् ब्रह्मचार्येव भवति अतो यत्र ब्रह्मचर्यं श्राद्धादौ चोदितं तत्र गच्छतोपि न ब्रह्मचर्यस्खलनदोषोस्ति किंच पर्वाण्याद्याश्चतस्रो वर्जयेत् पर्वाणीति बहुवचनाद्यथार्थावगमादष्टमीचतुर्दश्योर्ग्रह-

णम् यथाहमनुः अमावास्यामष्टमींच पौर्णमासींचतुर्दशीम् ब्रह्मचारीभवेन्नित्यमप्यृतौस्नातकोद्विजइति अतोमावास्यादीन्रजोदर्शनादारभ्यचतस्रो-
रात्रीश्चवर्जयेत् ७९ किंच एवमुक्तेनप्रकारेणस्त्रियंगच्छन्क्षामांगच्छेत् क्षामताचतस्मिन्कालेरजस्वलाव्रतेनैवभवति अथचेन्नभवतितदाकर्त्तव्याक्षा
मतापुत्रोत्पत्त्यर्थं अल्पास्निग्धभोजनादिना पुमान्पुंसोधिकेशुक्रेस्त्रीभवत्यधिकेस्त्रियइतिवचनात् यदायुग्मायामपिरात्रौशोणिताधिक्यंतदास्त्र्येवपुरु

एवंगच्छन्स्त्रियंक्षामांमघांमूलंचवर्जयेत्
सुस्थइंदौसकृत्पुत्रंलक्षण्यंजनयेत्पुमान् ८०

षाकृतिः अयुग्मायामपिशुक्राधिक्येपुमानेवभवतिस्त्र्याकृतिः कालस्यनिमित्तत्वात् शुक्रशोणितयोश्चोपादानकारणत्वेनप्राबल्यात् तस्मात्क्षा
माकर्त्तव्या मघामूलनक्षत्रेचवर्जयेत् चंद्रेचैकादशादिशुभस्थानगतेचकारात्पुंनक्षत्रशुभयोगलग्नादिसंपत्तौसकृदेकस्यांरात्रौनद्विस्त्रिर्वा ततो
लक्षणैर्युक्तंपुत्रंजनयति पुमानप्रतिहतपुंस्त्वः ८०

एवमृतौ नियममुक्त्वाइदानीमनृतौ नियममाह भार्यायाइच्छानतिक्रमेणप्रवृत्तिरस्यास्तीतियथाकामी भवेत् वाशब्दोनियमांतरपरिग्रहार्थः नपू
र्वनियमनिवृत्त्यर्थः स्त्रीणांवरमिंद्रदत्तमनुस्मरन् भवतीनांकामविहंतापातकीस्यादिति यथाताअब्रुवन्वरंवृणामहै ऋत्वियात्प्रजांविंदामहै काममा
विजनितोः संभवामेति तस्मादृत्वियात्स्त्रियःप्रजांविंदंतेकाममाविजनितोः संभवंतिवरंवृतंतासामिति अपिच स्वदारेष्वेवनिरतः नितरांतन्मनस्कोभ
वेदित्यनुषज्जते एवकारेणस्त्र्यंतरगमनंनिवर्त्तयति प्रायश्चित्तस्मरणात् उभयत्रापिदृष्टप्रयोजनमाह स्त्रियोरक्ष्यायतःस्मृताइति यस्मात्स्त्रियोरक्ष्याः

यथाकामीभवेद्वापिस्त्रीणांवरमनुस्मरन् स्वदारनिरतश्चैवस्त्रियोरक्ष्यायतःस्मृताः ८१

स्मृताउक्ताः कर्त्तव्याश्चसुरक्षिताइति तच्चसुरक्षितत्वंयथाकामित्वेनस्त्र्यंतरागमनेनभवतीति अत्राह तस्मिन्युग्मासुसंविशेदिति किमयंविधि
र्नियमःपरिसंख्यावा उच्यते नतावद्विधिःप्राप्तार्थत्वात् नापिपरिसंख्यादोषत्रयसमासक्तेः अतोनियमंप्रतिपेदिरेन्यायविदः कःपुनरेषांभेदः अत्यंता
प्राप्तप्रापणंविधिः यथाग्निहोत्रंजुहुयादष्टकाःकर्त्तव्याइति पक्षेप्राप्तस्याप्राप्तपक्षांतरप्रापणंनियमः यथासमेयजेतेति दर्शपूर्णमासाभ्यांयजेतेतिया
गःकर्त्तव्यतयाविहितःसचदेशमंतरेणकर्त्तुमशक्यइत्यर्थाद्देशःप्राप्तः सचसमोविषमश्चेतिद्विविधः यदायजमानःसमेयियक्ष्यतेतदासमेयजेतेतिवच

पंक्तिः ओ॰ २ विधिरत्यंतमप्राप्तौनियमःपाक्षिकेविधिः तत्रचान्यत्रचप्राप्तौपरिसंख्यानिगद्यते

नप्युदास्तेस्वार्थस्यप्राप्तत्वात् यदातु विषमेदेशेऽपियक्ष्यनेतदासमेयजेतेतिस्वार्थंविधत्ते स्वार्थस्यतदानीमप्राप्तत्वात् विषमदेशनिवृत्तिस्त्वार्थिकी
चोदितदेशेनैवयागनिष्पत्तेः अचोदितदेशोपादानेनयथाशास्त्रंयागोनानुष्ठितःस्यादिति तथाप्राङ्मुखोऽन्नानिभुंजीतेति इदमपिस्मार्त्तमुदाहरणंपू
र्वेणव्याख्यातं एकस्यानेकत्रप्राप्तस्यान्यतोनिवृत्त्यर्थमेकत्रपुनर्वचनंपरिसंख्या तद्यथा इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्तइत्ययंमंत्रः
स्वसामर्थ्यादश्वाभिधान्यागर्दभाभिधान्याश्चरशनायाग्रहणेविनियुक्तःपुनरश्वाभिधानीमादत्तइत्यनेनाश्वाभिधान्यांविनियुज्यमानोगर्दभाभिधान्या
निवर्त्तते तथापंचपंचनखाभक्ष्याइत्यत्रहियदृच्छयाश्वादिषुशशादिषुचभक्षणंप्राप्तं पुनःशशादिषुश्रूयमाणंश्वादिभ्योनिवर्त्ततइति किंपुनरत्रयु-
क्तं परिसंख्येत्याह तथाहि कृतदारसंग्रहस्यस्वेच्छयैवर्त्तौगमनंप्राप्तमितिनविधेरयंविषयः नापिनियमस्य गृह्यस्मृतिविरोधात् एवंहिस्मरंतिगृ-
ह्यकाराः दारसंग्रहानंतरंत्रिरात्रंद्वादशरात्रंसंवत्सरंवाब्रह्मचारीस्यादिति तत्रद्वादशरात्रात्संवत्सराद्वापूर्वमेवऋतुसंभवेऋतौगच्छेदेवेतिनियमा-
द्ब्रह्मचर्यस्मरणंबाध्येत अपिचप्राप्तेभावार्थेवचनंविशेषणपरंयुक्तं प्राप्तंचर्त्तौभार्यागमनमिच्छयैवातोयदिगच्छेदृतावेवेतिवचनव्यक्तिर्युक्ता किंच
नैयमिकात्पुत्रोत्पत्तिविधेरेवऋतौगमनंनित्यंप्राप्तमेवेतिऋतौगच्छेदेवेतिनियमोनर्थकःस्यात् नियमेचादृष्टंकल्पनीयं किंच ऋतौगंतव्यमेवेतिनिय
मेअसन्निहितस्यव्याध्यादिनाअसमर्थस्यानिच्छोश्चाशक्योर्थउपदिष्टःस्यात् विध्यनुवादविरोधश्चनियमे तथाह्येकःशब्दःसकृदुच्चरितस्तमेवार्थं
पक्षेअनुवदतिपक्षेविधत्तेचेति तस्मादृतावेवगच्छेन्नान्यत्रेतिपरिसंख्यैवयुक्ता तदिदंभारुचिविश्वरूपादयोनानुमन्यंते यतोनियमएवयुक्तःपक्षेस्वा
र्थविधिसंभवात् अगमनेदोषश्रवणाच्च ऋतुस्नातांतुयोभार्यांसन्निधौनोपगच्छति घोरायांभ्रूणहत्यायांयुज्यतेनात्रसंशयइति नचविध्यनुवाद

किंच पाणिग्रहणात्प्राक् पिता कन्यामकार्यकरणाद्रक्षेत् ततऊर्ध्वंभर्त्ता तदभावेपुत्राः स्वाभावेचतेषामुक्तानामभावेज्ञातयः ज्ञातीनामभावेराजा प
क्षहृयावसानेतुराज्ञाभर्त्ताप्रभुःस्त्रियाइतिवचनात् अतःक्वचिदपिस्त्रीणांनैवस्वातंत्र्यम् ८५ किंच भर्त्राविनाभर्त्तृरहितापित्रादिरहितानस्यात् य
स्मात्तद्रहितागर्हणीयानिंद्याभवेत् एतच्चब्रह्मचर्यपक्षे भर्त्तरिप्रेतेब्रह्मचर्यंतदन्वारोहणंवेति विष्णुस्मरणात् अन्वारोहणेमहानभ्युदयः तथाचव्या
सः कपोतिकाख्यानव्याजेन दर्शितवान् पतिव्रतासासंदीप्तंप्रविवेशहुताशनं तत्रचित्रांगदधरंभर्त्तारंसान्वपद्यत ततःस्वर्गगतःपक्षीभार्ययासहसं-

रक्षेत्कन्यांपिताविन्नांपतिःपुत्रास्तुवार्धके अभावेज्ञातयस्तेषांनस्वातंत्र्यंक्वचित्स्त्रियाः ८५
पितृमातृसुतभ्रातृश्वश्रूश्वसुरमातुलैः हीनानस्याद्विनाभर्त्रागर्हणीयान्यथाभवेत् ८६

गतः कर्मणापूजितस्तत्ररेमेचसहभार्ययेति तथाचशंखांगिरसौ तिस्रःकोट्योर्धकोटीचयानिलोमानिमानुषे तावत्कालंवसेत्स्वर्गेभर्त्तारंयानु
गच्छतीतिप्रतिपाद्यतयोरवियोगंदर्शयतः व्यालग्राहीयथासर्पंबलादुद्धरतेबिलात् तद्वदुत्धृत्यसानारीसहतेनैवमोदते तत्रसाभर्त्तृपरमास्तू-
यमानाप्सरोगणैः क्रीडतेपतिनासार्द्धंयावदिंद्राश्चतुर्दशेति तथा ब्रह्मघ्नोवाथमित्रघ्नःकृतघ्नोवाभवेत्पतिः पुनात्यविधवानारीतमादायमृतातु-
या तथाहारीतः मृतेभर्त्तरियानारीसमारोहेद्धुताशनम् सारुंधतीसमाचारास्वर्गलोकेमहीयते यावच्चाग्नौमृतेपत्यौस्त्रीनात्मानंप्रदाहयेत् तावन्न

मुच्यते साहि स्त्री शरीरात्कथंचनेति हारीतोपि मातृकं पैतृकं चापि यत्र चैव प्रदीयते कुलत्रयं पुनात्येषा भर्त्तारं यानुगच्छतीति तथा आर्त्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रतेति अयं सर्वासां स्त्रीणामगर्भिणीनामबालापत्यानां आचांडालानां साधारणो धर्मः भर्त्तारं यानुगच्छतीत्यविशेषोपादानात् यानि च ब्राह्मण्यनुगमननिषेधपराणि वाक्यानि मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात् इतरेषु तु वर्णेषु तपः परमसुच्यते जीवंती तद्धितं कुर्यान्मरणादात्मघातिनी यास्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत् सा स्वर्गमात्मघातेन नात्मानं न पतिं नयेत् इत्येवमादीनि तानि पृथक्चित्यधिरोहणविषयाणि पृथक्चितिं समारुह्य न विप्रा गंतुमर्हतीति विशेषस्मरणात् अनेन क्षत्रियादिस्त्रीणां पृथक्चित्यभ्यनुज्ञा गम्यते यत्तु कैश्चिदुक्तं पुरुषाणामिव स्त्रीणामप्यात्महननस्य प्रतिषिद्धत्वादनिमस्सदूस्वर्गाभिलाषायाः प्रतिषेधशास्त्रमतिक्रामंत्या अयमनुगमनोपदेशः श्येनवत् यथा श्येनेनाभिचरन्यजेतेति तीव्रक्रोधाक्रांतस्वांतस्य प्रतिषेधशास्त्रमतिक्रामतः श्येनोपदेश इति तदयुक्तं येतावत् श्येनकरणिकायां भावनायां भाव्यभूतहिंसायां विधिसंस्पर्शाभावेन प्रतिषेधसंस्पर्शात् फलद्वारेण श्येनस्यानर्थत्वं वर्णयंति तेषां मते हिंसायाएव स्वर्गार्थतया अनुगमनशास्त्रेण विधीयमानत्वात्प्रतिषेधसंस्पर्शाभावादग्नीषोमीयवत्स्पष्टमेवानुगमनस्य श्येनवैषम्यं यत्तु मतं हिंसा नाम मरणानुकूलो व्यापारः श्येनश्च परमरणानुकूलव्यापाररूपत्वाद्धिंसैव कामाधिकारे च करणांशे रागतः प्रवृत्तिसंभवेन विधेरप्रवर्त्तकत्वात् रागप्रयुक्तहिंसारूपत्वात् श्येनः प्रतिषिद्धः स्वरूपेणैवानर्थ इति तत्राप्यनुगमनशास्त्रेण मरणस्यैव स्वर्गसाधनतया विधानान्मरणे यद्यपि रागतः प्रवृत्तिस्तथापि मरणानुकूले व्यापारे अग्निप्रवेशादाविति कर्त्तव्यतारूपे विधित एव प्रवृत्तिरिति न निषेधस्यावकाशः वायव्यं श्वेतमालभेत भूतिकाम इतिवत् तस्मात्स्पष्टमेवानुगम

विरोधः अनुवादाभावाद्विध्यर्थत्वाच्च वचनस्य तत्र हि विध्यनुवादविरोधः यत्र विधेयावधितया न देवानुवेदितव्यम प्राप्ततयान्योद्देशेन विधातव्यं च यथा
वाजपेयाधिकरणपूर्वपक्षे वाजपेयेन स्वाराज्यकामो यजेतेति वाजपेयलक्षणगुणविधानावधित्वेन यागोऽनुवेदितव्यः स एव स्वाराज्यलक्षणफलोद्देशे
न विधातव्यश्चेति नचानुवादेनेह कृत्यमस्ति यत्तु नियमे दृष्टं कल्प्यमित्युक्तं तत्परिसंख्यायामपि समानं अनृतौ गच्छतो दोषकल्पनात् यत्तु नैयमिक
पुत्रोत्पादनविध्याक्षेपेणैव ऋतौ नित्यगमनप्राप्तेर्न नियम इति तदसत् स एवायं नैयमिकपुत्रोत्पादनविधिः स्यात् मतमेवं गच्छन् स्त्रियं क्षामां लक्षण्यं
पुत्रं जनयेदिति स्त्र्यभिगमनातिरिक्तः पुत्रोत्पादनविधिरिति तन्न गमनकरणिकाया भावनाया एव पुत्रोत्पत्तिकर्मता प्रदृश्यते एवं गच्छन् लक्षण्यं पुत्रं
जनयेदित्यनेन यथाग्निहोत्रं जुह्वन् स्वर्गं भावयेदिति नचासंनिहितादेरशक्यार्थविधिप्रसंगः सन्निहितशक्तयोरेवोपदेशात् ऋतुस्नातां तु यो भार्यां सं
निधौ नोपगच्छतीति यः स्वदारान् ऋतुस्नातान् स्वस्थः सन्नोपगच्छतीति च विशेषोपादानात् अनिच्छानिवृत्तिरुक्तनियमविधानादेव नच विशेषणपरता-
पि पक्षे भावार्थविधिसंभवात् नापि गृह्यस्मृतिविरोधः संवत्सरात्पूर्वमेव ऋतुदर्शने संविशतो न ब्रह्मचर्यस्खलनदोषः यथा श्राद्धादिषु तस्मात्स्वार्थहा
नि परार्थकल्पनाप्राप्तबाधलक्षणदोषत्रयवती परिसंख्या न युक्ता पंच पंचनखा भक्ष्या इत्यत्र यद्यपि शशादिषु भक्षणस्य पक्षे प्राप्तेर्नियमः शशादि-
षु श्वादिषु च प्राप्तेः परिसंख्येत्युभयसंभवः तथापि नियमपक्षे शशाद्यभक्षणे दोषप्रसंगः श्वादिभक्षणे चादोषप्रसंगेन प्रायश्चित्तस्मृतिविरोध इति प-
रिसंख्यैवाश्रिता एतेन सायंप्रातर्द्विजातीनामशनं स्मृतिनोदितमित्यत्रापि नियमो व्याख्यातः नांतरा भोजनं कुर्यादिति च पुनरुक्तं स्यात्परिसंख्यायामेवं
च नियमे सति ऋतावृतावितिवीप्सा लभ्यते निमित्तावृत्तौ नैमित्तिकमप्यावर्त्तत इति न्यायात् यथाकामी भवेदित्यपि नियम एव अनृतावपि स्त्रीकामना

यां सत्यां स्त्रियमभिरमयेदेवेति ऋतावुपेयात्सर्वत्रवाप्रतिषिद्धवर्ज्यमित्येतदपिगौतमीयसूत्रद्वयंनियमपरमेव ऋतावुपेयादनृतावपिस्त्रीकामनायां प्रतिषिद्धवर्जमुपेयादेवेत्यलमतिप्रसंगेन ८१ किंच भर्त्तृप्रभृतिभिः पूर्वोक्ताःसाध्व्यःस्त्रियोयथाशक्त्यलंकारवसनभोजनपुष्पादिभिःसंमाननीयाःय- स्मात्ताःपूजिताःधर्मार्थकामान्संवर्धयंति ८२ तयापुनःसमर्पितगृहव्यापारयाकिंभूतयाभवितव्यमित्याह संयतःस्वस्थाननिवेशितःउपस्करोगृहोपकरण वर्गोययासातथोक्ता यथोलूखलमुसलशूर्पादेः कंडनस्थाने दृषदुपलयोरवियोगेन पेषणस्थानइत्यादि दक्षागृहव्यापारकुशला हृष्टासदैवप्रहसितान

भर्त्तृभ्रातृपितृज्ञातिश्वश्रूश्वसुरदेवरैः बंधुभिश्चस्त्रियःपूज्याभूषणाच्छादनाशनैः ८२ संयतोपस्करादक्षाहृष्टाव्ययपरा ङ्मुखी कुर्यात्श्वसुरयोःपादवंदनंभर्त्तृतत्परा ८३ क्रीडाशरीरसंस्कारंसमाजोत्सवदर्शनम् हास्यपरगृहेयानंत्यजेत्प्रोषि तभर्त्तृका ८४

ना व्ययपराङ्मुखीनव्ययशीलास्यादितिसर्वत्रशेषः किंच श्वश्रूश्चश्वशुरश्चश्वसुरौ श्वशुरःश्वश्र्वेत्येकशेषः तयोःपादवंदनंनित्यंकुर्यात् श्वसुरग्रहणंमान्यांतरोपग्रहणार्थं भर्तृतत्परा भर्त्तृवशवर्त्तिनीसतीपूर्वोक्तंकुर्यात् भर्त्तृसन्निधावुक्तं ८३ प्रोषितेभर्त्तरितयाकिंकर्त्तव्यमित्याह देशांतरग तभर्त्तृका क्रीडांकंदुकादिभिः शरीरसंस्कारमुद्वर्त्तनादिभिःसमाजोजनसमूहःउत्सवोविवाहादिः तयोर्दर्शनं हास्यंविश्रंभणंपरगृहगमनं त्यजेदितिप्रत्येकं संबध्यते ८४

नस्यश्येनवैषम्यं यत्तु तस्मादु ह न पुरायुषः स्वःकामी प्रेयादिति श्रुतिविरोधादनुगमनमयुक्तमिति तच्च न स्वःकाम्यायुषः प्राक् न प्रेयादिति स्वर्गफलोद्दे
शेनायुषः प्रागायुर्व्ययो न कर्त्तव्यो मोक्षार्थिना यस्मादायुषः शेषे सति नित्यनैमित्तिककर्मानुष्ठानक्षपितांतःकरणकलंकस्य श्रवणमनननिदिध्यासनसं
पत्तौ सत्यामात्मज्ञानेन नित्यनिरतिशयानंदब्रह्मप्राप्तिलक्षणमोक्षसंभवः तस्मादनित्याल्पसुखरूपस्वर्गार्थमायुषो व्ययो न कर्त्तव्य इत्यर्थः अतश्च मोक्ष
मनिच्छंत्या अनित्याल्पसुखरूपस्वर्गार्थिन्या अनुगमनं युक्तं इतरकाम्यानुष्ठानवदिति सर्वमनवद्यं ८६ किंच प्रियमनवद्यत्वेन मनोनुकूलमायत्यां
च यच्छ्रेयस्करं तद्धितं प्रियं च हितं च प्रियहितं पत्युः प्रियहिते तस्मिन् युक्ता निरता स्वाचारा शोभनः आचारो यस्याः सा तथोक्ता शोभनश्चाचारो दर्शितः–

पतिप्रियहिते युक्ता स्वाचारा विजितेंद्रिया सेह कीर्त्तिमवाप्नोति प्रेत्य चानुत्तमां गतिम् ८७

शंखेन नानुक्ता गृहान्निर्गच्छेत्
नानुत्तरीया नत्वरितं व्रजेत् न परपुरुषं भाषेतान्यत्र वणिक्प्रव्रजितवृद्धवैद्येभ्यः न नाभिं दर्शयेत् आगुल्फाद्वासः परिदध्यात् न स्तनौ विवृतौ कुर्यात् न
हसेदप्रावृता भर्तारं तद्बंधून्वा न द्विष्यान्न गणिकाधूर्त्ताभिसारिणीप्रव्रजिताप्रेक्षणिकामायामूलकुहककारिकादुःशीलादिभिः सहैकत्र तिष्ठेत् सं
सर्गेण हि चारित्रं दुष्यतीति विजितेंद्रिया विजितानि संयमितानींद्रियाणि श्रोत्रादीनि वागादीनि च मनः सहितानि यया सा इह लोके कीर्त्तिं प्रख्यातिं पर
लोके चोत्तमां गतिं प्राप्नोति अयं च सकल एव स्त्रीधर्मो विवाहादूर्ध्वं वेदितव्यः प्रागुपनयनात्कामचारकामवादकामभक्षा इति स्मरणात् वैवाहिको विधिः स्त्री
णामौपनायनिकः स्मृत इति ८७ ७ ७

अनेकभार्यंप्रत्याह सवर्णायांसत्यां अन्यामसवर्णां नैवधर्मकार्यंकारयेत् सवर्णास्वपिबह्वीषु धर्म्ये विधौ धर्मानुष्ठाने ज्येष्ठयाविनाज्येष्ठांमुक्त्वा इतरा मध्यमा कनिष्ठावा न नियोक्तव्या ८८ प्रमीतपतिकायाविधिमुक्त्वाइदानीं प्रमीतभार्यंप्रत्याह पूर्वोक्तां वृत्तवतीं आचारवतीं विपन्नांस्त्रियमग्निहोत्रेण श्रौतेनाग्निनातदभावे स्मार्तेन दाहयित्वापतिः भर्त्ता अनुत्पादितपुत्रोऽनिष्टयज्ञोवा आश्रमांतरेष्वनधिकृतो वाऽस्त्यंतराभावे पुनर्दारान्

सत्यामन्यांसवर्णायांधर्मकार्यंनकारयेत् सवर्णासुविधौधर्म्येज्येष्ठयानविनेतरा ८८
दाहयित्वाग्निहोत्रेणस्त्रियंवृत्तवतींपतिः आहरेद्विधिवद्दारानग्नींश्चैवाविलंबयन् ८९

अग्नींश्चविधिवदाहरेत् अविलंबयन् शीघ्रमेव अनाश्रमीनतिष्ठेतदिनमेकमपिद्विजइतिदक्षस्मरणात् एतच्चाधानेनसहाधिकृतायाएवनान्यस्याः यत्तुद्वितीयांचैवयोभार्यांदहेद्वैतानिकाग्निभिःजीवत्यांप्रथमायांतुसुरापानसमंहितदिति तथा मृतायांतुद्वितीयायांयोग्निहोत्रंसमुत्सृजेत् ब्रह्मघ्नंतंविजानीयाद्यश्चकामात्समुत्सृजेदिति एवमादि तदाधानेनसहानधिकृतायाअग्निदाहेवेदितव्यं इतिविवाहप्रकरणम् ८९ ॐ ॐ ॐ

ब्राह्मणस्यच तस्रोभार्याभवंतिक्षत्रियस्यातिस्रोवैश्यस्यद्वेशूद्रस्यैकेत्युक्तातासुचपुत्राउत्पादयितव्याइत्युक्तं इदानींकस्यांकस्मात् कःपुत्रोभवति इतिविवेकमाह सवर्णेभ्योब्राह्मणादिभ्यः सवर्णासुब्राह्मण्यादिषुसजातयोमातृपितृसमानजातीयाःपुत्राभवंति विन्नास्वेषविधिःस्मृतइतिसर्व शेषत्वेनोपसंहरणात् विन्नासुसवर्णास्वितिसंबध्यते विन्नाशब्दस्यसंबंधिशब्दत्वाद्वेत्तृभ्यःसवर्णेभ्यइतिलभ्यते एकःसवर्णशब्दःस्पष्टार्थः अतश्चायमर्थः संवृत्तः उक्तेनविधिनाऊढायांसवर्णायांवोढुःसमानादुत्पन्नः समानजातीयोभवति अतश्चकुंडगोलककानीनसहोढादीनामस वर्णत्वमुक्तंभवति तेचसवर्णेभ्योनुलोमप्रतिलोमेभ्यश्चभिद्यमानाः साधारणधर्मैरहिंसादिभिरधिक्रियंते शूद्राणांतुसधर्माणःसर्वेपध्वंसजाः

सवर्णेभ्यःसवर्णासुजायंतेहिसजातयः अनिंद्येषुविवाहेषुपुत्राःसंतानवर्धनाः ९०

स्मृताइतिस्मरणात् अपध्वंसजाःव्यभिचारजाताः शूद्रधर्मैरपि द्विजशुश्रूषादिभिरधिक्रियंते ननुकुंडगोलकयोरब्राह्मणत्वेश्राद्धेप्रतिषेधोनुप पन्नः न्यायविरोधश्च योयज्जातीयात् यज्जातीयायामुत्पन्नः सतज्जातीयएव यथागौर्गविगौः अश्वाद्वडवायामश्वः तस्माद्ब्राह्मणाद्ब्राह्मण्यामुत्प न्नोनब्राह्मणइतिविरुद्धं तथाकानीनपौनर्भवादीननुक्रम्य सजातीयेष्वयंप्रोक्तस्तनयेषुमयाविधिरितिवचनविरोधश्च नैतत्सारं ब्राह्मणेनब्रा ह्मण्यामुत्पन्नोब्राह्मणइतिभ्रमनिवृत्त्यर्थः श्राद्धेप्रतिषेधः यथात्यंतसमासस्यपतितस्यश्राद्धेप्रतिषेधः नचन्यायविरोधः यत्रमत्स्यक्षगम्याजातिर्भ

वतितत्रतथा ब्राह्मणादिजातिस्तुस्मृतिलक्षणायथास्मरणंभवति यथासमानेपिब्राह्मण्येकुंडिनोवसिष्ठोगौतमइतिस्मरणलक्षणंगोत्रं तथाम नुष्यत्वेसमानेपिब्राह्मण्यादिजातिः स्मरणलक्षणा मातापित्रोश्चैतदेवजातिलक्षणं नचानवस्था अनादित्वात्संसारस्य शब्दार्थव्यवहारवत् सजातीयेष्वयंप्रोक्तस्तनयेषुमयाविधिरिति नूक्तानुवादत्वाद्यथासंभवंव्याख्यास्यते क्षेत्रजस्तुमातृसमानजातीयोनियोगस्मरणात् शिष्टसमा चाराच्च यथाधृतराष्ट्रपांडुविदुराःक्षेत्रजाःसंतोमातृसमानजातीयाइत्यलमतिप्रसंगेन किंच अनिंद्येषुब्राह्मा दिषुविवाहेषुपुत्राःसंतानवर्ध- नाः अरोगिणोदीर्घायुषोधर्मप्रज्ञासंपन्नाभवंति ९० वर्णाउक्ताइदानीमनुलोमानाह ब्राह्मणात्क्षत्रियायांविन्नायामुत्पन्नोमूर्धावसिक्तोहि

विप्रान्मूर्धावसिक्तोहि क्षत्रियायांविशःस्त्रियां अंबष्ठःशूद्र्यांनिषादोजातःपारसवोपिवा ९१

नामपुत्रोभवति वैश्यकन्यकायांविन्ना यामंबष्ठोनामभवति शूद्रायांविन्नायांनिषादोनामपुत्रोभवति निषादोनामकश्चिन्मत्स्यघातजीवीप्रतिलोमजः समाम्नूदितिपारसवोयंनिषादइतिसं- ज्ञाविकल्पः विप्रादितिसर्वत्रानुवर्त्तते यत्तुब्राह्मणेनक्षत्रियायामुत्पादितः क्षत्रियएवभवति क्षत्रियेणवैश्यायामुत्पादितोवैश्यएवभवति वैश्येनशूद्राया मुत्पादितः शूद्रएवभवतीतिशंखस्मरणं तत्क्षत्रियादिधर्मप्राप्त्यर्थं नपुनर्मूर्धावसिक्तादिजातिनिराकरणार्थं क्षत्रियादिजातिप्राप्त्यर्थंवा अतश्चमूर्धावसि क्तादीनां क्षत्रियादिभिरुक्तैरेवदंडाजिनोपवीतादिभिरुपनयनादिकार्यं प्रागुपनयनात्कामचारादिपूर्ववद्देदितव्यम् ९१ छ छ छ

वैश्यायांशूद्रायांच विन्नायांराजन्यान्माहिष्योग्रौयथाक्रमंपुत्रौसंभवतः वैश्येनशूद्रायांविन्नायांकरणोनामपुत्रोभवति एषसवर्णमूर्धावसिक्तादि
संज्ञाविधिः विन्नासूद्रासुस्मृतउक्तोवेदितव्यः एतेमूर्धावसिक्तांबष्ठनिषादमाहिष्योग्रकरणाःषडनुलोमजाःपुत्रावेदितव्याः ९२ प्रतिलोमजानाह ब्रा
ह्मण्यां क्षत्रिय वैश्यशूद्रैरुत्पादिताः यथाक्रमंसूतवैदेहिकचांडालाख्याःपुत्राभवंति तत्रचांडालःसर्वधर्मबहिष्कृतः ९३ किंच क्षत्रियायोषिद्वैश्यान्मा

वैश्याशूद्र्योस्तुराजन्यान्माहिष्योग्रौसुतौस्मृतौ वैश्यात्तुकरणःशूद्र्यांविन्नास्वेषविधिःस्मृतः ९२
ब्राह्मण्याक्षत्रियात्सूतोवैश्याद्वैदेहिकस्तथा शूद्राज्जातस्तुचांडालःसर्वधर्मबहिष्कृतः ९३ क्षत्रियामा
गधंवैश्याच्छूद्रात्क्षत्तारमेवच शूद्रादायोगवंवैश्याजनयामासवैसुतम् ९४

गधंनामपुत्रंजनयति सैवशूद्रात्क्षत्तारं वै
श्ययोषिच्छूद्रादायोगवंपुत्रंजनयति एतेचसूतवैदेहिकचांडालमागधक्षत्तायोगवाः षट्प्रतिलोमजाः एतेषांचवृत्तयः औशनसेमानवेचद्रष्टव्याः ९५ 

संकीर्णसंकरेजात्यंतरमाह क्षत्रियेणवैश्यायामुत्पादितोमाहिष्यः वैश्येनशूद्रायामुत्पादिताकरणीतस्यांमाहिष्येणोत्पादितोरथकारोनामजात्याभ
वति तस्यचोपनयनादिसर्वंकार्यं वचनात् यथाहशंखः क्षत्रियवैश्यानुलोमानंतरोत्सन्नजोरथकारस्तस्येज्यादानोपनयनसंस्कारक्रियाअश्वप्रतिष्ठा
रथसूत्रवास्तुविद्याध्ययनवृत्तितावेति एवंब्राह्मणक्षत्रियोत्सन्नमूर्धावसिक्तमाहिष्याद्यनुलोमसंकरेजात्यंतरतोपनयनादिप्राप्तिश्चवेदितव्या तयो
र्द्विजातित्वात् संज्ञास्तुस्मृत्यंतरोक्ताद्रष्टव्याः एतच्चप्रदर्शनमात्रमुक्तं संकीर्णसंकरजातीनामानंत्याद्वक्तुमशक्यत्वादतएतावदत्रविवक्षितं असंतःप्र-

माहिष्येणकरण्यांतुरथकारःप्रजायते असत्संतस्तुविज्ञेयाःप्रतिलोमानुलोमजाः ९५
जात्युत्कर्षोयुगेज्ञेयःपंचमेसप्तमेपिवा व्यत्ययेकर्मणासाम्यंपूर्ववच्चाधरोत्तरम् ९६

तिलोमजाःसंतश्चानुलोमजाज्ञातव्याइति ९५ सवर्णेभ्यःसवर्णासुजायंतइत्यादिनावर्णप्राप्तौकारणमुक्तमिदानींकारणांतरमाह जातयोमूर्धावसि
क्ताद्यास्तासामुत्कर्षोब्राह्मणत्वादिजातिप्राप्तिर्जात्युत्कर्षोयुगेजन्मनिसप्तमेपंचमेअपिशब्दात्षष्ठेवाबोद्धव्यः व्यवस्थितश्चायंविकल्पः व्यवस्थाचब्रा
ह्मणेनशूद्रायामुत्पादितानिषादीसाब्राह्मणेनोढादुहितरंकांचिज्जनयति सापिब्राह्मणेनोढाअन्यामित्यनेनप्रकारेणषष्ठीसप्तमंब्राह्मणंजनयति
ब्राह्मणेनवैश्यायामुत्पादिताअंबष्ठासाप्यनेनप्रकारेणपंचमीषष्ठंब्राह्मणंजनयति मूर्धावसिक्तापिअनेनप्रकारेणचतुर्थीपंचमंब्राह्मणमेवजनयति

एवमुग्रा क्षत्रियेणोढा माहिष्यात्त यथाक्रमं क्षत्रियं षष्ठं पंचमे जनयति तथा करणी वैश्योढा पंचमं वैश्यमित्येवमन्यत्राप्यूहनीयं किंच कर्मणां व्यत्यये
वृत्त्यर्थानां कर्मणां विपर्यासे यथा ब्राह्मणो मुख्यवृत्त्या अजीवन् क्षात्रेण कर्मणा जीवेदित्यनुकल्पः तेनाप्यजीवन् वैश्यवृत्त्या तयाप्यजीवन् शूद्रवृत्त्या
क्षत्रियोपि स्वकर्मणाजीवनार्थेनाजीवन् वैश्यवृत्त्या शूद्रवृत्त्या वा वैश्योपि स्ववृत्त्या अजीवन् शूद्रवृत्त्येति कर्मणां व्यत्ययः तस्मिन् व्यत्यये सति यद्यप
हीनो केपि तां वृत्तिं न परित्यजति तदा पंचमे षष्ठे सप्तमे वा जन्मनि साम्यं यस्य हीनवर्णस्य कर्मणा जीवति तत्समानजातित्वं भवति तद्यथा ब्राह्मणः शूद्र
वृत्त्याजीवन् तामपरित्यजन् यं पुत्रमुत्पादयति सोपि तयैव वृत्त्याजीवन् पुनरप्येवं परंपरया सप्तमे जन्मनि शूद्रमेव जनयति वैश्यवृत्त्याजीवन् ष
ष्ठे वैश्यं क्षत्रियवृत्त्याजीवन् पंचमे क्षत्रियम् क्षत्रियोपि शूद्रवृत्त्याजीवन् षष्ठे शूद्रं वैश्यवृत्त्याजीवन् पंचमे वैश्यम् वैश्योपि शूद्रवृत्त्याजीवन् ता
मपरित्यजन् पुत्रपरंपरया पंचमे जन्मनि शूद्रं जनयति पूर्ववच्चाधरोत्तरं अस्यार्थः वर्णसंकरे अनुलोमजाः प्रतिलोमजाश्च दर्शिताः संकीर्णसंकर
जाश्च रथकारनिदर्शनेन दर्शिताः इदानीं वर्णसंकरजाताः प्रदर्श्यंते अधरेच उत्तरेच अधरोत्तरं यथा मूर्धावसिक्तायां क्षत्रियवैश्यशूद्रैरुत्पादि-
तास्तथांबष्ठायां वैश्यशूद्राभ्यां निषाद्यां शूद्रेणोत्पादिता अधराः प्रतिलोमजास्तथा मूर्धावसिक्तांबष्ठानिषादीषु ब्राह्मणोत्पादिताः माहिष्योग्रयो
र्ब्राह्मणेन क्षत्रियेण चोत्पादिताः करण्यां ब्राह्मणेन क्षत्रियेण वैश्येन चोत्पादिताः उत्तरे अनुलोमजाः एवमन्यत्राप्यूहनीयं एतदधरोत्तरं पूर्ववद
सत्सदिति बोद्धव्यम् इति वर्णजातिविवेकप्रकरणम् १६

श्रौतस्मार्त्तानिकर्माणि अग्निसाध्यानिदर्शयिष्यन्नुकस्मिन्नग्नौकिंकर्त्तव्यमित्याह स्मृत्युक्तं वैश्वदेवादिकंकर्मलौकिकंच यत्प्रतिदिनंपाकलक्षणं
तदपिगृहस्थोविवाहाग्नौविवाहसंस्कृतेकुर्वीत विभागकालाहृतेवावैश्यकुलादग्निमानीयेत्यादिनोक्तसंस्कारसंस्कृते अपिशब्दात्सेतेवागृहप
तावाहृतेसंस्कृतएव ततश्चकालत्रयातिक्रमेप्रायश्चित्तीयते श्रुत्युक्तमग्निहोत्रादिकंकर्मवैतानिकाग्निषु आहवनीयादिषुकुर्वीत ९७ गृहस्थ
धर्मानाह शरीरचिंतां आवश्यकांदिवासंध्यासुकर्णस्थब्रह्मसूत्रउदङ्मुखइत्याद्युक्तविधिनानिर्वर्त्यगंधलेपक्षयकरमित्यादिनोक्तेनविधिनाकृ

कर्मस्मार्त्तंविवाहाग्नौकुर्वीतप्रत्यहंगृही दायकालाहृतेवापिश्रौतंवैतानिकादिषु ९७ शरीरचिंतांनिर्वर्त्यकृतशौ
चविधिर्द्विजः प्रातःसंध्यामुपासीतदंतधावनपूर्वकम् ९८

तशौचविधिर्द्विजः दंतधावनपूर्वकंप्रातःसंध्यामुपासीत दंतधावन
विधिश्च कंटकक्षीरवृक्षोत्थंद्वादशांगुलसंमितम् कनिष्ठिकाग्रवत्स्थूलंपर्वार्धकृतकूर्चकं दंतधावनमुद्दिष्टंजिह्वोल्लेखनिकातथेति अत्रवृ-
क्षोत्थमित्यनेनतृणलोष्ठांगुल्यादिनिषेधः पलाशाश्वत्थादिनिषेधश्चस्मृत्यंतरोक्तोद्रष्टव्यः दंतधावनमंत्रश्च आयुर्बलंयशोवर्चः प्रजाःपशु
वसूनिच ब्रह्मप्रज्ञांचमेधांचत्वंनोदेहिवनस्पतेइति ब्रह्मचारिप्रकरणोक्तस्यापिसंध्यावंदनस्यपुनर्वचनंदंतधावनपूर्वकत्वप्रतिपादनार्थम् दंत
धावननृत्यगीतादिब्रह्मचारीवर्जयेदितितन्निषेधात् ९८ ७ ७ ७ ७ ७

प्रातःसंध्यावंदनानंतरं अग्नीनाहवनीयादीन् यथोक्तेनविधिनाहुत्वा औपासनाग्निंवा तदनंतरं सूर्यदैवत्यान् उदुत्यंजातवेदसमित्यादीन् मंत्रा
न्जपेत् समाहितः अविक्षिप्तचित्तः तदनंतरं वेदार्थान्निरुक्तव्याकरणादिश्रवणेनाधिगच्छेज्ज्ञानीयात् चकारादधीतंचाभ्यसेत् विविधानिच शास्त्रा
णिमीमांसाप्रभृतीनिधर्मार्थारोग्यप्रतिपादकान्यधिगच्छेत् ९९ तदनंतरमीश्वरमभिषेकादिगुणयुक्तमन्यंवाश्रीमंतं अकुत्सितं योगक्षेमार्थं आ
लब्धलाभोयोगः लब्धपरिपालनं क्षेम तदर्थमुपेयादुपासीत उपेयादित्यनेनसेवांप्रतिषेधति वेतनग्रहणेनाज्ञाकरणंसेवा तस्याः श्ववृत्तित्वेन

हुत्वाग्नीन्सूर्यदैवत्यान्जपेन्मंत्रान्समाहितः वेदार्थानधिगच्छेच्च शास्त्राणिविविधानिच ९९ उपेयादीश्वरंचैव
योगक्षेमार्थसिद्धये स्नात्वादेवान्पितॄंश्चैवतर्पयेदर्चयेत्तथा १०० वेदाथर्वपुराणानिसेतिहासानिशक्तितः जपयज्ञ
प्रसिद्ध्यर्थंविद्यांचाध्यात्मिकींजपेत् १०१

निषेधात् ततोमध्यान्हे शास्त्रोक्तेनविधिनानद्यादिषुस्नात्वादेवान्स्वगृह्योक्तान् पितॄंश्चचकारादृ
षींश्चदेवादितीर्थेनतर्पयेत् तदनंतरंगंधपुष्पाक्षतैः हरिहरहिरण्यगर्भप्रभृतीनामन्यतमंयथावासनं ऋग्यजुःसाममंत्रैस्तत्प्रकाशकैः स्वनाम
भिर्वाचतुर्थ्यंतैर्नमस्कारयुक्तैराराधयेत् यथोक्तविधिना १०० तदनंतरंवेदाथर्वेतिहासपुराणानिसमस्तानिव्यस्तानिवा आध्यात्मिकींचविद्यांजपयज्ञ
सिद्ध्यर्थंयथोक्तेनविधिनायथाशक्तिजपेत् १०१ छ

बलिकर्मभूतयज्ञः स्वधापितृयज्ञः होमोदेवयज्ञः स्वाध्यायोब्रह्मयज्ञः अतिथिसत्क्रियामनुष्ययज्ञः एतेपंचमहायज्ञा अहरहः कर्त्तव्याःनित्यत्वा
त् यत्पुनरेषां फलश्रवणंतदेषांपावनत्वख्यापनार्थं नकाम्यत्वप्रतिपादनाय १०२ स्वगृह्योक्तेनविधिनावैश्वदेवहोमंकृत्वातदवशिष्टेनान्नेनभू
तेभ्योबलिंहरेत् अन्नग्रहणमपक्वव्युदासार्थं तदनंतरंयथाशक्ति भूमावन्नंश्वचांडालवायसेभ्योनिक्षिपेत् चशब्दात्कृमिपापरोगिपतितेभ्यः
यथाहमनुः शुनांचपतितानांचश्वपचांपापरोगिणाम् वायसानांकृमीणांच शनकैर्निक्षिपेद्भुवीति एतच्चसायंप्रातः कर्त्तव्यं अथसायंप्रातःसिद्ध

बलिकर्मस्वधाहोमस्वाध्यायातिथिसत्क्रियाः भूतपित्रमरब्रह्ममनुष्याणांमहामखाः १०२
देवेभ्यश्चहुतादन्नाच्छेषाद्भूतबलिंहरेत् अन्नंभूमौश्वचांडालवायसेभ्यश्चनिक्षिपेत् ।१०३

स्यहविष्यस्यजुहुयादित्याश्वलायनस्मरणात् इहकेचिद्वैश्वदेवाख्यस्यकर्मणःपुरुषार्थत्वमन्नसंस्कारकर्मत्वंचेच्छंति अथसायंप्रातःसिद्धस्य
हविष्यस्यजुहुयादित्यन्नसंस्कारकर्मताप्रतीयते अथातःपंचमहायज्ञाइत्युपक्रम्य तानेतानहरहः कुर्वीतेतिनित्यत्वाभिधानात्पुरुषार्थत्वंचावग
म्यतइति तदयुक्तं पुरुषार्थत्वेन्नसंस्कारकर्मत्वानुपपत्तेः तथाहि द्रव्यसंस्कारकर्मत्वपक्षेन्नार्थतावैश्वदेवकर्मणः पुरुषार्थत्वेवैश्वदेवकर्मार्थताद्रव्य
स्येतिपरस्परविरोधात्पुरुषार्थत्वमेवयुक्तं महायज्ञैश्चयज्ञैश्चब्राह्मीयंक्रियतेतनुरिति तथावैश्वदेवेनिवृत्तेतुयदन्योतिथिराव्रजेत् तस्माअन्नंयथाश

क्तिप्रदद्यान्नबलिंहरेदितिमनुस्मरणात् पुरुषार्थत्वेवैश्वदेवाख्यंकर्मनप्रतिपाकमावर्त्तनीयं तस्मादथसायंप्रातरित्यादिनोत्पत्तिप्रयोगौदर्शितौ ता
नेतान्यज्ञानहरहरहःकुर्वीतेति अधिकारविधिरितिसर्वमनवद्यं १०३ प्रत्यहमन्नंपितृभ्योमनुष्येभ्यश्चयथाशक्तिदेयं अन्नाभावेकंदमूलफलादि तस्या
प्यभावेजलंदेयं अपिशब्दात्स्वाध्यायंसततंकुर्यात् अविस्मरणार्थं नपचेदन्नमात्मार्थं अन्नग्रहणंसकलादनीयद्रव्यप्रदर्शनार्थं कथंतर्हिदेवतो
द्देशेनैव १०४ परिणीतापितृगृहेस्थितास्ववासिनी शेषाःप्रसिद्धाः बालादीनतिथिभृत्यांश्चसंभोज्य भोजयित्वादंपत्योः शेषभोजनंकर्त्तव्यं १०५

अन्नंपितृमनुष्येभ्योदेयमप्यन्वहंजलम् स्वाध्यायंचान्वहंकुर्यान्नपचेदन्नमात्मने १०४ बालस्ववासिनीवृद्धगर्भिण्या
तुरकन्यकाः संभोज्यातिथिभृत्यांश्चदंपत्योःशेषभोजनम् १०५ आपोशनेनोपरिष्टादधस्तादश्नतातथा अनग्नममृतं
चैवकार्यमन्नंद्विजन्मना १०६

भुंजानेनद्विजन्मनाउपरिष्टादधस्ताच्चापोशनाख्येनकर्मणान्नमनग्नममृतंचकार्यं द्विजन्मग्रहणमुपन
यनप्रभृतिसर्वाश्रमसाधारण्यार्थं अतिथित्वेनवर्णानांदेयंशक्त्यानुपूर्वशः अप्रणोद्योतिथिःसायमपिवाग्भूतृणोदकैः वैश्वदेवानंतरंवर्णानांब्राह्मणा
दीनांअतिथित्वेनप्राप्तानांब्राह्मणाद्यानुपूर्व्येणयथाशक्तिदेयं सायंकालेपियद्यतिथिरागच्छति तदाप्यसावप्रणोद्यः अप्रत्याख्येयएव तथा
हमनुः तृणानिभूमिरुदकंवाक्चतुर्थीचसूनृता एतान्यपिसतांगेहेनोच्छिद्यंतेकदाचनेति यद्यप्यदनीयंकिमपिनास्तितथापिवाग्भूतृणोदकैरपिसत्कारंकु
र्यात् १०६

भिक्षवेसामान्येनभिक्षादातव्या सुव्रतायब्रह्मचारिणेयतयेच सत्कृत्यस्वस्तिवाच्य भिक्षादानमप्पूर्वमित्यनेनविधिनाभिक्षादातव्या भिक्षाचग्रास
संमिताग्रासश्चमयूरांडपरिमाणः ग्रासमात्राभवेद्भिक्षापुष्कलंतच्चतुर्गुणं हंतस्तैस्तच्चतुर्भिःस्यादग्रंतत्त्रिगुणंभवेदिति शातातपस्मरणात् भोजन
कालेचागतान्सखिसंबंधिबांधवान्भोजयेत् सखायोमित्राणि संबंधिनोयेभ्यःकन्यागृहीतादत्तावा मातृपितृसंबंधिनोबांधवाः १०७ महांतमुक्षा
णंधौरेयंमहाजंवाश्रोत्रियायोक्तलक्षणायोपकल्पयेत् भवदर्थमस्माभिःपरिकल्पितोयमितितत्प्रीत्यर्थंनतुदानायव्यापादनायवा यथास

सत्कृत्यभिक्षवेभिक्षादातव्यासुव्रतायच भोजयेच्चागतान्कालेसखिसंबंधिबांधवान् १०७
महोक्षंवामहाजंवाश्रोत्रियायोपकल्पयेत् सत्क्रियान्वासनंस्वादुभोजनंसूनृतंवचः १०८

र्वमेतद्भवदीयमिति प्रतिश्रोत्रियमुक्षासंभवात् अस्वर्ग्यंलोकविद्विष्टंधर्ममप्याचरेन्नत्विति निषेधाच्च तस्मात्सत्क्रियाकर्त्तव्या सत्क्रियास्वा
गतवचनासनपाद्यार्घ्यान्वितमनादिदानं तस्मिंस्तूपविष्टेपश्चादुपवेशनमन्वासनं स्वादुभोजनमिष्टमशनं सूनृतंवचः धन्यावयमद्यभवदाग-
मनादित्येवमादि अश्रोत्रियेपुनरश्रोत्रियस्योदकासनेइतिगौतमोक्तंवेदितव्यं १०८ छ छ छ छ

स्नातकोविद्यास्नातकः व्रतस्नातकः विद्याव्रतस्नातकइतिसमाप्यवेदमसमाप्यव्रतंयः समावर्त्ततेसविद्यास्नातकः समाप्यव्रतमसमाप्यवेदंयःस
मावर्त्ततेसव्रतस्नातकः उभयंसमाप्ययः समावर्त्ततेसविद्याव्रतस्नातकः आचार्यउक्तलक्षणः पार्थिवोवक्ष्यमाणलक्षणः प्रियोमित्रं विवाह्योजामा
ता चकारात् श्वशुरपितृव्यमातुलादीनांग्रहणं ऋत्विजोवृत्वामधुपर्कमाहरेत्स्नातकायोपस्थितायराज्ञेचाचार्यायचश्वशुरपितृव्यमातुलानांचे
त्याश्वलायनस्मरणात् एतेस्नातकादयः प्रतिसंवत्सरंगृहमागता अर्घ्याःमधुपर्केणसंपूज्याः अर्घशब्दोमधुपर्कंलक्षयति ऋत्विजश्चोक्तलक्षणाः
संवत्सरादर्वागपिप्रतियज्ञंमधुपर्केणसंपूज्याः १०९ अध्वनिवर्त्तमानोतिथिर्वेदितव्यः श्रोत्रियवेदपारगावध्वनिवर्त्तमानौब्रह्मलोकमभीप्सतो

प्रतिसंवत्सरंत्वर्घ्याःस्नानकाचार्यपार्थिवाः प्रियोविवाह्यश्चतथायज्ञंप्रत्यृत्विजःपुनः १०९ अध्वनीनोतिथिर्ज्ञेयः
श्रोत्रियोवेदपारगः मान्यावेतौगृहस्थस्यब्रह्मलोकमभीप्सतः ११० परपाकरुचिर्नस्यादनिंद्यामंत्रणादृते

गृहस्थस्यमान्यावतिथीवेदितव्यौ यद्यप्यध्ययनमात्रेणश्रोत्रियस्तथापिश्रुताध्ययनसंपन्नोत्रश्रोत्रियोभिधीयते एकशाखाध्ययनक्षमो
वेदपारगः ११० परपाकेरुचिर्यस्यासौतथोक्तोनैवस्यात् अनिंद्येनामंत्रणंविना अनिंद्येनामंत्रितोनापक्रामेदितिस्मरणात् वाक्चपाणी
चपादौच वाक्पाणिपादं तस्यचापल्यंवर्जयेत् वाक्चापल्यं असभ्यानृतादिभाषणं पाणिचापल्यंपल्याणास्फोटनादि पादचापल्यंलंघनोत्प्लव

नादि न कारान्नेत्रादिचापल्यं वर्जयेत् नशिश्नोदरपाणिपादवाक्चक्षुश्चापलानिकुर्यादितिगौतमस्मरणात् अतिभोजनंचवर्जयेत् अना
रोग्यहेतुत्वात् ११९ पूर्वोक्तंश्रोत्रियातिथिंवेदपारगातिथिंच भोजनादिना तृप्तं सीमांतं यावदनुव्रजेत् ततो भोजनानंतरमहः शेषं शिष्टैरिति
हासपुराणादिवेदिभिः इष्टैश्चकाव्यकथाप्रपंचचतुरैः बंधुभिश्चानुकूलालापकुशलैः सहासीत ११२ ततः पूर्वोक्तेनविधिनापश्चिमांसंध्या
मुपास्य अग्निमग्नीन्वाहुत्वातानुपास्योपस्थाय भृत्यैः पूर्वोक्तैः स्ववासिन्यादिभिः परिवृतोनातितृप्त्याभुक्त्वाचकारादायव्ययादिगृहचिंतां निर्वर्त्यानंत

वाक्पाणिपादचापल्यंवर्जयेच्चातिभोजनम् १११ अतिथिंश्रोत्रियंतृप्तमासीमांतमनुव्रजेत् अहः शेषंसमासीतशि
ष्टैरिष्टैश्चबंधुभिः ११२ उपास्यपश्चिमांसंध्यांहुत्वाग्नींस्तानुपास्यच भृत्यैः परिवृतोभुक्त्वानातितृप्त्याथसंविशेत्
११३ ब्राह्मेमुहूर्त्तेचोत्थायचिंतयेदात्मनोहितम् धर्मार्थकामान्स्वेकालेयथाशक्तिनहापयेत् ११४

रंसंविशेत्स्वप्यात् ११३ ततोब्राह्मेमुहूर्त्तेउत्थायपश्चिमेर्धप्रहरेप्रबुध्यात्मनोहितंकृतंकरिष्यमाणंचवेदार्थसंशयांश्चचिंतयेत् तदानींचित्तस्याव्या
कुलत्वेनतत्वप्रतिभासयोग्यत्वात् ततोधर्मार्थकामान्स्वोचितकालेयथाशक्तिनपरित्यजेत् यथासंभवंसेवेतेत्यर्थः पुरुषार्थत्वात् यथाहगौतमः
नपूर्वाण्हमध्यंदिनापराण्हानफलान्कुर्यात् धर्मार्थकामेभ्यस्तेषुधर्मोत्तरः स्यादिति अत्र यद्यप्येतेषांसामान्येनसेवनमुक्तंतथापिकामार्थयोर्धर्माविरोधे
नानुष्ठानं तयोर्धर्ममूलत्वादेवप्रतिदिनमनुष्ठानम् ११४

विद्यापूर्वोक्ता कर्मश्रौतंस्मार्त्तंवा वयः आत्मनोतिरिक्तंससत्यावाऊर्ध्वं बंधुःस्वजनसंपत्तिः वित्तंग्रामरत्नादिकं एतैर्युक्ताः क्रमेणमान्याःपूजनीयाः एतैर्विद्याकर्मबंधुवित्तैः प्रभूतैः प्रवृद्धैः समस्तैर्व्यस्तैर्वायुक्तः शूद्रोपिवार्धकेअशीतेरूर्ध्वंमानमर्हतीति शूद्रोप्याशीतिकोवरइतिगौतमस्मरणात् ११५ वृद्धः प्रसिद्धः भारीभाराक्रांतः नृपोभूपतिर्नक्षत्रियमात्रं स्नातो विद्याव्रतोभयस्नातः स्त्रीप्रसिद्धा रोगीव्याधितः वरोविवाहोद्यतः चक्रीशाकटिकः चकारान्मत्तोन्मत्तादीनांग्रहणं बालवृद्धमत्तोन्मत्तोपहतदेहभाराक्रांतस्त्रीस्नातकप्रव्रजितेभ्यइतिशंखस्मरणात् एभ्यःपंथादेयः एतेष

विद्याकर्मवयोबंधुवित्तैर्मान्यायथाक्रमम् एतैःप्रभूतैःशूद्रोपिवार्धकेमानमर्हति ११५ वृद्ध

भारिनृपस्नातस्त्रीरोगिवरचक्रिणाम् पंथादेयोनृपस्तेषांमान्यःस्नातश्चभूपतेः ११६

भिमुखायातेषुस्वयंपथोपक्रामेत् वृद्धादीनांराज्ञासहपथिसमवायेराजामान्यइतितस्मैपंथादेयः भूपतेरपिस्नातकोमान्यः स्नातकग्रहणंस्नातकमात्रप्राप्त्यर्थंनब्राह्मणाभिप्रायेण तस्यसदैवगुरुत्वात् यथाहशंखः अथब्राह्मणायाग्रेपंथादेयोराज्ञइत्येके तच्चानिष्टं गुरुर्ज्येष्ठश्चब्राह्मणोराजानमतिशेतेतस्मैपंथाइति वृद्धादीनांपथिपरस्परसमवायेवृद्धतराद्यपेक्षयाविद्यादिभिर्वाविशेषोद्रष्टव्यः ११६ ७ ७ ७

वैश्यस्य क्षत्रियस्य च चकाराद्ब्राह्मणस्य द्विजानुलोमानां च यागाध्ययनदानानि साधारणानि कर्माणि ब्राह्मणस्याधिकानि प्रतिग्रहयाजनाध्यापना
नि तथेति स्मृत्यंतरोक्तवृत्त्युपसंग्रहः यथाह गौतमः कृषिवाणिज्ये स्वयंकृते कुसीदं चेति अध्यापनं तु क्षत्रियवैश्ययोर्ब्राह्मणप्रेरितयोर्भवति न
स्वेच्छया आपत्काले ब्राह्मणस्याब्राह्मणाद्विद्योपयोगोनुगमनं शुश्रूषा समाप्ते ब्राह्मणो गुरुरिति गौतमस्मरणात् एतान्यनापदि ब्राह्मणस्य षट्
कर्माणि तत्र त्रीणीज्यादीनि धर्मार्थानि प्रतिग्रहादीनि वृत्त्यर्थानि षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका याजनाध्यापने चैव विशुद्धाच्च प्रति

इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च प्रतिग्रहोधिको विप्रे याजनाध्यापने तथा ११७ प्रधानं क्षत्रिये कर्म प्रजानां प
रिपालनम् कुसीदकृषिवाणिज्यपाशुपाल्यं विशः स्मृतम् ११८

ग्रह इति मनुस्मरणात् अत इज्यादीन्यवश्यं कर्त्तव्यानि न प्रतिग्रहादीनि द्विजाती-
नामध्ययनमिज्या दानं ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः पूर्वेषु नियम इति गौतमस्मरणात् ११७ क्षत्रियस्य प्रजापालनं प्रधानं कर्म धर्मार्थं
वृत्त्यर्थं च वैश्यस्य कुसीदकृषिवाणिज्यपशुपालनानि वृत्त्यर्थानि कर्माणि कुसीदं वृद्ध्यर्थं द्रव्यप्रयोगः लाभार्थं क्रयविक्रयो वाणिज्यं शेषं प्रसिद्धं श-
स्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्पशुकृषी विशः आजीवनार्थं धर्मस्तु दानमध्ययनं यजिरिति मनुस्मरणात् ११८ ७ ७ ७

शूद्रस्यद्विजशुश्रूषाप्रधानंकर्मधर्मार्थंवृत्त्यर्थंच तत्रब्राह्मणशुश्रूषापरमोधर्मः विप्रसेवैवशूद्रस्यविशिष्टंकर्मकीर्त्यतइतिमनुस्मरणात् यदापुनर्द्वि
जशुश्रूषयाजीवितुंनशक्नोतितदावणिग्वृत्त्याजीवेत् नानाविधैर्वाशिल्पैर्द्विजातीनांहितंकुर्वन् याहशैःकर्मभिःद्विजातिशुश्रूषायामयोग्योनभवति
ताहशानिकर्माणिकुर्वन्नित्यर्थः तानिचदेवलोक्तानि शूद्रधर्मोद्विजातिशुश्रूषापापवर्जनंकलत्रादिपोषणंकर्षणपशुपालनभारोद्वहनापणव्यव-
हारचित्रकर्मनृत्यगीतवेणुवीणामुरजमृदंगवादनादीनि ११९ किंच भार्यायामेवनसाधारणस्त्रीषुपरस्त्रीषुवारतिरभिगमनंयस्यसतथोक्तः शु-

शूद्रस्यद्विजशुश्रूषातयाजीवन्वणिग्भवेत् शिल्पैर्वाविविधैर्जीवेद्द्विजातिहितमाचरन् ११९
भार्यारतिःशुचिर्भृत्यभर्त्ताश्राद्धक्रियापरः नमस्कारेणमंत्रेणपंचयज्ञान्नहापयेत् १२०

चिः बाह्याभ्यंतरशौचयुक्तः द्विजवत् भृत्यादिभर्त्ता श्राद्धक्रियारतः श्राद्धानि नित्यनैमित्तिककाम्यानिच क्रियाःस्नातकव्रतानि अविरुद्धानितेषु
रतः नमइत्यनेनमंत्रेणपूर्वोक्तान्पंचमहायज्ञानहरहर्नहापयेत् अनुतिष्ठेत् नमस्कारमंत्रंचकेचित् देवताभ्यःपितृभ्यश्चमहायोगिभ्यएवच नमः
स्वाहायैस्वधायैनित्यमेवनमोनमइतिवर्णयंति नमइत्यन्ये तत्रवैश्वदेवंलौकिकेग्नौकर्त्तव्यं नवैवाहिकेग्नावित्याचार्याः १२० ५ ५

इदानीं साधारणधर्मानाह हिंसाप्राणिपीडातस्या अकरणमहिंसा सत्यमप्राणिपीडाकरं यथार्थवचनम् अस्तेयमदत्तानुपादानं शौचं बाह्यमाभ्यंतरंच बुद्धिकर्मेंद्रियाणांनियतविषयवृत्तिताइंद्रियनिग्रहः यथाशक्तिप्राणिनामन्नोदकादिदानेनार्त्तिपरिहारोदानं अंतःकरणसंयमोदमः आपन्नरक्षणंदया अपकारेपिचित्तस्याविकारः क्षांतिः एतेसर्वेषांपुरुषाणांब्राह्मणाद्याचांडालांतंधर्मसाधनम् १२१ वयोबाल्ययौवनादि बुद्धिर्नैसर्गिकीलौकिकवैदिकव्यवहारेषु अर्थोवित्तंगृहक्षेत्रादि वाक्कथनं वेषोमाल्यवस्त्रादिविन्यासः श्रुतंपुरुषार्थशास्त्रश्रवणं अभिजनः कुलम् कर्मवृत्त्यर्थंप्रतिग्रहादि एतेषांवयः प्रभृतीनां सदृशीमुचितांवृत्तिमाचरणं आचरेत्स्वीकुर्यात् यथावृद्धः स्वोचितांनयौवनोचितां एवंबुद्ध्यादिष्वपि

अहिंसासत्यमस्तेयंशौचमिंद्रियनिग्रहः दानंदमोदयाक्षांतिः सर्वेषांधर्मसाधनम् १२१ वयोबुद्ध्यर्थवाग्वेषश्रुताभिजनकर्मणाम् आचरेत्सदृशींवृत्तिमजिह्मामशठांतथा १२२ त्रैवार्षिकाधिकान्नोयः सहिसोमंपिबेद्द्विजः प्राक्सौमिकीः क्रियाः कुर्याद्यस्यान्नंवार्षिकंभवेत् १२३

योऽयं अजिह्मामवक्रां अशठाममत्सरां १२२ एवंस्मार्त्तानिकर्माण्यनुक्रम्येदानीं श्रौतानिकर्माण्यनुक्रामति त्रिवर्षजीवनपर्याप्तंत्रैवार्षिकं अधिकंवा अन्नंयस्य सएवसोमपानंकुर्यात् नातोल्पधनः अतस्त्वल्पीयसिद्रव्येयः सोमंपिबतिद्विजः सपीतसोमपूर्वोपिनतस्याप्नोतितत्फलमितिदोषश्रवणात् एतच्चकाम्याभिप्रायेण नित्यस्यचावश्यकर्त्तव्यत्वान्ननियमः यस्यवर्षजीवनपर्याप्तम

न्नं भवति सभाक् सौमिकीः सोमात्साक् प्राक्सोमं प्राक्सोमं भवाः प्राक्सौमिक्यः कास्ताः अग्निहोत्र दर्शपूर्णमास पशु चातुर्मास्यानि कर्माणि तद्धिकारा-
श्चैताः क्रियाः कुर्यात् १२३ एवं काम्यानि श्रौतानि कर्माण्यभिधायेदानीं नित्यान्याह संवत्सरे संवत्सरे सोमयागः कार्यः पशुः प्रत्ययनं अयने अयने द
क्षिणोत्तरसंज्ञिते निरूढः पशुयागः कार्यः तथा प्रतिसंवत्सरं वा पशुना संवत्सरे संवत्सरे यजेत षट्सु षट्सु वा मासेष्वित्येके इति स्मरणात् आग्रयणेष्टि
श्च सस्योत्पत्तौ कर्त्तव्या चातुर्मास्यानि च प्रतिसंवत्सरं कर्त्तव्यानि १२४ एषां सोमप्रभृतीनां पूर्वोक्तानां नित्यानां कथंचिदसंभवे तत्काले वैश्वानरीमिष्टिं कु

प्रतिसंवत्सरं सोमः पशुः प्रत्ययनं तथा कर्त्तव्याग्रयणेष्टिश्च चातुर्मास्यानि चैव हि १२४ एषामसंभ
वे कुर्यादिष्टिं वैश्वानरीं द्विजः हीनकल्पं न कुर्वीत सति द्रव्ये फलप्रदम् १२५ चांडालो जायते यज्ञकरणा
च्छूद्रभिक्षितात् यज्ञार्थलब्धमददद्भासः काकोपि वा भवेत् १२६

र्यात् किंच यो यं हीनकल्प उक्तः सति द्रव्ये सौ न कर्त्तव्यः यच्च फलप्रदं काम्यं कर्म तद्धीनकल्पं न कुर्वीत न कर्त्तव्यमिति १२५ यज्ञार्थं शूद्रधनया
चनेन स जन्मांतरे चांडालो जायते यः पुनर्यज्ञार्थं याचितं सर्वं न प्रयच्छति न त्यजति स भासः काको वा वर्षशतं भवेत् यथाह मनुः यज्ञार्थमर्थं भिक्षि
त्वा यः सर्वं न प्रयच्छति स याति भासतां विप्रः काकतां वा शतं समा इति भासः शकुंतः काकः प्रसिद्धः १२६ ७ ७ ७

कुशूलंकोष्ठकं कुंभीउष्ट्रिका कुशूलंचकुंभीचकुशूलकुंभ्यौताभ्यांपरिमितंधान्यंयस्यस तथोक्तः कुशूलधान्यःस्यात्कुंभीधान्योवा तत्रस्वकुटुंब पोषणेद्वादशाहमात्रपर्याप्तंधान्यंयस्यास्तिसकुशूलधान्यः कुंभीधान्यस्तुस्वकुटुंबपोषणेषडहमात्रपर्याप्तधान्यः त्र्यहःपर्याप्तंधान्यमस्यास्तीतित्र्या हिकः श्वोभवंधान्यमस्यास्तीतिश्वस्तनः नविद्यतेश्वस्तनंयस्यसोऽश्वस्तनः कुशूलधान्यादिसंचयोपायमाह शाल्यादेर्निपतितपरित्यक्तवल्लरीग्र हणंशिलं एकैकस्यपरित्यक्तस्यकणस्योपादानमुंछः शिलंचोंछश्चशिलोंछंतेन शिलोंछेनवा कुशूलधान्यादिश्चतुर्विधोगृहस्थोजीवेत् एषांकुशू लधान्यादीनांब्राह्मणानांगृहस्थानांचतुर्णांपरःपरः पश्चात्पश्चात्सठितः श्रेयानुत्कृष्टतमः प्रशस्यतमः एतच्चयद्यपिद्विजःप्रकृतस्तथापिब्राह्म

कुशूलकुंभीधान्योवात्र्याहिकोऽश्वस्तनोपिवा जीवेद्वापिशिलोंछेनश्रेयानेषांपरःपरः १२७

णस्यैवभवितुमर्हतीति विद्योपशमनादियोगात् तथाचमनुः अद्रोहेणैवभूतानामल्पद्रोहेणवापुनः यावृत्तिस्तांसमास्थायविप्रोजीवेदनाप दीतिविप्रमेवप्रस्तुत्य कुशूलधान्यकोवास्यात्कुंभीधान्यकएववा इत्याद्यभिहितत्वात् एतच्चातिसंपन्नंसंयतंयायावरंप्रत्युच्यते नविप्रमात्राभि प्रायेण तथासतित्रैवार्षिकाधिकान्नोयःसहिसोमंपिबेद्विज इत्यनेनविरोधः तथाचगृहस्थानांद्वैविध्यंतत्रतत्रोक्तं यथाहदेवलः द्विविधोगृहस्थो यायावरःशालीनश्चतयोर्यायावरःप्रवरःयाजनाध्यापनप्रतिग्रहरिक्थसंचयवर्जनात् षट्कर्माधिष्ठितःप्रेष्यचतुष्पदगृहग्रामधनधान्ययुक्तोलो-

कात्तुवर्त्ती शालीनइति शालीनोपिचतुर्विधः याजनाध्यापनप्रतिग्रहकृषिवाणिज्यपाशुपाल्यैः षड्भिर्जीवत्येकः याजनादिभिस्त्रिभिरन्यः याजना ध्यापनाभ्यामपरः चतुर्थस्त्वध्यापनेनैव तथाहमनुः षट्कर्मैकोभवत्येषांत्रिभिरन्यः प्रवर्त्तते द्वाभ्यामेकश्चतुर्थश्च ब्रह्मसत्रेणजीवतीति अत्रचप्रति ग्रहोधिकोविप्रइत्यादिनाशालीनस्य वृत्तयोदर्शिताः यायावरस्यजीवेद्वापिशिलोंछेनेति इतिगृहस्थधर्मप्रकरणम् १२७ एवंश्रौतस्मार्त्तानिकर्माणिगृ हस्थस्याभिधायेदानींस्नानादारभ्यब्राह्मणस्यावश्यकर्त्तव्यानिविधिप्रतिषेधात्मकानिमानससंकल्परूपाणिस्नातकव्रतान्याह ब्राह्मणस्यप्रतिग्रहाद- योर्थप्राप्त्युपायादर्शिताः तत्रविशेषउच्यते स्वाध्यायविरोधिनमर्थं अप्रतिषिद्धमपिनेहेतनान्विच्छेत नयतस्ततः कुतश्चिदविदिताचारान्नविरुद्धप्रसंगे

नस्वाध्यायविरोध्यर्थमीहेतनयतस्ततः नविरुद्धप्रसंगेनसंतोषीचभवेत्सदा १२८ राजांतेवासियाज्येभ्यः सीदन्निच्छेद्धनंक्षु धा दंभिहैतुकपाखंडिबकवृत्तींश्चवर्जयेत् १२९

नविरुद्धप्रयाज्ययाजनादिप्रसंगोनृत्यगीतादिर्विरुद्धंच प्रसंगश्चविरुद्धप्रसंगंतेननार्थमीहे तेतिसंबध्यते नञ आवृत्तिःप्रत्येकंपर्युदासार्था सर्वत्राप्यस्मिन्स्नातकप्रकरणेनञ्शब्दःपर्युदासार्थएव किंच अर्थालाभेपिसंतोषीपरितृप्तोभवेत्चका रात्संयतश्च संतोषंपरमास्थायसुखार्थीसंयतोभवेदितिमनुस्मरणात् १२८ कुतस्तर्हिधनमान्विच्छेदित्याह क्षुधासीदन्पीड्यमानःस्नातकः राज्ञोविदि तवृत्तांतात् अंतेवासिनोवक्ष्यमाणलक्षणात् याज्यात्याजनार्हाच्चधनमाददीत क्षुधासीदन्नित्यनेनविभागादिप्राप्तकुटुंबपोषणपर्याप्तधनोनकुत

श्चिदर्थमन्विच्छेदितिगम्यते किंच दांभिहैतुकादीन्सर्वकार्येषुलौकिकवैदिकशास्त्रीयेषुवर्जयेत् चकाराद्विकर्मस्थवैडालव्रतिकान् शठान् यथाहम
नुः पाखंडिनोविकर्मस्थान्वैडालव्रतिकान्शठान् हैतुकान्बकवृत्तींश्चवाङ्मात्रेणापिनार्चयेदिति लोकरंजनार्थमेवकर्मानुष्ठायीदंभी युक्तिबलेन
सर्वत्रसंशयकारीहैतुकः त्रैविद्यविरुद्धपरिगृहीताश्रमिणः पाखंडिनः बकवदस्यवर्त्तनमितिबकवृत्तिः यथाहमनुः अधोदृष्टिर्नैष्कृतिकःस्वार्थसाधनत
त्परः शठोमिथ्याविनीतश्चबकवृत्तिरुदाहृतइति प्रतिषिद्धसेविनोविकर्मस्थाः विडालोमार्जारस्तस्यव्रतंस्वभावोवायंयस्यासौविडालव्रतिकः तस्यल
क्षणमाहमनुः धर्मध्वजीसदालुब्धश्छाद्मिकोलोकदांभिकः वैडालव्रतिकोज्ञेयोहिंस्रःसर्वाभिसंधकइति शठःसर्वत्रवक्रः एतैःसंसर्गनिषेधादेवस्वयमे

शुक्लांबरधरोनीचकेशश्मश्रुनखःशुचिः नभार्यादर्शनेश्नीयान्नैकवासानसंस्थितः १३०

वंविधोनभवेदितिगम्यते १२९ किंच शुक्ले धौते अंबरेवाससीधरतिइतिशुक्लांबरधरः केशाश्चश्मश्रूणिचनखाश्चकेशश्मश्रुनखंनीचंनिकृंतंकेशश्मश्रु
नखंयस्यासौतथोक्तः शुचिरंतर्बहिश्चस्नानानुलेपनधूपस्रगादिभिःसुगंधीचभवेत् यथाहगौतमः स्नातकोनित्यंशुचिःसुगंधिःस्नानशीलइति सुगं
धित्वविधानादेवनिर्गंधमाल्यस्यनिषेधः तथाचगोभिलः नागंधांस्रजंधारयेदन्यत्रहिरण्यरत्नस्रजइति सदास्नातकएवंभूतोभवेत् एतच्चसतिसंभवे

नजीर्णमलवद्वासा भवेच्च विभवे सतीतिस्मरणात् नचभार्यायादर्शनेतस्यांपुरतोवस्थितायामश्नीयात् अवीर्यवदपत्योत्पत्तिभयात् तथाचश्रुतिः जा
याया अंतेनाश्नीयादवीर्यवदपत्यंभवतीति अतस्तयासहभोजनंदूरादेवनिरस्तं नचैकवासाः नसंस्थितः उत्थितः अश्नीयादितिसंबध्यते १३० किंच
कदाचिदपिसंशयंप्राणविपत्तिसंशयावहंकर्मनप्रपद्येतनकुर्यात् यथाव्याघ्रचोराद्युपाहितदेशाक्रमणादि अकस्मान्निष्कारणंकिंचिदपिपरुषमप्रि
यंउद्वेगकरंवाक्यंनवदेत् नचाहितमनृतंवाप्रियमपिचकारादसभ्यंबीभत्सकरंचाकस्मान्नवदेदितिसंबध्यते एतच्चपरिहासादिव्यतिरेकेण गुरुणा
पिसमंहास्यंकर्तव्यंकुटिलंविनेतिस्मरणात् नचस्तेनः अन्यदीयस्यादत्तस्यग्रहीतानस्यात् प्रतिषिद्धवृद्ध्युपजीवी वार्धुषी नवार्धुषीस्यात् १३१

नसंशयंप्रपद्येतनाकस्मादप्रियंवदेत् नाहितंनानृतंचैवनस्तेनःस्यान्नवार्धुषी १३१ दाक्षायणीब्रह्मसूत्रीवेणुमान्स
कमंडलुः कुर्यात्प्रदक्षिणंदेवमृद्गोविप्रवनस्पतीन् १३२

किंच दाक्षायणंसुवर्णंतदस्यास्तीतिदाक्षायणी ब्रह्मसूत्रंयज्ञोपवीतंतद
स्यास्तीतिब्रह्मसूत्री वैणवयष्टिमान् कमंडलुमान्स्यादितिसर्वत्रसंबंधनीयं अत्रब्रह्मचारिप्रकरणोक्तस्यापियज्ञोपवीतस्यपुनर्वचनंद्वितीयप्राप्त्य
र्थं यथाहवसिष्ठः स्नातकानांद्वितीयंस्यादंतर्वासस्तथोत्तरं यज्ञोपवीतेद्वेयष्टिः सोदकश्चकमंडलुरिति अत्रचदाक्षायणीतिसामान्याभिधानेपिकुं
डलधारणमेवकार्यं वैणवींधारयेद्यष्टिंसोदकंचकमंडलुं यज्ञोपवीतंवेदंचशुभेरौक्मेचकुंडलेइतिमनुस्मरणात् तथादेवंदेवतार्चां मृदंमुद्धृतांगां

ब्राह्मणंवनस्पतींश्च अश्वत्थादीन्प्रदक्षिणंकुर्यात् एतान्प्रदक्षिणतः कृत्वाव्रजेत् एवंचतुःपथादीनपि मृदंगांदेवतांविप्रंघृतंमधुचतुःपथं प्रद
क्षिणानिकुर्वीतप्रज्ञातांश्चवनस्पतीनितिमनुस्मरणात् १३२ नद्यादिषुनमेहेत्नमूत्रपुरीषोत्सर्गंकुर्यात् एवंश्मशानादावपि यथाहशंखः नगो
मयकृष्टोप्तशाड्वलचितिश्मशानवर्त्मखलपर्वतपुलिनेषुमेहेत् भूताधारत्वादिति तथाग्न्यादीन्प्रति अग्न्यादीनामभिमुखंनमेहेत् नाप्येतान्पश्यन्
यथाहगौतमः नवाय्वग्निविप्रादित्यापोदेवतागाश्चप्रतिपश्यन्वा मूत्रपुरीषामेध्यान्युदस्येन्नदेवताःप्रतिपादौप्रसारयेत् एतद्देशव्यतिरेकेणभूमिम
यज्ञियैस्तृणैरंतर्धायमूत्रपुरीषेकुर्यादिति यथाहवसिष्ठः परिवेष्टितशिराभूमिमयज्ञियैस्तृणैरंतर्धायमूत्रपुरीषेकुर्यादिति १३३ नैवार्कमीक्षेत य-

नतुमेहेन्नदीछायावर्त्मगोष्ठांबुभस्मसु नप्रत्यग्न्यर्कगोसोमसंध्यांबुस्त्रीद्विजन्मनः १३३ नेक्षेतार्कंननग्नांस्त्रींन
चसंसृष्टमैथुनाम् नचमूत्रंपुरीषंवानाशुचीराहुतारकाः १३४

द्यपिसामान्येनोक्तंतथापिउद्यास्तमयराहुग्रस्तोदकप्रतिबिंबमध्यान्हवर्तिनएवादित्यस्यावेक्षणंनिषिध्यतेनसर्वदा यथोक्तंमनुना नेक्षेतोद्यंत
मादित्यंनास्तंयांतंकदाचन नोपसृष्टंनवारिस्थंनमध्यंनभसोगतमिति उपभोगादन्यत्रनग्नांस्त्रियंनेक्षेत अन्यत्रमैथुनादित्याश्वलायनः संसृष्टमै
थुनांकृतोपभोगांउपभोगांते अनग्नामपिनेक्षेतचकाराद्भोजनादिकमाचरंतीं तथाचमनुः नाश्नीयाद्भार्ययासार्द्धंनैनामीक्षेतचाश्नतीं क्षुवतींजृंभ
ओ॰ २ नकुर्यात्

माणांचनचासीनांयथासुखं नांजयंतींस्वकेनेत्रेनचाभ्यक्तामनावृतां नपश्येत्प्रसवंतीं च श्रेयस्कामोद्विजोत्तमइति मूत्रपुरीषेच्चनपश्येत् तथाअशु-
चिःसन्राहुतारकाश्चनपश्येत् चकारादुदकेस्वप्रतिबिंबंनपश्येत् नचोदकेनिरीक्षेतस्वरूपमितिधारणेतिवचनात् १३४ वर्षतिसतिअयंमेवज्रःपा
प्मानमपहंत्विति मंत्रमुच्चारयेत् अप्रावृतोगच्छेत् अनाच्छादितइयात् नप्रधावेच्चवर्षतीति प्रतिषेधात् नचप्रत्यक्शिराःस्वप्यात् चकारान्नग्नोनशयी
त एकश्चशून्यगृहेनचनग्नःशयीतेति नैकःसुप्याच्छून्यगृहेइतिचमनुस्मरणात् १३५ ष्ठीवनमुद्गिरणं असृग्रक्तं शकृत्पुरीषं शेषंप्रसिद्धं एतान्य-
प्सुननिक्षिपेत् एवंतुषादीनपि यथाहशंखः तुषकेशपुरीषभस्मास्थिश्लेष्मनखलोमान्यप्सुननिक्षिपेत् पादेनपाणिनावाजलंनाभिहन्यादिति अग्नौ

अयंमेवज्रइत्येवंसर्वमंत्रमुदीरयेत् वर्षत्यप्रावृतोगच्छेत्स्वपेत्प्रत्यक्शिरानच १३५ ष्ठीवनासृक्शकृन्मूत्ररेतांस्यप्स्वन
निक्षिपेत् पादौप्रतापयेन्नाग्नौनचैनमभिलंघयेत् १३६ जलंपिबेन्नांजलिनानशयानंप्रबोधयेत् नाक्षैःक्रीडेन्नधर्मघ्नै
र्व्याधितैर्वानसंविशेत् १३७

चपादौनप्रतापयेत् नाप्यग्निंलंघयेत् चकारात् ष्ठीवनादीन्यग्नौनक्षिपेत् मुखोपधमनादिचाग्नेर्नकुर्यात्
तथाचमनुः नाग्निंमुखेनोपधमेन्नग्नांनेक्षेतचस्त्रियं नामेध्यंप्रक्षिपेदग्नौनचपादौप्रतापयेत् अधस्तान्नोपदध्याच्चनचैनमभिलंघयेत् नचैनं-
पादतःकुर्यान्नप्राणाबधिमाचरेदिति १३६ जलमंजलिनासंहताभ्यांहस्ताभ्यांनपिबेत् जलग्रहणंपेयमात्रोपलक्षणं विद्यादिभिरात्मनोधिकंशयानंनप्र
बोधयेत्नोत्थापयेत् श्रेयांसंनप्रबोधयेदितिविशेषात् अक्षादिभिर्नक्रीडेत् धर्मघ्नैःपशुहिंसनादिभिर्नक्रीडेत व्याधितैर्ज्वराद्यभिभूतैरेकत्रनसंविशेत्न
शयीत १३७

जनपदकुलाचारग्रामविरुद्धंकर्मवर्जयेत् प्रेतधूमंच बाहुभ्यांनदीतरणंवर्जयेदितिसंबध्यते केशादिषुसंस्थितिंवर्जयेत् चकारादस्थिकार्पासादिषु १३८ परस्यक्षीरादिपिबंतींगांपरस्मैनाचक्षीत नचनिवर्तयेत् अद्वारेणकुपथेन क्वचिदपिनगरेग्रामेमंदिरेवानप्रविशेत् नचक्षपणस्वशास्त्रातिक्रमकारिणोराज्ञःसकाशात्प्रतिगृण्हीयात् १३९ प्रतिग्रहेषुसाध्येषुचसून्यादयःपंचपूर्वस्मात्पूर्वस्मात्परः परोदशगुणंदुष्टः सूनाप्राणिहिंसास्यास्तीतिसूनी प्राणिहिंसापरः चक्रीतैलिकः ध्वजीसुराविक्रयी वेश्यापण्यस्त्री नराधिपःअनंतरोक्तः १४० अथाध्ययनधर्मानाह अधीयं-

विरुद्धंवर्जयेत्कर्मप्रेतधूमंनदीतरम् केशभस्मतुषांगारकपालेषुचसंस्थितिम् १३८ नाचक्षीतधयंतींगांनाद्वारेण विशेत्क्वचित् नराज्ञःप्रतिगृण्हीयाल्लुब्धस्योच्छास्त्रवर्तिनः १३९ प्रतिग्रहेसूनिचक्रिध्वजिवेश्यानराधिपाः दुष्टादशगुणंपूर्वात्पूर्वादेतेयथाक्रमम् १४० अध्यायानामुपाकर्मश्रावण्यांश्रवणेनवा हस्तेनौषधिभावेवापंचम्यांश्रावणस्यतु १४१

तइत्यध्यायावेदास्तेषामुपाकर्मउपक्रममौषधीनांप्रादुर्भावेसतिश्रावणमासस्यपौर्णमास्यांश्रवणनक्षत्रयुतेवादिनेहस्तेनयुतायांपंचम्यांवास्वगृह्योक्तविधिनाकुर्यात् यदातुश्रावणमासेऔषधयोनप्रादुर्भवंतितदा भाद्रपदेमासेश्रवणनक्षत्रेकुर्यात् ततऊर्ध्वंसार्धचतुरोमासान्वेदानधीयीत तथाचमनुः श्रावण्यांप्रौष्ठपद्यांवाप्युपाकृत्ययथाविधि युक्तश्छंदांस्यधीयीतमासान्विप्रोर्धपंचमानिति १४१ छ छ छ छ

पौषमासस्यरोहिण्यामष्टकायांवाग्रामात्बहिर्जलःसमीपंछंदसां वेदानांस्वगृह्योक्तविधिनोत्सर्गंकुर्यात् यदापुनर्भाद्रपदेमासेउपाकर्मतदामाघशु-
क्लप्रथमदिवसेउत्सर्गंकुर्यात् यथोक्तंमनुना पौषेतुछंदसांकुर्याद्बहिरुत्सर्जनंबुधः माघशक्लस्यवाप्राप्तेपूर्वाण्हेप्रथमेहनीति तदनंतरंपक्षिणीमहो-
रात्रंवाविरम्यशुक्लपक्षेषुवेदान्कृष्णपक्षेष्वंगान्यधीयीत यथाहमनुः यथाशास्त्रंतुकृत्वैवमुत्सर्गंछंदसांबहिः विरमेत्पक्षिणींरात्रिंयद्वाप्येकमहर्नि-
शम् अतऊर्ध्वंतुछंदांसिशुक्लेषुनियतःपठेत् वेदांगानिचसर्वाणिकृष्णपक्षेषुसंपठेदिति १४२ अनध्यायानाह उक्तेनमार्गेणाधीयानस्यशिष्यर्त्विग्गु

पौषमासस्यरोहिण्यामष्टकायामथापिवा जलांतेछंदसांकुर्यादुत्सर्गंविधिवद्बहिः १४२ त्र्यहंप्रेतेष्वनध्यायःशिष्यर्त्विग्गुरुबं
धुषु उपाकर्मणिचोत्सर्गेस्वशाखाश्रोत्रियेतथा १४३ संध्यागर्जितनिर्घातभूकंपोल्कानिपातने समाप्यवेदंद्युनिशमारण्यक
मधीत्यच १४४

रुबंधुषुप्रेतेषुमृतेषुत्र्यहमनध्यायः त्रीनहोरात्रानध्ययनंवर्जयेत् उपाकर्मणिउत्सर्गाख्येकर्मणिकृतेत्र्यहमनध्यायःउत्सर्गेतुमनू-
क्तपक्षिण्यहोरात्राभ्यांसहास्यविकल्पः स्वशाखाश्रोत्रियेस्वशाखाध्यायिनिप्रेतेचत्र्यहमनध्यायः १४३ संध्यायांमेघध्वनौनिर्घातेआकाशेउत्पातध्वनौभू-
मिचलनेउल्कापतनेमंत्रस्यब्राह्मणस्यवासमाप्तौआरण्यकाध्ययनेचद्युनिशमहोरात्रमनध्यायः १४४ ॰ ॰ ॰ ॰

पंचदश्याममावास्यायांपूर्णिमायांचतुर्दश्यामष्टम्यांराहुसूतकेचंद्रसूर्योपरागेच द्युनिशमनध्यायः यत्तुत्र्यहंनकीर्त्तयेद्ब्रह्मराज्ञोराहोश्चसूतकेइति तद्ब्रस्तारूत्तविषयं ऋतुसंधिगतासुचप्रतिपत्सु श्राद्धिकभोजनेतत्प्रतिग्रहेचद्युनिशमनध्यायः एतच्चैकोद्दिष्टव्यतिरिक्तविषयं तत्रतुत्रिरात्रं प्रतिगृह्याद्विजोविद्वानेकोद्दिष्टस्यकेतनं त्र्यहंनकीर्त्तयेद्ब्रह्मेतिस्मरणात् १४५ अध्येतृणांपश्वादिभिरंतरागमनेकृतेशक्रध्वजस्यावरोपणदिवसेउच्छ्रयदिवसेचाहोरात्रमनध्यायः द्युनिशमितिप्रकृतेपुनरहोरात्रग्रहणंसंध्यागर्जितनिर्घातभूकंपोल्कानिपातेष्वाकालिकत्वज्ञापनार्थं आकालिकनिर्घात॰

पंचदश्यांचतुर्दश्यामष्टम्यांराहुसूतके ऋतुसंधिषु भुक्त्वावाश्राद्धिकंप्रतिगृह्यच १४५
पशुमंडूकनकुलश्वाहिमार्जारमूषकैः कृतेंतरेत्वहोरात्रं शक्रपातेतथोच्छ्रये १४६

भूकंपराहुदर्शनोल्का इतिगौतमवचनात् निमित्तकालादारभ्यापरेद्युर्यावत्सएवकालस्तावत्काल आकालः तत्रभव आकालिकोनध्यायः एतच्च प्रातःसंध्यास्तनिते रात्रिसंध्यास्तनितेतुरात्रिमेव सायंसंध्यास्तनितेरात्रिः प्रातःसंध्यामहोरात्रमितिहारीतस्मरणात् यत्तुनगौतमेनोक्तं श्वानकुलसर्पमंडूकमार्जाराणांत्र्यहमुपवासोविप्रवासश्चेति तत्प्रथमाध्ययनविषयएव १४६ ७ ७ ७ ७

श्वाकुक्कुरः क्रोष्टासृगालः गर्दभोरासभः सामसामानि वाणोवंशः उलूकोघूकः आर्त्तोदुःखितः एषांश्वादीनांनिःस्वनेतावत्कालमनध्यायः वीणादि स्वनेपि वेणुवीणाभेरीमृदंगगंत्र्यार्त्तशब्देष्विति गौतमवचनात् गंत्रीशकटं अमेध्यादीनांसंनिधानेतावत्कालिकोनध्यायः १४७ अशुचौदेशे अशु चावात्मनिच तथाविद्युत्संप्लवेपुनःपुनर्विद्योतमानायांविद्युति स्तनितसंप्लवेपुनःपुनर्मेघघोषेतावत्कालिकोनध्यायः भुक्त्वार्द्रपाणिर्नाधीयीत जलम ध्येर्द्धरात्रेमहानिशाख्येमध्यमप्रहरद्वये अतिमारुतेअहन्यपितावत्कालंनाधीयीत १४८ औत्पातिकेरजोवर्षे दिग्दाहेयत्रज्वलिताइवदिशोदृश्यंते

श्वक्रोष्टुगर्दभोलूकसामवाणार्त्तनिःस्वने अमेध्यशवशूद्रांत्यश्मशानपतितांतिके १४७ देशेशुच्यावात्मनिचविद्यु त्स्तनितसंप्लवे भुक्त्वार्द्रपाणिरंभोतरर्धरात्रेतिमारुते १४८ पांसुप्रवर्षेदिग्दाहेसंध्यानीहारभीतिषु धावतःपूति गंधेचशिष्टेचगृहमागते १४९ खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्विदुः १५०

संध्ययोर्नीहारेधूमिकायां भीतिषुचौरराजादिकृतासुतावत्कालमनध्यायः धावतस्त्वरितंगच्छतोनध्यायः पूतिगंधेकुत्सितगंधेच अ मेध्यमद्यादिगंधे शिष्टेचश्रोत्रियादौगृहंप्राप्तेतदनुज्ञावधिरनध्यायः १४९ यानंरथादि इरणमूखरं मरुभूमिर्वा खरादीनामारोहणेतावत्कालम नध्यायः एवंश्वक्रोष्टुगर्दभेत्यस्मादारभ्यसप्तत्रिंशदनध्यायांस्तात्कालिकान्निमित्तसमकालान्विदुरनध्यायविधिज्ञाः विदुरित्यनेनस्मृत्यंतरोक्तान

न्यानपिसंगृण्हाति यथाहमनुः शयानःप्रौढपादश्चकृत्वाचैवावसक्थिकं नाधीयीतामिषंजग्ध्वासूतकान्नाद्यमेवचेत्यादि १५० एवमनध्याया

नुक्त्वाप्रकृतानिस्नातकव्रतान्याह देवानामृत्विक्स्नातकाचार्यराज्ञांपरस्त्रियाश्चछायांनाक्रामेन्नाधितिष्ठेन्नलंघयेत्बुद्धिपूर्वः यथाहमनुः देवता

नांगुरोराज्ञःस्नातकाचार्ययोरपि नाक्रामेत्कामतश्छायांबभ्रुणोदीक्षितस्यचेति बभ्रुणोनकुलवर्णस्ययस्यकस्यचित् गोरश्वस्यवासोमादेर्वाबभ्रु

णइतिनपुंसकलिंगनिर्देशात् रक्तादीन्चनाधितिष्ठेत् आदिग्रहणात्स्नानोदकादेर्ग्रहणंउद्वर्त्तनमलस्नानंविण्मूत्ररक्तमेवच श्लेष्मनिष्ठ्यूतवां

देवर्त्विक्स्नातकाचार्यराज्ञांछायांपरस्त्रियाः नाक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्त्तनादि च १५१ विप्राहिक्षत्रियात्मानोनाव
ज्ञेयाःकदाचन आमृत्योःश्रियमाकांक्षेन्नकंचिन्मर्मणिस्पृशेत् १५२ दूरादुच्छिष्टविण्मूत्रपादांभांसिसमुत्सृजेत् श्रुति
स्मृत्युदितंसम्यक्नित्यमाचारमाचरेत् १५३

तानिनाधितिष्ठेत्कामतइति॰ १५१ विप्रोबहुश्रुतोब्राह्मणः अहिःसर्पः क्षत्रियोनृपतिः

एतेकदाचिदपिनावमंतव्याः आत्माचस्वयंनावमंतव्यः आमृत्योर्यावज्जीवंश्रियमिच्छेत् नकंचिन्मर्मणिस्पृशेत् कस्यचिदपिमर्मदुश्चरितंनप्रकाशये

त् १५२ भोजनादुच्छिष्टंविण्मूत्रेपादप्रक्षालनोदकंचगृहात्दूरात्समुत्सृजेत् श्रौतंस्मार्त्तंचाचारंनित्यंसम्यगनुतिष्ठेत् १५३ ७ ७

गांब्राह्मणमग्निं अन्नमदनीयंविशेषतः पक्वमशुचिर्नस्पृशेत् पादेनत्वनुच्छिष्टोपि यदापुनःप्रमादात्स्पृशतितदा आचमनोत्तरकालंस्पृष्ट्वैतानशु
चिर्नित्यमद्भिः प्राणानुपस्पृशेत् गात्राणिचैवसर्वाणिनाभिंपाणितलेनत्वितिमनूक्तंकार्यं एवंप्राणादीनुपस्पृशेत् कस्यचिदपिनिंदाताडनेनकुर्यात्
एतच्चानपकारिणि अबुध्यमानस्योत्पाद्यब्राह्मणस्यासृगंततः दुःखंसुमहदाप्नोतिप्रेत्यापाज्ञतयानरइति पुत्रशिष्यौशिक्षार्थमेवताडयेत् चकारा

गोब्राह्मणानलान्नानिनोच्छिष्टोनपदास्पृशेत् ननिंदाताडनेकुर्यात्पुत्रंशिष्यंचताड
येत् १५४ कर्मणामनसावाचायत्नाद्धर्मंसमाचरेत् अस्वर्ग्यंलोकविद्विष्टंधर्ममप्याचरे
न्नतु १५५

द्दासादीनपि ताडनंचरज्वादिनोत्तमांगव्यतिरेकेणकार्यं शिष्यशिष्टिरवधेनबाधनाशक्तौरज्जुवेणुविदलाभ्यां
तनुभ्यामन्येनघ्नन्राज्ञाशास्यइतिगौतमवचनात् पृष्ठतस्तुशरीरस्यनोत्तमांगेकथंचनेतिवचनात् १५४ कर्मणाकायेनयथाशक्तिधर्ममनुतिष्ठेत्तमेव
मनसाध्यायेत् वाचावदेत् धर्मंविहितमपिलोकविद्विष्टंलोकाभिशस्तिजननंमधुपर्केगोवधादिकंनाचरेत् यस्मादस्वर्ग्यमग्निष्टोमीयवत्स्वर्गसाधनंनभवति
१५५

माताजननी पिताजनकः अतिथिरध्वनीनः भ्रातरोभिन्नोदरा अपि जामयोविद्यमानभर्तृकाःस्त्रियः संबंधिनोवैवाह्याः मातुलोमातुर्भ्राता स्हद्धः सप्ततत्यन्तरवयस्कः बालआषोडशाद्वर्षात् आतुरोरोगी आचार्यउपनेता वैद्योविद्वान्भिषग्वा संश्रितःउपजीवी बांधवाःपितृपक्ष्यामातृपक्ष्याश्च मातुलस्यपृथगुपादानमादरार्थं ऋत्विग्याजकःपुरोहितः शांत्यादेःकर्त्ता अपत्यंपुत्रादि भार्यासहधर्मचारिणी दासःकर्मकरः सनाभयःसोदराः भ्रातृभ्यः पृथगुपादानमजामिभगिनीप्राप्त्यर्थं एतैर्मात्रादिभिःसहवाक्कलहं परित्यज्यवासर्वान्प्राजापत्यादीन्लोकान्प्राप्नोति १५६ १५७ परवारिषुपरसंबंधिषुसर्वसत्वोद्देशेनात्यक्तेषुतडागादिषुपंचपिंडाननुत्दृत्यनस्नायात् अनेनात्मीयोत्सृष्टाभ्यनुज्ञातेषुपिंडोद्धारमंतरापिस्नानमभ्यनुज्ञातं नद्या

मातृपित्रतिथिभ्रातृजामिसंबंधिमातुलैः वृद्धबालातुराचार्यवैद्यसंश्रितबांधवैः १५६ ऋत्विक्पुरोहितापत्यभार्यादाससनाभिभिः विवादंवर्जयित्वातुसर्वाल्लोकान्जयेद्गृही १५७ पंचपिंडाननुद्धृत्यनस्नायात्परवारिषु स्नायान्नदीदेवखातह्रदप्रस्रवणेषुच १५८

दिषुकथंतर्हीत्याह स्नायान्नदीति साक्षात्परंपरयावासमुद्रगाःस्रवंत्योनद्यः देवखातंदेवनिर्मितंपुष्करादि उदकप्रवाहाभिघातकृतनसजलोमहानिम्नप्रदेशोह्रदः पर्वताद्युच्चप्रदेशात्प्रसृतमुदकंप्रस्रवणं एतेषुपंचपिंडानुद्धरणेनैवस्नायात् एतच्चनित्यस्नानविषयंसतिसंभवेनदीषुदेवखातेषुतडागेषुसरःसुच स्नानंसमाचरेन्नित्यंगर्त्तप्रस्रवणादिषितिनित्यग्रहणात् शौचाद्यर्थंच यथासंभवंपरवारिषुपंचपिंडानुद्धरणेपिसर्वस्यननिषेधः १५८

शय्याकशिपुः आसनं पीठादि उद्यानमाम्रभवणादि गृहं प्रसिद्धं यानं रथादि परसंबंधीन्येतान्यदत्तान्यननुज्ञातानि वर्जयेत् नोपभुंजीत अभोज्या
न्नान्याह अग्निहीनस्येति अग्निहीनस्य श्रौतस्मार्त्ताग्न्यधिकाररहितस्य शूद्रस्य प्रतिलोमस्य वाधिकारवतोप्यग्निरहितस्यान्नमनापदि न भुंजीत
न प्रतिगृण्हीयाच्च तस्मात्प्रशस्तानां स्वकर्मणा प्रख्यजातीनां ब्राह्मणो भुंजीत प्रतिगृण्हीयाच्चेति गौतमवचनात् ५९ कदर्यो लुब्धः आत्मानं धर्मकृत्यं
च पुत्रदारांश्च पीडयेत् लोभाद्यः पितरौ भृत्यान्स कदर्य इति स्मृत इत्युक्तः बद्धो निगडादिना वाचा संनिरुद्धश्च चोरः ब्राह्मणस्वर्णव्यतिरिक्तपर

परशय्यासनोद्यानगृहयानानि वर्जयेत् अदत्तान्यग्निहीनस्य नान्नमद्यादनापदि १५९ कदर्यबद्धचोराणां क्लीबरंगावता
रिणाम् वैणाभिशस्तवार्धुष्यगणिकागणदीक्षिणाम् १६० चिकित्सकातुरक्रुद्धपुंश्चलीमत्तविद्विषाम् क्रूरोग्रपतितव्रात्य
दांभिकोच्छिष्टभोजिनाम् १६१

स्वापहारी क्लीबो नपुंसकः रंगावतारी नटचारणमल्लादिः वेणुच्छेदजीवी वैणः अभिशस्तः पतनीयैः कर्मभिर्युक्तः
वार्धुष्यो निषिद्धवृद्ध्युपजीवी गणिका पण्यस्त्री गणदीक्षी बहुयाजकः एतेषामन्नं नाश्नीयादित्यनुवर्त्तते १६० चिकित्सको भिषग्वृत्त्युपजीवी आतु
रो महारोगोपसृष्टः वातव्याध्यश्मरीकुष्ठमेहोदरभगंदराः अर्शांसि ग्रहणीत्यष्टौ महारोगाः प्रकीर्त्तिता इति क्रुद्धः कुपितः पुंश्चली व्यभिचारिणी मत्तो

विद्यादिनागर्वितः विद्विट्शत्रुः क्रूरोदृढाभ्यंतरकोपः वाक्कायव्यापारेणोद्वेजकउग्रः पतितोब्रह्महादिः व्रात्यः पतितसावित्रीकः दांभिकोवंचकः उच्छिष्टभोजी परभुक्तोज्झिताशी एतेषांचिकित्सकादीनामन्नंनाश्नीयात् ६२ अवीरास्त्रीस्वतंत्रा व्यभिचारमंतरेणापिपतिपुत्ररहितेत्यर्थः स्वर्णकारः स्वर्णस्यविकारांतरकृत् स्त्रीजितः सर्वत्रस्त्रीवशवर्त्ती ग्रामयाजीग्रामस्यशांत्यादिकर्त्ता बहूनामुपनेतावा शस्त्रविक्रयीशस्त्रविक्रयोपजीवी कर्मारो लोहकारः तक्षादिश्च तंतुवायः सूचीशिल्पोपजीवी श्वभिर्वृत्तंवर्त्तनंजीवनमस्यास्तीतिश्ववृत्ती एतेषामन्नंनाश्नीयात् ६२ नृशंसोनिर्दयः राजाभूप-

अवीरास्त्रीस्वर्णकारस्त्रीजितग्रामयाजिनाम् शस्त्रविक्रयकर्मारतंतुवायश्ववृत्तिनाम् ६२ नृशंसराजरजककृतघ्नवधजीविनाम् चैलधावसुराजीवसहोपपतिवेश्मनाम् ६३ पिशुनानृतिनोश्चैवतथाचाक्रिकबंदिनाम् एषामन्नंनभोक्तव्यंसोमविक्रयिणस्तथा ६४

तिः तत्साहचर्यात्पुरोहितश्च यथाहशंखः भीतावगीतरुदिताक्रंदितावघुष्टक्षुधितपरिभुक्तविस्मितोन्मत्तावधूतराजपुरोहितान्नानिवर्जयेदिति रजकोवस्त्रादीनांनीलादिरागकारकः कृतघ्नउपकृतस्यहंता वधजीवीप्राणिनांवधेनवर्त्तकः चैलधावः वस्त्रनिर्णेजनकृत् सुराजीवोमद्यविक्रयजीवी उपपतिर्जारः सहोपपतिनावेश्मयस्यासौसहोपपतिवेश्मा पिशुनः परदोषस्यख्यापकः अनृती मिथ्यावादी

चाक्रिकस्तैलिकः शाकटिकश्चेत्येके अभिशस्तः पतितश्चाक्रिकस्तैलिक इति भेदेनाभिधानात् बंदिनः स्तावकाः सोमविक्रयी सोमलताया विक्रे
ता एतेषामन्नं न भोक्तव्यं सर्वे चैते कदर्यादयो द्विजा एव कदर्यत्वादिदोषदुष्टा अभोज्यान्नाः इतरेषां प्राप्त्यभावात्प्राप्तिपूर्वकत्वाच्च निषेधस्य १६३
१६४ अग्निहीनस्य नान्नमद्यादनापदीत्यत्र शूद्रस्याभोज्यान्नत्वमुक्तं तत्र प्रतिप्रसवमाह दासा गर्भदासादयः गोपालो गवां पालकः गवां पाल-
नेन यो जीवति कुलमित्रं पितृपितामहादिक्रमायातः अर्धसीरी हलपर्यायसीरोपलक्षितकृषिफलभागग्राही नापितो गृहव्यापारकारयिता नापित

शूद्रेषु दासगोपालकुलमित्रार्धसीरिणः भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत् ६५ अनर्चितं वृथामांसं केशकी
टसमन्वितम् शुक्तं पर्युषितोच्छिष्टं श्वस्पृष्टं पतितेक्षितम् ६६ उदक्यास्पृष्टसंघुष्टपर्यायान्नं च वर्जयेत् गोघ्रातं शकुनोच्छि
ष्टं पदास्पृष्टं च कामतः ६७

श्च यश्च वाङ्मनःकायकर्मभिरात्मानं निवेदयति तवाहमिति एते दासादयः शूद्राणां मध्ये भोज्यान्नाः चकारात्कुंभका
रश्च गोपनापितकुंभकारकुलमित्रार्धिकनिवेदितात्मानो भोज्यान्ना इति वचनात् इति स्नातकव्रतप्रकरणम् १६५ नस्वाध्यायविरोध्यर्थमित्यत आ
रभ्य ब्राह्मणस्य स्नातकव्रतान्यभिधायेदानीं द्विजातिधर्मानाह अनर्चितं अर्चार्हाय यदवज्ञया दीयते वृथामांसं वक्ष्यमाणप्राणात्ययादिव्यतिरे-
केण देवाद्यर्चनावशिष्टं च यन्न भवति आत्मार्थमेव यत्साधितं केशकीटादिभिश्च समन्वितं संयुक्तं यत्स्वयमनम्लं केवलकालपरिवासेन द्रव्यांतरसंस

र्गकालपरिवासाभ्यांचाम्लीभवतितच्छुक्तं दध्यादिव्यतिरेकेण नपापीयसोन्नमभीयात् नद्विःपक्वंनशुक्तंनपर्युषितं अन्यत्ररागखांडवचुक्रद
धिगुडगोधूमयवपिष्टविकारेभ्यइतिशंखस्मरणात् पर्युषितंरात्र्यंतरितं उच्छिष्टंभक्तोज्झितं श्वस्पृष्टंश्व नास्पृष्टं पतितेक्षितंपतितादिभिरीक्षि
तं उदक्यारजस्वलातयास्पृष्टं उदक्याग्रहणंचांडालाद्युपलक्षणार्थं अमेध्यपतितचांडालपुल्कसरजस्वलाकुनखिकुष्ठिसंस्पृष्टान्नं वर्जयेदिति
शंखस्मरणात् कोभुंक्तेइतियदाघुष्यदीयतेतत्संघुष्टान्नं अन्यसंबंध्यन्यव्यपदेशेनयद्दीयतेतत्पर्यायान्नं यथाब्राह्मणान्नंददच्छूद्रः शूद्रान्नंब्रा
ह्मणोददत् उभावेतावभोज्यान्नौभुक्त्वाचांद्रायणंचरेदिति पर्याचांतमितिपाठेपरिगतमाचांतंगंडूषग्रहणंयस्मिन्तत्पर्याचांतंतदन्नंभोक्तव्यं एत-

अन्नंपर्युषितंभोज्यंस्नेहाक्तंचिरसंस्थितम् अस्नेहाअपिगोधूमयवगोरसविक्रियाः १६८

दुक्तंभवति गंडूषग्रहणादू
र्ध्वं आचमनात्प्राक् नभोक्तव्यं पार्श्वाचांतमितिपाठेएकस्यांपंक्तौपार्श्वस्थे आचांतेनभोक्तव्यं भस्मोदकादिविच्छेदेनविनावर्जयेदितिप्रत्येकंसंब
ध्यते तथागोघ्रातंगवाघ्रातं शकुनेनकाकादिनाभुक्तमास्वादितंशकुनोच्छिष्टं पदास्पृष्टंबुद्धिपूर्वंपादेनस्पृष्टंवर्जयेत् १६६ १६७ पर्युषितस्यप्रतिप्रस
वमाह अन्नमदनीयंपर्युषितंघृतादिस्नेहसंयुक्तंचिरकालसंस्थितमपिभोज्यं गोधूमयवगोरसविक्रियाः मंडकसक्तुकिलाटकूर्चिकादयः अस्नेहा
अपिचिरकालसंस्थिताभोज्याः यदिविकारांतरमनापन्नाः अपूपधानाकरंभसक्तुपायकतैलपायसशाकानिशुक्तानिवर्जयेदितिवसिष्ठस्मरणात् १६८

गौर्यादृषेणसंधीयतेसाचसंधिनी वशांवंध्यांविजानीयादृषाक्रांतांचसंधिनीमितित्रिकांडीस्मरणात् यावैकांवेलामतिक्रम्य दुह्यतेयाचवत्सांतरेण संधीयतेसापिसंधिनी प्रसूताअनतिक्रांतदशाहाअनिर्दशा मृतवत्साअवत्सा संधिनीच अनिर्दशाच अवत्साच संधिन्यनिर्दशावत्साः ताश्चतागावश्च तासांपयःक्षीरंपरिवर्जयेत् संधिनीग्रहणंस्यंदिनीयमलस्वोरुपलक्षणार्थं यथाहगौतमः स्यंदिनीयमसूसंधिनीनांचेति स्रवत्पयःस्तनीस्यंदिनी यमल प्रसूर्यमलप्रसविनी एवमजामहिष्योश्चानिर्दशायोःपयोवर्जयेत् गोमहिष्यजानामनिर्दशानामितिवसिष्ठस्मरणात् पयोग्रहणात्तद्विकाराणामपिद- ध्यादीनांनिषेधः नहिमांसनिषेधेनतद्विकाराणामपिदध्यादीनांनिषेधः नहिमांसनिषेधेतद्विकाराणामनिषेधोयुक्तः विकारनिषेधेप्रकृतेरनिषेधोयुक्तः

संधिन्यनिर्दशावत्सागोपयःपरिवर्जयेत् औष्ट्रमैकशफंस्त्रैणमारण्यकमथाविकम् १६९

पयोनिषेधात् शकृन्मूत्रादेर निषेधः उष्ट्राज्जातमौष्ट्रंपयोमूत्रादि एकशफावडवादयः तत्प्रभवमैकशफं स्त्रीभवंस्त्रैणं स्त्रीग्रहणमजाव्यतिरिक्तसकलद्विस्तनीनामुपलक्षणार्थं सर्वासांद्विस्तनीनांक्षीरमभोज्यमजावर्जमिति शंखस्मरणात् अरण्येभवाआरण्यकास्तदीयमारण्यकं क्षीरंमाहिषव्यतिरेकेण आरण्यानांचसर्वेषां मृगाणांमहिषींविनेतिवचनात् अवेर्जातमाविकं वर्जयेदिनिप्रत्येकंसंबध्यते औष्ट्रमित्यादिविकारप्रत्ययनिर्देशात् तद्विकारमात्रस्यपयोमूत्रादेः सर्वदानिषेधः नित्यमाविकमपेयमौष्ट्रमैकशफंचेतिगौतमस्मरणात् १६९ ७ ७ ७ ७ ७

देवतार्थंबल्युपहारनिमित्तंसाधितंहविः हवनार्थंसिद्धंप्राक्होमात् शिग्रुःसौभांजनः लोहितान्वृक्षनिर्यासान् व्रश्चनप्रभवान्वृक्षच्छेदनजाता
नूअलोहितानपि यथाहमनुः लोहितान्वृक्षनिर्यासान्व्रश्चनप्रभवांस्तथेति लोहितग्रहणात्हिंगुकर्पूरादीनामनिषेधः अनुपाकृतमांसानियज्ञे
अहुतस्यपशोर्मांसानि विड्जानिमनुष्यादिजग्धबीजपुरीषोत्पन्नानिपुरीषस्थानेउत्पन्नानिच तंदुलीयकप्रभृतीनि कवकानिछत्राकाणि वर्जयेदि
तिप्रत्येकमभिसंबध्यते १७० क्रव्यादाआममांसादनशीलाः पक्षिणोगृध्रादयः दात्यूहश्चातकः शुकःकीरः चंच्वाप्रतुद्यभक्षयंतीतिप्रतुदाःश्येनाद

देवतार्थंहविःशिग्रुंलोहितान्व्रश्चनांस्तथा अनुपाकृतमांसानिविड्जानिकवकानिच १७० क्रव्यादपक्षिदा
त्यूहशुकप्रतुदटिट्टिभान् सारसैकशफान्हंसान्सर्वांश्चग्रामवासिनः १७१ कोयष्टिप्लवचक्राह्वबलाकाबकवि
ष्किरान् वृथाकृशरसंयावपायसापूपशष्कुलीः १७२

यः टिट्टिभस्तच्छब्दानुकारी सारसोलक्ष्मणः एकशफाअश्वादयः हंसाःप्रसिद्धाः
ग्रामवासिनः पारावतप्रभृतयः एतान्क्रव्यादादीन्वर्जयेत् १७१ कोयष्टिकः क्रौंचः प्लवोजलकुक्कुटः चक्राह्वश्चक्रवाकः बलाकाबकौप्रसिद्धौ न
खैर्विकीर्यभक्षयंतीतिविष्किराश्चकोरादयएवगृह्यंते लावकमयूरादीनांभक्ष्यत्वात् ग्रामकुक्कुटस्यग्रामवासित्वादेवनिषेधात् एतान्कोयष्ट्या

दीन्वर्जयेत् वृथादेवताद्युद्देशमंतरेणसाधिताः कृसरसंयावपायसापूपशष्कुलीर्वर्जयेत् कृसरं तिलमुद्गसिद्धओदनः संयावः क्षीरगुडघृतादिकृ तःउत्करिकाख्यः पायसंपयसाशृतमन्नं अपूपःस्नेहपक्वगोधूमविकारः शष्कुलीस्नेहपक्वगोधूमविकारः नपचेदन्नमात्मनेइतिकृसरादीनांनिषेधे- सिद्धेपुनरभिधानंप्रायश्चित्तगौरवार्थं १७२ कलविंकोग्रामचटकः ग्रामनिवासित्वेनप्रतिषेधेसिद्धेसत्युभयचरत्वात्पुनर्वचनं काकोलोद्रोणकाकः कुररउत्क्रोशः रज्जुदालकोवृक्षकुट्टकः जालपादाः जालाकारपादाः अजालपादाअपिवैहंसाः संतीतिहंसानांपृथग्वचनं खंजरीटःखंजनः जातितो- येअज्ञातामृगाःपक्षिणश्चएतान्कलविंकादीन्वर्जयेत् १७३ चाषाःकिकीदिवयः रक्तपादाःकादंबप्रभृतयःसौनंघातस्थानभवंमांसं भक्ष्याणा

कलविंकंसकाकोलंकुररंरज्जुदालकम् जालपादान्खंजरीटानज्ञातांश्चमृगद्विजान् १७३ चाषां
श्चरक्तपादांश्चसौनंवल्लूरमेवच मत्स्यांश्चकामतोजग्ध्वासोपवासस्त्र्यहंवसेत् १७४

मपिवल्लूरंशुष्कमांसं मत्स्यामीनाः एतांश्चाषादीन्वर्जयेत् चकारान्नालिकाशणकुसुंभादीन् नालिकाशणछत्राककुसुंभालाबुविड्भवान् कुं भीकुंदुकवृंताककोविदारांश्चवर्जयेदिति तथाकालप्ररूढानिपुष्पाणिचफलानिच विकारवच्चयत्किंचित्प्रयत्नेनविवर्जयेत् तथावटप्लक्षाश्व- त्थकपित्थनीपमातुलिंगफलानिवर्जयेदितिस्मरणात् एतान्संधिनीक्षीरप्रभृतीननुक्रांतान्कामतोभक्षयित्वात्रिरात्रमुपवसेत् अकामतस्त्व-
ओ॰ १ दंधिर्थं

होरात्रं शेषेषूपवसेदहरिति मनुस्मरणात् यत्पुनः शंखेनोक्तं बकबलाकाहंसप्लवचक्रवाककारंडवगृहचटककपोतपारावतपंडुशुकसारिकासारसटिट्टिभोलूककंकरक्तपादचाषभासवायसकोकिलशाङ्गलिकुक्कुटहारीतभक्षणे द्वादशरात्रमनाहारः पिबेद्गोमूत्रयावकमिति तद्बहुकालाभ्यासे मतिपूर्वे समस्तभक्षणे वा वेदितव्यं १७४ पलांडुः स्थूलकंदनालो लशुनानुकारी विड्वराहो ग्रामसूकरः छत्राकं सर्पछत्रं ग्रामकुक्कुटः प्रसिद्धः लशुनं रसोनं सूक्ष्मश्वेतकंदनालं गृंजनं लशुनानुकारि लोहितसूक्ष्मकंदं एतानि षट् सकृत्कामतो जग्ध्वा भक्षयित्वा चांद्रायणं वक्ष्यमा-

पलांडुं विड्वराहं च छत्राकं ग्रामकुक्कुटं लशुनं गृंजनं चैव जग्ध्वा चांद्रायणं चरेत् १७५

णलक्षणं चरेत् ग्रामकुक्कुटछत्राकयोः पूर्वं प्रतिषेधितयोरिहाभिधानं पलांड्वादिसमानप्रायश्चित्तार्थं मतिपूर्वं चिरतराभ्यासे तु छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटं पलांडुं गृंजनं चैव मत्वा जग्ध्वा पतेद्द्विज इति मनूक्तं अमतिपूर्वाभ्यासे अमत्यैतानि षड् जग्ध्वा कृच्छ्रं सांतपनं चरेत् तृतीयाध्याये वक्ष्यमाणं यतिचांद्रायणं वापीति द्रष्टव्यं अमतिपूर्वाभ्यासे तु शंखोक्तं लशुनपलांडुगृंजनविड्वराहग्रामकुक्कुटकुंभीकभक्षणे द्वादशरात्रं पयः पिबेदिति १७५

सेधाश्वावित् गोधाकृकलासानुकारिणीमहती कच्छपः कूर्मः शल्लकः शल्लकी शशाः प्रसिद्धः पंचनखादीनांश्वमार्जारवानरादीनांमध्येसेधाद
योभक्ष्याः चकारात्खड्गोपि यथाहगौतमः पंचनखाः शशशल्लकश्वाविड्गोधाखड्गकच्छपाइति मनुरपि श्वाविधंशल्लकंगोधांखड्गकूर्मशशांस्त
था भक्ष्यान्पंचनखेष्वाहुरनुष्ट्रांश्चैकतोदतइति यत्पुनर्वसिष्ठेन खड्गेतुविवदंतइत्यभक्ष्यत्वमुक्तं तच्छ्राद्धादन्यत्र खड्गमांसैर्भवेद्दत्तमक्षय्यंपितृ
कर्मणीतिश्राद्धफलेश्रुतिदर्शनात् तथामत्स्यानांमध्येसिंहतुंडादयोभक्ष्याः सिंहतुंडः सिंहमुखः रोहितोलोहितवर्णः पाठीनश्चंद्राख्यः राजीवः पद्मव

भक्ष्याः पंचनखाः सेधागोधाकच्छपशल्लकाः शशश्चमत्स्येष्वपिहिसिंहतुंडकरोहिताः १७६ तथापाठीनरा
जीवसशल्काश्चद्विजातिभिः अतः शृणुध्वंमांसस्यविधिंभक्षणवर्जने १७७

र्णः सहशल्कैः शुक्त्याकारैर्वर्त्ततइतिसशल्कः
एतेचसिंहतुंडादयोनियुक्ताएवभक्ष्याः पाठीनरोहितावाद्यौनियुक्तौहव्यकव्ययोः राजीवाः सिंहतुंडाश्चसशल्काश्चैवसर्वशइतिमनुस्मरणात्
द्विजातिग्रहणंशूद्रव्युदासार्थं अनर्चितंवृथामांसमित्यारभ्यद्विजातिधर्मानुक्त्वेदानींचातुर्वर्ण्यधर्मानाह मांसस्यप्रोक्षितादेर्भक्षणेनद्व्यतिरि
क्तस्यवानिषिद्धस्यवर्जनेप्रोक्षितादिव्यतिरेकेणमांसंनभक्षयामीत्येवंसंकल्परूपेणविधिंसामश्रवःप्रभृतयः हेमुनयः शृणुध्वं १७६ १७७ ७

तत्र भक्षणे विधिं दर्शयति अन्नाभावेन व्याध्यभिभवेन वा मांसभक्षणमंतरेण यदा प्राणबाधा भवति तदा मांसं नियमेन भक्षयेत् सर्वत एवात्मानं गोपायेदित्यात्मरक्षणविधानात् तस्मादिह न पुरायुषः स्वःकामी प्रेयादिति मरणनिषेधाच्च तथा श्राद्धे मांसं निमंत्रितो नियमेन भक्षयेत् अभक्षणे दोषश्रवणात् यथाविधि नियुक्तस्तु यो मांसं नात्ति मानवः स प्रेत्य पशुतां याति संभवानेकविंशतिमिति मनुस्मरणात् प्रोक्षणाख्यश्रौतसंस्कारसंस्कृतस्य पशोर्यागार्थस्याग्नीषोमीयादेर्हुतावशिष्टं मांसं प्रोक्षितं तद्भक्षयेत् अभक्षणाद्यागानिष्पत्तेः द्विजकाम्यया ब्राह्मणभोजना

प्राणात्यये तथा श्राद्धे प्रोक्षितं द्विजकाम्यया। देवान् पितॄन् समभ्यर्च्य खादन्मांसं न दोषभाक् १७८ वसेत्स नरके घोरे दिनानि पशुरोमभिः संमितानि दुराचारो यो हंत्यविधिना पशून् १७९

र्थं देवपित्रर्थं च यत्साधितं तेन तानभ्यर्च्यावशिष्टं भक्षयन्न दोषभाग्भवति एवं भृत्यभरणावशिष्टमपि यज्ञार्थं ब्राह्मणैर्वध्याः प्रशस्ता मृगपक्षिणः भृत्यानां चैव वृत्त्यर्थमगस्त्यो ह्याचरत्पुरेति मनुस्मरणात् न दोषभागिति दोषाभावमात्रं वदता अतिथ्याद्यर्चनावशिष्टस्याभ्यनुज्ञामात्रं न प्रोक्षितादिवन्नियम इति दर्शितं एवमप्रतिषिद्धानामपि शशादीनां प्राणात्ययादिव्यतिरेकेणाभक्ष्यत्वावगमात् शूद्रस्यापि मांसप्रतिबद्धसर्वविधिनिषेधाधिकारोऽवगम्यते १७८ इदानीं प्रोक्षितादिव्यतिरिक्तस्य वृथामांसमित्यनेन प्रतिषिद्धस्य भक्षणे नि

दार्थवादमाह अविधिनादेवाद्युद्देशमंतरेणयः पशून्हंति सनस्यपशोर्यावंतिरोमाणितावंतिदिनानिघोरेनरकेवसेत् हंतात्वष्टविधोपिघातकोगृह्यते
यथाहमनुः अनुमंताविशसितानिहंताक्रयविक्रयी संस्कर्त्ताचोपहर्त्ताचखादकश्चेतिघातकाइति १७९ इदानींवर्जनेविधिमाह यःप्रोक्षितादिव्यतिरे
केणमयामांसंनभक्षितव्यमितिसत्यसंकल्पोभवति ससर्वान्कामान् तत्साधनेप्रवृत्तो निर्विघ्नंप्राप्नोति विशुद्धाशयत्वात् यथाहमनुः यद्ध्यायतेयत्कु
रुतेरतिंबध्नातियत्रच तदवाप्नोत्यविघ्नेनयोहिनस्तिनकिंचनेति एतच्चानुषंगिकंफलं मुख्यफलमाह हयमेधफलंतथेति एतच्चसांवत्सरिकसंकल्पस्य
वर्षेवर्षेश्वमेधेनयोयजेतशतंसमाः मांसानिचनखादेद्यस्तयोःपुण्यफलसममितिमनुस्मरणात् तथागृहेपिनिवसन् ब्राह्मणादिश्चातुर्वर्णिकोमुनिव

सर्वान्कामानवाप्नोति हयमेधफलंतथा गृहेपिनिवसन्विप्रोमुनिर्मांसविवर्जनात् १८० सौवर्णराजताब्जानामूर्ध्वपात्रग्र
हाश्मनाम् शाकरज्जुमूलफलवासोविदलचर्मणाम् १८१ पात्राणाञ्चमसानाञ्चवारिणाशुद्धिरिष्यते चरुस्रुक्स्रुवसस्ने
हपात्राण्युष्णेनवारिणा १८२

न्माननीयोभवति मांसस्यत्यागात् एतच्चनप्रतिषिद्धमांसविषयं नापिप्रोक्षितादिविषयं पारिशेष्यादतिथ्याद्य
र्थेनावशिष्टाभ्यनुज्ञातविषयमिति इतिभक्ष्याभक्ष्यप्रकरणं १८० इदानींद्रव्यशुद्धिमाह सौवर्णंस्वर्णकृतं राजतंरजतकृतं अब्जंमुक्ताफलशंखशु
क्त्यादि ऊर्ध्वपात्रंयज्ञियोलूखलादि ग्रहादिसाहचर्यात्ग्रहाः षोडशिप्रभृतयः अश्माद्दषदादिः शाकंवास्तुकादि रज्जुःबल्वजादिनिर्मिता मूलमार्द्र

कादि फलमाम्रादि वासोवस्त्रं विदलंवैणवादि चर्मअजादीनां विदलचर्मणोर्ग्रहणंतद्विकाराणांछत्रवरत्रादीनामुपलक्षणार्थं पात्राणिप्रोक्षणी
पात्रप्रभृतीनि चमसाःहोतृचमसादयः एतेषांसौवर्णादीनांलेपरहितानामुच्छिष्टस्पर्शमात्रे वारिणाप्रक्षालनेनशुद्धिः चरुश्चरुस्थाली स्रुक्स्रु
वौप्रसिद्धौ सस्नेहानिपात्राणिप्राशित्रहरणादीनि एतानिचलेपरहितान्युष्णेनवारिणाशुध्यंति निर्लेपंकांचनंभांडमद्भिरेवविशुध्यति अब्जमश्म-
मयंचैवराजतंचानुपस्कृतमितिमनुस्मरणात् अनुपस्कृतमरवातपूरितं सलेपानांतु तैजसानांमणीनांचसर्वस्याश्ममयस्यच भस्मनाद्भिर्मृदाचैवशु
द्धिरुक्तामनीषिभिरितिमनूक्तंद्रष्टव्यं मृद्भस्मनोरेककार्यत्वाद्विकल्पः आपस्तुसमुच्चीयंते काकादिमुखोपघातेतु कृष्णशकुनिमुखावघृष्टंपात्रंनिर्लि
खेत् श्वापदमुखावमृष्टंपात्रंनप्रयुंजीतेतिद्रष्टव्यं एतच्चमार्जारादन्यत्र मार्जारश्चैवदर्वीचमारुतश्चसदाशुचिरितिमनुस्मरणात् १८१ १८२ स्फ्योवज्रः

स्फ्यशूर्पाजिनधान्यानांमुसलोलूखलानसाम् प्रोक्षणंसंहतानांचबहूनांधान्यवाससाम् १८३

यज्ञांगं अनःशकटं शेषंप्रसिद्धं एतेषामुष्णेनवारिणाशुद्धिःपुनरजिनग्रहणंयज्ञांगाजिनप्राप्त्यर्थं संहतानामुक्तविशुद्धिद्रव्यालब्धावयविनांबहू-
नांधान्यानांवाससांच वासोग्रहणमुक्तशुद्धीनामुपलक्षणार्थंउक्तशुद्धीनांधान्यवासःप्रभृतीनांबहूनांराशीकृतानांप्रोक्षणेनैवशुद्धिः बहुत्वंचस्पृष्टापे
क्षया एतदुक्तंभवति यदाधान्यानिवस्त्रादीनिवाराशीकृतानि तत्रचांडालादिस्पृष्टान्यल्पानिबहूनिवास्पृष्टानि तत्रस्पृष्टानामुक्तैवशुद्धिरितरेषांप्रो

क्षणमिति तथाचस्मृत्यंतरं वस्त्रधान्यादिराशीनामेकदेशस्य दूषणात् तावन्मात्रंसमुद्धृत्य शेषंप्रोक्षणमर्हतीति यदापुनःस्पृष्टानां बहुत्वंअस्पृष्टानांचाल्पत्वंतदासर्वेषामेव क्षालनं यथाहमनुः अद्भिस्तुप्रोक्षणंशौचंबहूनांधान्यवाससां प्रक्षालनेनत्वल्पानामद्भिःशौचंविधीयतेइति स्पृष्टानामस्पृष्टानांचसमत्वेपिप्रोक्षणमेव बहूनांप्रोक्षणविधानेनाल्पानांक्षालनेनशुद्धिःपुनरल्पानांक्षालनवचनस्यसमेषु क्षालनवचननिवृत्त्यर्थात् इयत्स्पृष्टमियदस्पृष्टमित्यविवेकेतुक्षालनमेव पाक्षिकस्यापिदोषस्यपरिहर्त्तव्यत्वात् अनेकपुरुषोद्धार्यमाणानांतुधान्यवासःप्रभृतीनांस्पृष्टानामस्पृष्टानांचप्रोक्षणमेवेतिनिबंधकृतः १८३ निर्लेपानांस्पर्शमात्रदुष्टानांशुद्धिमुक्त्वेदानींसलेपानांशुद्धिमाह दारूणांमेषमहिषादिशृंगाणांकरिवाराह

तक्षणंदारुशृंगास्थ्नांगोवालैःफलसंभुवाम् मार्जनंयज्ञपात्राणांपाणिनायज्ञकर्मणि १८४

शंखाद्यस्थ्नां अस्थिग्रहणे नदंतानामपिग्रहणं उच्छिष्टस्नेहादिभिर्लिप्तानांमृद्भिस्तोदकादिभिरनपगतलेपानां यावन्नापैत्यमेध्याक्तोगंधोलेपश्चतत्कृतः तावन्मृद्वारिवादेयंसर्वासुद्रव्यशुद्धिष्विति सामान्यशुद्धिविधानात् तक्षणंतावन्मात्रावयवापनयनंशुद्धिः फलसंभुवांबिल्वालाबुनारिकेलादिफलसंभूतानांपात्राणांगोवालैरुद्धर्षणाच्छुद्धिः यज्ञपात्राणांस्रुक्स्रुवादीनांयज्ञकर्मणिप्रयुज्यमानानांदक्षिणेनहस्तेनदर्भैर्दशापवित्रेणवायथाशास्त्रंकर्मांगतयामार्जनंकर्त्तव्यं एतच्चश्रौतमुदाहरणं अन्येषामपिसौवर्णादीनांपात्राणांस्मार्त्तलौकिककर्मसुकृतशौचानामेषांगत्वमितिदर्शयितुं यज्ञांगानांपुनःकृतशौचानामिदंदशापवित्रादिमार्जनंसंस्कारार्थमितिशेषः १८४

इदानीं सलेपानामेव केषांचिद्द्रव्याणामपकर्षणे विशेषहेतूनाह ऊषरमृत्तिकासहितेन गोमूत्रेणोदकेन वालेपापेक्षया आविकमूर्णामयं कौशिकं कोश प्रभवं तसरीपट्टादि प्रक्षालितं शुध्यति उदकगोमूत्रैरिति बहुवचनं पश्चादुदकप्राप्त्यर्थं अंशुपट्टं वल्कलतंतुकृतं सश्रीफलैः बिल्वफलसहितैः कुतपः पार्वतीयच्छागरोमनिर्मितकंबलः अरिष्टफलसहितैः फेनसहितैः उदकगोमूत्रैः शुध्यतीत्यनुवर्त्तते एतच्चोच्छिष्टस्नेहादियोगे सति वेदितव्यं अल्पोपघाते तु प्रोक्षणादि क्षालनासहत्वात् सर्वत्र द्रव्याविनाशेनैव शुद्धेरिष्टत्वात् तथा च देवलः ऊर्णाकौशेयकुतपपट्टक्षौमदुकूलजाः अल्पा

सोषैरुदकगोमूत्रैः शुध्यत्याविककौशिकम् सश्रीफलैरंशुपट्टं सारिष्टैः कुतपं तथा १८५

शौचाभवंत्येते शोषणप्रोक्षणादिभिरिति अ-
भिधायाह तान्येवामेध्ययुक्तानि क्षालयेच्छोधनैः स्वकैः धान्यकल्कैस्तु फलजैरसैः क्षारानुगैरपीति क्षौममवदेव शाणस्य समानयोगत्वात् ऊर्णादिग्रहणं तदारब्धतूलिकादिप्राप्त्यर्थं अथ तस्याल्पोपघाते नैव क्षालनं कार्यं अमेध्यलेपादन्यत्र तूलिकाद्युपधानं च पुष्परक्तांबरं तथा शोषयित्वातपे किंचित्करैः संमार्जयेन्मुहुः पश्चाच्च वारिणा प्रोक्ष्य विनियुंजीत कर्मणि तान्यप्यतिमलिष्टानि यथावत्परिशोधयेदिति देवलस्मरणात् पुष्परक्तानि कुंकुमकुसुंभादिरक्तानि पुष्परक्तग्रहणमन्यस्यापि हरिद्रादिरक्तस्य क्षालनासहस्य प्राप्त्यर्थं न मांजिष्ठादेः तस्य क्षालनसहत्वात् शंखेनाप्युक्तं रागद्रव्याणि प्रोक्षितानि शुचीनीति १८५

गौरसर्षपसहितैरुदकगोमूत्रैः क्षौमं क्रमाअतसीतत्सूत्रनिर्मितं क्षौमंशुध्यति पुनःपाकेनचमृन्मयंघटादि एतच्चोच्छिष्टस्नेहलेपेवेदितव्यं मद्यमूत्रपुरीषैश्चश्लेष्मपूयाश्रुशोणितैः संस्पृष्टंनैवशुध्येतपुनःपाकेनमृन्मयमितिस्मरणात् चांडालाद्युपघातेतुत्यागएव यथाहपराशरः चांडालाद्यैस्तुसंस्पृष्टंधान्यंवस्त्रमथापिवा प्रक्षालनेनशुध्येतपरित्यागान्महीमयमिति कारवोरजकचैलधावकसूपकाराद्यास्तेषांहस्तःसदाशुचिः शुचित्वंतस्याध्येकर्मणिवस्त्रधावनादौसूतकादिसंभवेपि तथाचस्मृत्यंतरे कारवःशिल्पिनोवैद्यादासीदासास्तथैवच राजानोराजभृत्याश्चसद्यःशौ-

सगौरसर्षपैःक्षौमंपुनःपाकान्महीमयम् कारुहस्तःशुचिःपण्यंभैक्ष्यंयोषिन्मुखंतथा १८६ भूशुद्धिर्मार्जनाद्दाहात्कालाद्गोक्रमणात्तथा सेकादुल्लेखनाल्लेपाद्गृहंमार्जनलेपनात् १८७

-चाःप्रकीर्तिताइति पण्यंपणार्हंविक्रेयंयवव्रीह्यादि अनेकक्रेतृजनकरपरिघट्टितमप्यप्रयतंनभवति सूतकादिनिमित्तेनचवणिजां भिक्षाणांसमूहोभैक्ष्यंतत्ब्रह्मचर्यादिगतंअनाचांतरथ्याप्रदानादिनाऽशुचिरथ्यादिक्रमणादिनापिनदुष्यति तथायोषिन्मुखंसंभोगकालेशुचि स्त्रियश्चरतिसंसर्गइतिस्मरणात् १८६ इदानींभूशुद्धिमाह मार्जन्यापांसुतृणादीनांमोत्सारणंमार्जनं दाहस्तृणकाष्ठाद्यैः कालोयावताकालेन लेपादिक्षयोभवतितावान् गोक्रमणंगवांपादपरिघट्टनं सेकःक्षीरगोमूत्रगोमयवारि

भिः प्रवर्षणं वा उल्लेखनं तक्षणं खननं वा लेपो गोमयादिभिः एतैः समस्तैर्व्यस्तैर्वा मार्जनादिभिरमेध्यादुष्टमलिना च भूमिः शुध्यति तथा च देवलः यत्र प्रसूयते नारी म्रियते दह्यतेऽपि वा चांडालाध्युषितं यत्र यत्र विष्ठादिसंगतिः एवं कश्मलभूयिष्ठा भूरमेध्या प्रकीर्त्तिता श्वसूकरखरोष्ट्रादिसंस्पृष्टा दुष्टतां व्रजेत् अंगारतुषकेशास्थिभस्माद्यैर्मलिना भवेदिति अमेध्यादुष्टमलिनेति शोध्यभूमेस्त्रैविध्यमभिधाय शुद्धिविभागं दर्शयति पंचधा वा चतुर्धा वा भूरमेध्यापि शुध्यति दुष्टा द्वित्रिधा ह्येकधा शुध्यते मलिनैकधेति यत्र मनुष्या दह्यंते यत्र चांडालैरध्युषितं तयोः पंचभिः दहनकालगोक्रमणसेकोल्लेखनैः शुद्धिः यत्र मनुष्या जायंते यत्र च म्रियंते यत्र चात्यंतं विष्ठादिसंगतिः तासां दाहवर्जितैस्तैरेव चतुर्भिः श्वसूकरखरैश्चिरकालमध्युषितायाः गोक्रमणसेकोल्लेख

गोघ्रातेऽन्ने तथा केशमक्षिकाकीटदूषिते सलिलं भस्म मृद्वापि प्रक्षेप्तव्यं विशुद्धये १८८

नैस्त्रिभिः उष्ट्रग्रामकुक्कुटादिभिश्चिरकालमधिवासितायाः सेकोल्लेखनाभ्यां शुद्धिः अंगारतुषादिभिश्चिरकालमधिवासितायाउल्लेखनेन शुद्धिः मार्जनानुलेपने तु सर्वत्र समुच्चीयेते एवं गृहं मार्जनलेपनाभ्यां शुध्यति गृहस्य पृथगुपादानं संमार्जनलेपयोः प्रतिदिवसं प्राप्त्यर्थं १८७ गोघ्राते गोनिश्वासोपहतेऽन्ने अदनीयमात्रे तथा केशमक्षिकाकीटदूषिते केशग्रहणं लोमादिप्राप्त्यर्थं कीटाः पिपीलिकादयः उदकं भस्म मृद्वा यथासंभवं प्रक्षेप्तव्यं शुद्ध्यर्थं यत्तु गौतमेनोक्तं नित्यमभोज्यं केशकीटावपन्नमिति तत्केशकीटादिभिः सहपक्वं तद्विषयम् १८८ छ छ छ छ छ

त्रपुप्रभृतीनिप्रसिद्धानितेषांक्षारोदकेनाम्लोदकेनवारिणाचोपघातापेक्षयासमस्तैर्व्यस्तैर्वाशुद्धिःकार्या कांस्यलोहानांभस्मोदकेन ताम्रग्रहणाद्री
तिकारत्तलोहयोर्ग्रहणं एकयोनित्वात् एतच्चताम्रादीनामम्लोदकादिभिः शुद्ध्यभिधानंननियमार्थं मलसंयोगजंतज्जंयस्ययेनोपहन्यते तस्यत-
च्छोधनंप्रोक्तंसामान्यंद्रव्यशुद्धिकृदित्यविशेषेणस्मरणात् अतोनताम्रादेरुच्छिष्टोदकादिलेपस्यान्येनापगमसंभवेनियमेनाम्लोदकादिना शुद्धिःका
र्या अतएवमनुनासामान्येनोक्तं ताम्रायःकांस्यरैत्यानांत्रपुणःसीसकस्यच शौचंयथार्हंकर्त्तव्यंक्षाराम्लोदकवारिभिरिति यत्तुभस्मनाशुध्यतेकांस्यं
ताम्रमम्लेनशुध्यतीति तत्ताम्रादेःशौचस्यपरांकाष्ठांप्रतिपादयितुं नान्यस्यनिषेधाय यदात्पूपघातातिशयस्तदाम्लोदकादीनामावृत्तिः गवाघ्राता

त्रपुसीसकताम्राणांक्षाराम्लोदकवारिभिः भस्माद्भिःकांस्यलोहानांशुद्धिःप्लावोद्रवस्यतु १८९

निकांस्यानिशूद्रोच्छिष्टानियानिच शुध्यंतिदशभिःक्षारैःश्वकाकोपहतानिचेतिस्मरणात् शुद्धिःप्लावोद्रवस्यत्विति द्रवस्यद्रवद्रव्यस्यघृतादेःप्रस्थ
प्रमाणाधिकस्यश्वकाकाद्युपहतस्यअमेध्यसंस्पृष्टस्यचप्लावः प्लावनंसमानजातीयेनद्रवद्रव्येणभांडस्यातिपूरणंयावन्निःसरणं शुद्धिरित्यनुवर्त्तते
ततोल्पस्यत्यागः बह्वल्पत्वंचदेशाद्यपेक्षयाकालाद्यपेक्षयावेदितव्यं यथाहबौधायनः देशंकालंतथात्मानंद्रव्यंद्रव्यप्रयोजनं उपपत्तिमवस्थांचज्ञा
त्वाशौचंप्रकल्पयेदिति कीटाद्युपहतस्यतुउत्पवनं यथाहमनुः द्रवाणांचैवसर्वेषांशुद्धिरुत्पवनंस्मृतमिति उत्पवनंचात्रवस्त्रांतरितेपात्रेप्रक्षेपः अन्य

थाकीटाद्यपगमस्यासंभवात् शूद्रभांडस्थितस्यमधूदकादेः पात्रांतरानयनाच्छुद्धिः मधूदके पयस्तद्विकारान्च पात्रात्पात्रांतरानयने शौचमितिबौधा यनस्मरणात् मधुघृतादेर्वर्णापसदहस्तात्प्राप्तस्य पात्रांतरानयनंपुनः पचनंचकार्यं यथाहशंखः अभ्यवहार्याणांघृतेनाभिघारितानांपुनःपचनंएवंस्ने हानांस्नेहवद्रसानामिति १८९ एवंसौवर्णराजतादीनां एतत्प्रकरणप्रतिपादितानांसर्वेषामुच्छिष्टस्नेहाद्युपघाते शुद्धिरुक्तेदानीं तेषामेवामेध्योपहता नांशुद्धिमाह अमेध्याःशरीरजामज्जावसाशुक्रादयः वसाशुक्रमसृङ्मज्जामूत्रविट्कर्णविड्नखाः श्लेष्माश्रुदूषिकास्वेदोद्वादशैतेनृणांमलाः तथा मानुषास्थिशवंविष्ठारेतोमूत्रार्त्तववसा स्वेदोश्रुदूषिकाश्लेष्ममद्यंचामेध्यमुच्यतेइतिमनुदेवलादिभिःप्रतिपादिताः तैर्वसादिभिरक्तं लिप्तं अमेध्या-

अमेध्याक्तस्यमृत्तोयैः शुद्धिर्गंधादिकर्षणात्

क्तंतस्यमृदातोयेनशुद्धिःकर्त्तव्या गंधापकर्षणेन आदिग्रहणाल्लेपस्यापिग्रहणं यथाहगौतमः लेपगंधापकर्षणेशौचममेध्यलिप्तस्येति सर्व शुद्धिषुचप्रथमंमृत्तोयैरेवलेपगंधापकर्षणंकार्यं अशक्तावन्येन तदद्भिःपूर्वंमृदाचेतिगौतमस्मरणात् वसादिग्रहणंचसर्वेषाममेध्यत्वंप्रतिपाद यितुं नसमानोपघाताय मद्यैर्मूत्रपुरीषैश्चश्लेष्मपूयाश्रुशोणितैः संस्पृष्टंनैवशुध्येत्पुनःपाकेनमृन्मयमित्युपघातेविशेषाभिधानात् अमेध्यत्वंचै वमेषांदेहाच्चैवमलाश्च्युताइतिवचनाद्देहच्युतानामेव नस्वस्थानावस्थितानां पुरुषस्यनाभेरूर्ध्वकरव्यतिरिक्तांगानामन्यामेध्यस्पर्शेस्नानं यथा

हदेवलः मानुषास्थिवसांविष्ठामार्त्तवंमूत्ररेतसी मज्जानंशोणितंस्पृष्ट्वापरस्यस्नानमाचरेदिति तान्येवस्वानिसंस्पृश्यप्रक्षाल्याचम्यशुध्यतीति तथाऊर्ध्वंनाभेःकरौमुक्त्वायदंगमुपहन्यते तत्रस्नानमधस्तात्तुप्रक्षाल्याचम्यशुध्यतीति कृतेपियथोक्तशौचेमनसोपरितोषाद्यत्रशुद्धिसंदेहो भवतितद्वाक्शस्तंशुचि शुद्धमेतदस्त्वितिब्राह्मणवचनेनशुद्धंभवतीत्यर्थः अंबुनिर्णिक्तंयत्रप्रतिपादिताशुद्धिर्नास्तितस्यप्रक्षालनेनशुद्धिः प्र-क्षालनासहस्यप्रोक्षणेन अज्ञातंचसदायत्काकाद्युपहतमुपयुक्तंनकदाचिदपिज्ञायतेतच्छुचितदुपयोगाददृष्टदोषोनास्तीत्यर्थः नन्वृतद्विरुध्य

वाक्शस्तमंबुनिर्णिक्तमज्ञातंचसदाशुचि १९० शुचिगोतृप्तिकृत्तोयंप्रकृतिस्थंमहीगतम्
तथामांसंश्वचांडालक्रव्यादादिनिपातितम् १९१

ते संवत्सरस्यैकमपिचरेत्कृच्छ्रंद्विजोत्तमः अज्ञातभुक्तशुद्ध्य-र्थंज्ञातस्यतुविशेषतइत्यदृष्टदोषेपिप्रायश्चित्तप्रतिपादनात् नैतत्प्रायश्चित्तस्यजग्धिविषयत्वात् दोषाभावस्यचान्योपयोगविषयत्वात् १९० महीगतंभूमिस्थमुदकंएकगवीतृप्तिजननसमर्थंचांडालादिभिरस्पृष्टंप्रकृतिस्थंरूपरसगंधस्पर्शांतरमनापन्नंशुचि आचमनादि-योग्यंभवति महीगतमित्यशुद्धभूगतस्याशुचित्वनिषेधार्थं नत्वांतरिक्षोदकस्यशुद्धत्वव्यावृत्त्यर्थं नाप्युद्धृतस्य उद्धृताश्चापि शुध्यंतिशुद्धैःपात्रैः समुद्धृताः एकरात्रोषिता आपस्त्याज्याःशुद्धा अपिस्वयमितिदेवलवचनात् तथाचांडालादिकृतेतडागादौनदोषः अंत्यैरपिकृतेकूपेसेतौवाप्यादि

केतथा तत्रस्नात्वापीत्वाच प्रायश्चित्तंनविद्यतेइतिशातातपस्मरणात् तथा मांसंश्वचांडालक्रव्यादादिभिर्निपातितंशुचि आदिग्रहणात्पुल्क
सादेरपिग्रहणं निपातितमितिग्रहणंभक्षितस्यनिराकरणार्थं १९१ रश्मयः सूर्यादेः प्रकाशकद्रव्यस्य अग्निः प्रसिद्धः रजः अजादिसंबंधव्यतिरेके
ण तत्रश्वकाकोष्ट्रखरोलूकसूकरग्राम्यपक्षिणां अजाविरेणुसंस्पर्शादायुर्लक्ष्मीश्चहीयतेइतिदोषश्रवणात् संमार्जनादिकार्ये छायावृक्षादेः गौः
अश्वः वसुधाभूमिः अनिलोवायुः विप्रुषोऽवश्यायबिंदवः मुखजानांवक्ष्यमाणत्वात् मक्षिकाश्च एतेचांडालादिस्पृष्टाअपिस्पर्शेशुचयः वत्सः

रश्मिरग्नीरजश्छायागौरश्वोवसुधानिलः विप्रुषोमक्षिकास्पर्शेवत्सःप्रस्नवनेशुचिः १९२
अजाश्वयोर्मुखंमेध्यंनगोर्ननरजामलाः पंथानश्चविशुद्ध्यंतिसोमसूर्यांशुमारुतैः १९३

प्रस्नवने ऊधोगतदुग्धापकर्षणेशुचिः वत्सग्रहणं बालस्योपलक्षणार्थं बालैरनुपरिक्रांतंस्त्रीभिराचरितंचयत् अविज्ञातंचयत्किंचिन्नित्यंमेध्य
मितिस्थितिरितिवचनात् १९२ अजाश्वयोर्मुखंमेध्यं नगोः ननरजामलाः नरशब्दोलक्षणयादेहमभिधत्ते तज्जामलावसादयोनमेध्याभवंति पंथा
नोमार्गाश्चांडालादिभिःस्पृष्टाअपिरात्रौसोमांशुभिर्मारुतेनचशुध्यंति दिवासूर्यांशुभिर्मारुतेनच १९३ ७ ७ ७ ७

मुखेजातामुखजाः श्लेष्मविप्रुषोमेध्यानोच्छिष्टंकुर्वंति अनिपातिताश्चेदंगे नमुखेविप्रुषउच्छिष्टंकुर्वंतिनचेदंगेनिपतंतीतिगौतमवचनात् तथा
ये आचमनतोयबिंदवः पादौस्पृशंतितेमेध्याः श्मश्रुचास्यगतंमुखप्रविष्टंउच्छिष्टंनकरोति दंतसक्तंचान्नादिकंस्वयमेवच्युतंत्यक्त्वाशुचिर्भवति अच्यु
तंदंतसमं तथाचगौतमः दंतश्लिष्टंतुदंतवदन्यत्रजिह्वाभिमर्शनात्प्राक्च्युतेरित्येके च्युतेष्वास्रावविद्यान्निगिरन्नेवतच्छुचिरिति निगिरणंपुनरने-
नयाज्ञवल्क्योक्तेनत्यागेनविकल्प्यते निगिरन्नेवेत्येवकारः चर्वणेत्वाचमेन्नित्यंमुक्त्वातांबूलचर्वणं ओष्ठौविलोमकौस्पृष्ट्वावासोविपरिधायचेतिवि

मुखजाविप्रुषोमेध्यास्तथाचमनबिंदवः श्मश्रुचास्यगतंदंतसक्तंत्यक्त्वाततःशुचिः १९४ स्नात्वापीत्वाक्षुतेसु
प्तेभुक्त्वारथ्योपसर्पणे आचांतःपुनराचामेद्वासोविपरिधायच १९५

ष्णूक्ताचमननिषेधार्थः तांबूलग्रहणंफलाद्युपल
क्षणार्थं यथाहशातातपः तांबूलेचफलेचैवभुक्तेस्नेहावशिष्टके दंतलग्नस्यसंस्पर्शेनोच्छिष्टोभवतिद्विजइति १९४ स्नानपानक्षुतस्वप्नभोजनरथ्यो
पसर्पणवासोविपरिधानेषुकृतेष्वाचांतः पुनराचामेत् द्विराचमेदित्यर्थः चकाराद्रोदनाध्ययनारंभात्पानृतोक्त्यादिषु तथाचवसिष्ठः सुप्त्वाभुक्त्वाक्षुत्वा
स्नात्वापीत्वारुदित्वाचाचांतःपुनराचामेदिति मनुरपि सुप्त्वाक्षुत्वाचभुक्त्वाचनिष्ठीव्योक्त्वानृतंवचः पीत्वापोध्येष्यमाणश्च आचामेत्प्रयतोपिसन्नि-
ति भोजनेत्वादावपिद्विराचमनं भोक्ष्यमाणस्तुप्रयतोपिद्विराचामेदित्यापस्तंबस्मरणात् स्नानपानयोरादौसकृत् अध्ययनेत्वारंभेद्विःशेषेयंतेएवयथोक्तं
द्विराचमनं १९५

रथ्यामार्गमात्रं कर्दमः पंकः तोयमुदकं रथ्यास्थितानि कर्दमतोयानि अंत्यैश्चांडालादिभिः श्वभिर्वायसैश्चस्पृष्टानि मारुतेनैवशुध्यंति ष्टकाद्भिसुपयाति बहुवचनं तद्गतगोमयशर्करादिप्राप्त्यर्थं पक्वेष्टकादिभिश्चितानि धवलगृहादीनि चांडालादिस्पृष्टानि मारुतेनैव शुध्यंति एतच्चप्रोक्षणं संहतानामित्युक्तं प्रोक्षणनिषेधार्थं तृणकाष्ठपर्णादिमयानां तु प्रोक्षणमेवेति इति द्रव्यशुद्धिप्रकरणं १९६ इदानीं दानधर्मं प्रतिपादयिष्यंस्तदंगभूतपात्रप्रतिपादनार्थं तत्प्रशंसामाह ब्रह्माहिरण्यगर्भः कल्पादौ तपस्तप्त्वाध्यानं कृत्वा कान्मुख्यान् सृजामीति पूर्वं ब्राह्मणान् सृष्टवान् किमर्थं वेदगुप्तये वेदरक्षणार्थं पितॄ

रथ्याकर्दमतोयानि स्पृष्टान्यंत्यश्ववायसैः मारुतेनैव शुध्यंति पक्वेष्टकचितानि च १९६ तपस्तप्त्वासृजद्ब्रह्मा ब्राह्मणान्वेदगुप्तये तृप्त्यर्थं पितृदेवानां धर्मसंरक्षणाय च १९७ सर्वस्य प्रभवो विप्राः श्रुताध्ययनशालिनः तेभ्यः क्रियापराः श्रेष्ठास्तेभ्योप्यध्यात्मवित्तमाः १९८

णां देवानां च तृप्त्यर्थं अनुष्ठानोपदेशद्वारेण धर्मरक्षणार्थं च अतस्तेभ्यो दत्तमक्षय्यफलं भवतीत्यभिप्रायः १९७ सर्वस्य क्षत्रियादेर्विप्राः प्रभवः श्रेष्ठा जात्या कर्मणा च ब्राह्मणेष्वपि श्रुताध्ययनशालिनः श्रुताध्ययनसंपन्ना उत्कृष्टाः तेभ्योपि क्रियापराः विहितानुष्ठानशीलाः तेभ्योप्यध्यात्मवित्तमाः वक्ष्यमाणमार्गेण शमदमादियोगेनात्मतत्त्वज्ञाननिरताः श्रेष्ठा इत्यनुषज्यते १९८ ॐ ॐ ॐ

एवंजातिविद्यानुष्ठानतपसां प्रशंसामुखेनैकैकयोगेन पात्रतामभिधायाधुनातेषांसमुच्चये संपूर्णपात्रतामाह केवलयाविद्ययाश्रुताध्ययनसंपन्त्यानै वसंपूर्णपात्रत्वं नापिकेवलेनतपसा शमदमादिना अपिशब्दात्केवलानुष्ठानेन केवलजात्यावानैवसंपूर्णपात्रता कथंतर्हियत्रपुरुषेवृत्तमनुष्ठानंइ मेचोभेविद्यातपसीस्तः चशब्दाद्ब्राह्मणजातिश्च तदेवमन्वादिभिःसंपूर्णपात्रंप्रकीर्त्तितं हियस्मादतःपरमुत्कृष्टपात्रंनास्ति अत्रजातिविद्यानुष्ठानत पः समुच्चयानामुत्तरोत्तरप्राशस्त्येनफलतारतम्यंद्रष्टव्यं १९९ पूर्वोक्तेपात्रेगवादिकमर्चितंशास्त्रोक्तोदकदानादीतिकर्त्तव्यतासहितंदेयं अपात्रेक्षिप्ते

नविद्ययाकेवलयातपसावापिपात्रता यत्रवृत्तमिमेचोभेतद्धिपात्रंप्रकीर्त्तितम् १९९ गोभूतिलहिरण्यादिपात्रेदातव्यमर्चितम् नापात्रेविदुषाकिंचिदात्मनःश्रेयइच्छता २००

यादौब्राह्मणेचपतितादौविदुषापात्रविशेषेणफलविशेषंजानताश्रेयःसंपूर्णमिच्छताकिंचिदल्पमपिनदातव्यं श्रेयोग्रहणादपात्रदानेपिकिमपितामसंफलमस्तीतिसूचितं यथाहकृष्णद्वैपायनः अदेशकालेयद्दानमपात्रेभ्यश्च दीयते असत्कृतमवज्ञातंतत्तामसमुदाहृतमिति अपात्रेनदातव्यमिति वदताविशिष्टदेशकालद्रव्यसन्निधौपात्रस्यासंनिधानेद्रव्यस्यवातदुद्देशेनत्यागंतस्मैप्रतिश्रवणंवाकृत्वासमर्पयेत् नापात्रेदातव्यमितिसूचितम् तथाप्रतिश्रुतमपिपश्चात्पातकादिसंयोगज्ञानेनद्रेयं प्रतिश्रुत्याप्यधर्मसं-युक्तायनदद्यादितिनिषेधात् २००

अपात्रे दातुर्निषेधमुक्त्वाप्रतिग्रहीतारं प्रत्याह विद्यातपोभ्यां हीनेन प्रतिग्रहः सुवर्णादिर्न ग्राह्यः यस्माद्विद्यादिहीनः प्रतिगृह्णन् दातारमात्मानं चाधोन
रकं नयति प्रापयतीति २०१ गवादि पात्रे दातव्यमित्युक्तं तत्र विशेषमाह प्रतिदिवसं शक्त्यनुसारेण यथोक्तविधिना पात्रे गवादिकं स्वकुटुंबाविरोधेन
दातव्यं निमित्तेषु चंद्रोपरागादिषु विशेषतोधिकं यत्नेन दातव्यं याचितेनापि श्रद्धापूतं अनसूयापवित्रीकृतं शक्त्या दातव्यं याचितेनापि दातव्यमिति
वदता यथोक्तं पात्रं स्वयमेव गत्वा आहूय वा यद्दानं तन्महाफलमुक्तं तथा च स्मरणं गत्वा यद्दीयते दानं तदनंतफलं स्मृतम् सहस्रगुणमाहूय याचितेतु

विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः गृह्णन् प्रदातारमधो नयत्यात्मानमेव च २०१ दातव्यं प्रत्यहं पात्रे
निमित्तेषु विशेषतः याचितेनापि दातव्यं श्रद्धापूतं तु शक्तितः २०२ हेमशृंगी शफै रौप्यैः सुशीला वस्त्रसंयुता
सकांस्यपात्रा दातव्या क्षीरिणी गौः सदक्षिणा २०३ दातास्याः स्वर्गमाप्नोति वत्सरान् रोमसंमितान् कपिला
चेत्तारयति भूयश्चासप्तमं कुलम् २०४

तदर्धकमिति २०२ गवादिकं देयमित्युक्तं तत्र गोदाने विशेषमाह हेममये शृंगे यस्याः सा हेमशृंगी श
फैः रौप्यैः राजतैः खुरैः संयुता वस्त्रेण च संयुता कांस्यपात्रसहिता बहुक्षीरा गौर्यथाशक्ति दक्षिणासहिता दातव्या २०३ गोदानफलमाह अस्याः गोः रोमसंमि
तान् रोमसंख्याकान् वत्सरान्स्वर्गमाप्नोति दाता सा यदि कपिला तदा न केवलं दातारं तारयति किंतु कुलमपि आसप्तमं सप्तममभिव्याप्य पित्रादीन् षट् आत्मानं
च सप्तमं अप्यर्थे भूयः शब्दः २०४

सवत्सारोमतुल्यानिवत्सेनसहवर्त्ततइतिसवत्सातस्यारोमतुल्यानि वत्सस्यगोश्च यावंतिरोमाणितावत्संख्याकानियुगानिकृतत्रेतादीनिउभयतोमुखींद
दत्स्वर्गमाप्नोति अनुभवति पूर्वेणविधिनाचेत् २०५ कापुनरुभयतोमुखीकथंवानद्दानंमहाफलमित्यतआह गर्भान्निर्गच्छतोवत्सस्य द्वौपादौमुखंच
यावत्कालंयोन्यांदृश्यतेतावत्कालंउभयतोमुखमस्या अस्तीत्युभयतोमुखी यावत्कालंगर्भंनमुंचतितावत्सागौः पृथिवीसमाज्ञेया अतःफलातिशयोयुक्तः
२०६ यथाकथंचिद्धेमशृंगाद्यसंभवेपियथासंभवंपूर्वोक्तेनविधिनाधेनुंदोग्ध्रीं अधेनुंवा अवंध्यामरोगांरोगरहितां अपरिक्लिष्टां अत्यंतादुर्बलांगांदत्वादाता

सवत्सारोमतुल्यानियुगान्युभयतोमुखीं दातास्याःस्वर्गमाप्नोति पूर्वेणविधिनाददत् २०५ यावद्वत्सस्यपादौद्वौमुखं
योन्यांचदृश्यते तावद्गौः पृथिवीज्ञेयायावद्गर्भंनमुंचति २०६ यथाकथंचिद्दत्वागांधेनुंवाधेनुमेववा अरोगामपरिक्लि
ष्टांदातास्वर्गेमहीयते २०७ श्रांतसंवाहनंरोगिपरिचर्यासुरार्चनम् पादशौचंद्विजोच्छिष्टमार्जनंगोप्रदानवत् २०८

स्वर्गेमहीयतेपूज्यते २०७ गोदानसमान्याह श्रांतस्यासनशयनादिदानेनश्रमापनयनंश्रांतसंवाहनम् रोगिणांपरिचर्यायथाशक्त्यौषधादिदा
नैत्र सुरार्चनंहरिहरहिरण्यगर्भादीनांगंधमाल्यादिभिराराधनं पादशौचंद्विजानांसमानानामधिकानांच तेषामेवोच्छिष्टस्यसंमार्जनम् एतान्य
नंतरोक्तेनगोदानेनसमानि २०८ ७ ७ ७ ७ ७ ७

भूः फलप्रदा दीपादेवायतनादिषु प्रतिश्रयः प्रवासिनामाश्रयः निवेशनार्थं गार्हस्थ्यार्थं यत्कन्यादीयते तन्नैवेशिकम् स्वर्णं सुवर्णं धुर्यो भारसहो ब-
लीवर्दः शेषं प्रसिद्धं एतान् भूदीपादीन् दत्वा स्वर्गलोके पूज्यते स्वर्गफलं च भूमिदानादीनां न फलांतरव्युदासार्थं यत्किंचित्कुरुते पापं ज्ञानतोऽज्ञानतो-
ऽपि वा अपि गोचर्ममात्रेण भूमिदानेन शुध्यति तथा वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः तिलदश्च प्रजामिष्टां दीपदश्चक्षुरुत्तमं वासोदश्चंद्रसालो-
क्यमश्विसालोक्यमश्वद इत्यादिफलांतरश्रवणात् गोचर्मलक्षणं च बृहस्पतिना दर्शितं सप्तहस्तेन दंडेन त्रिंशद्दंडं निवर्त्तनम् दशतान्येव गोचर्म

भूदीपांश्चान्नवस्त्राम्भस्तिलसर्पिः प्रतिश्रयान् नैवेशिकं स्वर्णधुर्यं दत्वा स्वर्गे महीयते २०९ गृहधान्याभयोपानच्छ-
त्रमाल्यानुलेपनम् यानं वृक्षं प्रियं शय्यां दत्वात्यंतं सुखी भवेत् २१०

दत्वा स्वर्गे महीयते २०९ गृहं प्रसिद्धं धान्यानि च शालिगोधूमा-
दीनि अभयं भीतत्राणं उपानहौ छत्रं माल्यं मल्लिकादेः अनुलेपनं कुंकुमचंदनादि यानं रथादि वृक्षमुपजीव्यमाम्रादिकं प्रियं यद्यस्य प्रियं धर्मा-
दिकं शय्यां च दत्वात्यंतं अतिशयेन सुखी भवति न च हिरण्यादिकं हस्ते दातुमशक्यत्वाद्धर्मादीनामसंभवः भूमिदानादावपि समानत्वात् स्मृत्यंतरे-
ऽपि धर्मदानश्रवणात् देवतानां गुरूणां च मातापित्रोस्तथैव च पुण्यं देयं प्रयत्नेन नापुण्यं चोदितं क्वचित् अपुण्यदानेन तदेव वर्धते प्रतिग्रहीतुरपि

लोभादिनाप्रवृत्तस्य यःपापमबलंज्ञात्वाप्रतिगृण्हातिदुर्मतिः गर्हिताचरणात्तस्य पापंतावत्समाश्रयेत् समंद्विगुणसाहस्रमानंत्यंचप्रदातृविवि
तिस्मरणात् इहचसर्वत्रदेशकालपात्रविशेषाद्देयविशेषाद्दातृविशेषाद्दानेफलंमयाप्रोक्तंहिंसायांतद्वदेवहीनिप्रतिगृहीतृवृत्तिविशेषाच्चदातृ
प्रतिग्रहीत्रोःफलतारतम्यंद्रष्टव्यं २१० यस्मात्सर्वधर्ममयंब्रह्म अवबोधकत्वेनतस्मात्तद्दानंसर्वदानेभ्योप्यधिकं अतस्तद्ददध्यापनादिद्वारेणब्र
ह्मलोकमवाप्नोति अविच्युतंच्युतिर्यथानभवति आभूतसंप्लवंब्रह्मलोकेवतिष्ठतेइत्यर्थः अत्रचब्रह्मदानेपरस्वत्वापादनमात्रंदानंस्वत्वनिवृ-

सर्वधर्ममयंब्रह्मप्रदानेभ्योधिकंयतः तद्ददत्समवाप्नोतिब्रह्मलोकमविच्युतम् २११ प्रतिग्रहसमर्थोपिनादत्तेयः
प्रतिग्रहम् येलोकादानशीलानांसतानाप्नोतिपुष्कलान् २१२ कुशाःशाकंपयोमत्स्यागंधाःपुष्पंदधिक्षितिः मांसं
शय्यासनंधानाःप्रत्याख्येयंनवारिच २१३

त्तेः कर्त्तुमशक्यत्वात् २११ दानात्फलमुक्त्वेदानींदानव्यतिरेकेणापिदानफलावा-
प्तिहेतुमाह यःपात्रभूतोपिप्राप्तंप्रतिग्रहंसुवर्णादिकंनादत्तेनस्वीकरोति असौयद्यप्राप्तंनोपादत्तेतत्तद्दानशीलानांयेलोकाः तान्समग्रानाप्नो
ति २१२ इदानींसर्वप्रतिग्रहनिवृत्तिप्रसंगेऽपवादमाह धानाःभ्रष्टयवाःक्षितिर्मृत्तिका शेषंप्रसिद्धं एतत्कुशादिकंस्वयमुपानीतंनप्रत्याख्येयंचक्रा
राद्गृहादि शय्यांगृहान्कुशान्गंधानापःपुष्पंमणीन्दधि मत्स्यान्धानाःपयोमांसंशाकंचैवननिर्णुदेत् तथागंधोदकंमूलफलमन्नमभ्युद्यतंचयत् सर्वतः
प्रतिगृण्हीयान्मध्वाज्याभयदक्षिणामितिमनुस्मरणात् २१३

किमितिनप्रत्याख्येयमित्याह यद्यस्मादयाचितमेतत्कुशाद्याहृतंदुष्कृतकारिणोपिसंबंधिग्राह्यं किमुतयथोक्तकारिणः तस्मान्नप्रत्याख्येयं अन्यत्रकुलटाषंढपतितेभ्यः शत्रोश्च कुलमटंतीतिकुलटाः स्वैरिण्यादिकाः षंढस्तृतीयाप्रकृतिः २१४ प्रतिग्रहनिवृत्तेरपवादांतरमाह देवतातिथ्यर्चनादेरावश्यकत्वात्तदर्थमनात्मकारणात् पतितादयत्यंतकुत्सितवर्जंसर्वतःप्रतिगृण्हीयात् गुरवोमातापित्रादयः भृत्याभरणीयाः भार्यापुत्रादयः इतिदानधर्मप्रकरणम् २१५ इदानींश्राद्धप्रकरणमारभ्यते श्राद्धंनामादनीयस्यतत्स्थानीयस्यवाद्रव्यस्यप्रेतोद्देशेनश्रद्धयात्यागः तच्चद्विविधं पार्वणमेकोद्दिष्टमिति तत्रत्रिपुरुषोद्देशेनयत्क्रियतेतत्पार्वणं एकपुरुषोद्देनक्रियमाणमेकोद्दिष्टं पुनश्चत्रिविधं नित्यंनैमित्तिकंकाम्यंचेति तत्रनित्यं

अयाचिताहृतंग्राह्यमपिदुष्कृतकर्मणः अन्यत्रकुलटाषंढपतितेभ्यस्तथाद्विषः २१४ देवातिथ्यर्चनकृतेगुरुभृत्यार्थमेवच सर्वतःप्रतिगृण्हीयादात्मवृत्त्यर्थमेवच २१५ अमावास्याष्टकावृद्धिःकृष्णपक्षोयनद्वयम् द्रव्यंब्राह्मणसंपत्तिर्विषुवत्सूर्यसंक्रमः २१६

नियतनिमित्तोपाधौचोदितमहरहरमावास्याष्टकादिषु अनियतनियतोपाधौचोदितंनैमित्तिकं यथापुत्रजन्मादिषु फलकामनोपाधौविहितंकाम्यं यथास्वर्गादिकामनायांकृत्तिकादिनक्षत्रेषु पुनश्चपंचविधं अहरहःश्राद्धंपार्वणंवृद्धिश्राद्धमेकोद्दिष्टंसपिंडीकरणंचेति तत्राहरहःश्राद्धं अन्नंपितृमनुष्येभ्यइत्यादिनोक्तं तथाचमनुः दद्यादहरहःश्राद्धमन्नाद्येनोदकेनवा प

योमूलफलैर्वापिपितृभ्यःप्रीतिमस्ययाभिति अधुनापार्वणंवृद्धिश्राद्धंचदर्शयिष्यंस्तयोः कालानाह यत्रदिनेचंद्रमानदृश्यतेसाथमावास्या तस्यामहर्द्वयव्यापिन्यामपराण्हव्यापिनीग्राह्या अपराण्हःपितृणामितिवचनात् अपराण्हश्चपंचधाविभक्तेदिनेचतुर्थोभागस्त्रिमुहूर्त्तः अष्टकाश्चतस्रः हेमंतशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाइत्याश्वलायनोक्ताः वृद्धिःपुत्रजन्मादि कृष्णपक्षोपरपक्षः अयनद्वयंदक्षिणोत्तरसंज्ञकं द्रव्यंकृष्णासारमांसादिकं ब्राह्मणसंपत्तिर्वक्ष्यमाणा विषुवद्द्वयंमेषतुलयोःसूर्यगमनं सूर्यसंक्रमः आदित्यस्यराशेःराश्यंतरगमनं अयनविषुवतोःसंक्रांतित्वेसि

व्यतीपातोगजच्छायाग्रहणंचंद्रसूर्ययोः श्राद्धंप्रतिरुचिश्चैवश्राद्धकालाःप्रकीर्त्तिताः २१७

द्धेपिपृथगुपादानंफलातिशयप्रतिपादनार्थं व्यतीपातोयोगविशेषः गजच्छायायदेंदुः पितृदैवत्येहंसश्चैवकरेस्थितः याम्यातिथिर्भवेत्साहिगजच्छायाप्रकीर्त्तितेतिपरिभाषिता हस्तिच्छायेतिकेचित् सेहनगृह्यतेकालप्रक्रमात् ग्रहणंसोमसूर्ययोरुपरागः यदाचकर्त्तुःश्राद्धंप्रतिरुचिर्भवतितदापि चशब्दाद्युगादिप्रभृतयः एतेश्राद्धकालाः यद्यपिचंद्रसूर्यग्रहेनाद्यादितिग्रहणेभोजननिषेधस्तथापिभोक्तुर्दोषोदातुरभ्युदयः २१६ २१७

अहरहः श्राद्धव्यतिरिक्तवक्ष्यमाणचतुर्विधश्राद्धेषु ब्राह्मणसंपत्तिमाह सर्वेषु वेदेषु ऋग्वेदादिषु अनन्यमनस्कतयाप्यस्खलिताध्ययनक्षमा अग्र्याः
श्रोत्रियः श्रुताध्ययनसंपन्नः वक्ष्यमाणं ब्रह्म यो वेत्ति असौ ब्रह्मवित् युवा मध्यमवयस्कः सर्वस्येदं विशेषणं मंत्रब्राह्मणयोरर्थं वेत्तीति वेदार्थवित् ज्ये
ष्ठसामेति सामविशेषस्तदध्ययनांगं व्रतं च तद्व्रताचरणेन यस्तदधीते स ज्येष्ठसामा त्रिमधुः ऋग्वेदैकदेशस्तद्व्रतं च तद्व्रताचरणेन तदधीते इति त्रिमधुः
त्रिसुपर्णं ऋग्यजुषोरेकदेशस्तद्व्रतं च तद्व्रताचरणेन यस्तदधीते स त्रिसुपर्णिकः एते ब्राह्मणाः श्राद्धसंपद इति वक्ष्यमाणक्रियासंबंधः २१८ स्वस्रीयो
भागिनेयः ऋत्विगुक्तलक्षणः जामाता दुहितुर्भर्ता त्रिणाचिकेतं यजुर्वेदैकदेशः तद्व्रतं च तद्व्रताचरणेन यस्तदध्यायी स त्रिणाचिकेतः अन्यत्प्रसिद्धं ए

अग्र्याः सर्वेषु वेदेषु श्रोत्रियो ब्रह्मविद्युवा वेदार्थविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णिकः २१८ स्वस्रीयऋत्विग्जामातृयाज्यश्वशुरमातुलाः त्रिणाचिकेतदौहित्रशिष्यसंबंधिबांधवाः २१९ कर्मनिष्ठास्तपोनिष्ठाः पंचाग्निर्ब्रह्मचारिणः पितृमातृपराश्चैव ब्राह्मणाः श्राद्धसंपदः २२०

ते च पूर्वोक्ताग्र्यश्रोत्रियाद्यभावे वेदितव्याः एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः अनुकल्पस्त्वयं प्रोक्तः सदा स
द्भिरगर्हित इत्यभिधाय मनुना स्वस्रीयादीनामभिहितत्वात् २१९ कर्मनिष्ठा विहितानुष्ठानपराः तपोनिष्ठास्तपःशीलाः सभ्यावसथ्यौ त्रेताग्नयश्च यस्य सं
ति स पंचाग्निः पंचाग्निविद्याध्यायी च ब्रह्मचारी उपकुर्वाणको नैष्ठिकश्च पितृमातृपरास्तत्पूजापराः चकारात् ज्ञाननिष्ठादयः ब्राह्मणाः न क्षत्रियादयः श्रा
द्धसंपदः श्राद्धे स्वक्षय्यफलसंपत्तिहेतवः २२०

वर्ज्यानाह रोगीमहारोगोपसृष्टः हीनमतिरिक्तं वांगं यस्यासौ हीनातिरिक्तांगः एकेनाक्ष्णायोन पश्यतिसकाणः एतस्मादेवांध बधिरविंदू प्रजन नखल्वाट दुश्चर्मप्रभृतयोनिरस्ताः पुनर्भूरुक्तलक्षणातस्यांजातःपौनर्भवः अवकीर्णीब्रह्मचार्येवस्खलितब्रह्मचर्यः कुंडगोलौ परदारेषुजाये ते द्वौसुतौकुंडगोलकौ पत्यौजीवतिकुंडस्तुमृतेभर्त्तरिगोलकइत्येवमुक्तलक्षणकौ कुनखीसंकुचितनखः श्यावदंतकःस्वभावात्कृष्णदशनः ए ते श्राद्धेनिंदिताइतिवक्ष्यमाणेनसंबंधः २२१ वेतनग्रहणेनयोध्यापयतिसभृतकाध्यापकः वेतनदानेनचयोधीतेसोपि क्लीबोनपुंसकः असद्भिः

रोगीहिनातिरिक्तांगःकाणःपौनर्भवस्तथा अवकीर्णीकुंडगोलौकुनखीश्यावदंतकः २२१
भृतकाध्यापकःक्लीबःकन्यादूष्यभिशस्तकः मित्रध्रुक्पिशुनःसोम विक्रयीपरिविंदकः २२२

सद्भिर्वादोषैर्यःकन्यांदूषयतिसकन्यादूषी संतासताब्रह्महत्यादिनाभियुक्तोभिशस्तः मित्रध्रुक्मित्रद्रोही परदोषसंकीर्त्तनशीलःपिशु- नः सोमविक्रयीयज्ञेसोमस्यविक्रेता परिविंदकःपरिवेत्ताज्येष्ठेअकृतदारेअकृताग्निपरिग्रहेवायःकनीयान्दारपरिग्रहमग्निपरिग्रहंवा कुर्यात्सपरिवेत्ताज्येष्ठस्तुपरिवित्तिः यथाहमनुः दाराग्निहोत्रसंयोगंयःकरोत्यग्रजेस्थिते परिवेत्तासविज्ञेयःपरिवित्तिस्तुपूर्वजइति एवंदा तृयाजकावपि परिवित्तिःपरिवेत्ताययाचपरिविद्यते सर्वेतेनरकंयांतिदातृयाजकपंचमाइति २२२ छ छ छ छ

विनाकारणेनमातापितृगुरूंस्त्यजतिसमातापितृगुरुत्यागी एवंभार्यापुत्रत्याग्यपि वृद्धौचमातापितरौसाध्वींभार्यासुतःशिशुः अप्यकार्यश
तंकृत्वा भर्त्तव्यामनुरब्रवीदितिसमाननिर्देशात् कुंडस्यान्नंयोश्नातिसकुंडाशी एवंगोलकस्यापि यस्तयोरन्नमश्नातिसकुंडाशीप्रकीर्त्तितइतिवच
नात् वृषलोनिर्धर्मस्तत्सुतोवृषलात्मजः परपूर्वापुनर्भूः तस्याःपतिः अदत्तादायीस्तेनः कर्मदुष्टाःशास्त्रविरुद्धकारिणः चकारात्कितवदेवलकप्रभृत
यः एतेश्राद्धेनिंदिताःप्रतिषिद्धाः अग्र्याःसर्वेषुवेदेष्वित्यादिनाश्राद्धयोग्यब्राह्मणप्रतिपादनेनैवतद्व्यतिरिक्तानामयोग्यत्वेसिद्धेपिपुनःकेषांचिद्रोग्या

मातापितृगुरुत्यागीकुंडाशीवृषलात्मजः परपूर्वापतिःस्तेनःकर्मदुष्टाश्चनिंदिताः २२३
निमंत्रयेतपूर्वेद्युर्ब्राह्मणानात्मवान्शुचिः तैश्चापिसंयतैर्भाव्यंमनोवाक्कायकर्मभिः २२४

दीनांप्रतिषेधवचनं उक्तलक्षणब्राह्मणासंभवेप्रतिषेधरहितानांप्राप्त्यर्थं २२३ एवंश्राद्धकालान्ब्राह्मणांश्चोक्त्वाधुनापार्वणप्रयोगमाह पूर्वोक्तान्ब्रा
ह्मणान् श्राद्धेक्षणःक्रियतामितिपूर्वेद्युर्निमंत्रयेत प्रार्थनयाक्षणमभ्युपगमयेत् अपरेद्युर्वा पूर्वेद्युरपरेद्युर्वाश्राद्धकर्मण्यवस्थिते निमंत्रयेतत्र्यवरान्सम्य
ग्विप्रान्यथोदितानितिमनुस्मरणात् आत्मवान्शोकोन्मादादिरहितःसन्दोषवान्नभवति यद्वा आत्मवान्नियतेंद्रियोभवेत् शुचिःप्रयतश्च तैरपिनिमंत्रितै
र्ब्राह्मणैर्मनोवाक्कायव्यापारैःसंयतैर्नियतैर्भवितव्यं २२४

अपराण्हेतूक्तलक्षणेतान्निमंत्रितान्ब्राह्मणानाहूयस्वागतवचनेनपूजयित्वाकृतपादधावनानाचांतान्कृतेष्वासनेषुपवित्रपाणिःपवित्रपा
णीनुपवेशयेत् यद्यपिसामान्येनापराण्हेइत्युक्तंतथापिकुतपेप्रारभ्यतदादिपंचमुहूर्त्तेषुपरिसमापनंश्रेयस्करं अन्होमुहूर्त्ताविख्यातादशपंच
चसर्वदा तत्राष्टमोमुहूर्त्तोयःसकालःकुतपःस्मृतः मध्यान्हेसर्वदायस्मान्मंदीभवतिभास्करः तस्मादनंतफलदस्तत्रारंभोविशिष्यते ऊर्ध्वंमुहूर्त्ता
त्कुतपाद्यन्मुहूर्त्तचतुष्टयं मुहूर्त्तपंचकंह्येतत्स्वधाभवनमिष्यतेइतिवचनात् तथान्यदपिश्राद्धोपयोगिकुतपसप्तकमुक्तं मध्यान्हःखड्गपात्रंच

अपराण्हेसमभ्यर्च्यस्वागतेनागतांस्तुतान् पवित्रपाणिराचांतानासनेषूपवेशयेत् २२५ युग्मान्दैवेयथाशक्तिपित्र्येयुग्मां
स्तथैवच परिस्तृतेशुचौदेशेदक्षिणाप्रवणेतथा २२६

तथानेपालकंबलः रौप्यंदर्भास्तिलागावोदौहित्रश्चाष्टमःस्मृतः पापंकुत्सितमित्या
हुस्तस्यसंतापकारिणः अष्टावेतेयतस्तस्मात्कुतपाइतिविश्रुताइति २२५ दैवेचाभ्युदयिकेश्राद्धेसमान्ब्राह्मणान्उपवेशयेत् कथंयथाशक्तिश
क्तिमनतिक्रम्य तत्रवैश्वदेवे द्वौद्वौ मात्रादीनांतिसृणामेकैकस्याद्वौद्वौतिसृणांवाद्वौ एवंपित्रादीनामेकैकस्यद्वौद्वौत्रयाणांवाद्वौ एवंमातामहा
नांच वर्गत्रयेपिवैश्वदेवंतंत्रंवा पित्र्येपार्वणश्राद्धे अयुग्मान्विषमानुपवेशयेत् इतिसंबध्यते एतच्चपरिस्तृतेसर्वतःप्रच्छादिते शुचौगोमयादिनोप
लिप्ते दक्षिणाप्रवणेदक्षिणतोवनतेदेशेकार्यं २२६

अयुग्मानू पित्र्यइतिपार्वणश्राद्धांगभूते वैश्वदेवेप्ययुग्मप्रसंगेइदमारभ्यते द्वौदेवइति दैवेवैश्वदेवे द्वौब्राह्मणौप्राङ्मुखावुपवेश्यौ पित्र्ये अयु
ग्मानित्यविशेषप्रसंगेविशेषउच्यते त्रयः पित्र्येइति पित्र्येपित्रादिस्थानेत्रयःउदङ्मुखाउपवेश्याः पक्षांतरमाह एकैकमेववा वैश्वदेवेपित्र्येच
एकमेकमुपवेशयेत् संभवतोविकल्पः मातामहानामप्येवंश्राद्धेनिमंत्रणादि द्वौदैवे प्राक्त्रयःपित्र्येउदगेकैकमेववेत्येव मंतंपितृश्राद्धवत्कर्तव्यं
पितृश्राद्धेमातामहश्राद्धेच वैश्वदेविकंवैश्वदेवंतंत्रेणवाकर्त्तव्यं तंत्रशब्दःसमुदायवाचकइति यदातुद्वावेवब्राह्मणौलब्धौतदातुवैश्वदेवेपात्रं

द्वौदैवेप्राक्त्रयःपित्र्येउदगेकैकमेववा मातामहानामप्येवंतंत्रंवावैश्वदेविकं २२७ पाणिप्रक्षालनंदत्वाविष्टरार्थं
कुशानपि आवाहयेदनुज्ञातोविश्वेदेवासइत्यृचा २२८

प्रकल्प्यउभयत्रैकैकंब्राह्मणंनियुंज्यात् यथाहवसिष्ठः यद्येकंभोजयेच्छ्राद्धेदैवं
तत्रकथंभवेत् अन्नंपात्रेसमुद्धृत्यसर्वस्यप्रकृतस्यच देवतायतनेकृत्वाततःश्राद्धंप्रवर्त्तयेत् प्रास्येदन्नंतदग्नौतुदद्याद्वाब्रह्मचारिणइति २२७ त
दनंतरंविश्वेदेवार्थंब्राह्मणहस्तेजलंदत्वाविष्टरार्थंकुशांश्चयुग्मान्द्विगुणितानासनेदक्षिणतोदत्वाविश्वान्देवानावाहयिष्येइतिब्राह्मणान्पृष्ट्वातै
रावाहयेत्यनुज्ञातोविश्वेदेवासआगतेत्यनयार्चा आगच्छंतुमहाभागाइत्यनेनचस्मार्त्तेनमंत्रेणतानावाहयेत् एतच्चयज्ञोपवीतिनासव्येनप्रदक्षि
णंचकार्यं अपसव्यंततःकृत्वापितृणामप्रदक्षिणमितिपित्र्येविशेषस्मरणात् २२८

ततो विश्वेदेवार्थं ब्राह्मणसमीपे भूमिं प्रदक्षिणेन यवैरन्वास्तीर्य अनंतरं तैजसादि भाजने सपवित्रके कुशयुग्मांतर्हिते शन्नो देवीरभिष्टय इत्यनयर्चापः क्षिप्त्वा यवोसि धान्यराजोसीत्यादिना मंत्रेण यवान् ततो गंधपुष्पाणि च क्षिप्त्वानंतरमर्घ्यपात्रं पवित्रांतर्हितेषु ब्राह्मणहस्तेषु या दिव्या आपः पयसेत्यादिना मंत्रेण विश्वेदेवा इदं वोर्घ्यं इत्यर्घ्योदकं विनिक्षिपेत् २२९ अथ करशौचार्थमुदकं दत्वा यथाक्रमं गंधपुष्पधूपदीपदानं कुर्यात् तथाच्छादनदानं च गंधादीनां स्मृत्यंतरोक्तो विशेषो द्रष्टव्यः चंदनकुंकुमकर्पूरागरुपद्मकान्युपलेपनार्थमिति विष्णुनोक्तं पुष्पाणि च श्राद्धे जात्याः प्रशस्ताः स्युर्मल्लिका श्वेत

यवैरन्ववकीर्याथ भाजने सपवित्रके शन्नो देव्या पयः क्षिप्त्वा यवोसीति यवांस्तथा २२९ या दिव्या इति मंत्रेण हस्तेष्वर्घ्यं विनिक्षिपेत् दत्वोदकं गंधमाल्यं धूपदानं सदीपकम् २३० तथाच्छादनदानं च करशौचार्थमंबु च अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम् २३१

यूथिका जलोद्भवानि सर्वाणि कुसुमानि च चंपकमिश्रकानि वर्ज्यानि च उग्रगंधीन्यगंधीनि चैत्यवृक्षोद्भवानि च पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि च न कंटकिजं अकंटकमपि शुक्लं सुगंधि यत्तद्दद्यात् न रक्तं रक्तमपि कुंकुमं जलजं च दद्यादित्यादीनि द्रष्टव्यानि धूपे च विशेषो विष्णुनोक्तः प्राण्यंगं सर्वं धूपार्थे न दद्यात् घृतमधुसंयुक्तं गुग्गुलुं श्रीखंडागरुदेवदारुसरलादि दद्यादिति दीपे च विशेषः शंखेनोक्तः घृतेन दीपो दातव्यस्तिलतैलेन वा पुनः वसामेदोद्भवं दीपं प्रयत्नेन विवर्जयेत् आच्छादनं च शक्त्या नवमहतं सदशं दद्यादिति एतच्च सर्वं वैश्वदेवा

नुष्ठानकांडमुदङ्मुखः कुर्यात् पित्र्यंकांडं दक्षिणामुखः यथाह वृद्धशातातपः उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः प्रदद्यात्पार्वणे सर्वं दैवपूर्वं विधानत इति ३० ३१ ततो वैश्वदेवकांडानंतरमपसव्यं यज्ञोपवीतं प्राचीनावीतं कृत्वा अत्र तत इति यदतः कांडानुसमयो दर्शितः पित्रादीनां त्रयाणां-अयुग्मान्कुशान्द्विगुणभुग्नान् अप्रदक्षिणं वामतो विष्टरार्थमासनेषूदकपूर्वकं दत्वा पुनरुदकं दद्यात् अपः प्रदाय द्विगुणभुग्नकुशान् दत्वापः प्रदायेत्याश्वलायनस्मरणात् एतच्चाद्यंतयोरुदकदानं वैश्वदेवे पित्र्ये च प्रतिपदार्थप्रतिपादनार्थं द्रष्टव्यं अथ पितॄन् पितामहान् प्रपितामहानावाहयिष्य

द्विगुणांस्तु कुशान्दत्वा ह्युशंतस्त्वेत्यृचा पितॄन् आवाह्य तदनुज्ञातो जपेदायंतु नस्ततः २३२ अपहता इति तिलान्विकीर्य च समततः यवार्थास्तु तिलैः कार्याः कुर्यादर्घ्यादि पूर्ववत् २३३ दत्वार्घ्यं संस्रवांस्तेषां पात्रे कृत्वा विधानतः पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः २३४

इति ब्राह्मणान् पृष्ट्वा आवाहयेति तैरनुज्ञातो उशंतस्त्वा नि धीमहीत्यनया ऋचा पित्रादीनावाह्य आयंतु नः पितर इत्यादिना मंत्रेणोपतिष्ठेत् २३२ २३३ यवार्था यवसाध्यानि कार्याणि अन्ववकिरणादीनि तिलैः कर्त्तव्यानि ततोर्घ्यपात्रासादनाच्छादनांतं पूर्ववत्कुर्यात् तत्रायं विशेषः तिलानपहता असुरा रक्षांसीत्यादिना मंत्रेण ब्राह्मणान् परितोऽप्रदक्षिणमन्ववकीर्य रजतादिपात्रेषु त्रिषु युग्मकुशनिर्मितकूर्चांतर्हितेषु शन्नो देवीरिति मंत्रेणापः क्षिप्त्वा तिलोसि सोमदैवत्य इत्यादिमंत्रेण तिलान् पुष्पगंधा

निनक्षिप्त्वास्वधार्घ्याइतिब्राह्मणानांपुरतोर्घ्यपात्राणिस्थापयित्वायादिव्याइतिमंत्रांतेपितरिदंतेर्घ्यंपितामहेदंतेर्घ्यंप्रपितामहेदंतेर्घ्यंइतिब्राह्म-
णानांहस्तेष्वर्घ्यंदद्यात् एकैकमुभयत्रवेत्यस्मिन्नपिपक्षेपात्रत्रयंकार्यं एवमर्घ्यंदत्वातेषामर्घ्याणांसंस्रवान्ब्राह्मणहस्तगलितार्घोदकानिपितृ-
पात्रेगृहीत्वादक्षिणाग्रंकुशस्तंबंभूमौनिधायतस्योपरिपितृभ्यःस्थानमसीत्यनेनमंत्रेणतत्पात्रंन्युब्जमधोमुखंकुर्यात् तस्योपरिअर्घ्यपात्रपवि-
त्राणिनिदध्यात् अनंतरंगंधपुष्पधूपदीपाच्छादनानि पितरयंतेगंधः पितरिदंतेपुष्पं इत्यादिनाप्रयोगेणदद्यात् २३४ अनंतरमग्नौकरिष्यन्

अग्नौकरिष्यन्नादायपृच्छत्यन्नंघृतप्लुतम् कुरुष्वेत्यभ्यनुज्ञातोहुत्वाग्नौपितृयज्ञवत् २३५
हुतशेषंप्रदद्यात्तुभाजनेषुसमाहितः यथालाभोपपन्नेषुरौप्येषुचविशेषतः २३६

घृतप्लुतंघृताक्तमन्नमादायब्राह्मणान्पृच्छेदग्नौकरिष्येइति घृतग्रहणंसूपशाकादिनिवृत्त्यर्थं ततस्तैःकुरुष्वेत्यभ्यनुज्ञातःप्राचीनावीत्यग्निमुप-
समाधायमेक्षणेनादायावदानसंपदाज्जुहुयात् सोमायपितृमतेस्वधानमः अग्नयेकव्यवाहनायस्वधानमइतिपिंडपितृयज्ञकल्पेनाग्नौहुत्वामे-
क्षणमनुप्रहृत्यहुतशेषंमृन्मयवर्जंयथालाभोपपन्नेषुविशेषतोरौप्येषुपित्रादिभाजनेषुदद्यात् नवैश्वदेवभाजनेषु समाहितोनन्यमनस्कः अ-
त्रयद्यप्यग्नावित्यविशेषेणोक्तंतथाप्याहिताग्नेःसर्वाधानपक्षेऔपासनाग्नेरभावात्पिंडपितृयज्ञानंतरभाविनिपार्वणश्राद्धेविहितदक्षि-

णाग्नेः सन्निधानाद्दक्षिणाग्नौ होमः कर्मस्मार्त्तं विवाहाग्नावित्यस्यापवाददर्शनात् यथाह मार्कंडेयः आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समा
हितः अनाहिताग्निस्त्वौपसदेऽग्न्यभावे द्विजेऽप्सु वेति अर्धाधानपक्षे त्वौपासनाग्निसद्भावादाहिताग्नेरनाहिताग्नेरप्यौपासनाग्नावेवाग्नौकरणहो
मः एवमन्वष्टकादिषु त्रिष्वपि पिंडपितृयज्ञकल्पातिदेशात् काम्यादिषु चतुर्षु श्राद्धेष्वपि पाणावेव होमः यथाहुर्गृह्यकाराः अन्वष्टक्यं च पूर्वेद्युर्मासिमा
स्यथ पार्वणं काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टमं चतुर्ष्वाद्येषु साग्नीनां वह्नौ होमो विधीयते पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपि अस्या
र्थः हेमंतशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका इत्यष्टका विहिताः तत्र नवम्यां यत्क्रियते तदन्वष्टक्यं सप्तम्यां क्रियमाणं पूर्वेद्युर्मासिमा-
सि कृष्णपक्षे पंचमीप्रभृतिषु यस्यां कस्यांचित्तिथावन्वष्टक्यातिदेशेन यद्विहितं अमावास्यायां पिंडपितृयज्ञानंतरं यद्विहितं तत्पार्वणं स्वर्गादिकाम
नायां कृत्तिकादिनक्षत्रेषु यद्विहितं तत्काम्यं अभ्युदयेषु पुत्रोत्पत्त्यादिषु तडागारामदेवताप्रतिष्ठादिषु च यद्विहितं अष्टम्यां या अष्टका विहिता एको
द्दिष्टं अत्रैकोद्दिष्टशब्देन सपिंडीकरणं लक्षयति तत्रैकोद्दिष्टस्यापि सद्भावात् न केवलं पार्वणस्य साक्षादेकोद्दिष्टे तदभावात् अथवा गृह्यभा-
ष्यकारमतेन साक्षादेकोद्दिष्टेऽपि पाणिहोमस्य सद्भावात्साक्षादेकोद्दिष्टमेव एतेषामष्टानामाद्येषु चतुर्षु साग्निकस्याग्नौ होमः उत्तरेषु चतुर्षु पित्र्य
ब्राह्मणहस्ते निरग्निकस्यापि प्रमीतपितृकस्य द्विजस्य पार्वणं नित्यमिति तस्यापि पाणावेव होमः न निर्वपति यः श्राद्धं प्रमीतपितृको द्विजः इंदुक्ष
ये मासि मासि प्रायश्चित्ती यते तु स इति वचनात् एवं काम्याभ्युदयिकाष्टकैकोद्दिष्टेषु पाणावेव अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेदिति म
नुस्मरणात् पाणिदत्तस्य पृथग्ग्रासप्रतिषेधश्च दृश्यते यथाहुर्गृह्यकाराः अन्नं पाणितले दत्तं पृथगश्नंत्यबुद्धयः पितरस्तेन तृप्यंति शेषान्नेन लं

भंतिते यच्चपाणितले दत्तंयच्चान्यदुपकल्पितं एकीभावेनभोक्तव्यंपृथग्भावोनविद्यतेइति २३५ २३६ अन्नमोदनसूपपायसघृतादिकंभाजनेषुदत्वापृथिवीतेपात्रमित्यादिनामंत्रेणपात्राभिमंत्रणंकृत्वाइदंविष्णुर्विचक्रमेइत्यनयाऋचा अन्नेद्विजांगुष्ठंनिवेशयेत् तत्रवैश्वदेवेयज्ञोपवीती विष्णोहव्यंरक्षेति पित्र्येप्राचीनावीती विष्णोकव्यंरक्षेति विष्णोहव्यंचकव्यंचब्रूयाद्रक्षेतिवैक्रमादितिमनुस्मरणात् २३७ अनंतरंविश्वेभ्योदेवेभ्यइदमन्नंपरिविष्टंपरिवेक्ष्यमाणंचातृप्तेरितियवोदकेनदैवेनिवेद्य तथापित्रेअमुकगोत्रायामुकशर्मणेइदमन्नंपरिविष्टंपरिवेक्ष्यमा

दत्वान्नंपृथिवीपात्रमितिपात्राभिमंत्रणम् कृत्वेदंविष्णुरित्यन्नेद्विजांगुष्ठंनिवेशयेत् २३७ सव्याहृतिकां गायत्रींमधुवाताइतितृचम् जप्त्वायथासुखंवाच्यंभुंजीरंस्तेपिवाग्यताः २३८

णंचातृप्तेरितितिलोदकप्रदानेनपित्रेनिवेद्य एवंपितामहायप्रपितामहायचनिवेद्यानंतरमापोशानंदत्वापूर्वोक्ताभिर्व्याहृतिभिःसहितांगायत्रींमधुवाताइतितृचंमधुमधुमधित्रिवारंजप्त्वायथासुखंजुषध्वमितिब्रूयात् संकल्प्यपितृदेवेभ्यःसावित्रींमधुमज्जपः श्राद्धंनिवेद्यापोशानंजुषध्वेषोथभोजनं तथागायत्रींत्रिःसकृद्वापिजपेद्व्याहृतिपूर्विकां मधुवाताइतितृचंमध्वित्येतत्त्रिकंतथेतिपारस्करादिवचनात् भुंजीरंस्तेपिवाग्यताः तेपिब्राह्मणावाग्यतामौनिनोभुंजीरन् २३८

अन्नं भक्ष्यभोज्यलेह्यचोष्यपेयात्मकं पंचविधं इष्टं यद्ब्राह्मणाय प्रेतायकर्त्रे वा रोचते हविष्यं श्राद्धहविर्योग्यं व्रीहिशालियवगोधूममुद्गमाषमुन्यन्न कालशाकमहाशल्कैलाशुंठीमरीचहिंगुगुडशर्कराकर्पूरसैंधवमाम्रपनसनालिकेरकदलीबदरगव्यपयोदधिघृतपायसमधुमांसप्रभृतिस्मृत्यंतरप्रसिद्धं वेदितव्यं हविष्यमित्यनेनैवायोग्यस्य स्मृत्यंतरप्रतिषिद्धस्य कोद्रवमसूरचणककुलित्थपुलाकनिष्पावराजमाषकूश्मांडवार्त्ताकबृहतीद्वयोपोदकीवंशांकुरपिप्पलीवचाशतपुष्पोषरबिडलवणमाहिषचामरक्षीरदधिघृतपायसादीनां निवृत्तिः अक्रोधनः क्रोधहेतुसंभवेपि अत्वरोऽव्यग्रः आतृप्तेर्दद्यादितिसंबंधः तुशब्दाद्यथाकिंचिदुच्छिष्यते तथा दद्यात् उच्छेषणस्य दासवर्गभागधेयत्वात् उच्छेषणं भूमिगतमजिह्मस्याशठस्य च

अन्नमिष्टं हविष्यंच दद्यादक्रोधनोत्वरः आतृप्तेस्तु पवित्राणि जप्त्वा पूर्वजपं तथा २३९ अन्नमादाय तृप्ताः स्थ शेषं चैवानुमान्य च तदन्नं विकिरेद्भूमौ दद्याच्चापः सकृत्सकृत् २४०

दासवर्गस्य तत्पित्र्ये भागधेयं प्रचक्षते इति मनुस्मरणात् तथा आतृप्तेः पवित्राणि पुरुषसूक्तपावमानीप्रभृतीनि जप्त्वा तृप्तान् ज्ञात्वा पूर्वोक्तं जपं च सव्याहृतिकां गायत्रीमित्युक्तं जपेत् २३९ अनंतरं सर्वमन्नमादाय तृप्ताः स्थ इति तान्पृष्ट्वा तृप्ताः स्म इति तैरुक्तः शेषमप्यस्ति किं क्रियतामिति पृष्ट्वा इष्टैः सहोपभुज्यतामित्यभ्युपगम्य तदन्नं पितृस्थानब्राह्मणस्य पुरस्तादुच्छिष्टसन्निधौ दक्षिणाग्रदर्भांतरितायां भूमौ तिलोदकप्रक्षेपपूर्वकं ये अग्निदग्धा इत्यनयार्चा निक्षिप्य पुनस्तिलोदकं प्रक्षिपेत् तदनंतरं ब्राह्मणहस्तेषु गंडूषार्थं सकृत्सकृदपो दद्यात् २४०

पिंडपितृयज्ञकल्पातिदेशेनचरुश्रपणसद्भावे अग्नौकरणशिष्टचरुशेषेणसहसर्वमन्नमुपादायाग्निसन्निधौपिंडान्दद्यात् तदभावेब्राह्मणार्थंकृ
तमन्नंसर्वमुपादायसतिलं तिलमिश्रंदक्षिणामुखःउच्छिष्टसन्निधौपिंडपितृयज्ञकल्पेनपिंडान्दद्यात् २४१ मातामहानामपिविश्वेदेवावाहनादिपिंड
प्रदानपर्यंतंकर्मएवमेवकर्त्तव्यं अनंतरंब्राह्मणानामाचमनंदद्यात् स्वस्तिवाच्यंततः कुर्यात् स्वस्तिब्रूतेतिब्राह्मणान्स्वस्तिवाचयेत् तैश्चस्वस्तीत्युक्ते
अक्षय्यमस्त्वितिब्रूतेतिब्राह्मणहस्तेउदकदानंकुर्यात् तैश्चाक्षय्यमस्त्वितिवक्तव्यं २४२ अनंतरंयथाशक्तिहिरण्यरजतादिदक्षिणांदत्त्वास्वधांवाच

सर्वमन्नमुपादायसलिलंदक्षिणामुखः उच्छिष्टसन्निधौपिंडान्दद्याद्वैपितृयज्ञवत् २४१ मातामहानामप्येवंदद्यादाच
मनंततः स्वस्तिवाच्यंततः कुर्यादक्षय्योदकमेवच २४२ दत्वातुदक्षिणांशक्त्यास्वधाकारमुदाहरेत् वाच्यतामित्यनु-
ज्ञातः प्रकृतेभ्यःस्वधोच्यताम् २४३ ब्रूयुरस्तुस्वधेत्युक्तेभूमौसिंचेत्ततोजलं विश्वेदेवाश्चप्रीयंतांविप्रैश्चोक्तमिदंजपेत् २४४

यिष्ये इत्युक्त्वातैर्ब्राह्मणैर्वाच्यतामित्यनुज्ञातः प्रकृतेभ्यःपित्रादिभ्यः मातामहादिभ्यश्चस्वधोच्यतामितिस्वधाकारमुदाहरेत् २४३ तेचब्राह्मणा अ-
स्तुस्वधेतिब्रूयुः तैरेवमुक्ते अनंतरंकमंडलुनाभूमौउदकंसिंचेत् ततोविश्वेदेवाःप्रीयंतामितिब्रूयात् ब्राह्मणैश्चप्रीयंतांविश्वेदेवाइत्युक्तेइदमनंतरोच्यमा
नंजपेत् ४४

दातारोहिरण्यादेःनोस्माकंकुलेभिवर्धन्तांबहवोभवंतु वेदाश्चवर्धतां अध्ययनाध्यापनतदर्थज्ञानानुष्ठानद्वारेण संततिश्चपुत्रपौत्रादिपरंपरया श्रद्धाचपित्र्येकर्मण्यास्थानोस्माकंमाव्यगमत्मागच्छतु देयंचहिरण्यादिबहु अपर्यंतं अस्माकंभवत्विति जपेदित्यर्थः २४५ एवंपूर्वोक्तंप्रार्थना मंत्रंजप्त्वाउक्त्वाचप्रियावाचः धन्यावयंभवच्चरणयुगुलरजःपवित्रीकृतमस्मन्मंदिरंशाकाद्यशनक्लेशमविगणय्यभवद्भिरनुगृहीतावयमित्येवंरूः

दातारोनोभिवर्धतांवेदाःसंततिरेवच श्रद्धाचनोमाव्यगमद्बहुदेयंचनोस्त्विति २४५ इत्युक्त्वोक्त्वाप्रिया वाचःप्रणिपत्यविसर्जयेत् वाजेवाजइतिप्रीतःपितृपूर्वंविसर्जनम् २४६ यस्मिंस्तेसंस्रवाःपूर्वमर्घ्यपात्रे निवेशिताः पितृपात्रंतदुत्तानंकृत्वाविप्रान्विसर्जयेत् २४७

पाः प्रणिपत्यप्रदक्षिणपूर्वंनमस्कृत्यविसर्जयेत् कथंविसर्जयेदित्याह वाजेवाजेवतवाजिनोनइत्यनयाऋचापितृपूर्वंप्रपितामहादिविश्वेदेवांतंदर्भान्वारंभेणउत्तिष्ठतपितरइतिप्रीतःसुप्रीतमनाविसर्जनंकुर्यात् २४६ यस्मिन्नर्घपात्रेपूर्वमर्घ्यदानांतेसंस्रवाब्राह्मणहस्तगलिताघ्योंदकान्निनिवेशिताःस्थापिताःतस्मित्पात्रंन्युब्जंसदुत्तानमूर्ध्वमुखंकृत्वा- विप्रान्विसर्जयेत् एतच्चाशीर्मंत्रजपादूर्ध्ववाजेवाजेइत्यतःप्राक्द्रष्टव्यं कृत्वाविसर्जयेदितिक्त्वाप्रत्ययश्रवणात् २४७ ७ ७ ७

अनंतरमासीमांतंब्राह्मणाननुव्रज्यतैरास्यतामित्यनुज्ञातः तान्प्रदक्षिणीकृत्यप्रतिनिवृत्तः पितृसेवितंश्राद्धशिष्टमिष्टैःसहभुंजीत नियमएवा यंनपरिसंख्या मांसेतुयथारुचीतिद्विजकाम्ययेत्यत्रोक्तं यस्मिन्दिनेश्राद्धंकृतंतत्संबंधिनींरात्रिंभोक्तृभिर्ब्राह्मणैःसहकर्त्ताब्रह्मचारीभवेत् तुशब्दात् पुनर्भोजनादिरहितोपिभवेत् दंतधावनतांबूलंस्निग्धस्नानमभोजनं रत्यौषधपरान्नानिश्राद्धकृत्सप्तवर्जयेत् पुनर्भोजनमध्वानंभाराध्ययनमैथुनं दानंप्रतिग्रहंहोमंश्राद्धभुक्त्वष्टवर्जयेदितिवचनात् २४८ एवंपार्वणंश्राद्धमुक्त्वेदानींवृद्धिश्राद्धमाह वृद्धौपुत्रजन्मादिनिमित्तश्राद्धे एवमुक्तेनप्रकारे णपितॄन्यजेतपूजयेत् तत्रविशेषमाह प्रदक्षिणावृत्कइति प्रदक्षिणाआवृत् अनुष्ठानपद्धतिर्यस्यासौप्रदक्षिणावृत्कः प्रदक्षिणप्रचारइतियावत्

प्रदक्षिणमनुव्रज्यभुंजीतपितृसेवितम् ब्रह्मचारीभवेत्तांतुरजनींब्राह्मणैःसह २४८ एवंप्रदक्षिणावृत्कोवृ
द्धौनांदीमुखान्पितॄन् यजेतदधिकर्कंधुमिश्रान्पिंडान्यवैःक्रियाः २४९

नांदीमुखानितिपितॄणांविशेषणं अतश्चावाहना दौ नांदीमुखान् पितॄनावाहयिष्ये नांदीमुखान्पितामहान् इत्यादिप्रयोगोद्रष्टव्यः कथंयजेतेत्याह दधिकर्कंधुमिश्रान् कर्कंधुर्बदरीफलं दध्ना बदरीफलेश्चमिश्रान् पिंडान्दत्वायजेतेतिसंबध्यते तिलसाध्याःसर्वाःक्रियायवैःकर्त्तव्याः अत्रचब्राह्मणसंख्यादर्शितैव युग्मान्दैवेयथाशक्ती- ति अत्रप्रदक्षिणावृत्कत्वादिपरिगणनमन्येषामपिस्मृत्यंतरोक्तानांविशेषधर्माणांप्रदर्शनार्थं यथाहाश्वलायनः अथाभ्युदयिकेयुग्माब्राह्मणाः

अमूलादर्भाः प्राङ्मुखोयज्ञोपवीतीस्यात्प्रदक्षिणमुपचारोयवैस्तिलार्थोगंधादिदानं द्विर्द्विः ऋजुदर्भानासनेदद्यात् यवोसिसोमदैवत्योगोसवो
देवनिर्मितः प्रत्नवद्भिः प्रत्तः पुष्ट्यानांदीमुखान्पितॄनिइमाल्लोकान्प्रीणयाहिनः स्वाहेतियवावपनं विश्वेदेवाइदंवोर्घ्यं नांदीमुखाः पितरइदंवोर्घ्य
मितियथालिंगमर्घ्यदानं पाणौहोमोग्नयेकव्यवाहनायस्वाहा सोमायपितृमतेस्वाहेति मधुवाताऋतायतइतितृचस्थानेउपास्मैगायतेतिपंचम
धुमतीःश्रावयेत् अक्षंनमीमदंतेतिषष्ठीं आचांतेषुभुक्ताशयान्गोमयेनोपलिप्यप्राचीनाग्रान्दर्भान्संस्तीर्यतेषुपृषदाज्यमिश्रेणभुक्तशेषेणै

एकोद्दिष्टंदैवहीनमेकार्घ्यैकपवित्रकम् आवाहनाग्नौकरणरहितंह्यपसव्यवत् २५०

कैकस्यद्वौद्वौपिंडौदद्यादित्यादि यद्यपिपितॄन्यजेतेतिसामान्येनोक्तंतथापिश्राद्धत्रयंक्रमश्चस्मृत्यंतरादवगंतव्यः यथाहशातातपः मातुः
श्राद्धंतुपूर्वंस्यात्पितॄणांतदनंतरम् ततोमातामहानांचवृद्धौश्राद्धत्रयंस्मृतमिति २४९ एकोद्दिष्टमाह एकोद्दिष्टंएकउद्दिश्यतयस्मिन्श्राद्धेतदेकोद्दि
ष्टमितिकर्मनामधेयं शेषंपूर्ववदान्वरेदित्युपसंहारात् पार्वणसकलधर्मप्राप्तौविशेषोभिधीयते दैवरहितंविश्वेदेवरहितं एकार्घ्यपात्रमेकदर्भपवित्रकं
च आवाहनाग्नौकरणहोमेनचरहितं अपसव्यवत्प्राचीनावीतब्रह्मसूत्रवत् अनेनानंतरोक्ताभ्युदयिकेयज्ञोपवीतित्वंसूचयति २५० ७ ७

किंच यदुक्तंस्वस्तिवाच्यंततःकुर्यादक्षय्योदकमेवचेति तत्राक्षय्यस्थानेउपतिष्ठतामितिवदेत् विप्रविसर्जने कर्त्तव्ये वाजे वाज इतिजपानंतरं दर्भान्वा
रंभेणाभिरम्यतामितिब्रूयात् तेचाभिरताःस्मेतिब्रूयुः हेतिप्रसिद्धं शेषं पूर्ववदितियावत् एतच्चमध्यान्हे कर्त्तव्यं यथाह देवलः पूर्वाण्हे दैविकंकर्मअ
पराण्हेतुपैतृकं एकोद्दिष्टंतुमध्यान्हे प्रातर्वृद्धिनिमित्तकमिति भुंजीतपितृसेवितमित्यत्रैकोद्दिष्टविशेषेनिषेधोदृश्यते नवश्राद्धेषुयच्छिष्टंगृहेपः
र्युषितंचयत् दंपत्योर्भुक्तशिष्टंचनभुंजीतकदाचनेति नवश्राद्धंतुदर्शितं प्रथमेन्हितृतीयेन्हि पंचमेसप्तमेतथा नवमैकादशेचैवतन्नवश्राद्धमुच्य

उपतिष्ठतामक्षय्यस्थानेविप्रविसर्जने अभिरम्यतामितिवदेद्ब्रूयुस्तेभिरताःस्मह २५१

ते २५१ सपिंडीकरणमाह गंधोदकतिलैर्युक्तंपात्रचतुष्टयंअर्घ्यसिद्ध्यर्थं पूर्वोक्तविधिनाकुर्यात् तिलैर्युक्तं पात्रचतुष्टयंवदतापितृवर्गेचत्वारोब्रा-
ह्मणादर्शिताः वैश्वदेवेद्वौस्थितावेव अत्रप्रेतपात्रोदकंकिंचिदवशेषंत्रिधाविभज्यपितृपात्रेषुसेचयेत् येसमानाःसमनसइति द्वाभ्यांमंत्राभ्यां शेषं
विश्वेदेवावाहनादिविसर्जनांतंपूर्ववत् पार्वणवदाचरेत् प्रेतार्घ्यपात्रावशिष्टोदकेनप्रेतस्थान ब्राह्मणहस्तेर्घ्यंदत्वा शेषमेकोद्दिष्टवत्समापयेत् पि
त्र्येषुत्रिषुपार्वणवत् एतत्सपिंडीकरणमनंतरोक्तमेकोद्दिष्टंचततः प्रागुक्तंस्त्रियाअपिमातुरपिकर्त्तव्यं एवंवदतापार्वणे मातृश्राद्धंपृथङ्नकर्त्तव्य-

मित्युक्तं भवति अत्र प्रेतशब्दं पितुः प्रपितामहविषयं केचिद्वर्णयंति तस्य त्रिषु अंतर्भावेन सपिंडीकरणोत्तरकालं पिंडदानादिनिवृत्त्युपपत्तेः समनंतर
मृतस्योत्तरत्र पिंडोदकदानानुवृत्तेरंतर्भावेनयुक्तः अतएवाह यमः यः सपिंडीकृतं प्रेतं पृथक्पिंडे नियोजयेत् विधिघ्नस्तेन भवति पितृहा चोपजायते
इति प्रकर्षेण इतः प्रेत इति चतुर्थेपि प्रेतशब्दोपपत्तेः प्रेतेभ्य एव निपृणीयादिति च प्रयोगदर्शनात् अपिच सपिंडीकरणं श्राद्धं दैवपूर्वं नियोजयेत् पि
तॄनेवाशयेत्तत्र पुनः प्रेतं न निर्दिशेदिति सपिंडीकरणोत्तरकालं प्रेतस्य श्राद्धादिप्रतिषेधो दृश्यते स चानंतरमृतस्य न संभवति अमावास्यादौ श्राद्धविधा

गंधोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसिंचयेत् २५२
येसमानाइतिद्वाभ्यां शेषं पूर्ववदाचरेत् एतत्सपिंडीकरणमेकोद्दिष्टं स्त्रिया अपि २५३

नात् सपिंडता तु पुरुषे सप्तमे विनिवर्त्तत इत्येतदपि वचनं चतुर्थस्य त्रिषु अंतर्भाव एव घटते चतुर्थस्य पिंडत्रयव्यापित्वं पंचमस्य पिंडद्वयव्यापित्वम्
षष्ठस्यैकपिंडव्यापित्वं सप्तमे निवृत्तिरिति पितृपात्रेष्वित्येतदपि पितृमुख्यत्वादस्मिन्नेव पक्षे घटते नान्यथा प्रपितामहप्रमुखत्वात् तस्मात्पितृपा
त्रेषु तत्प्रेतपात्रं प्रसिंचयेदिति पितुः प्रपितामहपात्रं पित्रादिपात्रेषु प्रसेचयेदिति तदयुक्तं नह्यत्र पिंडसंयोजनमुत्तरत्र पिंडदानादिनिवृत्तिप्रयोज
नं अपितु प्रेतत्वनिवृत्त्या पितृत्वप्राप्त्यर्थं प्रेतत्वं च क्षुत्तृषोपजनितात्यंतदुःखानुभावावस्था यथाह मार्कंडेयः प्रेतलोके तु वसतिर्नृणां वर्षं प्रकीर्त्तिता

क्षुत्तृष्णे प्रत्यहं तत्र भवेतां भृगुनंदनेति पितृत्वप्राप्तिश्च वस्वादि श्राद्धदेवतासंबंधः प्राक्तनैकोद्दिष्टसहितेन सपिंडीकरणेन प्रेतत्वनिवृत्त्या पितृत्वं प्रा
प्तोतीत्यवगम्यते यस्यैतानि न दत्तानि प्रेतश्राद्धानि षोडश प्रेतत्वं च स्थिरं तस्य दत्तैः श्राद्धशतैरपि तथा चतुरो निर्वपेत्पिंडान्पूर्वं तेषु समापयेत् त
तःप्रभृति वै प्रेतः पितृसामान्यमश्नुते इत्यादि वचनात् यः सपिंडीकृतं प्रेतमित्यनेनापि पृथगेकोद्दिष्टविधानेन पिंडदाननिषेधात्पार्वणविधानेन सह-
पिंडदानमवगम्यते एतच्च सांवत्सरिकपाक्षिकैकोद्दिष्टविधानेनापाद्यते यदपि पुनः प्रेतं न निर्दिशेदिति तदपि प्रेतशब्दं नोच्चारयेत् अपि तु पितृ
शब्दमेवेत्येवमत्यर्थं न च प्रकर्षगमनात्तत्रैव प्रेतशब्दः यतो विशिष्टदुःखानुभवावस्था प्रेतशब्देन रूढ्याभिधीयत इत्युक्तं योपि प्रमीतमात्रे प्रेतशब्द
प्रयोगः सोपि भूतपूर्वगत्या सपिंडतात्तु पुरुषे सप्तमे विनिवर्त्तत इति च प्रथमस्य पिंडस्य चतुर्थव्यापित्वात् द्वितीयस्य पंचमव्यापित्वात् तृतीयस्य षष्ठव्यापि-
त्वात् सप्तमे विनिवर्त्तत इति एवमपि घटते अपि च निर्वाप्य पिंडान्वयेनन सापिंड्यं अव्यापकत्वात् अपित्वेकशरीरावयवान्वयेनेत्युक्तं पितृशब्दश्च प्रेतत्व
निवृत्त्या श्राद्धदेवतात्वमुपगतेषु वर्त्तत इति पितृपात्रेष्वित्यविरुद्धं तस्मादनंतरमृतपात्रोदकस्य तत्पिंडस्य च पितृपात्रेषु तत्पिंडेषु च संसर्जनमिति स्थितं
आचार्यस्तु परमतमेवोपन्यस्तवान् एतच्च पितुः सपिंडीकरणं पितामहादिषु त्रिषु प्रमीतेषु वेदितव्यं पितरि प्रेते पितामहे प्रपितामहे वा जीवति सपिंडीक
रणं नास्त्येव व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिंडनेति वचनात् यत्तु मनुवचनं पिता यस्य तु वृत्तः स्याज्जीवेच्चापि पितामहः पितुः स नाम संकीर्त्य कीर्त्तयेत्स
पितामहमिति तदपि पितृशब्दप्रयोगनियमाय न पिंडद्वयदानार्थं कथं ध्रियमाणे तु पितरि पूर्वेषामेव निर्वपेत् पिता यस्य तु वृत्तः स्याज्जीवेच्चापि पितामहः
सोपि पूर्वेषामेव निर्वपेदित्यन्वयः पक्षद्वयेपि कथं निर्वपेदित्याह पितुः स नाम संकीर्त्य कीर्त्तयेत्स पितामहमित्याद्यंतग्रहणेन सर्वत्र पितृभ्यः पितामहेभ्यः

प्रपितामहेभ्यइत्येवंप्रयोगः नपुनःकदाचिदपिपितामहस्यप्रपितामहस्यवादित्वं रुद्रप्रपितामहस्यतत्पितुर्वातत्वं अतश्चपित्रादिशब्दानांसंबंधिवचनात् ध्रियमाणेपितरिपितुः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यइति पितामहेध्रियमाणेपितामहस्यपितृभ्यः पितामहेभ्यः प्रपितामहेभ्यइति अतः पिंडपितृयज्ञेसुधंतां पितरइत्यादिमंत्राणामूहोनभवति यदपिविष्णुवचनं यस्यपिताप्रेतः स्यात्सपित्रे पिंडंनिधायपितामहात्परा भ्यांद्वाभ्यां दद्यादिति तस्यायमर्थः पितामहेध्रियमाणेप्रेतेचपितरिपितुरेकंपिंडमेकोद्दिष्टविधानेननिधायपितुर्यः पितामहस्तत्पराभ्यांद्वाभ्यांदद्यात् पितामहस्त्वात्मनः प्रपितामहः संप्रदानभूतः स्थितएवेति प्रपितामहायततः पराभ्यांद्वाभ्यांच दद्यादिति शब्दप्रयोगनियमस्तुपूर्वोक्तएव एवंगोब्राह्मणादिहतस्यापिसपिंडीकरणाभावोवेदितव्यः यथाह कात्यायनः ब्राह्मणादिहते ताते पतितेसंगवर्जिते व्युत्क्रमाच्चमृतेदेयंयेभ्यएवददात्यसाविति गोब्राह्मणहतस्यपितुः सपिंडीकरणाभावेतमुल्लंघ्यपितामहादिभ्यः पार्वणविधानमुपपन्नमितिसपिंडीकरणाभावोवगम्यते स्मृत्यंतरेपि- येनराः संततिच्छिन्नानास्तितेषांसपिंडता नचैतैः सहकर्त्तव्यान्येकोद्दिष्टानिषोडशेति मातुःपिंडदानादौगोत्रेविप्रतिपत्तिः भर्त्तृगोत्रेणपितृगोत्रेणवादातव्यमिति उभयत्रवचनदर्शनात् स्वगोत्राद्भ्रश्यतेनारी विवाहात्सप्तमेपदे स्वामिगोत्रेणकर्त्तव्यातस्याः पिंडोदकक्रियेत्यादि भर्त्तृगोत्रविषयं वचनं पितृगोत्रंसमुत्सृज्यनकुर्याद्भर्तृगोत्रतः जन्मन्येवविपत्तौचनारीणांपैतृकंकुलमित्यादिपितृगोत्रविषयं एवंविप्रतिपत्तावासुरादिविवाहेषुपुत्रिकाकरणेचपितृगोत्रमेव तत्रतत्रविशेषवचनात् दानस्यानिवृत्तेश्च ब्राह्मादिविवाहेषुव्रीहियववत् बृहद्रथंतरसामवत्विकल्पएव तथाच येनास्यपितरोयातायेनयाताः पितामहाः तेनयायात्सतांमार्गंतेनगच्छन्नदुष्यतीतिवचनात् वंशपरंपरायातसमाचरणेनव्यवस्था एवंविधविषय-

व्यतिरेकेणास्यवचनस्याविषयांतराभावात् यत्रपुनः शास्त्रतोनव्यवस्थानाप्याचारतस्तत्रात्मनस्तुष्टिरेववेतिवचनादात्मनस्तुष्टिरेवव्यवस्थापिका
यथागर्भाष्टमेऽष्टमेवाब्दइति मातुःसपिंडीकरणेपिविरुद्धानीववाक्यानिदृश्यंते तत्र पितामह्यादिभिःसार्द्धंसपिंडीकरणंस्मृतं तथाभर्त्रापिभार्यायाः
स्वमात्रादिभिःसहसपिंडीकरणंकर्त्तव्यमिति पैठीनसिराह अपुत्रायांमृतायांतुपतिःकुर्यात्सपिंडतां श्वश्र्वादिभिःसहैवास्याःसपिंडीकरणंभवेदिति
पत्न्यासहसपिंडीकरणंयमआह पत्न्याश्चैकेनकर्त्तव्यंसपिंडीकरणंस्त्रियाः सामृतापिहितेनैक्यंगतामंत्राहुतिव्रतैरिति उशनसातु मातामहेनसपिं
डीकरणमुक्तं पितुःपितामहेयद्वत् पूर्णेसंवत्सरेसुतैः मातुर्मातामहेतद्वदेषाकार्यासपिंडता तथा पितापितामहेयोज्यः पूर्णेसंवत्सरेसुतैः मातामा
तामहेतद्वदित्याह भगवान्शिवइत्येवंविविधेषुवचनेषुसत्सु अपुत्रायांभार्यायांप्रमीतायांभर्त्तास्वमात्रैवसापिंड्यंकुर्यात् अन्वारोहणेतुपुत्रःस्व-
पित्रैवमातुःसापिंड्यंकुर्यात् आसुरादिविवाहोत्पन्नःपुत्रिकासुतश्चमातामहेनैव ब्राह्मादिविवाहोत्पन्नःपित्रामातामहेनपितामह्यावाविकल्पेन-
कुर्यात् अत्रापियदिनियतोवंशसमाचारस्तदानींतथैवकुर्यात् वंशसमाचारोप्यनियतश्चेत्तदात्मनस्तुष्टिरेवचेतियथारुचिकुर्यात् तत्रचयेनकेनापि
मातुःसापिंड्येपियत्रान्वष्टकादिषुमातृश्राद्धंपृथग्विहितं अन्वष्टकासुवृद्धौचगयायांचक्षयेहनि मातुःश्राद्धंपृथक्कुर्यादन्यत्रपतिनासह तत्रपिताम
ह्यादिभिरेवपार्वणश्राद्धंकर्त्तव्यं अन्यत्रपतिनासहेतिपतिसापिंड्येतदंशभागित्वात् मातामहसापिंड्येतदंशभागित्वात्तेनैवसह यथाहशातातपः
एकमूर्त्तित्वमायातिसपिंडीकरणेकृते पत्नीपतिपितृणांचतस्मादंशेनभागिनीति एवंसतिमातामहेनमातुःसापिंड्येमातामहश्राद्धंपितृश्राद्धव-
न्नित्यमेव पत्न्यापितामह्यावामातुःसापिंड्येमातामहश्राद्धंननित्यं कृतेअभ्युदयःअकृतेनप्रत्यवायइतिनिर्णयः २५२ २५३ छ छ

संवत्सरादर्वाक्सपिंडीकरणंयस्यकृतंतस्यंतदुद्देशेनप्रतिदिवसंप्रतिमासंवायावत्संवत्सरंशक्त्यनुसारेणान्नमुदकुंभसहितंब्राह्मणायदद्यात् अ
र्वाक्संवत्सरादितिवदतासपिंडीकरणंसंवत्सरेपूर्णेप्राग्वेतिदर्शितं यथाहाश्वलायनः अथसपिंडीकरणंसंवत्सरांते द्वादशाहेवेति कात्यायनोप्याह
ततःसंवत्सरेपूर्णेसपिंडीकरणंभवेत् त्रिपक्षेवायदावापिवृद्धिरापद्यतेतदेति द्वादशाहेत्रिपक्षेवृद्धिप्राप्तौसंवत्सरेवेतिचत्वारःपक्षादर्शिताः तत्रद्वा
दशाहेपितुःसपिंडीकरणंसाग्निकेनकार्यं सपिंडीकरणंविनापिंडपितृयज्ञासिद्धेःसाग्निकस्तुयदाकर्त्ताप्रेतोवाप्यग्निमान्भवेत् द्वादशाहेतदाका
र्यंसपिंडीकरणंपितुरितिवचनात् निरग्निस्तुत्रिपक्षेवृद्धिप्राप्तौसंवत्सरेवाकुर्यात् यदाप्राक्संवत्सरात्सपिंडीकरणंतदाषोडशश्राद्धानिकृत्वासपिं

अर्वाक्सपिंडीकरणंयस्यसंवत्सराद्भवेत् तस्याप्यन्नंसोदकुंभंदद्यात्संवत्सरंद्विजे २५४

डीकरणंकार्यं उतसपिंडीकरणंकृत्वास्वस्वकालेतानिकर्त्तव्यानीतिसंशयः उभयथावचनदर्शनात् श्राद्धानिषोडशादत्वानतुकुर्यात्सपिंडनम्
श्राद्धानिषोडशापाद्यविदधीतसपिंडताम् इति षोडशश्राद्धानिचद्वादशाहेत्रिपक्षेचषण्मासेमासिचाब्दिके श्राद्धानिषोडशैतानिसंस्मृतानिमनीषिभि
रितिदर्शितानि तथा यस्यापिवत्सरादर्वाक्सपिंडीकरणंभवेत् मासिकंचोदकुंभंचदेयंतस्यापिवत्सरमिति तत्रसपिंडीकरणंकृत्वास्वकालएवैतानि
कर्त्तव्यानीतिप्रथमःकल्पः अप्राप्तकालत्वेनप्रागनधिकारात् यदपिवचनंषोडशश्राद्धानिकृत्वासपिंडीकरणंसंवत्सरात्प्रागपिकर्त्तव्यमितिसोयमा

पक्कल्पः यदात्वापकल्पत्वेनप्राक्सपिंडीकरणात्प्रेतश्राद्धानिकरोतितदैकोद्दिष्टविधानेनकुर्यात् यदातुमुख्यकल्पेनस्वकालएवकरोतितदाब्दि
कंश्राद्धंयोयथाकरोतिपार्वणमेकोद्दिष्टंवातथामासिकानिकुर्यात् सपिंडीकरणादर्वाक्कुर्वन्श्राद्धानिषोडश एकोद्दिष्टविधानेनकुर्यात्सर्वाणिता
नितु सपिंडीकरणादूर्ध्वंयदाकुर्यात्तदापुनः प्रत्यब्दंयोयथाकुर्यात्तथाकुर्यात्सतान्यपीतिस्मरणात् एतच्चप्रेतश्राद्धसहितंसपिंडीकरणंसंविभक्त
धनेषुबहुषुभ्रातृषुसत्स्वप्येकेनैवकृतेनालंनसर्वैः कर्तव्यं नवश्राद्धंसपिंडत्वंश्राद्धान्यपिचषोडश एकेनैवतुकार्याणिसंविभक्तधनेष्वपीतिस्मरणा
त् इदंचप्रेतश्राद्धसहितंसपिंडीकरणंअसंन्यासिनांपुत्रादिभिर्नियमेनकर्तव्यं प्रेतत्वविमोक्षार्थत्वात् संन्यासिनांतुनकर्तव्यं यथाहोशनाःएको
द्दिष्टंनकुर्वीतयतीनांचैवसर्वदा अहन्येकादशेप्राप्तेपार्वणंतुविधीयते सपिंडीकरणंतेषांनकर्तव्यंसुतादिभिः त्रिदंडग्रहणादेवप्रेतत्वंनैवजाय-
तइति पुत्रासंनिधानेयेनसगोत्रादिनादाहसंस्कारः कृतस्तेनैवादशाहांतंतत्प्रेतकर्मकर्तव्यं असगोत्रः सगोत्रोवायदिस्त्रीयदिवापुमान् प्रथमेह
नियोदद्यात्सदशाहंसमापयेदितिस्मरणात् शूद्राणामप्येतत्कर्तव्यममंत्रकंद्वादशेन्हि एवंसपिंडीकरणंमंत्रवर्ज्यंशूद्राणांद्वादशेन्हीतिविष्णुस्मर-
णात् सपिंडीकरणादूर्ध्वंसांवत्सरिकपार्वणादीनिपुत्रस्यनियमेनैवकार्याणि अन्येषामनियतानि २५४ एकोद्दिष्टकालानाह मृतेहनिप्रतिमासं
संवत्सरंयावदेकोद्दिष्टंकार्यं सपिंडीकरणादूर्ध्वंप्रतिसंवत्सरमेवैकोद्दिष्टंकार्यं आद्यंसर्वैकोद्दिष्टप्रकृतिभूतमेकोद्दिष्टमेकादशेहनि मृतदिवसा
परिज्ञानेतच्छ्रवणदिवसेअमावास्यायांवाकार्यं अपरिज्ञातेमृतेहनिअमावास्यायांश्रवणदिवसेवेतिस्मरणात् अमावास्यामभितिगमनमाससंबं
धिन्याममावास्यायामिति प्रवासदिवसेदेयंतन्मासेंदुक्षये पिवेतिस्मरणात् मृतेहनीत्यत्राहिताग्नेर्विशेषोजातूकर्ण्येनोक्तः ऊर्ध्वंत्रिपक्षाद्यच्छ्राद्धं

मृतेहन्येवतद्भवेत् अधरुक्तकारयेद्वाहादाहिताग्नेर्द्विजन्मनइति तत्रत्रिपक्षादर्वाग्यत्प्रेतकर्मतद्दाहदिवसादारभ्याहिताग्नेःकार्यं त्रिपक्षादूर्ध्वंयच्छ्रा
द्धंतन्मरणदिवसएवेत्यर्थः अनाहिताग्नेरुक्तसर्वंमृताहएव आद्यमेकादशेहनीत्याशौचोपलक्षणमितिकेचित् शुचिनाकर्मकर्त्तव्यमितिसुद्देरंगत्वा
त् अथाशौचापगमइतिसामान्येनसर्वेषांवर्णानामुपक्रम्यैकोद्दिष्टस्यविष्णुनाविहितत्वाच्च तदप्युक्तं एकादशेन्हियच्छ्राद्धंतत्सामान्यमुदाहृतम्
चतुर्णामपिवर्णानांसूतकंचपृथक्पृथगितिपैठीनसिस्मरणविरोधात् आद्यंश्राद्धमशुद्धोपिकुर्यादेकादशेहनि कर्त्तुस्तात्कालिकीशुद्धिरशुद्धःपुनरे
वसइतिशंखवचनविरोधाच्च सामान्योपक्रमंविष्णुवचनंदशाहाशौचविषयमपिघटते प्रतिसंवत्सरंचैवमितिप्रतिसंवत्सरंमृतेहनिएकोद्दिष्टमुपदि

मृतेहनितुकर्त्तव्यंप्रतिमासंतुवत्सरम् प्रतिसंवत्सरंचैवमाद्यमेकादशेहनि २५५

ष्टंयोगीश्वरेण तथाचस्मृत्यंतरं वर्षेवर्षेतुकर्त्तव्यामातापित्रोस्तुसत्क्रिया अदैवंभोजयेच्छ्राद्धंपिंडमेकंचनिर्वपेदिति यमोप्याह सपिंडीकरणादूर्ध्वं
प्रतिसंवत्सरंसुतः मातापित्रोःपृथक्कुर्यादेकोद्दिष्टंमृतेहनीति व्यासस्तुपार्वणंप्रतिषेधति एकोद्दिष्टंपरित्यज्यपार्वणंकुरुतेनरः अकृतंतद्विजानीया-
द्भवेच्चपितृघातकइति जमदग्निस्तुपार्वणमाह आपाद्यचसपिंडत्वमौरसोविधिवत्सुतः कुर्वीतदर्शवच्छ्राद्धं मातापित्रोःक्षयेहनीति शातातपोप्या
ह सपिंडीकरणंकृत्वाकुर्यात्पार्वणवत्सदा प्रतिसंवत्सरंविद्वांश्छागलेयोदितोविधिरित्येवंवचनविप्रतिपत्तौदाक्षिणात्यास्त्वेवंव्यवस्थामाहुः औरस

सक्षेत्रजाभ्यांमातापित्रोःक्षयाहेपार्वणमेवकर्त्तव्यं दत्तकादिभिरेकोद्दिष्टमितिजातूकर्ण्यवचनात् प्रत्यब्दंपार्वणेनैवविधिनाक्षेत्रजौरसौकुर्यातामितरे
कुर्युरेकोद्दिष्टंसुतादशेति तदसत् नह्यत्रक्षयाहवचनमस्ति अपितुप्रत्यब्दमिति संतिचक्षयाहव्यतिरिक्तानिप्रत्यब्दश्राद्धानि अक्षय्यतृतीयामा-
घावैशाखीप्रभृतिषु अतोनक्षयाहविषयपार्वणैकोद्दिष्टव्यवस्थापनायालं यत्तुपराशरवचनं पितुर्गतस्यदेवत्वमौरसस्यत्रिपौरुषं सर्वत्रानेकगो
त्राणामेकस्यैवमृतेहनीति तदपिनव्यवस्थापकं यस्मादयमर्थः देवत्वंगतस्यसपिंडीकृतस्यपितुःसर्वत्रौरसेनत्रिपौरुषंपार्वणंकार्यं अनेकगोत्राणां
भिन्नगोत्राणांमातुलादीनांक्षयेहनियच्छ्राद्धंतदेकस्यैवैकोद्दिष्टमेवेति किंच सपिंडीकरणादूर्ध्वमप्येकोद्दिष्टमेवकर्त्तव्यमौरसेनापीत्युक्तंपैठीन-
सिना एकोद्दिष्टंहिकर्त्तव्यमौरसेनमृतेहनि सपिंडीकरणादूर्ध्वंमातापित्रोर्नपार्वणमिति उदीच्याःपुनरेवंव्यवस्थापयंति अमावास्यायांभाद्रपदकृष्ण
पक्षेवामृताहेपार्वणमन्यत्रमृताहएकोद्दिष्टमेवेति अमावास्यांक्षयोयस्यप्रेतपक्षेथवापुनः पार्वणंतत्रकर्त्तव्यंनैकोद्दिष्टंकदाचनेतिस्मरणात् तद-
पिनाद्रियंतेशिष्टाः अनिश्चितमूलेनानेनवचनेननिश्चितमूलानांबहूनांक्षयाहमात्रपार्वणविषयाणांवचनानाममावास्याप्रेतपक्षमृताहविषयत्वे
नातिसंकोचस्यायुक्तत्वात् सामान्यवचनानर्थक्याच्च तत्रहिसामान्यवचनस्यविशेषवचनेनोपसंहारः यत्रसामान्यविशेषसंबंधज्ञानेनवचन
द्वयमर्थवत् यथासप्तदशसामिधेनीरनुब्रूयादित्यनारभ्याधीतस्यविकृतिमात्रविषयस्यसप्तदशवाक्यस्यसामिधेनीलक्षणद्वारसंबंधेनार्थवशात् मि
त्रविंदादिप्रकरणपठितेनपंचदशवाक्येनमित्रविंदाद्यधिकारात्पूर्वसंबंधबोधेनार्थवत्तामित्रविंदादिप्रकरणेउपसंहारः इहतुद्वयोर्मृताहमात्रविष
यत्वान्नार्थवत्तेति अतोत्रपाक्षिकैकोद्दिष्टनिवृत्तिफलकतयापार्वणनियमविधानंयुक्तं नचैकोद्दिष्टवचनानांमातापितृक्षयाहविषयत्वेनपार्वणवच

नानांचतदन्यक्षयाहविषयत्वेनव्यवस्थायुक्ता उभयत्रापिमातापितृकृतग्रहणस्यविद्यमानत्वात् सपिंडीकरणादूर्ध्वंप्रतिसंवत्सरंकृतैः मातापित्रोः
पृथक्कार्यमेकोद्दिष्टंमृतेहनीति तथा आपाद्यसहपिंडत्वमौरसोविधिवत्सुतः कुर्वीतदर्शवच्छ्राद्धंमातापित्रोः क्षयेहनीति यदपिकैश्चिदुच्यते
मातापित्रोःक्षयाहेसाग्निःपार्वणंकुर्यान्निरग्निरेकोद्दिष्टमिति वर्षेवर्षेकृतःकुर्यात्पार्वणंयोग्निमान्द्विजः पित्रोरनग्निमान्धीरएकोद्दिष्टंमृतेहनीति
सुमंतुस्मरणात् तदपिसत्सानिपक्षत्वादुपेक्षणीयं बव्हृग्नयस्तुपेविभायेचैकाग्नयएवच तेषांसपिंडनादूर्ध्वमेकोद्दिष्टंनपार्वणमितिस्मरणात् तत्रै
वेनिर्णयः संन्यासिनांक्षयाहेकृतेनपार्वणमेवकर्त्तव्यं एकोद्दिष्टंयतेर्नास्तित्रिदंडग्रहणादिह सपिंडीकरणाभावात्पार्वणंतस्यसर्वदेतिप्रचेतसः

पिंडांस्तुगोजविप्रेभ्योदद्यादग्नौजलेपिवा प्रक्षिपेत्सत्सुविप्रेषुद्विजोच्छिष्टंनमार्जयेत् २५६

स्मरणात् अमावास्यायांक्षयाहेप्रेतपक्षक्षयाहेचपार्वणमेव अमावास्यांक्षयोयस्यप्रेतपक्षेथवापुनरित्यादिवचनस्योक्तरीत्यानियमपरत्वात् अन्यत्र
क्षयाहेपार्वणेकोद्दिष्टयोर्व्रीहियववद्विकल्पएव तथापिवंशसमाचारव्यवस्थायांसत्यांव्यवस्थितोविकल्पः असत्यामिच्छेत्यलमतिप्रसंगेन २५५ नि
त्यश्राद्धव्यतिरिक्तसर्वश्राद्धशेषमिहाभिधीयते पूर्वदत्तानांपिंडानांपिंडस्यवाप्रतिपत्तिरियं गवेअजायब्राह्मणायवातदर्थिनेपिंडान्दद्यात् अग्नावगाधे
जलेवाप्रक्षिपेत् किंचसत्सुविप्रेषुभोजनदेशावस्थितेषुद्विजोच्छिष्टंनमार्जयेत् नोद्वासयेत् २५६ छ छ छ

भोज्यविशेषेण फलविशेषमाह हविष्यं हविर्योग्यं तिलव्रीह्यादि यथाह मनुः तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा दत्तेन मासं प्रीयंते विधिवत्पि
तरो नृणामिति तदन्नं हविष्यान्नं तेन मासं पितरस्तृप्यंतीत्यनागतेनान्वयः पायसेन गव्यपयःसिद्धेन संवत्सरं संवत्सरं तु गव्येन पयसा पायसेन चेति स्म
रणात् मत्स्यो भक्ष्यः पाठीनादिस्तस्येदं मात्स्यं हरिणस्ताम्रमृगः एणः कृष्णाः एणः कृष्णमृगो ज्ञेयस्ताम्रो हरिण उच्यत इत्यायुर्वेदस्मरणात् तस्येदं हा
रिणकं उरभ्रः अविस्तत्संबंधि औरभ्रं शाकुनं भक्ष्यपक्षिसंबंधि छागः अजस्तदीयं छागं पृषच्चित्रमृगस्तन्मांसं पार्षतं एणः कृष्णमृगस्तस्येत

हविष्यान्नेन वै मासं पायसेन तु वत्सरम् मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः २५७ एणरौर
ववाराहशाशैर्मांसैर्यथाक्रमम् मासवृद्ध्याभितृप्यंति दत्तैरिह पितामहाः २५८ खड्गामिषं महाशल्कं
मधु मुन्यन्नमेव च लोहामिषं महाशाकं मांसं वाध्रीणसस्य च २५९

मैणं रुरुः शंबरस्तत्प्रभवं रौरवं वराह आरण्यसूकरस्तज्जं वाराहं शशस्येदं शाशं एभिर्मांसैः पितृभ्यो दत्तैर्हविष्यान्नेन वै मासमित्यक्तत्वात्तन ऊ-
र्ध्वं यथाक्रमं एकैकमासवृद्ध्या पितरस्तृप्यंति २५७ २५८ किंच खड्गो गंडकस्तस्य मांसं महाशल्को मत्स्यभेदः मधु माक्षिकं मुन्यन्नं सर्वमारण्यं

नीवारादि लोहोरक्तच्छागः तदामिषंलोहामिषं महाशाकंकालशाकं वार्ध्रीणसोवृद्धः श्वेतच्छागः त्रिपिबंत्विंद्रियक्षीणंश्वेतंवृद्धमजापतिं
वार्ध्रीणसंतुतंप्राहुर्याज्ञिकाःश्राद्धकर्मणीतियाज्ञिकप्रसिद्धः त्रिपिबः पिबतः कर्णौजिह्वाचयस्यजलंस्पृशातिसत्रिभिः पिबतीतित्रिपिबः तस्य
वार्ध्रीणसस्यमांसंयद्ददाति गयास्थश्चयत्किंचिच्छाकादिकमपिगयास्थोददाति चशब्दात्गंगाद्वारादिषुच गंगाद्वारेप्रयागेचनैमिषेपुष्करेबु
दे संनिहत्यांगयायांचश्राद्धमक्षय्यतांव्रजेत् आनंत्यमश्नुतेइति अनंतफलहेतुत्वंप्राप्नोति आनंत्यमश्नुतइतिप्रत्येकंसंव ध्यते तथावर्षात्र
योदश्यांभाद्रपदकृष्णत्रयोदश्यांविशेषतोम घासुक्तायांयत्किंचिद्दीयतेतत्सर्वमानंत्यमश्नुतइतिगतेनसंबंधः अत्रयद्यपिमुन्यन्नमांसमध्वा-

यद्ददातिगयास्थश्चसर्वमानंत्यमश्नुते तथावर्षात्रयोदश्यांमघासुचविशेषतः २६०

दीनिसर्ववर्णानांसामान्येनश्राद्धेयोग्यानिदर्शितानितथापिपुलस्त्योक्ताव्यवस्थाआदरणीया मुन्यन्नंब्राह्मणस्योक्तंमांसंक्षत्रियवैश्ययोः
मधुप्रदानंशूद्रस्यसर्वेषांचाविरोधियदिति अस्यायमर्थः मुन्यन्नंनीवारादियच्छ्राद्धयोग्यमुक्तंतद्ब्राह्मणस्यप्रधानंसमग्रफलदं यच्चमांसमुक्तं
तत्क्षत्रियवैश्ययोःप्रधानं यत्क्षौद्रमुक्तंतच्छूद्रस्य एतत्त्रितयव्यतिरिक्तंयदविरोधियदप्रतिषिद्धंवास्तुकादि यच्चविहितंहविष्यंकालशाका
दितत्सर्वेषांसमग्रफलदमिति २५९ २६० ६ ६ ६ ६ ६

तिथिविशेषात्फलविशेषमाह कन्यांरूपलक्षणशीलवतीं कन्यावेदिनोजामातरः बुद्धिरूपलक्षणसंपन्नाः पशवः क्षुद्राः अजादयःसत्सुताः सन्मार्गवर्त्तिनः द्यूतंद्यूतविजयः कृषिःकृषिफलं वाणिज्यंवाणिज्यलाभः द्विशफागवादयः एकशफाअश्वादयः ब्रह्मवर्चस्विनः पुत्राःवेदाध्ययन तदर्थानुष्ठानजनितंतेजोब्रह्मवर्चसंतद्वंतः स्वर्णरूप्येहेमरजते तद्व्यतिरिक्तंत्रपुसीसादिकुप्यकं जातिश्रैष्ठ्यंजातिषूत्कृष्टत्वं सर्वकामाः काम्यंतइ तिकामाः स्वर्गपुत्रपश्वादयःएतानिकन्यादीनिचतुर्दशफलानिकृष्णप्रतिपत्प्रभृतिषमावास्यापर्यंतास्तुचतुर्दशीवर्जितास्तुचतुर्दशस्तिथिषुश्रा-

कन्यांकन्यावेदिनश्चपशून्वैसत्सुतानपि द्यूतंकृषिंचवाणिज्यंद्विशफैकशफंतथा २६१ ब्रह्मवर्चस्विनःपुत्रान्स्वर्णरूप्ये सकुप्यके जातिश्रैष्ठ्यंसर्वकामानाप्नोतिश्राद्धदःसदा २६२ प्रतिपत्प्रभृतिष्वेकांवर्जयित्वाचतुर्दशीं शस्त्रेणतुहतायेवैतेभ्य स्तत्रप्रदीयते २६३

द्धदोयथाक्रममाप्नोति येकेचनशस्त्रहतास्तेभ्यःकृष्णचतुर्दश्यामेकोद्दिष्टविधिनाश्राद्धंदद्यात् यदिब्राह्मणादिहतान भवंति समत्वमागतस्यापिपितुः शस्त्रहतस्यवै एकोद्दिष्टंसुतैःकार्यंचतुर्दश्यांमहालयेइतिस्मरणात् समत्वमागतस्य सपिंडीकृतस्यमहालयेभाद्र पदकृष्णचतुर्दश्यांशस्त्रहतस्यैवश्राद्धंनान्यस्येतिनियम्यते नपुनःशस्त्रहतस्यचतुर्दश्यामेवेति अतश्चक्षयाहादौशस्त्रहतस्यापियथाप्राप्तमेवश्राद्धं नचभाद्रपदकृष्णपक्षएवायंविधिरितिमंतव्यं प्रौष्ठपद्यामपरपक्षेमासिमासिचैवमितिशौनकस्मरणात् २६१ २६२ २६३ ७ ७

नक्षत्रविशेषात्फलविशेषमाह कृत्तिकामादिं कृत्वा भरण्यंतं प्रतिनक्षत्रं यः श्राद्धं ददाति स यथाक्रमं स्वर्गादीनायुः पर्यंतान्कामानवाप्नोति यद्यास्ति
कः श्रद्दधानश्चेत् व्यपेतमदमत्सरोभवति आस्तिकोविश्वासवान् श्रद्दधानः आदरातिशययुक्तः व्यपेतमदमत्सरः मदोगर्वः मत्सर ईर्ष्या ताभ्यांरहि
तः स्वर्गं निरतिशयसुखं अपत्यमविशेषेण ओजः आत्मशक्त्यतिशयः शौर्यं निर्भयत्वं क्षेत्रं फलवत् बलं शारीरं पुत्रोगुणवान् श्रैष्ठ्यं जातिषु सौभाग्यं
जनप्रियता समृद्धिर्धनादेः मुख्यता अग्र्यता शुभं सामान्येन प्रवृत्तचक्रता अप्रतिहताज्ञता वाणिज्यप्रभृतयः वाणिज्य कृषि कुसीदगोरक्षाः अरोगित्वं

स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा पुत्रं श्रैष्ठ्यं ससौभाग्यं समृद्धिं मुख्यतां शुभम् २६४ प्रवृत्तचक्रतां चैव
वाणिज्यप्रभृतीनपि अरोगित्वं यशो वीतशोकतां परमां गतिम् २६५ धनं वेदान्भिषक्सिद्धिं कुप्यं गा अप्यजा
विकाम् अश्वानायुश्च विधिवद्यः श्राद्धं संप्रयच्छति २६६ कृत्तिकादिभरण्यंतं स कामानाप्नुयादिमान् आस्तिकः श्र
द्दधानश्च व्यपेतमदमत्सरः २६७

अनामययोगित्वं यशः प्रख्यातिः वीतशोकता इष्टवियोगादिजनितदुःखाभावः परमागतिः ब्रह्मलोकप्रा
प्तिः धनं सुवर्णादि वेदा ऋग्वेदादयः भिषक्सिद्धिः औषधफलावाप्तिः कुप्यं सुवर्णरजतव्यतिरिक्तं ताम्रादि गावः प्रसिद्धाः अजाश्च अवयश्च अश्वाश्च
आयुर्दीर्घजीवनं मासरव्ध्याभितृप्यंतिदत्तैरिह पितामहाइत्यनेन पितॄणां श्राद्धेन तृप्तिर्भवतीत्युक्तं तदनुपपन्नं प्रातिस्विक शुभाशुभकर्मवशेन स्वर्गनर
कादिगतानां मनुष्याणां पुत्रादिभिर्दत्तैरन्नपानादिभिस्तृप्त्यसंभवात् २६४ २६५ २६६ २६७

संभवेपिस्वयमात्मनाप्यनीशाः कथंस्वर्गादि फलंप्रयच्छंतीत्यत आह नह्यत्र देव दत्ता दय एव श्राद्धकर्मणि संप्रदानभूताः पित्रादिशब्दैरुच्यंते किंत्व
धिष्ठातृवस्वादि देवतासहिताएव यथा देव दत्तादिशब्दैर्नशरीरमात्रंनाप्यात्ममात्रं किंतुशरीरविशिष्टा आत्मानउच्यंते एवमधिष्ठातृ देवतासहिता
एव देव दत्तादयः पित्रादिशब्दैरुच्यंते अतश्चाधिष्ठातृ देवतावस्वादयः पुत्रादिभिर्दत्तेनान्नपानादिना तृप्ताः संतस्तानपि देव दत्तादींस्तर्पयंति कर्तृंश्च
पुत्रादीन्फलेनसंयोजयंति यथामातागर्भपोषणायान्यदत्तेन दोह दान्नपानादिनास्वयमुपभुक्तेनतृप्तासतीस्वजठरगतमप्यपत्यंतर्पयति दोहदान्ना

वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः प्रीणयंतिमनुष्याणांपितॄन्श्राद्धेनतर्पिताः २६८ आयुःप्रजांधनं
विद्यांस्वर्गंमोक्षंसुखानिच प्रयच्छंतितथाराज्यंप्रीतान्नृणांपितामहाः २६९

दिप्रदायिनश्चप्रत्युपकार फलेन संयोजयति तद्वद्वसवोरुद्राअदितिसुताः आदित्याएतेपितरः पितृपितामहप्रपितामह शब्दवाच्याः नकेवलं दे
व दत्ता दय एव श्राद्धदेवताः श्राद्धकर्मणि संप्रदानभूताः किंतु मनुष्याणां पितॄन्देवदत्तादीन्स्वयंश्राद्धेन तर्पितास्तर्पयंति ज्ञानशक्त्यतिशय-
योगेन किंचनकेवलंपितॄंस्तर्पयंति अपितुश्राद्धकारिभ्यः आयुःप्रजांधनंविद्यांस्वर्गंमोक्षंसुखानिच प्रयच्छंनितथाराज्यंप्रीतान्नृणांपितामहाः
चकारात्तत्र तत्र शास्त्रोक्तमन्यदपिफलंस्वयंप्रीताः पितामहावस्वादयः प्रयच्छंतीति इतिश्राद्धप्रकरणं २६८ २६९ ७ ७

दृष्टादृष्टफलसाधनानिकर्माण्यभिहितान्यप्यभिधास्यंतेच्चतेषांस्वरूपनिष्पत्तिः फलसाधनत्वंचाविघ्नेन भवतीत्यविघ्नार्थंकर्मविधास्यन्नविघ्नस्य
कारकज्ञापकहेतूनाह विनायकः कर्मविघ्नसिद्ध्यर्थमित्यादिनोभयविधहेतुपरिज्ञानाद्विघ्नस्यप्रागभावपरिपालनायोपस्थितस्यप्रध्वंसायवाप्रेक्षापू
र्वकारिणः प्रवर्त्तंते रोगस्येवोभयविधहेतुपरिज्ञानात् विनायकोविघ्नेश्वरः पुरुषार्थसाधनानांकर्मणांविघ्नसिद्ध्यर्थंस्वरूपफलसाधनत्वविघात
सिद्ध्येविनियोजितः नियुक्तः रुद्रेणब्रह्मणाचकाराद्विष्णुनाच गणानांपुष्पदंतप्रभृतीनामाधिपत्येस्वाम्येच ७० एवंविघ्नस्यकारकहेतुमुक्त्वाज्ञा

विनायकः कर्मविघ्नसिद्ध्यर्थंविनियोजितः गणानामाधिपत्येचरुद्रेणब्रह्मणातथा २७० तेनोपसृष्टोयस्तस्य
लक्षणानिनिबोधत स्वप्नेवगाहतेत्यर्थंजलंमुंडांश्चपश्यति २७१ काषायवाससश्चैवक्रव्यादांश्चाधिरोहति
अंत्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठते २७२

पकहेतुप्रदर्शनार्थमाह तेनविनायकेनोपसृष्टोगृहीतोयस्तस्यलक्षणानिज्ञापकानिनिबोधत
जानीध्वं हेमुनयः पुनर्मुनीनांप्रत्यवमर्शः शांतिप्रकरणप्रारंभार्थः स्वप्नेस्वप्नावस्थायांजलमत्यर्थमवगाहतेस्रोतसाह्रियतेनिमज्जतिवा मुंडितशिरसःपु
रुषान्पश्यति काषायवाससोरक्तनीलादिवस्त्रप्रावरणांश्चक्रव्यादानाममांसाशिनः पक्षिणोगृध्रादीन्मृगांश्चव्याघ्रादीन् अधिरोहति तथांत्यजैश्चांडाला
दिभिः गर्दभैः खरैरुष्ट्रैः क्रमेलकैः सहपरिवृतस्तिष्ठति व्रजन्नुगच्छन्नात्मानंपरैः शत्रुभिः पृष्ठतोधावद्भिरनुगतमभिभूयमानंआत्मानंमन्यते २७१ २७२

एवंस्वप्नदर्शनात्सुक्तानप्रत्यक्षलिंगान्याह विमनाविक्षिप्तचित्तः विफलारंभः विफलाआरंभायस्यसतथोक्तः नकचित्फलमाप्नोति संसीदत्यनिमित्त
तः विनाकारणेनदीनमनस्कोभवति राजनंदनोराजकुलेजातः श्रुतशौर्यधैर्यादिगुणयुक्तोपिराज्यंनलभते कुमारीरूपलक्षणाभिजनादिसंपन्नापी
प्सितंभर्त्तारं अंगनागर्भिण्यपत्यं ऋतुमतीगर्भं अध्ययनंतदर्थज्ञानेसत्यप्याचार्यत्वं श्रोत्रियः विनयाचारयुक्तोपिशिष्योध्ययनं श्रवणंवानलभते

अजन्नपितथात्मानंमन्यतेनुगतंपरैः विमनाविफलारंभःसंसीदत्यनिमित्ततः २७३ तेनोपसृष्टोलभतेनरा
ज्यंराजनंदनः कुमारीचनभर्त्तारमपत्यंगर्भमंगना २७४ आचार्यत्वंश्रोत्रियश्चनशिष्योध्ययनंतथा वणि
ग्लाभंनचाप्नोति कृषिंचापिकृषीवलः २७५ स्नपनंतस्यकर्त्तव्यंपुण्येन्हिविधिपूर्वकम् गौरसर्षपकल्केन
साज्येनोत्सादितस्यच २७६ सर्वौषधैःसर्वगंधैर्विलिप्तशिरसस्तथा भद्रासनोपविष्टस्यस्वस्तिवाच्याद्विजाः
शुभाः २७७

इतिसर्वत्रसंबध्यते वणिक्वाणिज्योपजीवी तत्रकुशलोपिधान्यादिक्रयविक्रयादिषुलाभं कृषीवलःकर्षकः तत्राभियु-
क्तोपिकृषिफलंनाप्नोति एवंयोययावृत्त्याजीवतिसतत्रनिष्फलारंभश्चेत्तेनोपसृष्टोवेदितव्यः २७३ २७४ २७५ एवंकारकज्ञापकहेतूनभिधाय
विघ्नोपशांत्यर्थंकर्मविधातुमाह तस्यविनायकोपसृष्टस्यानागतविनायकोपसर्गपरिहारार्थिनोवास्नपनमभिषेचनंकर्त्तव्यं पुण्येस्वानुकूलनक्षत्रा

दिग्युक्तेन्हि दिवसे न रात्रौ विधिपूर्वकं शास्त्रोक्तेतिकर्त्तव्यतासहितं स्नपनविधिमाह गौरसर्षपकल्केन सिद्धार्थपिष्टेन साज्येन घृतलोलीकृतेनोत्सादि
तस्योद्वर्त्तितांगस्य तथा सर्वौषधैः प्रियंगुनागकेसरादिभिः सर्वगंधैश्चंदनागरुकस्तूरिकादिभिर्विलिप्तशिरसो वक्ष्यमाणभद्रासनोपविष्टस्य द्विजाब्रा
ह्मणाः शस्ताः श्रुताध्ययनवृत्तसंपन्नाः शोभनाकृतयश्चत्वारो स्यस्वस्ति भवंतो ब्रुवंत्विति वाच्याः अस्मिन्समये गृह्योक्तमार्गेण पुण्याहवाचनं कुर्यादि
त्यर्थः २७६ २७७ किंच अश्वस्थानगजस्थानवल्मीकसरित्संगमाशोष्यकृदेभ्य आहृतां पंचविधां मृदं गोरोचनां गंधान्चंदनकुंकुमागरुप्रभृ

अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् मृत्तिकां रोचनां गंधान्गुग्गुलुं चाप्सु निक्षिपेत् २७८
या आहृता ह्येकवर्णैश्चतुर्भिः कलशैर्ह्रदात् चर्मण्यानडुहे रक्ते स्थाप्यं भद्रासनं ततः २७९

तीन्गुग्गुलुं च तास्वप्सु विनिक्षिपेत् या आपः आहृता एकवर्णैः समानवर्णैश्चतुर्भिः कुंभैः शुभैरव्रणास्फुटिताकालकैर्ह्रदादशोष्यात्संगमा-
द्वा ततश्चानडुहे चर्मणि रक्ते लोहितवर्णे उत्तरलोमनि प्राचीनग्रीवे भद्रं मनोरमम् आसनं श्रीपर्णीनिर्मितं स्थाप्यं तत उक्तोदकमृत्तिकागंधादिसहि
तां श्चूतादिपल्लवोपशोभितान् नानास्रग्दामवेष्टितकंठान् चंदनचर्चितान् नवाहतवस्त्रविभूषितान् चतस्रृषु पूर्वादिदिक्षु स्थापयित्वा शस्तांश्चौवि

ओळ २ कुष्ठं मांसी हरिद्रे द्वे मुराशैलेयचंदनं वचाकचोरकं मुस्ता सर्वौषध्यः प्रकीर्तिताः

लिप्ते स्थंडिले रचित पंचवर्णस्वस्तिके लोहितमानडुहं चर्मोत्तरलोम प्राचीनग्रीवमास्तीर्य तस्योपरि श्वेतवस्त्रप्रच्छादितमासनं स्थापयेदित्येतद्भद्रा
सनमेतस्मिन्नुपविष्टस्य स्वस्तिवाच्याः द्विजाः २७८ २७९ किंच स्वस्तिवाचनानंतरं जीवत्पतिपुत्राभिः रूपगुणशालिनीभिः सुवेषाभिः कृतमंग
लं पूर्वदिग्देशावस्थितं कलशमादायानेन मंत्रेणाभिषिंचेद्गुरुः सहस्राक्षमनेकशक्तिकं शतधारं बहुप्रवाहमृषिभिर्मन्वादिभिर्यदुदकं पावनं पवि
त्रं कृतं उत्पादितं तेनोदकेन त्वां विनायकोपसृष्टं विनायकोपसर्गशांतये अभिषिंचामि पावमान्यश्चैता आपस्त्वां पुनंतु तदनंतरं दक्षिणदेशावस्थि

सहस्राक्षं शतधारमृषिभिः पावनं कृतम् तेन त्वामभिषिंचामि पावमान्यः पुनंतु ते २८० भगं ते वरुणो
राजा भगं सूर्यो बृहस्पतिः भगमिंद्रश्च वायुश्च भगं सप्तर्षयो ददुः २८१ यत्ते केशेषु दौर्भाग्यं सीमंते यच्च
मूर्धनि ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नंतु सर्वदा २८२

तं द्वितीयं कलशमादायानेन मंत्रेणाभिषिंचेत् २८० भगं कल्याणं ते तु-
भ्यं वरुणो वरुणो राजा भगं सूर्यो भगं बृहस्पतिः भगमिंद्रश्च वायुश्च भगं सप्तर्षयश्च ददुरिति ततस्तृतीयं कलशमादायानेन मंत्रेणाभिषिंचेत् २८१
ते तव केशेषु दौर्भाग्यं अकल्याणं सीमंते मूर्द्धनि च ललाटे कर्णयोरक्ष्णोश्च तत्सर्वमापो देव्यो घ्नंतु उपशमयंतु सर्वदा ततश्चतुर्थं कलशमादाय पूर्वोक्तैः स्त्रि
भिर्मंत्रैरभिषिंचेत् सर्वैर्मंत्रैश्चतुर्थमिति मंत्रलिंगात् २८२

उक्तेनप्रकारेणकृताभिषेकस्यमूर्धनिसव्यपाणिगृहीतकुशांतर्हितेसार्षपंतैलंउदुंबरवृक्षोद्भवेनस्रुवेणवक्ष्यमाणैर्मंत्रैर्जुहुयादाचार्यः२८३ मित
संमितादिभिर्विनायकस्यनामभिःस्वाहाकारांतैःप्रणवादिभिर्जुहुयादितिगतेनसंबंधः स्वाहाकारयोगाच्चतुर्थीविभक्तिः अतश्च ओंमितायस्वाहा
ओंसंमितायस्वाहा ओंशालायस्वाहा ओंकटंकटायस्वाहा ओंकूश्मांडायस्वाहा ओंराजपुत्रायस्वाहेतिषट्मंत्राभवंति अनंतरंलौकिकेग्नौस्था

स्नातस्यसार्षपंतैलंस्रुवेणौदुंबरेणतु जुहुयान्मूर्धनिकुशान्सव्येनपरिगृह्यतु २८३ मितश्चसंमितश्चैव
तथाशालकटंकटौ कूश्मांडोराजपुत्रश्चेत्यंतेस्वाहासमन्वितैः २८४ नामभिर्बलिमंत्रैश्चनमस्कारसमन्वितैः
दद्याच्चतुष्पथेशूर्पेकुशानास्तीर्यसर्वतः २८५ कृताकृतांस्तंदुलांश्चपललौदनमेवच मत्स्यान्पक्कांस्तथैवामा
न्मांसमेतावदेवतु २८६ पुष्पंचित्रंस्रुगंधंचसुरांचत्रिविधामपि मूलकंपूरिकापूपंतथैवोंडेरकस्रजः २८७ दध्य
न्नंपायसंचैवगुडपिष्टंसमोदकम् एतान्सर्वान्समाहृत्यभूमौकृत्वाततःशिरः २८८ विनायकस्यजननीमुपतिष्ठे
त्ततोंबिकाम् दूर्वासर्षपपुष्पाणांदत्वार्घ्यपूर्णमंजलिम् २८९

लीपाकविधिनाचरुंश्रपयित्वाएतैरेवषड्भिर्मंत्रैस्तस्मिन्नेवाग्नौहुत्वात
च्छेषंबलिमंत्रैरिंद्राग्नियमनिर्ऋतिवरुणवायुसोमेशानब्रह्मानंतानांनामभिश्चतुर्थ्यंतैर्नमोन्वितैस्तेभ्योबलिंदद्यात् अनंतरंकिंकुर्यादित्याह

कृता कृताद्युपहारद्रव्यजातं विनायकस्योपाहृत्य संनिधानात्तज्जनन्याश्च शिरसा भूमिं गत्वा तत्पुरुषाय विद्महे वक्रतुंडाय धीमहि तन्नो दंती प्रचोदया
दित्यनेन मंत्रेण विनायकं सुभगायै विद्महे काममालिन्यै धीमहि तन्नो गौरी प्रचोदयादित्यनेनांबिकां च नमस्कुर्यात् ततउपहारशेषमास्तीर्णकुशेशू-
र्पे निधाय चतुष्पथे निदध्यात् बलिं गृण्हंत्विमे देवा आदित्या वसवस्तथा मरुतश्चाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः असुरा यातुधानाश्च पिशाचोरगमा
तरः शाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः जृंभकाः सिद्धगंधर्वा माया विद्याधरा नराः दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः जगतां शां
तिकर्तारो ब्रह्माद्याश्च महर्षयः मा विघ्नं मा च मे पापं मा संतु परिपंथिनः सौम्या भवंतु तृप्ताश्च भूतप्रेताः सुखावहाः इत्येतैर्मंत्रैः कृताकृताः सकृदवहता
स्तंदुलाः पललं तिलपिष्टं तन्मिश्र ओदनः पललौदनः मत्स्याः पक्का अपक्काश्च मांसमेतावदेव च पक्कमपक्कं च पुष्पं चित्रं रक्तपीतादिनानावर्णं चं
दनादि सुगंधद्रव्यं सुरा त्रिविधा गौडी माध्वी पैष्टी च मूलकं मूलककंदाकारो भक्ष्यविशेषः पूरिका प्रसिद्धा अपूपः स्नेहपक्को गोधूमविकारः उंडेर
कस्रजः उंडेरकाः पिष्टादिमय्यः ताः प्रोताः स्रजः दध्यन्नं दधिमिश्रमन्नं पायसं गुडपिष्टं गुडमिश्रं शाल्यादिपिष्टं मोदका लड्डुकाः अनंतरं विनायकं
तज्जननीमंबामंबिकां वक्ष्यमाणमंत्रेणोपतिष्ठेत् किं कृत्वेत्याह सकुसुमोदकेनार्घ्यं दत्वा दूर्वासर्षपपुष्पाणां पूर्णमंजलिं दत्वोपतिष्ठेदिति गतेना
न्वयः २८४ २८५ २८६ २८७ २८८ २८९ उपस्थानमंत्रमाह विनायकोपस्थाने भगवन्निस्पृहः ततोभिषेकानंतरं यजमा
नः शुक्लांबरधरः शुक्लमाल्यानुलेपनो ब्राह्मणान् भोजयेत् यथाशक्ति गुरवे श्रुताध्ययनवृत्तसंपन्नाय विनायकस्नपनविधिज्ञाय वस्त्रयुग्मं दद्यात्
अपिशब्दाद्यथाशक्ति दक्षिणां विनायकोद्देशेन ब्राह्मणेभ्यश्च तत्रायं प्रयोगक्रमः चतुर्भिर्ब्राह्मणैः सार्धमुक्तलक्षणो गुरुर्मंत्रज्ञो भद्रासनरचनानं-

तरं तत्संनिधौ विनायकं तज्जननीं चोक्तमंत्राभ्यां गंधपुष्पादिभिः समभ्यर्च्य चरुं श्रपयित्वा भद्रासनोपविष्टस्य यजमानस्य पुण्याहवाचनं कृत्वा चतुर्भिः
कलशैरभिषिच्य सार्षपं तैलं शिरसि हुत्वा चरुहोमं विधायाभिषेकशालायां चतुर्दिक्षु इंद्रादिलोकपालेभ्यो बलिं दद्यात् यजमानस्तु स्नानानंतरं शु
क्लमाल्यांबरधरो गुरुणा सहितो विनायकांबिकाभ्यामुपहारं दत्वा शिरसा भूमिं गत्वा कुसुममोदकेनार्घ्यं दत्वा दूर्वासर्षपपुष्पांजलिं च दत्वा विनायकमंबि

रूपं देहि यशो देहि भगं भवति देहि मे पुत्रान्देहि धनं देहि सर्वकामांश्च देहि मे २९० ततः शुक्लांबरधरः
शुक्लमाल्यानुलेपनः ब्राह्मणान्भोजयेद्दद्याद्वस्त्रयुग्मं गुरोरपि २९१ एवं विनायकं पूज्य ग्रहांश्चैव विधा
नतः कर्मणां फलमाप्नोति श्रियं चाप्नोत्यनुत्तमाम् २९२

कां चोपतिष्ठेत् गुरुरुपहारशेषं शूर्पे कृत्वा शिरसा भूमिं गत्वा चत्वरे नि
दध्यात् अनंतरं वस्त्रयुग्मं दक्षिणां ब्राह्मणभोजनं च दद्यादिति इति विनायकस्नपनविधिः २९० २९१ अस्यैव विनायकस्नपनस्य उक्तोपसंहारेण-
संयोगांतरं दर्शयितुमाह एवमुक्तेन प्रकारेण विनायकं संपूज्य कर्मणां फलमविघ्नेनाप्नोतीत्युक्तोपसंहारः संयोगांतरमाह श्रियं चोत्कृष्टतमामाप्नोती
ति श्रीकामश्चानेनैव विधानेन विनायकं पूजयेदित्यर्थः आदित्यादिग्रहपीडाशांतिकामस्य लक्ष्म्यादिकामस्य च ग्रहपूजादिकल्पं विधास्यन्ग्रहपूजासु

पक्षिपति ग्रहांश्चैवविधानतइति ग्रहानादित्यादीन् वक्ष्यमाणेनविधिनासंपूज्य कर्मणां सिद्धिमाप्नोतिश्रियंचाप्नोति २९२ नित्यकाम्यसंयोगानाह आदित्यस्य भगवतः सदाप्रतिदिवसंरक्तचंदनकुंकुमकुसुमादिभिः पूजांकुर्वन् स्कंदस्य महागणपतेश्चनित्यं पूजांकुर्वन् सिद्धिंमोक्षमात्मज्ञानद्वारेण प्राप्नोतीतिनित्यसंयोगः आदित्यस्कंदमहागणपतीनामन्यतमस्यसर्वेषांवातिलकंस्वर्णादिनिर्मितंरूप्यनिर्मितंवाकुर्वन् सिद्धिमभिलषितामाप्नोति तथाचक्षषीचेतिकाम्यसंयोगः इतिमहागणपतिकल्पः २९२ ग्रहांश्चैवविधानतः कर्मणांफलमाप्नोतिश्रियंचाप्नोत्यनुत्तमामित्यनेनग्रहपूजायाः कर्मणा

आदित्यस्यसदापूजांतिलकंस्वामिनस्तथा महागणपतेश्चैवकुर्वन्सिद्धिमवाप्नुयात् २९३ श्रीकामः
शांतिकामोवाग्रहयज्ञंसमाचरेत् वृष्ट्यायुःपुष्टिकामोवातथैवाभिचरन्नपि २९४ सूर्यःसोमोमहीपुत्रः
सोमपुत्रोबृहस्पतिः शुक्रःशनैश्चरोराहुः केतुश्चेतिग्रहाःस्मृताः २९५

मविघ्नेनफलसिद्धिः श्रीश्चफलमित्युक्तमिदानींफलांतराण्याह श्रीकामइतिपूर्वोक्तस्यानुवादः शांतिकामआपदुपशांतिकामः सस्यादिवृद्ध्यर्थंप्रवर्षणंवृष्टिः आयुरपमृत्युजयेनदीर्घकालजीवनं पुष्टिरनवद्यशरीरत्वं एताःकामयतइतिवृष्ट्यायुःपुष्टिकामः एतेश्रीकामादयोग्रहयज्ञंग्रहपूजांसमाच रेयुः तथाभिचरन्नपि अदृष्टोपायेनपरपीडाअभिचारः तत्कामश्चग्रहयज्ञंसमाचरेत् २९४ ग्रहानाह एतेसूर्यादयोनवग्रहाः २९५ ॥ ॥

ग्रहाः पूज्या इत्युक्तं किं कृत्वेत्याह सूर्यादीनां मूर्त्तयस्ताम्रादिभिर्यथाक्रमं कार्याः तदलाभे स्ववर्णैर्वर्णकैः पटे लेख्याः मंडलकेषु वा गंधैः रक्तचंदनादिभिर्यथावर्णेन लेख्या इत्यन्वयः द्विभुजत्वादिविशेषस्तु मत्स्यपुराणोक्तो द्रष्टव्यः यथा पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः सप्ताश्वरथसंस्थश्च द्विभुजः स्यात्सदा रविः श्वेतः श्वेतांबरधरो दशाश्वः श्वेतभूषणः गदापाणिर्द्विबाहुश्च कर्त्तव्यो वरदः शशी रक्तमाल्यांबरधरः शक्तिशूलगदाधरः चतुर्भुजो मेषगमो वरदः स्याद्धरासुतः पीतमाल्यांबरधरः कर्णिकारसमद्युतिः खड्गचर्मगदापाणिः सिंहस्थो वरदो बुधः देवदैत्यगुरू तद्वत् पीतश्वेतौ चतुर्भुजौ दंडिनौ वरदौ कार्यौ साक्षसूत्रकमंडलू इंद्रनीलद्युतिः शूली वरदो गृध्रवाहनः बाणबाणासनधरः कर्त्तव्योऽर्कसुतः सदा करालवदनः खड्गचर्मशूली वरप्रदः नीलः सिंहासनस्थश्च राहुरत्र प्रशस्यते धूम्रा द्विबाहवः सर्वे गदिनो विकृताननाः गृध्रासनगता नित्यं केतवः स्युर्वरप्रदाः सर्वे किरीटिनः कार्या ग्रहा लोकहितावहाः स्वांगुलेनोच्छ्रिताः सर्वे शतमष्टोत्तरं सदेति एतेषां स्थापनदेशश्च तत्रैवोक्तः मध्ये तु भास्करं विद्याल्लोहितं दक्षिणेन तु उत्तरेण गुरुं विद्याद्बुधं पूर्वोत्तरेण तु पूर्वेण भार्गवं विद्यात्सोमं दक्षिणपूर्वके पश्चिमे

ताम्रकात्स्फाटिकाद्रक्तचंदनात्स्वर्णकादुभौ राजतादयसः सीसात्कांस्यात्कार्या ग्रहाः क्रमात् २९६ स्ववर्णैर्वा पटे लेख्या गंधैर्मंडलकेषु वा यथावर्णं प्रदेयानि वासांसि कुसुमानि च २९७ गंधाश्च बलयश्चैव धूपो देयश्च गुग्गुलुः कर्त्तव्या मंत्रवंतश्च चरवः प्रतिदेवतम् २९८

नशानिंविद्याद्राहुंपश्चिमदक्षिणे पश्चिमोत्तरतः केतुं स्थाप्यावैश्कक्लृतंडुलैरिति पूजाविधिमाह यथावर्णयस्यग्रहस्ययोवर्णः तद्वर्णानिवस्त्रगंध
पुष्पाणिदेयानि वलयश्च धूपश्चसर्वेभ्योगुग्गुलुर्देयः चरवश्चप्रतिदैवतं अग्निप्रतिष्ठापनान्वाधानादि पूर्वकंचतुरश्चतुरोमुष्टीन्निर्वपस्यमुष्मैत्वाजु
ष्टंनिर्वपामीत्यादि विधिना कार्याः अनंतरंस्कसमिद्भिर्ग्नाविध्माधाना द्याघारांतं कर्मकृत्वा आदित्याद्युद्देशेनयथाक्रमंवक्ष्यमाणमंत्रैर्वक्ष्यमाणाः समि
धोवक्ष्यमाणप्रकारेणहुत्वाचरवोहोतव्याः २९६ २९७ २९८ मंत्रानाह आकृष्णेनरजसावर्त्तमानइत्यादयोनवमंत्राः यथाक्रममादित्यादीनांवेदि

आकृष्णेनइमंदेवा अग्निर्मूर्धादिवः ककुत् उद्बुध्यस्वेतिचऋचोयथासंख्यंप्रकीर्त्तिताः २९९ बृहस्पतेअति
यदर्यस्तथैवान्नात्परिस्रुतः शंनोदेवीस्तथाकांडात्केतुंकृण्वन्निमांस्तथा ३०० अर्कःपलाशखदिरअपमा
र्गोथपिप्पलः औदुंबरःशमीदूर्वाकुशाश्चसमिधःक्रमात् ३०१ एकैकस्यत्वष्टशतमष्टाविंशतिरेववच होत
व्यामधुसर्पिर्भ्यांदध्नाक्षीरेणवायुताः ३०२

तव्याः २९९ ३०० इदानींसमिधआह अर्कपलाशादयोयथाक्रमंसूर्यादीनांसमि
धोभवंति ताश्चसार्द्रा अभग्नाःसत्वचःप्रादेशमात्राः कर्त्तव्याः ३०१ किंच आदित्यादीनामेकैकस्याष्टशतसंख्या अष्टाविंशतिसंख्यावायथा
संभवंमधुनासर्पिषादध्नाक्षीरेणवायुता अक्ताःअर्कादिसमिधोहोतव्याः ३०२ ७ ७ ७ ७

इदानीं भोजनान्याह गुडमिश्र ओदनो गुडौदनः पायसं हविष्यं मुन्यन्नादि क्षीरषाष्टिकं क्षीरमिश्रः षाष्टिकौदनः दध्नामिश्र ओदनो दध्योदनः हविर्घृतौदनः चूर्णं तिलचूर्णमिश्र ओदनः मांसं भक्ष्यमांसमिश्र ओदनः चित्रौदनः नानावर्णौदनः एतानि गुडौदनादीनि यथाक्रममादित्याद्युद्देशेन भोजनार्थं द्विजेभ्यो ब्राह्मणेभ्यो दद्यात् ब्राह्मणसंख्यायथाविभवं द्रष्टव्या गुडौदनाद्यभावे तु यथालाभमोदनादि पादप्रक्षालनादिविधिपूर्वकं सत्कृत्य संमानपुरःसरं दद्यात् ३०३ ३०४ दक्षिणामाह धेनुः दोग्ध्री शंखः प्रसिद्धः अनड्वान्भारसहो बलीवर्दः हेम सुवर्णं वासः पीतं हयः

गुडौदनं पायसं च हविष्यं क्षीरषाष्टिकम् दध्योदनं हविश्चूर्णं मांसं चित्रान्नमेव च ३०३ दद्याद्ग्रहक्रमादेव द्विजेभ्यो भोजनं द्विजः शक्तितो वा यथालाभं सत्कृत्य विधिपूर्वकम् ३०४ धेनुः शंखस्तथानड्वान्हेम वासो हयः क्रमात् कृष्णा गौरायसं छाग एता वै दक्षिणाः स्मृताः ३०५ यश्च यस्य यदा दुष्टः स तं यत्नेन पूजयेत् ब्रह्मणैषां वरो दत्तः पूजिताः पूजयिष्यथ ३०६

पांडुरः कृष्णा गौः आयसं शस्त्रादि छागः प्रसिद्धः एता धेन्वादयो यथाक्रममादित्याद्युद्देशेन ब्राह्मणानां दक्षिणाः स्मृताः उक्ता मन्वादिभिः एतच्च संभवे सति असंभवे तु यथालाभं शक्तितोऽन्यदेव यत्किंचिद्देयं ३०५ शांतिकामना विशेषेण सर्वे ग्रहाः पूजयितव्या इत्युक्तं तत्र विशेषमाह यस्य पुरुषस्य यो ग्रहो यदा दुष्टो ऽष्टमादिस्थानस्थितः स तं ग्रहं तदा यत्नेन विशेषेण पूजयेत् यस्मादेषां ग्रहाणां ब्रह्मणा पूर्वं वरो द

तः पूजिताः संतो भूयमिष्टप्रापणेनानिष्टनिरसनेनच पूजयितारं पूजयिष्यथेति  अविशेषेणाद्विजानधिकृत्य शांतिकपौष्टिकादीनि कर्माण्यनुक्रांता
नि तत्राभिषेकयुक्तस्य राज्ञो विशेषेणाधिकार इति ३०६ नरेंद्राणामभिषिक्त क्षत्रियाणां ग्रहाः पूज्यतमाः अथचान्येषामपिपूज्या इतिगम्यते उभ
यत्र कारणमाह  प्राणिनामभ्युदय विनिपाताः ग्रहाधीनाः यस्मात्तदधिकारिभिः पूज्याः किंच  जगतश्चस्थावरजंगमात्मकस्य भावाभावावुत्पत्तिनि
रोधौ ग्रहाधीनौ तत्र यद्येते पूजिताः तदा स्वकालएवोत्पत्तिनिरोधौ भवतो नान्यथा उत्पत्तिसमये नोत्पादो काले निरोधश्च जगदीश्वरत्वाच्च नरेंद्राणांत

ग्रहाधीनानरेंद्राणामुच्छ्रायाः पतनानिच  भावाभावौच जगतस्तस्मात्पूज्यतमाग्रहाः ३०७

द्योगक्षेमकारिणां पूज्यतमाग्रहा इति तेषां विशेषेण शांतिकादिष्वधिकारः तथाच गौतमेन  राजा सर्वस्येष्टे ब्राह्मणवर्जमिति  राजानमधिकृत्य व
र्णानाश्रमांश्च न्यायतो भिरक्षेच्च नतश्चैतान्स्वधर्मे स्थापयेदित्यादीन्कांश्चिद्धर्मानुक्त्वा यानिच दैवोत्पातचिंतकाः प्रब्रूयुस्तान्याद्रियेत तदधीनम
पिह्येके योगक्षेमं प्रतिजानत इति  शांतिकपौष्टिकाद्यनुष्ठानहेतुमभिधाय शांतिकपुण्याहस्वस्त्ययनायुष्यमंगलसंयुक्तान्याभ्युदयिकानिविद्वेषिणः
स्तंभनाभिचारद्विषद्वृद्धिसुक्तानिच शालाग्नौ कुर्यादिति शांतिकादीनि दर्शितानि  इति ग्रहशांतिप्रकरणं ३०७  ७  ७  ७

साधारणान्गृहस्थधर्मानुक्त्वेदानीं राज्याभिषेकादिगुणयुक्तस्य गृहस्थस्य विशेषधर्मानाह पुरुषार्थसाधनकर्मारंभाध्यवसाय उत्साहः महा
नुत्साहो यस्यासौ महोत्साहः बहुवेदार्थदर्शी स्थूललक्षः परकृतोपकारापकारौ न विस्मरतीति कृतज्ञः तपोज्ञानादिवृद्धानां सेवकः विनयेन यु
क्तो विनीतः विनयशब्देनाविरुद्धः पूर्वोक्तस्नातकधर्मकलाप उच्यते न संशयं प्रपद्येत नाकस्माद प्रियं वदेदित्यादिनोक्तः सत्वसंपन्नः संपदापदोर्ह
र्षविषादरहितः मातृतः पितृतश्चाभिजनवान्कुलीनः सत्यवाक्सत्यवचनशीलः शुचिर्बाह्यांतरशौचयुक्तः अवश्यकार्याणां कर्मणामारंभेप्रार

महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवकः विनीतः सत्वसंपन्नः कुलीनः सत्यवाक्शुचिः ३०८
अदीर्घसूत्रः स्मृतिमान क्षुद्रोपरुषस्तथा धार्मिकोव्यसनश्चैव प्राज्ञः शूरो रहस्यवित् ३०९ स्व
रंध्रगोप्तान्वीक्षिक्यां दंडनीत्यां तथैव च विनीतस्त्वथ वार्त्तायां त्रय्यां चैव नराधिपः ३१०

ब्धानां च समापने यो न विलंबते ऽसावदीर्घसूत्रः अधिगतार्थाविस्मरणशीलः स्मृतिमान् अक्षुद्रोसद्गुणाद्वेषी अपरुषः परदोषाकीर्त्तनः धार्मि
कः वर्णाश्रमधर्मान्वितः न विद्यंते व्यसनानि यस्यासौ अव्यसनः व्यसनानि चाष्टादश यथाह मनुः मृगयाक्षादिवास्वप्नः परिवादः स्त्रियो मदः तौर्य
ओळ १ स्त्रीसेवनं तच्च दिवा वेदितव्यं मदो मदिरादिना नृत्यगीतवादित्राणि त्रीणि

त्रिकंदृष्टयाघातः कामजो दशकोगणः पैशून्यंसाहसंद्रोहईर्ष्यासूयार्थदूषणं वाग्दंडजंचपारुष्यंक्रोधजोपिगणोष्टकइति तत्रचसप्तकष्टतमानि
यथाह पानमक्षाः स्त्रियश्चैवमृगयाचयथाक्रमं एतत्कष्टतमंविद्याच्चतुष्कंकामजेगणे दंडस्यपातनंचैववाक्पारुष्यार्थदूषणे क्रोधजेपिगणेविद्या
त्कष्टमेतत्त्रिकंसदेति प्राज्ञोगंभीरार्थावधारणक्षमः शूरोनिर्भयः रहस्यवित्गोपनीयार्थगोपनचतुरः स्वरंध्रगोप्तास्वस्यसप्तस्वराज्यांगेषुयत्परप्रवेश
द्वारशैथिल्यंतत्स्वरंध्रंतस्यगोप्तासच्छादयिता आन्वीक्षिक्यामात्मविद्यायांदंडनीत्यामर्थयोगक्षेमोपयोगिन्यांवार्त्तायांकृषिवाणिज्यपशुपाल

समंत्रिणःप्रकुर्वीतप्राज्ञान्मौलान्स्थिरान्शुचीन् तैःसार्द्धंचिंतयेद्राज्यंविप्रेणाथततःस्वयम् ३११

नरूपायांधनोपचयहेतुभूतायां त्रय्यांऋग्यजुःसामरूप्यांचविनीतः तत्तदभिज्ञैःप्रावीण्यंनीतः यथाहमनुः त्रैविद्येभ्यस्त्रयींविद्यांदंडनीतिंचत
द्विदः आन्वीक्षिकींचात्मविद्यांवार्त्तारंभांश्चलोकतइति नराधिपोराज्याभिषिक्तःस्यादितिसर्वत्रसंबंधः ३०८ ३०९ ३१० एवमभिषेकयुक्तस्यांत
रंगान्धर्मानभिधायेदानींबहिरंगानाह महोत्साहादिगुणैर्युक्तोराजामंत्रिणःकुर्वीत कथंभूतान् प्राज्ञान्हिताहितविवेककुशलान् मौलान्स्ववंश
परंपरायातान् स्थिरान्महत्यपिहर्षविषादस्थानेविकाररहितान् शुचीन्धर्मार्थकामभयोपधाशुद्धान् तेचसप्तष्टौवाकार्याः यथाहमनुः मौलान्शा

ओ॰ १ छद्मनावधईर्ष्या परगुणासहिष्णुता असूया वाक्पारुष्यमाक्रोशादि अनपराधेनताडनादिदंडपारुष्यं

स्त्रविदः शूरान्लब्धलक्षान्कुलोद्भवान् सचिवान्सप्तचाष्टौवाकुर्वीतसुपरीक्षितानिति एवंमंत्रिणः पूर्वंकृत्वातैःसार्धंराज्यंसंधिविग्रहादिलक्षणं कार्यंचिंतयेत् समस्तैर्व्यस्तैश्च अनंतरंतेषामभिप्रायंज्ञात्वासकलशास्त्रार्थविचारकुशलेनब्राह्मणेनपुरोहितेनसहकार्यंविचिंत्यततःस्वयंबुद्ध्याकार्यं चिंतयेत् ३११ कीदृशंपुरोहितंकुर्यादित्याह पुरोहितंचसर्वेषु दृष्टादृष्टार्थेषुकर्मसुपुरतोहितंदानमानसत्कारैरात्मसंबद्धंकुर्यात् कथंभूतं दैवज्ञंग्रहो त्पाततत्त्वज्ञमनादेर्वेदितारं उदितोदितं विद्याभिजनानुष्ठानादिभिरुदितैः शास्त्रोक्तैःउदितंसमृद्धं दंडनीत्यामर्थशास्त्रेकुशलं अथर्वांगिरसेचशांत्या-

पुरोहितंप्रकुर्वीतदैवज्ञमुदितोदितम् दंडनीत्यांचकुशलमथर्वांगिरसेतथा ३१२ श्रौतस्मार्त्तक्रियाहेतो र्वृणुयादेवचर्त्विजः यज्ञांश्चैवप्रकुर्वीतविधिवद्भूरिदक्षिणान् ३१३ भोगांश्चदद्याद्विप्रेभ्योवसूनिविविधानिच अक्षयोऽयंनिधीराज्ञांयद्विप्रेषूपपादितम् ३१४

दिकर्मणि ३१२ श्रौताग्निहोत्रादिस्मार्त्तौपासनादिक्रियानुष्ठानसिद्ध्यर्थंऋत्विजोवृणुयात् यज्ञांश्चराजसूयादीन्विधिवद्यथाविधानंभूरिदक्षिणान् बहुदक्षिणानेवकुर्यात् ३१३ किंच ब्राह्मणेभ्योभोगान्सुखानितत्साधनदानद्वारेणदद्यात् वसूनिचसुवर्णरूप्यभूम्प्रभृतीनिविविधानिनानाप्र काराणि यस्मादेषराज्ञां अक्षयोनिधिःशेवधिः यद्ब्राह्मणेभ्योदीयते साधारणधर्मत्वेनदानप्राप्तौसत्यांराज्ञांदानप्राधान्यप्रतिपादनार्थंपुनर्वचनं ३१४

किंच अग्नेःसकाशादग्निसाध्याद्भूरिदक्षिणाद्राजसूयादेरपिविप्रास्ये हुतंश्रेष्ठमिहोच्यते यतएतदस्कन्नंक्षरणरहितं अव्यथंपशुहिंसार
हितं प्रायश्चित्तैरदूषितंप्रायश्चित्तायासरहितं ३१५ वसूनिविप्रेभ्योदद्यादित्युक्तं कयापरिपाट्यादद्यादित्याह अलब्धलाभायधर्मशास्त्रानुसारे
णयत्नेन यत्नेनलब्धंतत्परिपालयेत् स्वयमवेक्षयारक्षेत् पालितंनीत्यावणिक्पथादिकयावर्द्धयेत् वृद्धंचपात्रेषुत्रिविधेषुधर्मार्थिकामपात्रेषु
निक्षिपेत्दद्यात् ३१६ पात्रेनिक्षिप्यकिंकुर्यादित्याह यथोक्तविधिनाभूमिंदत्वास्वस्यनिवृत्तिंकृत्वानिबंधंवाएकस्यभांडभरस्येयंतोरूपकाएकस्य

अस्कंनमव्यथंचैवप्रायश्चित्तैरदूषितम् अग्नेःसकाशाद्विप्राग्नौहुतंश्रेष्ठमिहोच्यते ३१५ अलब्ध
मीहेद्धर्मेणलब्धंयत्नेनपालयेत् पालितंवर्धयेन्नीत्यावृद्धंपात्रेषुनिक्षिपेत् ३१६ दत्वाभूमिंनिबंधं
वाकृत्वालेख्यंतुकारयेत् आगामिभद्रनृपतिपरिज्ञानायपार्थिवः ३१७ पटेवाताम्रपट्टेवास्वमुद्रो
परिचिन्हितम् अभिलेख्यात्मनोवंश्यानात्मानंचमहीपतिः ३१८

पर्णभरस्येयंतिपर्णानीतिवानिबंधंकृत्वालेख्यंकारयेत् किमर्थमागामिनः एष्यंतोयेभद्राःसाधवोनृपतयोभूपास्तेषामनेन दत्तमनेनप्रतिगृही
तमितिपरिज्ञानाय पार्थिवोभूपतिः अनेनभूपतेरेव भूमिदानेनिबंधदानेवाधिकारोनभोगपतेरितिदर्शितं ३१७ लेख्यंकारयेदित्युक्तंकथंकारयेदि

ओ॰ ३ स्वयमेवक्षयाद्रक्षेत्

स्याह् कार्पासिकेपटेताम्रपट्टेफलकेवा आत्मनोवंश्यान् प्रपितामहपितामहपितॄन् बहुवचनस्यार्थवत्त्वायवंशवीर्यश्रुतादिगुणोपवर्णनपूर्वक
मभिलेख्यात्मानंचशब्दात्प्रतिग्रहीतारं प्रतिग्रहपरिमाणंदानच्छेदोपवर्णनंचाभिलेख्य प्रतिगृह्यतइति प्रतिग्रहोनिबंधस्तस्यरूपकादिपरिमा
णं दीयतेइतिदानंक्षेत्रादितस्यछेदः छिद्यते अनेनेतिछेदः नद्याद्याघाटादौनिवर्त्तनंतत्परिमाणंचतस्योपवर्णनं असुकनद्यादक्षिणतोयंग्रामःक्षे
त्रंवापूर्वतोसुकग्रामस्यैतावन्निवर्त्तनमित्यादिनिवर्त्तनपरिमाणंच लेख्यमेव आघाटस्यनदीनगरवर्त्मादेः संचारित्वेनभूमेर्न्यूनाधिकभावसंभवात्त

प्रतिग्रहपरीमाणंदानच्छेदोपवर्णनम् स्वहस्तकालसंपन्नंशासनंकारयेत्स्थिरः ३१९

न्निद्दस्यर्थंस्वहस्तेनस्वहस्तलिखितेनमतंमे असुकनाम्नः असुकपुत्रस्ययदत्रोपरिलेखितमित्यनेनसंपन्नंयुक्तंकालेनचद्विविधेन शकनृपातीत
रूपेणसंवत्सररूपेणचकालेनचंद्रसूर्योपरागादिनासंपन्नंस्वमुद्रयागरुडवाराहादिरूपयोपरिबहिश्चिन्हितंअंकितं स्थिरंदृढंशासनंशिष्यंतेभवि
ष्यंतोनृपतयः अनेन दानाच्छ्रेयोनुपालनमितिशासनंकारयेत् महीपतिर्नभोगपतिः संधिविग्रहादिकारिणानयेनकेनचित् संधिविग्रहकारीतुभ
वेद्यस्तस्यलेखकः स्वयंराज्ञासमादिष्टःसलिखेद्राजशासनमितिस्मरणात् दानमात्रेणैवदानफलेसिद्धेशासनकारणंभोगाभिवृद्ध्याफलातिशयार्थम्

३१८ ३१९

इदानींराज्ञोनिवासस्थानमाह रम्यंरमणीयंअशोकचंपकादिभिः पशव्यंपशुभ्योहितंपशुवृद्धिकरं आजीव्यमुपजीव्यंकंदमूलपुष्पफलादिभिः जांगलंयद्यप्यल्पोदकतरुपर्वतोदेशोजांगलः तथाप्यन्नसजलतरुपर्वतोदेशोजांगलशब्देनाभिधीयते तंदेशमावसेदधिवसेत् तत्रैवंविधेदेशेज-नानांकोशस्यसुवर्णादेरात्मनश्चरक्षणार्थंदुर्गंकुर्वीत दुर्गंचषड्विधं यथाहमनुः धन्वदुर्गंमहीदुर्गमब्दुर्गंवार्क्षमेवच नृदुर्गंगिरिदुर्गंचसमाश्रित्या वसेत्पुरमिति ३२० किंच तत्रतत्रधर्मार्थकामादिषु अध्यक्षान्योग्यानधिकारिणः प्रकुर्यान्नियुंजीत यथाहुः धर्मकृत्येषु धर्मज्ञानर्थकृत्येषुपंडिता

रम्यंपशव्यमाजीव्यंजांगलंदेशमावसेत् तत्रदुर्गाणिकुर्वीतजनकोशात्मगुप्तये ३२० तत्रतत्रचनिष्णा
तानध्यक्षान्कुशलान्शुचीन् प्रकुर्यादायकर्मांतव्ययकर्मसुचोद्यतान् ३२१

न् स्त्रीषुक्लीबान्नियुंजीतनीचान्निंद्येषुकर्मस्विति कीदृशान्निष्णातान् अनन्यव्यापारान्कुशलान्तत्तद्व्यापारचतुरान् शुचीन्चतुर्विधोप धाशुद्धान् आयकर्मसुसुवर्णाद्युत्पत्तिस्थानेषुव्ययकर्मसुसुवर्णादिदानस्थानेषुउद्यतान् अनलसान् चशब्दात्प्राज्ञत्वादिगुणयुक्तान् उक्तंच मा औ० ३ निरुदकेनपंचयोजनेनदेशेनसमंततोव्याप्तंधन्वदुर्गं पाषाणेष्टकाद्युतद्वादशहस्तोच्छ्रितेनबहुविस्तृतेनयुद्धार्थमुपरिभ्रमणयोग्येनसाधारणगवाक्षादियुक्तेन प्रकारेणसमंताद्वेष्टितसद्वारंमहीदुर्गं अगाधोदकेनसमंततोवेष्टितंअब्दुर्गं वृक्षजन्यंवार्क्षं चतुरंगबलजंनृदुर्गं गिरिणावेष्टितंगिरिदुर्गं

ज्ञत्वमुपधाशुद्धिरप्रमादो भियुक्तता कार्येषु व्यसनाभावः स्वामिभक्तिश्च योग्यतेति ३२१ भोगांश्च दद्याद्विप्रेभ्योवसूनिविविधानिचेतिसामान्येनस्व
स्यदानमुक्तं इदानींनृपाणांविक्रमार्जितस्यदाने फलातिशयमाह अस्मादुत्कृष्टतमोधर्मोनृपाणांनविद्यतेयद्रणार्जितंद्रव्यंविप्रेभ्योदीयते यच्चप्रजा-
भ्योऽभयदानं ३२२ रणार्जितंदेयमित्युक्तं द्रव्यार्जनायरणेप्रवृत्तस्यविपत्तिरपिसंभवतीतिनधर्मोनाप्यर्थइतिततोनिवृत्तिरेवश्रेयसीत्यतआह येभू-
म्याद्यर्थमाहवेषुप्रवृत्ताअपराङ्मुखाअभिमुखावध्यंतेमार्यंतेतेस्वर्गंयांति योगाभ्यासेरतायथा यद्यकूटैरविषदिग्धादिभिरायुधैर्योद्धारोभवंति ३२३

नातःपरतरोधर्मोनृपाणांयद्रणार्जितम् विप्रेभ्योदीयतेद्रव्यंप्रजाभ्यश्चाभयंसदा ३२२ यआहवेषु
वध्यंतेभूम्यर्थमपराङ्मुखाः अकूटैरायुधैर्यांतितेस्वर्गंयोगिनोयथा ३२३ पदानिक्रतुतुल्यानिभग्ने
ष्वविनिवर्त्तिनाम् राजासुकृतमादत्तेहतानांविपलायिनाम् ३२४ तवाहंवादिनंक्लीबंनिर्हेतिंपरसंगतम्
नहन्याद्विनिवृत्तंचयुद्धप्रेक्षणकादिकम् ३२५

किंच स्वबलेषुकरितुरगरथपदातिषुभग्नेष्वनिवर्त्तिनांपरबलाभिमुखयायिनां
पदानिक्रतुतुल्यानिअश्वमेधतुल्यानि विपर्यये दोषमाह विपलायिनांपराङ्मुखानांहतानांराजासुकृतमादत्ते ३२४ अपिच तवाहमितियोवदतितं
क्लीबंनपुंसकं निर्हेतिंनिरायुधं परसंगतमन्येनसहयुध्यमानं विनिवृत्तंयुद्धाद्विनिवृत्तं युद्धप्रेक्षणकोयुद्धदर्शी तमपिनहन्यादितिसर्वत्रसंबंधः आ

दिग्रहणादश्वसारथ्यादीनांग्रहणं यथाहगौतमः नदोषोहिंसायामावहेन्यत्राश्वसारथ्यनायुधकृतांजलिप्रकीर्णकेशपराङ्मुखोपविष्टस्थलवृ-
क्षारूढदूतगोब्राह्मणवादिभ्यइति शंखोप्याह नपानीयंपिबंतंन भुंजानंनोपानहौमुंचंतंनावर्माणंसवर्माणंनस्त्रियंनकरेणुंनवाजिनंनसारथिंन
दूतंनब्राह्मणंनराजानमराजाहन्यादिति ३२५ कृतरक्षः पुरस्यात्मनश्चरक्षांविधायप्रतिदिनंप्रातःकालउत्थायस्वयमेवायव्ययौपश्येत् ततोव्यव
हारान् दृष्ट्वामध्यान्हकालेस्नात्वाकामतोयथाकालंभुंजीत ३२६ तदनंतरंहिरण्यादिकंव्यापृतैर्हिरण्याद्यानयननियुक्तैरानीतंस्वयमेवनिरीक्ष्यभां

कृतरक्षःसमुत्थायपश्येदायव्ययौस्वयम् व्यवहारांस्ततोदृष्ट्वास्नात्वाभुंजीतकामतः ३२६ हिरण्यंव्यापृतानीतंभांडागारे
षुनिक्षिपेत् पश्येच्चारांस्ततोदूतान्प्रेषयेन्मंत्रिसंगतः ३२७

डागारेषुनिक्षिपेत् ततश्चारान्विश्वस्तान्प्रत्यागतान्पश्येत् येपरराज्येवृत्तांतपरिज्ञा
नायपरिव्राजिकतापसादिरूपेणगूढचारिणःप्रेषितास्तांश्चारान्दृष्ट्वाक्वचिन्निवेशयेत् तदनंतरंदूतांश्चपश्येत् दूताश्चयेप्रकटमेवराजांतरंप्रतिगतागत-
मात्वरंति तेचत्रिविधाः निसृष्टार्थाःसंदिष्टार्थाः शासनहराश्चेति तत्रनिसृष्टार्थाःराजकार्याणिदेशकालोचितानिस्वयमेवकथयितुंक्षमाःउक्तमात्रंयेपरस्मै
निवेदयंतितेसंदिष्टार्थाः शासनहरास्तुराजलेखहारिणः तान्पूर्वप्रेषितानागतान्मंत्रिसंगतःपश्येत् दृष्ट्वातद्वार्त्तामाकलय्यपुनःप्रेषयेत् ३२७ ७

तदनंतरमपराण्हेस्वैरंयथेष्टमेकोंतःपुरविहारीस्यात् मंत्रिभिर्वाविश्वासिभिः कलाकुशलैः परिहासवेदिभिः परिवृतःस्त्रीभिश्चरूपयौवनवैदग्ध्य-
शालिनीभिः भुक्तवान् विहरेच्चैवस्त्रीभिरंतःपुरेसह विहृत्यचयथाकामंपुनःकार्याणिचिंतयेदिनिमनुस्मरणात् ततोविशिष्टैर्वस्त्रकुंकुमविलेपना-
लंकारैरलंकृतः हस्त्यश्वरथपदातिबलंदृष्ट्वासेनान्यासेनापतिनासहतद्रक्षणादिदेशकालोचितंचिंतयेत् ३२८ ततःसायंकालेसंध्यामुपास्यसामा
न्येनप्रागस्यापिपुनर्वचनंकार्याकुलत्वादविस्मरणार्थं अनंतरंयेपूर्वदृष्टाः क्वचित्स्थानेनिवेशितास्तेषांचाराणांगूढभाषितमंतर्वेश्मनिशस्त्रपाणिः

ततःस्वैरविहारीस्यान्मंत्रिभिर्वासमागतः बलानांदर्शनंकृत्वासेनान्यासहचिंतयेत् ३२८ संध्यामुपास्यशृणुयाच्चारा
णांगूढभाषितम् गीतनृत्यैश्चभुंजीतपठेत्स्वाध्यायमेवच ३२९ संविशेत्तूर्यघोषेणप्रतिबुध्येत्तथैवच शास्त्राणिचिंत
येद्बुध्वासर्वकर्त्तव्यतास्तथा ३३०

शृणुयात् उक्तंच संध्यांचोपास्यशृणुयादंतर्वेश्मनिशस्त्रभृत् रहस्याख्यापिनांचैवप्रणिधीनांचचेष्टितमितितती
नृत्यगीतादिभिः कंचित्कालंक्रीडित्वाकक्षांतरंप्रविश्यभुंजीत गत्वाकक्षांतरंत्वन्यत्समनुज्ञाप्यतंजनं प्रविशेद्भोजनार्थंचस्त्रीभिरंतःपुरंसहेतिस्मरणात् ततो
ऽविस्मरणार्थंयथाशक्तिस्वाध्यायंपठेत् ३२९ तदनंतरंतूर्यशंखघोषेणसंविशेत्स्वप्यात् तथैवतूर्यादिघोषेणप्रतिबुध्येत् प्रतिबुध्यचशास्त्रविद्भिर्विश्वासिभिः

सह एकाकीवापश्चिमेयामेशास्त्राणिचिंतयेत् सर्वकर्त्तव्यताश्चसर्वकार्याणिच एतच्चस्वस्थंप्रत्युच्यते अस्वस्थःपुनः सर्वकार्येषु अन्यंनियोजयेत् यथा
हमनुः एतद्वृत्तंसमातिष्ठेदरोगःपृथिवीपतिः अस्वस्थःसर्वमेवैतन्मंत्रिमुख्येनिवेशयेदिति ३३० अनंतरंतत्रस्थएवविश्वस्तान्स्वान्चारान्दानमानस-
त्कारैःपूजितान्स्वेषुसामंताद्यधिकारिषु अन्येषुमहीपतिषुप्रेषयेत् तच्चिकीर्षितपरिज्ञानाय ततःप्रातःसंध्यामुपास्याग्निहोत्रंहुत्वापुरोहितर्त्विगाचा
र्यादिभिराशीर्भिरभिनंदितोज्योतिर्विदोद्दृष्ट्वातेभ्यश्चग्रहादिस्थितिंविदित्वाशांतिकादीनिचपुरोहितायादिश्यवैद्यांश्चदृष्ट्वातेभ्यश्चस्वशरीरस्थितिं-

प्रेषयेच्चततश्चारान्स्वेष्वन्येषुचसादरान् ऋत्विक्पुरोहिताचार्यैराशीर्भिरभिनंदितः ३३१ दृष्ट्वाज्योतिर्विदोवैद्यान्दद्याद्गां
कांचनंमहीम् नैवेशिकानिचततःश्रोत्रियेभ्योगृहाणिच ३३२ ब्राह्मणेषुक्षमीस्निग्धेष्वजिह्मःक्रोधनोरिषु स्याद्राजाभृत्य
वर्गेषुप्रजासुचयथापिता ३३३

निवेद्यप्रतिविधानंचादिश्य गांदोग्ध्रींकांचनंमहींच नैवेशिकानिविवाहोपयोगीनिकन्यालंकारादीनिगृहाणि
चसुधाधवलितादीनिश्रोत्रियेभ्योधीतवेदेभ्योब्राह्मणेभ्योदद्यादितिप्रत्येकंसंबध्यते ३३१ ३३२ किंच ब्राह्मणेष्वधिक्षिप्तत्स्वपि क्षमी क्षमावान् स्नि
ग्धेषुस्नेहवत्सुमित्रादिष्वजिह्मः अवक्रः अरिषुक्रोधनः भृत्यवर्गेषुप्रजासुचहिताचरणेनाहितनिवर्तनेनचपितेवदयावान्स्यादितिप्रत्येकंसंबध्यते ३३३

प्रजापरिपालनफलमाह यस्मान्न्यायेनशास्त्रोक्तमार्गेणप्रजाःपरिपालयन् परिपालितप्रजोपचितात्पुण्यात् षड्भागंषष्ठंभागमादत्ते यस्माच्चसर्वेभ्यो
भूम्यादिदानेभ्यः प्रजानांपरिपालनमधिकफलं तस्मात्प्रजासुयथाविन्नानर्थैवस्यादितिगतेनसंबंधः ३३४ चाटाः प्रतारकाः विश्वास्ययेपरधनमपहरंति
प्रच्छन्नापहारिणस्तस्कराः दुर्वृत्ताः इंद्रजालिककितवादयः सहोबलंसहसाबलेनकृतंसाहसंमहच्चतत्साहसंचमहासाहसंतेनवर्त्ततेइतिमहासा
हसिकाः प्रसह्यापहारिणः आदिशब्दान्मौलिककुहकप्रभृतयः एतैःपीड्यमानाः बाध्यमानाःप्रजारक्षेत् कायस्थागणकालेखकाश्चतैः पीड्यमानाः

पुण्यात्षड्भागमादत्तेन्यायेनपरिपालयन् सर्वदानाधिकंयस्मात्प्रजानांपरिपालनम् ३३४ चाटतस्करदुर्वृत्त
महासाहसिकादिभिः पीड्यमानाःप्रजारक्षेत् कायस्थैश्चविशेषतः ३३५ अरक्ष्यमाणाःकुर्वंतियत्किंचित्किल्बि
षंप्रजाः तस्मात्तुनृपतेरर्धंयस्माद्गृण्हात्यसौकरान् ३३६

विशेषतोरक्षेत् तेषांराजवल्लभतयातिमायावित्वाच्चदुर्निवारत्वात् ३३५ अरक्ष्यमाणाः प्रजाः यत्किंचित्किल्बिषंचौर्यपरदारगमनादिकु
र्वंतितस्मात्पापादर्धंनृपतेर्भवति यस्मादसौराजारक्षणार्थंप्रजाभ्यः करान्गृण्हाति ३३६ ७ ७ ७ ७

राष्ट्रे राज्ञा अधिकारेषु ये नियुक्तास्तेषां विचेष्टितं चरितं चारैरुक्तलक्षणैः सम्यक् ज्ञात्वा साधून् सच्चरितान् संमानयेत् दानमानसत्कारैः पूजयेत्
विपरीतान्दुष्टचरित्रान् सम्यग्विदित्वा घातयेत् अपराधानुसारेण ये पुनरुत्कोचजीविनस्तान्द्रव्यरहितान् कृत्वा स्वराष्ट्रात्प्रवासयेत् श्रोत्रियान्स
दानमानसत्कारैः सहितान्कृत्वा स्वराष्ट्रे स्वदेशे सदैव वासयेत् ३३७ ३३८ यो सौ राजा स्वराष्ट्रादन्यायेन द्रव्यमादाय स्वकोशं विवर्धयेत् सोऽचि
राच्छीघ्रमेव विगतश्रीको विनष्टलक्ष्मीकः बंधुभिः सह नाशं प्राप्नोति ३३९ प्रजानां तस्करादिकृतपीडनेन यः संतापस्तस्मादुद्भूतो हुताशन इव सं

ये राष्ट्राधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितम् साधून्संमानयेद्राजा विपरीतांश्च घातयेत् ३३७ उत्कोचजीविनो
द्रव्यहीनान्कृत्वा विवासयेत् सदानमानसत्कारान्श्रोत्रियान्वासयेत्सदा ३३८ अन्यायेन नृपो राष्ट्रात्स्वकोशं
योऽभिवर्धयेत् सोऽचिराद्विगतश्रीको नाशमेति सबांधवः ३३९ प्रजापीडनसंतापात्समुद्भूतो हुताशनः राज्ञः कु
लं श्रियं प्राणांश्चादग्ध्वा न निवर्त्तते ३४० य एव नृपतेर्धर्मः स्वराष्ट्रपरिपालने तमेव कृत्स्नमाप्नोति परराष्ट्रं वशं
नयन् ३४१

तापकारित्वात् दुष्पुण्यराशिर्हुताशनशब्देनोच्यते स राज्ञः कुलं श्रियं प्राणांश्चादग्ध्वा नाशमनीत्वा न निवर्तते नोपशाम्यति ३४०
न्यायतः स्वराष्ट्रपरिपालने राज्ञो यो धर्मस्तं सकलं वक्ष्यमाणन्यायेन परराष्ट्रं वशं नयन् आत्मसात्कुर्वन्प्राप्नोति धर्मषड्भागं च ३४१ ७ ७

किंच यदापरदेशोवशमुपागतः तदानस्वदेशाचारादिसंकरःकार्यः यस्मिन्देशे आचारः कुलस्थितिर्व्यवहारो वा यथैवप्रागासीत्तथैवासौपरिपा
लनीयः यदिशास्त्रविरुद्धोनभवति यदावशमुपागतइत्यनेनवशोपगमनात्प्रागनियमइतिदर्शितं यथोक्तं उपरुध्यारिमासीतराष्ट्रंचास्योपपीड
येत् दूषयेच्चास्यसततंयवसान्नोदकेंधनमिति ३४२ यस्मात्तैःसार्धंचिंतयेद्राज्यमित्याद्युक्तंमंत्रमूलंराज्यंतस्मान्मंत्रंयत्नेनतथासुरक्षितंकुर्यात्
यथास्यराज्ञःकर्मणांसंधिविग्रहादीनामाफलोदयात्फलनिष्पत्तेःप्राग्यावदन्येमंत्रंनजानंति ३४३ किंच अरिःशत्रुः मित्रंसुहृत् उभयविलक्ष

यस्मिन्देशेयआचारोव्यवहारःकुलस्थितिः तथैवपरिपाल्योसौयदावशमुपागतः ३४२ मंत्रमूलंयतोराज्यं
तस्मान्मंत्रंसुरक्षितम् कुर्याद्यथास्यनविदुःकर्मणामाफलोदयात् ३४३ अरिर्मित्रमुदासीनोनंतरस्तत्परःप
रः क्रमशोमंडलंचिंत्यंसामादिभिरुपक्रमैः ३४४

णउदासीनश्च तेचत्रयस्त्रिविधाः सहजाः कृत्रिमाःप्राकृताश्चेति तत्रसह
जोरिःसापत्नपितृव्यतत्सुतादिः कृत्रिमोरिः यस्यापकृतंयेनचापकृतं प्राकृतस्त्वनंतरदेशाधिपतिःसहजंमित्रंभागिनेयपैतृष्वस्रीयमातृष्व-
स्रीयादि कृत्रिमंमित्रंयेनोपकृतंयस्यचोपकृतं प्राकृतंमित्रमेकांतरितदेशाधिपतिः सहजकृत्रिममित्रशत्रुलक्षणरहितोसहजकृत्रिमोदासीनो
प्राकृतोदासीनोद्व्यंतरितदेशाधिपतिः अरिश्चतुर्विधः यातव्योच्छेत्तव्यपीडनीयकर्शनीयभेदेन तत्रयातव्योनंतरभूपतिः व्यसनीहीनबलोवि

रक्तप्रकृतिर्विदुर्गोमित्रहीनोदुर्बलश्चोच्छेत्तव्यः पीडनीयोमंत्रबलहीनः प्रबलमित्रबलयुक्तः कर्शनीयः निर्मूलनाशमुच्छेदं पीडनंबलनि
ग्रहं कर्शनंतुपुनःप्राहुः कोशदंडापकर्षणादिति मित्रंद्विविधं दृंहणीयंकर्शनीयमितिकोशबलहीनंदृंहणीयं कोशबलाधिकंकर्शनीयं अनं
तरस्तत्परःपरइतिप्राकृतारिमित्रोदासीनानाह अनंतरःप्राकृतोरिः तत्परःप्राकृतंमित्रं तस्मात्परःप्राकृतउदासीनः शेषाःपुनः प्रसिद्धत्वान्नो
क्ताः एतद्राजमंडलंक्रमशः पूर्वादिक्रमेणचिंत्यं तेषांचेष्टितंज्ञातव्यं ज्ञात्वाचसामादिभिरुपायैर्वक्ष्यमाणैस्तुसंधेयं एवंपुरतः पृष्ठतः पार्श्वतश्च
त्रयस्त्रय आत्माचैकइतित्रयोदशराजकमिदंराजमंडलंपद्माकारं पार्ष्णिग्रहाक्रंदासारादयस्त्वरिमित्रोदासीनेष्वेवांतर्भवंति संज्ञाभेदमात्रं

उपायाःसामदानंचभेदोदंडस्तथैवच सम्यक्प्रयुक्ताःसिध्येयुर्दंडस्त्वगतिकागतिः ३४५

ग्रंथांतरेदर्शितमिनियोगाश्च
रेणनपृथक्युक्ताः ३४४ सामादिभिरुपक्रमैरित्युक्तंइदानींतानुपायानाह सामप्रियभाषणं दानंस्वर्णादेः भेदोभेदकरणं तत्सामंतादीनांप
रस्परतोवैरस्योत्पादनं दंडउपांशुप्रकाशाभ्यांधनापहारादिर्वधपर्यंतोपकारः एतेसामादयःपरिपंथ्यादिसाधनोपायाः एतेचदेशकालाद्यनुसा
रेणसम्यक्प्रयुक्ताःसिध्येयुः तेषांचमध्येदंडस्त्वगतिकागतिःउपायांतरसंभवेसतिनप्रयोक्तव्यः एतच्चपीडनीयकर्शनीयाभिप्रायेण घातव्योच्छे
त्तव्ययोर्दंड एवमुख्यः एतेसामादयोनकेवलंराजव्यवहारविषयाः अपितुसकललोकव्यवहारविषयाः यथा अधीष्वपुत्रकाधीष्वदास्यामितवमोदका
न् यद्वान्यस्मैप्रदास्यामिकर्णमुत्पाटयामितेइति ३४५

याज्ञ॰स्मृ॰मि॰ ७६

किंच संधिर्व्यवस्थाकरणं विग्रहोपकारः यानंपरंप्रतियात्रा आसनमुपेक्षा संश्रयोबलवदाश्रयणं द्वैधीभावः स्वबलस्यद्विधाकरणं एतान्संधि प्रभृतीन्गुणान्यथावत्देशकालशक्तिमित्रादिवशेनकल्पयेत् ३४६ यानकालमाह यदापरराष्ट्रंसस्यैर्व्रीह्यादिभिर्गुणैश्चसमजलेंधनतृणा दिभिरुपेतंसंपन्नं शत्रुश्चहीनोबलादिभिः आत्माचहृष्टवाहनपूरुषः वाहनानिहस्त्यश्वादीनितानिचपूरुषाश्चवाहनपूरुषाः हृष्टाःवाहनपूरु षायस्यसतथोक्तः तदापरराष्ट्रमात्मसात्कर्तुंव्रजेत् ३४७ प्राणिनामभ्युदयविनिपातानांदैवायत्तत्वाद्यदिदैवमस्तितदास्वयमेवपरराष्ट्रादिवश्री

संधिंचविग्रहंचैवयानमासनसंश्रयौ द्वैधीभावंगुणानेतान्यथावत्परिकल्पयेत् ३४६ यदासस्यगुणोपेतंप रराष्ट्रंतदाव्रजेत् परश्चहीनआत्माचहृष्टवाहनपूरुषः ३४७ दैवेपुरुषकारेचकर्मसिद्धिर्व्यवस्थिता तत्रदैवम भिव्यक्तंपौरुषंपौर्वदेहिकम् ३४८

भविष्यति अथनास्तिकृतेपिपौरुषेनभविष्यति अतोव्यर्थएवायंयात्राप्रयासइत्यतआ ह कर्मसिद्धिःफलप्राप्तिः इष्टानिष्टलक्षणासानकेवलंदैवेव्यवस्थिता अपितुपुरुषकारेपि लोकेतथादर्शनात् चिकित्सकादिशास्त्रवैयर्थ्याच्च अपिच पुरुषकाराभावेदैवमेवनास्तीत्याह तत्रदैवमिति यतःपूर्वदेहार्जितंपौरुषमेवदैवमुच्यते अल्पपुरुषकारानंतरंमहाफलोदयाभिव्यक्तं पौरुषंपौर्वदेहिकंकर्मतस्मात्पुरुषकाराभावेनदैवमस्तीतिपुरुषकारेयत्नोविधातव्यः ३४८ ७ ७ ७

आ॰ १ ७६

इदानींमतांतराण्याह केचिदिष्टानिष्टलक्षणंफलंदैवादेवेच्छंति केचित्स्वभावात्स्वयमेवभवति नकारणमपेक्षतइति केचित्कालात्केचित्पुरुष कारतएवेति स्वमतमाह दैवादीनांसंयोगेसमुच्चये फलंभवतीतिकुशलबुद्धयोमन्वादयोमन्यंते ३४९ एकैकस्मात्फलंनभवतीत्यत्रदृष्टांतमाह नात्रतिरोहितमस्ति ३५० लाभायपरराष्ट्रंगंतव्यमित्युक्तं लाभश्चत्रिविधः हिरण्यलाभोभूलाभोमित्रलाभश्चेति तेषुमित्रलाभोज्यायान् त तस्तत्सास्युपायेयत्नोविधातव्यः तत्सास्युपायश्चसत्यवचनमित्याह यस्मात्हिरण्यभूमित्रलाभेभ्योमित्रलब्धिर्वराउत्कृष्टातस्मात्तत्सास्यैयतेतयत्नं

केचिद्दैवात्स्वभावाद्वाकालात्पुरुषकारतः संयोगेकेचिदिच्छंतिफलंकुशलबुद्धयः ३४९ यथाह्येकेनचक्रेणरथस्यनगतिर्भवेत् एवंपुरुषकारेणविनादैवंनसिध्यति ३५० हिरण्यभूमिलाभेभ्योमित्रलब्धिर्वरायतः अतोयतेततत्सास्यैरक्षेत्सत्यंसमाहितः ३५१ स्वाम्यमात्याजनोदुर्गंकोशोदंडस्तथैवच मित्राण्येताःप्रकृतयोराज्यंसप्तांगमुच्यते ३५२

कुर्यात् सामादिभिःसत्यंचरक्षेत् समाहितःसावधानःसत्यंमूलत्वान्मित्रलाभस्य ३५१ इदानींराज्यांगान्याह महोत्साहइत्याद्युक्तलक्षणोमहीपतिःस्वामी अमात्यामंत्रिपुरोहितादयःजनोब्राह्मणादिप्रजाः दुर्गंधन्वदुर्गादि कोशःसुवर्णादिधनराशिः दंडोहस्त्यश्वरथपत्तिलक्षणंचतुरंगंबलं मित्राणिसहजकृत्रिमप्राकृतानि एताःस्वाम्याद्याःराज्यस्यप्रकृतयोमूलकारणानि एवंराज्यंसप्तांगमुच्यते ३५२

तदेवंविधंराज्यंप्राप्यदुर्वृत्तेषुवंचकशठधूर्त्तपरदारपरद्रव्यापहारिहिंसकादिषुनृपोदंडंपातयेत्प्रयोजयेत् हियस्माद्धर्मएवदंडरूपेणपूर्वंब्रह्मणानि
र्मितोस्यचदंडइतियौगिकीसंज्ञा दंडोदमनादित्याहुः तेनादांतान्दमयेदित्यादिगौतमस्मरणात् ३५३ सपूर्वोक्तोदंडोलुब्धेनकृपणेनाकृतबुद्धिना
चंचलबुद्धिनान्यायतोन्यायानुसारेणनेतुंप्रयोक्तुंशक्योनभवति कीदृशेनतर्हिशक्यइत्याह सत्यसंधेनाप्रतारकेणशुचिनाजितारिषड्वर्गेणसुसहाये
नपूर्वोक्तसहायसहितेनधीमतानयानयकुशलेनसदंडोन्यायतोधर्मानुसारेणनेतुंशक्यः ३५४ सदंडःशास्त्रोक्तमार्गेणप्रयुज्यमानःसन्देवासुरमानवैः

तदवाप्यनृपोदंडंदुर्वृत्तेषुनिपातयेत् धर्मोहिदंडरूपेणब्रह्मणानिर्मितःपुरा ३५३ सनेतुंन्यायतोशक्योलु
ब्धेनाकृतबुद्धिना सत्यसंधेनशुचिनासुसहायेनधीमता ३५४ यथाशास्त्रंप्रयुक्तःसन्सदेवासुरमानवम् जग
दानंदयेत्सर्वमन्यथातत्प्रकोपयेत् ३५५ अधर्मदंडनंस्वर्गकीर्त्तिलोकाश्चनाशयेत् सम्यक्तुदंडनंराज्ञःस्वर्गकी
र्त्तिजयावहम् ३५६

सहितंइदंसर्वंजगदानंदयेत्हर्षयेत् अन्यथाशास्त्रातिक्रमेणप्रयुक्तश्चेज्जगत्प्रकोपयेत् ३५५ नकेवल
मधर्मदंडेनजगत्प्रकोपः अपितुप्रयोक्तुर्दृष्टादृष्टहानिरपीत्याह यःपुनःशास्त्रातिक्रमेणलोभादिनादंडःकृतःसपापहेतुत्वात्स्वर्गकीर्त्तिलोकांश्च
विनाशयतीति शास्त्रोक्तमार्गेणतुकृतःधर्महेतुत्वात्स्वर्गकीर्त्तिजयानांहेतुर्भवति ३५६ ॥ ॥ ॥ ॥

अर्घ्योर्घार्ह आचार्यादिः शेषंप्रसिद्धं एतेभ्यानृक्तादयोपिस्वधर्माच्चलिता दंड्याः किमुतान्ये यतःस्वधर्माच्चलितः अदंड्योनामराज्ञः कोपिनास्ति ए
तच्च मातापित्रादिव्यतिरेकेण तथाचस्मृत्यंतरं अदंड्यौमातापितरौस्नातकपरिव्राजकपुरोहितवानप्रस्थाः श्रुतशील शौचाचारवंतस्तेहिधर्माधिकारि
णइति ३५७ किंच यस्तुदंड्यान्स्वधर्मचलनादिनादंडयोग्यान्सम्यक्शास्त्रदृष्टेन मार्गेणाधिग्धनदंडादिनादंडयति वध्यान्वधार्हान्घातयति ते
नराज्ञा भूरिदक्षिणैः क्रतुभिरिष्टंभवति बहुदक्षिणक्रतुफलंप्राप्नोतीत्यर्थः नचफलश्रवणाद्दंडप्रणयनंकाम्यमितिमंतव्यं अकरणेप्रायश्चित्तस्मरणा

अपिभ्रातासुतोर्घ्योवाश्वसुरोमातुलोपिवा नादंड्योनामराज्ञोस्तिधर्माद्विचलितःस्वकात् ३५७ योदंड्यान्दं
डयेद्राजासम्यग्वध्यांश्चघातयेत् इष्टंस्यात्क्रतुभिस्तेनसमाप्तवरदक्षिणैः ३५८ इतिसंचिंत्यनृपतिःक्रतुतुल्य
फलंपृथक् व्यवहारान्स्वयंपश्येत्सभ्यैःपरिवृतोन्वहम् ३५९

त् यथाहवसिष्ठः दंडोत्सर्गेराजैकरात्रमुपवसेत् त्रिरात्रंपुरोहि
तः कृच्छ्रमदंड्यदंडनेपुरोहितस्त्रिरात्रंराजेति ३५८ दुष्टेसम्यग्दंडः प्रयोक्तव्यइत्युक्तंदुष्टपरिज्ञानंचव्यवहारदर्शनमंतरेणनभवतीतितत्परिज्ञा
नायव्यवहारदर्शनमहरहःस्वयंकर्त्तव्यमित्याह इत्येवमुक्तप्रकारेणक्रतुतुल्यंफलंदंड्येदंडेनस्वर्गादिनाशंचादंड्यदंडेनसम्यग्विचिंत्यपृथक्पृथ
क्वर्णादिक्रमेणसभ्यैर्वक्ष्यमाणलक्षणैःपरिवृतः प्रतिदिनंव्यवहारान्वक्ष्यमाणमार्गेणदुष्टादुष्टपरिज्ञानार्थंराजास्वयंपश्येत् ३५९ ७ ७

कुलानिब्राह्मणादीनां जातयोमूर्धावसिक्तप्रभृतयः श्रेणयस्तांबूलिकादीनां गणाहेलाबुकादीनां जानपदाःकारुकादयः एतान्स्वधर्माच्चलितान्
प्रच्युतान्राजायथापराधंविनीयदंडयित्वापथिस्वधर्मेस्थापयेत् दंडंदुर्वृत्तेषुनिपातयेदित्युक्तं सचदंडोद्विविधः शारीरोर्थदंडश्चेति यथाहना
रदः शारीरस्त्वर्थदंडश्चदंडस्तुद्विविधःस्मृतः शारीरस्ताडनादिस्तुमरणांतःप्रकीर्त्तितः काकिण्यादिस्त्वर्थदंडःसर्वस्वांतस्तथैवचेति द्विविधोप्य
पराधानुसारेणानेकधाभवति आहस्म शारीरोदशधाप्रोक्तोह्यर्थदंडस्त्वनेकधेति तत्रकृष्णलमाषरूवर्णपलादिशब्दैरर्थदंडावक्तव्यास्तेच
३६०

कुलानिजातीःश्रेणीश्चगणान्जानपदानपि स्वधर्माच्चलितान्राजाविनीयस्थापयेत्पथि ३६०
जालसूर्यमरीचिस्थंत्रसरेणूरजःस्मृतम् तेऽष्टौलिक्षातुतास्तिस्रोराजसर्षपउच्यते ३६१

प्रतिदेशंभिन्नपरिमाणार्थाइत्येकरूपापराधेपिदेशभेदेनन्यूनाधिकदंडोमाभूदितिकृष्णलादिशब्दानांनियतपरिमाणविषयत्वंदंडव्यव
हारेदर्शयितुमाह जालकांतरप्रविष्टादित्यरश्मिस्थितंयद्रजस्तत्त्रसरेणुरित्युक्तं योगीश्वरादिभिस्तत्त्वदर्शिभिः तेचत्रसरेणवोऽष्टौलिक्षास्वेदज
यूकांडं तालिक्षास्तिस्रोराजसर्षपोराजिका तेराजसर्षपास्त्रयोगौरसर्षपः सिद्धार्थःगौरसर्षपाःषट्यवोमध्यः मध्यमोनस्थूलोनसूक्ष्मः एतेनगौ

रसर्षपा अपिमध्यमाइतिगम्यते तथाराजसर्षपा अपि मध्यशब्दादेवसर्षपादिशब्दाः नकेवलमुन्मानवचनाः किंतु तदुन्मितद्रव्यवचनाइतिगम्य
ते यथाप्रस्थपरिमितायवाः प्रस्थउच्यंते एवंसर्षपाद्युन्मितंद्रव्यंसर्षपादिशब्दैः सर्षपादिशब्दानांच केवलोन्मानवचनत्वेत्रसरेणूनुपसंहृत्योन्मा-
तुमशक्यत्वात्तद्द्वारेण कृष्णलादिव्यवहारोनस्यात् तत्रस्थूलस्थूलतरस्थूलतमसूक्ष्मसूक्ष्मतरसूक्ष्मतममध्यसर्षपाद्युन्मानभेदेनप्रतिदेशंव्य
वहारभेदेस्थितेदंडव्यवहारेमध्यइतिनियम्यते तेमध्यमायवास्त्रयएकः कृष्णलः तेकृष्णलाः पंचैकोमाषः तेमाषाःषोडशैकः सुवर्णः तेसुवर्णा
श्चत्वारः पलमितिसंज्ञाः कथिताइति पंचवापिपलंप्रकीर्त्तितंनारदादिभिः तत्रस्थूलैस्त्रिभिर्यवैः कृष्णलपरिकल्पनायांव्यावहारिकनिष्कस्यषो

गौरस्तुतेत्रयःषट्तेयवोमध्यस्तुतेत्रयः कृष्णलःपंचतेमाषस्तेसुवर्णस्तुषोडश पलंसुवर्णा
श्चत्वारःपंचवापिप्रकीर्त्तितम् ३६२

डशांशः कृष्णलोभवति तैःपंचभिर्माषः माषैःषोडशभिः सुवर्णःसचव्याव
हारिकैःपंचभिर्निष्कैरेकःसुवर्णोभवति तेचत्वारःपलमिति निष्काणांविंशतिःपलं यदातुसूक्ष्मैस्त्रिभिर्यवैः कृष्णलःपरिकल्प्यतेतदाव्या
वहारिकनिष्कस्यद्वात्रिंशत्तमोभागः कृष्णलोभवति तस्मिन्पक्षेसुवर्णःसार्धनिष्कद्वयंभवति पलंचदशनिष्कं यदातुमध्यमयवैः कृष्णलपरिक
ल्पनातदानिष्कस्यविंशतितमोभागःकृष्णलः सुवर्णश्चतुर्निष्कः षोडशनिष्कंपलं एवंपंचसुवर्णपलमितिपक्षेविंशतिनिष्कंपलं एवमन्य-

दपि निष्कस्य चत्वारिंशो भागः कृष्णलः द्विनिष्कः सुवर्णोऽष्टनिष्कं पलं इत्यादि लोकव्यवहारानुसारेणास्मादेव सूत्रादूहनीयं ३६१ ३६२ एवं सुवर्णस्योन्मानं प्रतिपाद्येदानीं रजतस्याह द्वे कृष्णले पूर्वोक्ते रूप्यमाषो रूप्यसंबंधी माषः ते रूप्यमाषाः षोडश धरणं पुराणइत्यप्यस्यैव संज्ञांतरम् ते षोडश स्याद्धरणं पुराणश्चैव राजत इति मनुस्मरणात् दशभिर्धरणैः शतमानं पलमिति चाभिधीयते पूर्वोक्ताश्चत्वारः सुवर्णा एको राजतो निष्को भवति ३६३ इदानीं ताम्रस्योन्मानमाह पलस्य चतुर्थोंशः कर्ष इति लोकप्रसिद्धः कर्षेणोन्मितः कार्षिकः ताम्रस्य विकारस्ताम्रिकः कर्षसंमित

द्वे कृष्णले रूप्यमाषो धरणं षोडशैव ते शतमानं तु दशभिर्धरणैः पलमेव तु ३६३ निष्कं सुवर्णाश्चत्वारः
कार्षिकस्ताम्रिकः पणः ३६४

स्ताम्रविकारः पणसंज्ञो भवति कार्षापणसंज्ञकश्च कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पण इति मनुवचनात् पंचसुवर्णपलपक्षे विंशतिमाषः पणो भवति तथा सति माषो विंशतिमो भागः पणस्य परिकीर्तित इत्यादि व्यवहारः सिद्धो भवति चतुःसुवर्णपलपक्षे तु षोडशमाषः पणो भवति अस्मिंश्च पक्षे सुवर्णकार्षापणपणशब्दानां समानार्थत्वेपि पणकार्षापणशब्दौ ताम्रविषयावेव एवं तावद्धेमरूप्यताम्राणामुन्मानमुक्तं दंडव्यवहारोपयोगित्वात् कांस्यरीतिकादीनामपि लोकव्यवहारांगभूतानामेवोन्मानं द्रष्टव्यम् ३६४ ७

स्वशास्त्रपरिभाषामाह पणानांसहस्रंपणसाहस्रंनत्परिमाणमस्येतिपणसाहस्रः अशीत्यासहवर्त्ततइतिसाशीतिः अशीत्यधिकपणसहस्रपरिमि तोयोदंडः सउत्तमसाहससंज्ञोवेदितव्यः तदर्धंमध्यमः तस्यसाशीतिपणसाहस्रस्यार्धंचत्वारिंशदधिकपणपंचशतपरिमितोदंडोमध्यमसाहससं- ज्ञः तदर्धमधमः तस्यचत्वारिंशदधिकपंचशतपणस्यार्धंसप्तत्यधिकपणशतद्वयपरिमितोदंडोधम साहससंज्ञः स्मृतउक्तोमन्वादिभिः यत्तुपणानांद्वेश

साशीतिःपणसाहस्रोदंडउत्तमसाहसः तदर्धंमध्यमःप्रोक्तस्तदर्धमधमःस्मृतः ३६५ धिग्दंडस्त्वथ
वाग्दंडोधनदंडोवधस्तथा योज्याव्यस्ताःसमस्तावाह्यपराधवशादिमे ३६६

तेसार्धेप्रथमःसाहसःस्मृतः मध्यमःपंचविज्ञेयः
सहस्रंत्वेवचोत्तमइतिमनुनोक्तं तत्सक्षांतरममतिपूर्वापराधविषयंद्रष्टव्यं ३६५ दंडभेदानाह धिग्दंडो धिक्धिगितिकुत्सनं वाग्दंडस्तुपरुषशापकत्वनात्मकः धनदंडोधनापहारात्मकः वधदंडःशारीरोबंधरोधादिजीवितांतः एतेचतुर्विधादंडाः व्यस्ताएकैकशः समस्ताःद्वित्राःत्रिचतुरोवाअपराधानुसारेणप्रयोक्तव्याःउक्तक्रमेणपूर्वपूर्वासाध्येउत्तरउत्तरःप्रयोक्तव्यः यथाहमनुः धिग्दंडंप्रथमंकुर्याद्वाग्दंडंतदनंतरं तृती यंधनदंडंतुवधदंडमतःपरमिति ३६६

दंडव्यवस्थानिमित्तान्याह यथापराधंज्ञात्वातदनुसारेण दंडप्रणयनमेवंदेशकालवयःकर्मवित्तानिज्ञात्वातदनुसारेणदंड्येषुदंडार्हेषुदंडप्रणय-
नंकुर्यात् तथाबुद्धिपूर्वाबुद्धिपूर्वसकृदावृत्त्यनुसारेणच यद्यपिराजानमधिकृत्यायंराजधर्मकलापउक्तस्तथापिवर्णांतरस्यापिविषयमंडलादिपरि

ज्ञात्वापराधंदेशंचकालंबलमथापिवा वयःकर्मचवित्तंचदंडंदंड्येषुपातयेत् ३६७

पालनाधिकृतस्यायंधर्मोवेदितव्यः राजधर्मा
न्प्रवक्ष्यामियथावृत्तोभवेन्नृपइत्यत्रपृथङ्नृपग्रहणात्करग्रहणस्यरक्षार्थत्वाच्चरक्षणस्यदंडप्रणयनायत्तत्वादिति ३६७ इतिश्रीपद्मनाभभट्टो
पाध्यायात्मजस्यश्रीमत्परमहंसपरिव्राजकविज्ञानेश्वरभट्टारकस्यकृतौऋजुमिताक्षरायांयाज्ञवल्क्यधर्मशास्त्रविवृतौसदाचारःप्रथमोध्यायःसमाप्तः छ

उत्तमोपपदस्येयंशिष्यस्यकृतिरात्मनः धर्मशास्त्रस्यविवृतिर्विज्ञानेश्वरयोगिनः १ अस्मिन्नध्यायेप्रकरणानि उपोद्घातप्रकरणं १ ब्रह्मचारिप्र
करणं २ विवाहप्रकरणं ३ जातिविवेकप्रकरणं ४ गृहस्थधर्मप्रकरणं ५ स्नातकप्रकरणं ६ भक्ष्याभक्ष्यप्रकरणं ७ द्रव्यशुद्धिप्रकरणं ८ दानध
र्मप्रकरणं ९ श्राद्धप्रकरणं १० गणपतिकल्पः ११ शांतिप्रकरणं १२ राजधर्मप्रकरणं १३ एवंत्रयोदशप्रकरणानि इतियाज्ञवल्क्यमुनिशास्त्रग
ताविवृतिर्नकस्यविहिताविदुषः प्रमिताक्षरापिविपुलार्थवतीपरिषिंचतिश्रवणयोरमृतं १ ७ ७ ७ ७

इतियाज्ञवल्क्यस्मृतिमिताक्षरायामाचाराध्यायःसमाप्तः

श्रीगणेशायनमः उत्तमोपपदस्येयंधर्मस्यकृतिरात्मनः धर्मस्यविवृतिर्ज्ञेयाविज्ञानेश्वरयोगिनः १ इतियाज्ञवल्क्यमुनिशा-
स्त्रगताविवृतिर्नकस्यविदुषाविहिता प्रमिताक्षरापिविपुलार्थवतीपरिपिंचतिश्रवणयोरमृतम् २ ग्रंथेस्वरव्यंजनबिंदुरेफमात्राविही
नंलिखितंमयायत् तत्सर्वमार्यैःपरिशोधनीयंप्रायेणमुह्यंतिहियेलिखंति ३ अभिषेकादिगुणयुक्तस्यराज्ञः प्रजापालनंपरमोध
र्मः तच्चदुष्टनिग्रहमंतरेणनसंभवति दुष्टपरिज्ञानंचनव्यवहारदर्शनमंतरेणसंभवति तद्व्यवहारदर्शनमहरहः कर्तव्यमित्युक्तं
व्यवहारान्नृपःपश्येत्सभ्यैःपरिवृतोन्वहमिति सचव्यवहारःकीदृशः कतिविधःकथंचेतीतिकर्तव्यताकलापोनाभिहितस्ततस्त

व्यवहारान्नृपःपश्येद्विद्वद्भिर्ब्राह्मणैःसह धर्मशास्त्रानुसारेणक्रोधलोभविवर्जितः १

दभिधानायद्वितीयोऽध्यायआरभ्यते व्यवहारान् अन्यविरोधेनस्वात्मसंबंधितयाकथनं व्यवहारः यथा कश्चिदिदंक्षेत्रादिम
दीयमितिकथयत्यन्योपितद्विरोधेनमदीयमिति तस्यानेकविधत्वंदर्शयतिबहुवचनेन नृपइतिनक्षत्रियमात्रस्यायंधर्मः किंतुप्र-
जापालनाधिकृतस्यान्यस्यापीतिदर्शयति पश्येदितिपूर्वोक्तस्यानुवादोधर्मविशेषविधानार्थः विद्वद्भिर्वेदव्याकरणधर्मशास्त्रा
भिज्ञैर्ब्राह्मणैर्नक्षत्रियादिभिः ब्राह्मणैःसहेतितृतीयानिर्देशात्तेषामप्राधान्यं सहयुक्तेऽप्रधानइतिस्मरणात् अतश्चादर्शने
न्यथादर्शनेवाराज्ञोदोषोवानब्राह्मणानाम् यथाहमनुः अदंड्यान्दंडयन्राजा दंड्यांश्चैवाप्यदंडयन् अयशोमहदाप्नोतिनर-

कंत्वाधिगच्छतीति कथंधर्मशास्त्रानुसारेण नार्थशास्त्रानुसारेण देशादिसमयधर्मस्यापिधर्मशास्त्राविरुद्धस्य धर्मशास्त्रविष
यत्वान्नपृथगुपादानं तथावक्ष्यति निजधर्माविरोधेन यस्तुसामयिकोभवेत् सोपियत्नेन संरक्ष्योधर्मोराजकृतश्चयइति क्रो
धलोभविवर्जितइति धर्मशास्त्रानुसारेणेतिसिद्धे क्रोधलोभविवर्जितइतिवचनमादरार्थं क्रोधोमर्षः लोभोलिप्सातिशयः १
किंच श्रुतेनमीमांसाव्याकरणादिश्रवणेन अध्ययनेनवेदाध्ययनेनच संपन्नाः धर्मज्ञाः धर्मशास्त्रज्ञाः सत्यवादिनः
सत्यवचनशीलाः रिपौमित्रेचयेसमा द्वेषरागादिरहिता एवंभूताः सभासदः सभायांसंसदियथासीदंति उपविशंति तथादानमानसं

श्रुताध्ययनसंपन्नाधर्मज्ञाःसत्यवादिनः राज्ञासभासदःकार्या रिपौमित्रेचयेसमाः २

त्कारैराज्ञाकर्तव्याः यद्यपिश्रुताध्ययनसंपन्नाइत्यविशेषेणोक्तं तथापिब्राह्मणाएव यथाहकात्यायनः सतुसभ्यैःस्थिरैर्युक्तःप्रा
ज्ञैर्मौलैर्द्विजोत्तमैः धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैरिति तेन्नत्रयःकर्तव्याबहुवचनस्यार्थवत्त्वात् यस्मिन्देशेनिषीदंति विप्रा
वेदविदस्त्रय इतिमनुस्मरणाच्च बृहस्पतिस्तु सप्तपंचत्रयोवासभासदोभवंतीत्याह लोकवेदज्ञधर्मज्ञाः सप्तपंचत्रयोपिवा य
त्रोपविष्टाविप्राःस्युःसायज्ञसदृशीसभेति नचब्राह्मणैःसहेतिपूर्वश्लोकोक्तानांब्राह्मणानांश्रुताध्ययनसंपन्नाइत्यादिविशेषण
मितिमंतव्यम् तृतीयाप्रथमांतनिर्दिष्टानांविशेषणविशेष्यभावासंभवात् विद्वद्भिरित्यनेनपुनरुक्तिप्रसंगाच्च तथाचकात्या-

यनेनब्राह्मणानांसभासदांचस्पष्टोभेदश्चदर्शितः सप्राड्विवाकःसामात्यःसब्राह्मणपुरोहितः ससभ्यःप्रेक्षकोराजास्वर्गेति
ष्ठतिधर्मतइति तत्रब्राह्मणाअनियुक्ताःसभासदस्तुनियुक्ताइतिभेदः अतएवोक्तम् नियुक्तोवाऽनियुक्तोवाधर्मज्ञोवक्तुम
र्हतीति तत्रनियुक्तानांयथावस्थितार्थकथनेपियदिराजान्यथाकरोति तदासौनिवारणीयोन्यथादोषः उक्तंचकात्यायनेन
अन्यायेनापितंयांतंयेनुयांतिसभासदः तेपितद्भागिनस्तस्माद्बोधनीयःसतैर्नृपइति अनियुक्तानांपुनरन्यथाभिधानेवादो
षोनतुराज्ञोनिवारणे सभावानप्रवेष्टव्यावक्तव्यंवासमंजसम् अब्रुवन्विब्रुवन्वापिनरोभवतिकिल्बिषीतिमनुस्मरणात् रिपौ

अपश्यताकार्यवशाद्व्यवहारान्नृपेणतु सभ्यैःसहनियोक्तव्योब्राह्मणःसर्वधर्मवित् ३

मित्रेचेतिचकाराल्लोकरंजनार्थंकतिपयैर्वणिग्भिरप्यधिष्ठितंसदःकर्तव्यम् यथाहकात्यायनः कुलशीलवयोवृत्तवित्तवद्भिरमत्स
रैः वणिग्भिःस्यात्कतिपयैःकुलभूतैरधिष्ठितमिति २ व्यवहारान्नृपःपश्येदित्युक्तंतत्रानुकल्पमाह कार्यांतरव्यग्रतयाव्यवहारान
पश्यतान्नृपेणपूर्वोक्तैःसभ्यैःसहसर्वधर्मवित् सर्वान्धर्मशास्त्रोक्तान् सामयिकांश्चधर्मान्वेत्ति विचारयति ससर्वधर्मवित् ब्राह्मणोन
क्षत्रियादिर्नियोक्तव्योव्यवहारदर्शने तंचकात्यायनेनोक्तगुणविशिष्टंकुर्यात् यथा दांतंकुलीनंमध्यस्थमनुद्वेगकरंस्थिरम्
परत्रभीरुंधर्मिष्ठमुद्युक्तंक्रोधवर्जितमिति एवंभूतब्राह्मणासंभवेक्षत्रियंवैश्यंवानियुंजीत नशूद्रम् तथाहकात्यायनः

२

ब्राह्मणोयत्रनस्यात्तुक्षत्रियंतत्रयोजयेत् वैश्यंवाधर्मशास्त्रज्ञंशूद्रंयत्नेनवर्जयेदिति नारदेनत्वयमेवमुख्योदर्शितः धर्मशास्त्रंपुरस्कृ
त्यप्राड्विवाकमते स्थितः समाहितमतिःपश्येद्व्यवहाराननुक्रमादिति प्राड्विवाकमतेस्थितो नस्वमतेस्थितः राजाचारत्वक्षपरसै
न्यंपश्यतीतिवत् तस्यचेयंयौगिकीसंज्ञा अर्थिप्रत्यर्थिनौपृच्छतीतिप्राट् तयोर्वचनंविरुद्धमविरुद्धंचसभ्यैःसहविविनक्ति वि-
वेचयतीतिविवाकः प्राट्चासौविवाकश्चेतिप्राड्विवाकः उक्तंच विवादानुगतंपृष्ट्वाससभ्यस्तत्प्रयत्नतः विचारयतियेनासौप्रा
ड्विवाकस्ततःस्मृतइति ३ अपिच प्राड्विवाकादयःसभ्यायदिरागादिनास्मृत्यपेतं व्यवहारंविचारयंति तदाराज्ञाकिंकर्तव्यमि

रागाल्लोभाद्भयाद्वापिस्मृत्यपेतादिकारिणः सभ्याःपृथक्पृथक्दंड्याविवादाद्द्विगुणंदमं ४

त्यतआह पूर्वोक्ताःसभ्यारजसोनिरंकुशत्वेन तदभिभूताद्रागात्स्नेहातिशयाल्लोभाद्वालिप्सातिशयाद्भयात्संत्रासात्स्मृत्यपेतं स्मृति-
विरुद्धं आदिशब्दादाचारापेतंकुर्वंतः पृथक्पृथक्एकैकशोविवादात् विवादपराजयनिमित्ताद्दमाद्द्विगुणंदमंदंड्याःपुनर्विवा
दास्पदीभूतात्द्रव्यात् तथासति स्त्रीसंग्रहणादिषुदंडाभावप्रसंगः रागलोभभयानामुपादानंरोगादिष्वेवद्विगुणोदमोनाज्ञानमो
हादिष्वितिनियमार्थं नचराजासर्वस्येष्टेब्राह्मणावर्जमितिगौतमवचनात् नब्राह्मणादंड्याइतिमंतव्यम् तस्यप्रशंसार्थत्वात् य-
त्तु षड्भिःपरिहार्योराज्ञा वध्यश्चावंध्यश्चादंड्यश्चाबहिःकार्यश्चापरिवाद्यश्चापरिहार्यश्चेति तदपिसहिएषबहुश्रुतोभवति

लोकवेदवेदांगविद्वाकोवाक्येतिहासपुराणकुशलस्तदपेक्षस्तद्वृत्तिश्चाष्टचत्वारिंशतासंस्कारैःसंस्कृतस्त्रिषुकर्मस्वभिरतःषट्
सुवासामयाचारिकेष्वभिविनीतइतिप्रतिपादितबहुश्रुतविषयंनब्राह्मणमात्रविषयम् ४ व्यवहारविषयमाह धर्मशा
स्त्रसमयाचारविरुद्धेनमार्गेणपरैराधर्षितोऽभिभूतोयद्राज्ञे प्राड्विवाकायवा आवेदयतिविज्ञापयतिचेत् यदिनदावेदमा
नंव्यवहारपदंप्रतिज्ञोत्तरसंशयहेतुपरामर्शप्रमाणनिर्णयप्रयोजनात्मकोव्यवहारस्तस्यपदंविषयः तस्यचेदंसामान्य
लक्षणं सचद्विविधः शंकाभियोगस्तत्वाभियोगश्चेति यथाहनारदः द्व्यभियोगस्तुविज्ञेयःशंकातत्वाभियोगतःशं

स्मृत्याचारव्यपेतेनमार्गेणाधर्षितःपरैः आवेदयतिचेद्राज्ञेव्यवहारपदंहितत् ५

कासतांतुसंसर्गात्तत्वंहोढाभिदर्शनादितिहोढालोप्त्रंलिंगमितियावत् तेनदर्शनंसाक्षाद्वादर्शनंहोढाभिदर्शनंतस्मात् तत्वा
भियोगोऽपिद्विविधः प्रतिषेधात्मकोविध्यात्मकश्चेति यथामत्तोहिरण्यादिकंगृहीत्वानप्रयच्छति क्षेत्रादिकंममायमपहरती
तिवा उक्तंचकात्यायनेन न्यायंस्वंनेच्छतेकर्तुमन्यायंवाकरोतियइति सपुनश्चाष्टादशधाभिद्यते यथाहमनुः तेषामा
द्यमृणादानंनिक्षेपोऽस्वामिविक्रयः संभूयचसमुत्थानंदत्तस्यानपकर्मच वेतनस्यैवचादानंसंविदश्चव्यतिक्रमः क्रयविक्रया

३

नुशयोविवादःस्वामिपालयोः सीमाविवादधर्मश्चपारुष्येदंडवाचिके स्तेयंचसाहसंचैवस्त्रीसंग्रहणमेवच स्त्रीपुंधर्मोवि

भागश्चद्यूतमाह्वयएवच पदान्यष्टादशैतानिव्यवहारस्थिताविहेति एतान्यपिसाध्यभेदेनपुनर्बहुत्वंगतानि यथाहनारदः
एषामेवप्रभेदोन्यः शतमष्टोत्तरंशतम् क्रियाभेदान्मनुष्याणांशतशाखोनिगद्यतइति आवेदयतिचेदित्यनेनस्वयमेवागत्यावे
दयतिनराजप्रेरितस्तत्पुरुषप्रेरितोवेतिदर्शयति यथाहमनुः नोत्पादयेत्स्वयंकार्यंराजावाप्यस्यपूरुषः नचप्रापितमन्येन
ग्रसेतार्थंकथंचनेति परैरिति परेणपराभ्यांपरैरित्येकस्यैकेनद्वाभ्यांबहुभिर्वाव्यवहारोभवतीतिदर्शयति यत्तुनरेकस्य
बहुभिः सार्द्धंस्त्रीणांप्रेष्यजनस्यच अनादेयोभवेद्वादोधर्मविद्भिरुदाहृतइति नारदवचनम् तद्भिन्नसाध्यविषयम् आवेद
यतिराज्ञेइत्यनेनैवराज्ञापृष्टोविनीतवेषआवेदयेत् आवेदितंचयुक्तंचेन्मुद्रादिनाप्रत्यर्थ्याह्वानमकल्यादीनांचानाह्वानमि-
त्याद्यर्थसिद्धमितिनोक्तम् स्मृत्यंतरेतुस्पष्टार्थमुक्तम् यथा कालेकार्यार्थिनंपृच्छेत्प्रणतंपुरतःस्थितम् किंकार्यंकाचते-
पीडामाभैषीर्ब्रूहिमानव केनकस्मिन्कदाकस्मात्पृच्छेदेवंसभागतम् एवंपृष्टःसयद्ब्रूयात्तत्सभ्यैर्ब्राह्मणैःसह विमृश्यका
र्यंन्याय्यंचेदाह्वानार्थमतःपरम् मुद्रांवानिक्षिपेत्तस्मिन्पुरुषंवासमादिशेत् अकल्पबालस्थविरविषमस्थक्रियाकुलान् कार्या
तिपातिव्यसनिनृपकार्योत्सवाकुलान् मत्तोन्मत्तप्रमत्तार्तभृत्यान्नाह्वानयेन्नृपः नहीनपक्षांयुवतिंकुलेजातांप्रसूतिकाम् स
र्ववर्णोत्तमांकन्यांताज्ञातिप्रभुकाःस्मृताः तदधीनकुटुंबिन्यःस्वैरिण्योगणिकाश्चयाः निष्कुलायाश्चपतितास्तासामाह्वानमिष्य
ते कालंदेशंचविज्ञायकार्याणांचबलाबले अकल्यादीनपिशनैर्यानैराह्वानयेन्नृपः ज्ञात्वाभियोगंयेपिस्युर्वनेप्रव्रजितादयः

तानप्याह्वानयेद्राजागुरुकार्येष्वकोपयन्निति आसेधव्यवस्थाप्यर्थीसिद्धेवनारदेनोक्ता वक्तव्येर्थेह्यतिष्ठंतमुत्क्रामंतं
चतद्वचः आसेधयेद्विवादार्थीयावदाह्वानदर्शनम् स्थानासेधःकालकृतःप्रवासात्कर्मणस्तथा चतुर्विधःस्यादासेधो
नासिद्धस्तंविलंघयेत् आसेधकाल आसिद्ध आसेधंयोतिवर्तते सविनेयोन्यथाकुर्वन्नासेद्धादंडभाग्भवेत् नदीसंतार
कांतारदुर्देशोपप्लवादिषु आसिद्धस्तंपरासेधमुत्क्रामन्नापराध्नुयात् निर्वेष्टुकामोरोगार्तोयियक्षुर्व्यसनेस्थितः अभियु
क्तस्तथान्येनराजकार्योद्यतस्तथा गवांप्रचारेगोपालाः सस्यावापेकृषीवलाः शिल्पिनश्चापितत्कालमायुधीयाश्चविग्रहइति
आसेधोराजाज्ञयाऽवरोधः अकल्पादयःपुत्रादिकमन्यंवास्वहृदंप्रेषयिष्यंति नचतेपरार्थवादिनःयोनभ्रातानचपितान-

प्रत्यर्थिनोग्रतोलेख्यंयथावेदितमर्थिना समामासतदर्द्धाहर्नामजात्यादिचिन्हितम् ६

पुत्रोननियोगकृत् परार्थवादीदंड्यःस्याद्व्यवहारेषुविब्रुवन्निति नारदवचनात् ५ प्रत्यर्थिनिमुद्रालेख्यपुरुषाणामन्यतमे
नानीतेकिंकुर्यादित्यतआह अर्थ्यतइत्यर्थः साध्यःसोस्यास्तीत्यर्थी तत्प्रतिपक्षःप्रत्यर्थी तस्याग्रतःपुरतोलेख्यं लेखनी
यम् यथायेनप्रकारेणपूर्वमावेदनकालेआवेदितंतथा नपुनरन्यथा अन्यथावादित्वेनव्यवहारस्यभंगप्रसंगात् अन्यवादी
क्रियाद्वेषीनोपस्थातानिरुत्तरः आहूतव्यपलापीचहीनःपंचविधःस्मृतइति आवेदनकालएवार्थिवचनस्यलिखितत्वात्पुनर्ले

खनमनर्थकमित्यत आह समामासेत्यादि संवत्सरमासपक्षतिथिवारादि अर्थिप्रत्यर्थिनामब्राह्मणजात्यादिचिन्हितम् आ
दिशब्देनद्रव्यंतत्संख्या स्थानवेलाक्षमालिंगादीनिगृह्यंते यथोक्तम् अर्थवद्धर्मसंयुक्तंपरिपूर्णमनाकुलम् साध्यवद्वाचकपदंप्र
कृतार्थानुबंधिच प्रसिद्धमविरुद्धंचनिश्चितंसाधनेक्षमम् संक्षिप्तंनिखिलार्थंचदेशकालाविरोधिच वर्षर्तुमासपक्षाहोवेला
देशप्रदेशवत् स्थानावसथसाध्याख्याजात्याकारवयोयुतम् साध्यप्रमाणसंख्यावदात्मप्रत्यर्थिनामवत् परात्मपूर्वजानेक
राजनामभिरंकितम् क्षमालिंगात्मपीडावत्कथिताहर्तृदायकम् यदावेदयतेराज्ञेतन्द्भाषेत्यभिधीयतइति भाषाप्रतिज्ञाप
क्षइत्यर्थांतरं आवेदनसमयेकार्यमात्रंलिखितं प्रत्यर्थिनोग्रतः समामासादिविशिष्टंलिख्यतेइतिविशेषः संवत्सरविशेषणंय-
द्यपिसर्वव्यवहारेषुनोपयुज्यते तथाप्याधिप्रतिग्रहक्रयेषुनिर्णयार्थमुपयुज्यते आधौप्रतिग्रहेक्रीतेपूर्वातुबलवत्तरेतिवच-
नात् अर्थव्यवहारेपि एकस्मिन्संवत्सरे यत्संख्याकंयद्द्रव्यंयतोयेनगृहीतंप्रत्यर्पितंच पुनरन्यस्मिन्वत्सरेतत्द्रव्यंतत्संख्याकं
ततस्तेनगृहीतंयाच्यमानोयदिब्रूयात्सत्यंगृहीतंप्रत्यर्पितंचेति तत्संवत्सरांतरेगृहीतंप्रत्यर्पितंनास्मिन्वत्सरेइत्युपयुज्यते एवं
मासाद्यपियोज्यम् देशस्थानादयःपुनःस्थावरेष्वेवोपयुज्यंते देशश्चैवतथास्थानंसंनिवेशस्तथैवच जातिःसंज्ञाधिवास
श्चप्रमाणंक्षेत्रनामच पितृपैतामहंचैवपूर्वराजानुकीर्तनम् स्थावरेषुविवादेषुदशैतानिनिवेशयेदितिस्मरणात् देशोम-
ध्यदेशादिः स्थानंवाराणस्यादि सन्निवेशस्तत्रैवपूर्वपरादिग्विभागपरिच्छिन्नसम्यङ्निविष्टोगृहक्षेत्रादिः जातिरर्थिप्रत्यर्थि

नोब्राह्मणत्वादिः संज्ञाचदेवदत्तादिः अधिवासः समीपदेशोनिवासीजनः प्रमाणंनिवर्तनादिभूपरिमाणं क्षेत्रंनाम शालिक्षेत्रंक्रमुकक्षेत्रं कृष्णभूमिः पांडुभूमइति पितुःपितामहस्यचनामार्थिप्रत्यर्थिनोः पूर्वेषांत्रयाणांराज्ञोनामकीर्तनंचेति समासासादीनांयस्मिन्व्यवहारे यावदुपयुज्यते तत्र तावल्लेखनीयंइतितात्पर्यार्थः ६ एवंपक्षलक्षणेस्थितेपक्षलक्षणरहितानांपक्षवदवभासमानानांपक्षाभासत्वंसिद्धमेवेति योगीश्वरेणन पृथक्पक्षाभासा उक्ता अन्यैस्तुविस्पष्टार्थमुक्तम् असिद्धादेःसाधयितुमशक्यत्वादनिराकरणम् अप्रसिद्धंमदीयंशशविषाणंगृहीत्वानप्रयच्छतीत्यादि निराबाधमस्मद्गृहदीपप्रकाशेनायंस्वगृह

अप्रसिद्धंनिराबाधंनिरर्थंनिष्प्रयोजनम् असाध्यंवाविरुद्धंवापक्षाभासंविवर्जयेत् ७

व्यवहरतीत्यादि निरर्थमभिधेयरहितम् कचटतपजडदगबेत्यादि निष्प्रयोजनंयथायंदेवदत्तोस्मद्गृहसन्निधौसुस्वरमधीतइत्यादि असाध्यं यथाहंदेवदत्तेनसभ्रूभंगमुपहसितइत्यादि एतत्साधनासंभवादसाध्यम् अत्यकालत्वान्नसाक्षिसंभवोलिखितंदूरतोल्पत्वान्नदिव्यमिति विरुद्धंयथाहंमूकेनशप्तइत्यादि पुरराष्ट्रादिविरुद्धंवा एतेषांस्वभावेनैवनिराकरणमितिननिराक्रियते तत्रच अप्रतिसिद्धादीनांव्युत्पत्त्यर्थमुपादानं तदप्यनेकपदसंकीर्णस्यनिराकरणंनक्रियते राज्ञाविवर्जितोयश्चयश्चपौरविरोधकृत् राष्ट्रस्यवासमस्तस्यप्रकृतीनांतथैवच अन्येवायेपुरग्राममहाजनविरोधकाः अनादेया

स्तुते सर्वे व्यवहाराः प्रकीर्तिताइति यत्त्वनेकपदसंकीर्णः पूर्वपक्षोनसिद्ध्यतीति तत्र यद्यनेकवस्तुसंकीर्णइत्युच्यते तदानदोषः
मदीयमनेन हिरण्यंवासोरूपकादिवापहृतमित्येवंविधस्यादुष्टत्वात् ऋणादानादिपदसंकरे पक्षाभासइतिचेत्तदपिन मदी-
यारूपका अनेनवृद्ध्याग्रगृहीताः स्रुवर्णवास्यहस्तेनिक्षिप्तम् मदीयंक्षेत्रमयमपहरतीत्यादीनांपक्षत्वमिष्यतएव किंतु क्रिया
भेदात् क्रमेणव्यवहारोनयुगपदित्येतावत् यथाहकात्यायनः बहुप्रतिज्ञंयत्कार्यंव्यवहारेस्रुनिश्चितम् कामंतदपि
गृह्णीयाद्राजातत्त्वबुभुत्सयेति यस्मादनेकपदसंकीर्णः पूर्वपक्षोयुगपन्नसिद्ध्यतीतितस्यार्थः अर्थिग्रहणात्पुत्रपौत्रादिग्र
हणम् तेषामेकार्थत्वात् नियुक्तस्यापिनियोगेनैवतदेकार्थत्वाक्षेपात् अर्थिनासंनियुक्तोवाप्रत्यर्थिप्रहितोपिवा योयस्या
र्थेविवदतेतयोर्जयपराजयाविति स्मरणात् नियुक्तजयपराजयौमूलस्वामिनोरेव एतच्चभूमौफलकेवा पांडुलेखेनलिखि
त्वा आवापोद्धारेणविशोधितंपश्चात्पत्रेनिवेशयेत् पूर्वपक्षंस्वभावोक्तंप्राड्विवाकोभिलेखयेत् पांडुलेखेनफलकेततः पत्रेवि
शोधितमिति कात्यायनस्मरणात् शोधनंचयावदुत्तरदर्शनंकर्तव्यम् नातः परमनवस्थाप्रसंगात् अतएवनारदेनोक्तम्
शोधयेत्पूर्ववादंतुयावन्नोत्तरदर्शनम् अवष्टब्धस्योत्तरेणनिवृत्तंशोधनंभवेदिति पूर्वपक्षमशोधयित्वैवयदुत्तरंदापयंति
सभ्यास्तदारागाल्लोभादित्युक्तदंडेनसभ्यान्दंडयित्वापुनः प्रतिज्ञापूर्वकंव्यवहारः प्रवर्तनीयोराज्ञेति ७ एवंशोधितपत्रारू-
ढेपूर्वपक्षेकिंकर्तव्यमित्यत आह श्रुतोभाषार्थोयेनप्रत्यर्थिनासौश्रुतार्थः तस्योत्तरंपूर्वपक्षादुत्तरत्रभवतीत्युत्तरंलेख्यंले

खनीयम् पूर्ववेदकस्यार्थिनः संनिधौसमीपे उत्तरंचयत्पूर्वोक्तस्यनिराकरणंतदुच्यते यथाह पक्षस्यव्यापकंसारमसं
दिग्धमनाकुलम् अव्याख्यागम्यमित्येतदुत्तरंतद्विदोविदुरिति पक्षस्यव्यापकंनिराकरणसमर्थं सारंन्याय्यम् न्याया
दनपेतम् असंदिग्धंसंदेहरहितम् अनाकुलंपूर्वापराविरुद्धम् अव्याख्यागम्यं अप्रसिद्धपदप्रयोगेणदुश्लिष्टविभक्तिसमा
साध्याहाराभिधानेनवा अन्यदेशभाषाभिधानेनवायत् व्याख्येयार्थंनभवतितत्सदुत्तरम् तच्चचतुर्विधम् संप्रतिपत्तिर्मिथ्या
प्रत्यवस्कंदनंपूर्वन्यायश्चेति यथाहकात्यायनः सत्यंमिथ्योत्तरंचैवप्रत्यवस्कंदनंतथा पूर्वन्यायविधिश्चैवमुत्तरंस्याच्चतुर्वि

श्रुतार्थस्योत्तरंलेख्यंपूर्वावेदकसन्निधौ

धमिति तत्रसत्योत्तरंयथा रूपकशतंमह्यंधारयतीत्युक्तेसत्यंधारयामीति यथाह साध्यस्यसत्यवचनंप्रतिपत्तिरुदाहृते
ति मिथ्योत्तरंतुनाहंधारयामीति तथाचकात्यायनः अभियुक्तोभियोगस्ययदिकुर्यादपन्हवम् मिथ्यातत्तुविजानीयादुत्तरं
व्यवहारतइति तच्चमिथ्योत्तरंचतुर्विधम् मिथ्यैतन्नाभिजानामितदातत्रनसंनिधिः अजातश्चास्मितत्कालइतिमिथ्याचतुर्वि
धमिति प्रत्यवस्कंदनंनाम सत्यंगृहीतंप्रतिदत्तंप्रतिग्रहेणलब्धमितिवा तथाहनारदः अर्थिनालिखितोयोर्थः प्रत्यर्थीयदितं
तथा प्रपद्यकारणंब्रूयात्प्रत्यवस्कंदनंस्मृतमिति प्राङ्न्यायोत्तरंतु यत्राभियुक्तएवंब्रूयादस्मिन्नर्थेअनेनाहमभियुक्तस्तत्रचायं

व्यवहारमार्गेणपराजितइति उक्तंचकात्यायनेन आचारेणावसन्नोपिपुनर्लेखयतेयदि सोभिधेयोजितःपूर्वंप्राङ्न्यायस्तुसउच्यतेइ
ति एवमुत्तरलक्षणेस्थितेउत्तरलक्षणरहितानामुत्तरवदवभासमानानामुत्तराभासत्वमर्थसिद्धंस्पष्टीकृतंस्मृत्यंतरे संदिग्धमन्यत्प्रकृ
तादत्यल्पमतिभूरिच पक्षैकदेशव्याप्यन्यत्तथानैवोत्तरंभवेत् यद्व्यस्तपदमव्यापिनिगूढार्थंतथाकुलम् व्याख्यागम्यमसारंचनोत्तरं
स्वार्थसिद्धयइति तत्रसंदिग्धंसुवर्णशतमनेनगृहीतमित्युक्तेसत्यंगृहीतंसुवर्णशतंमाषशतंवेतिप्रकृतादन्यत् यथा सुवर्ण
शताभियोगेपणशतंधारयामीति अत्यल्पंसुवर्णशताभियोगेपंचाशतंधारयामीति अतिभूरिसुवर्णशताभियोगेद्विशतंधा
रयामीति पक्षैकदेशव्यापिहिरण्यवस्त्राद्यभियोगेहिरण्यंगृहीतंनान्यदिति व्यस्तपदंऋणादानाभियोगेपदांतरेणोत्तरम् यथासु
वर्णशताभियोगे अनेनाहंताडितइति अव्यापिदेशस्थानादिविशेषणाव्यापि तथामध्यदेशेवाराणस्यांपूर्वस्यांदिशिक्षेत्रमने
नापहृतमिति पूर्वपक्षेलिखितेक्षेत्रमपहृतमिति निगूढार्थंसुवर्णशताभियोगेकिमहमेवधारयामीत्यत्रध्वनिनाप्राड्विवाकः
सभ्यावा अर्थीवा अन्यस्मैधारयतीतिसूचयतीतिनिगूढार्थं आकुलंपूर्वापरविरुद्धम् यथासुवर्णशताभियोगेसत्यंगृही
तंनधारयामीति व्याख्यागम्यंदुःश्लिष्टविभक्तिसमासाध्याहाराभिधानेनव्याख्यागम्यं अदेशभाषाभिधानेनवा यथा
सुवर्णशतविषयेपितृऋणाभियोगेगृहीतशतवचनात् सुवर्णानांपितुर्नजानामीति अत्रगृहीतशतस्यपितुर्वचनात् सुवर्णा
नांशतंगृहीतमितिनजानामीति असारंन्यायविरुद्धम् यथासुवर्णशतमनेनवृद्ध्यागृहीतंवृद्धिरेवदत्ता नमूलमित्यभियो

या॰स्मृ॰मि॰
७

गेनसत्यं वृद्धिर्दत्तानमूलंगृहीतमिति उत्तरमित्येकवचननिर्देशादुत्तराणांसंकरोनिरस्तः यथाहकात्यायनः पक्षैकदेशेय
त्सत्यमेकदेशेचकारणम् मिथ्याचैवैकदेशेचसंकरात्तदनुत्तरमिति अनुत्तरत्वेचकारणंतेनैवोक्तम् नचैकस्मिन्विवादेतुक्रि
यास्याद्वादिनोर्द्वयोः नचार्थसिद्धिरुभयोर्नचैकत्रक्रियाद्वयमिति मिथ्याकारणोत्तरयोःसंकरे अर्थिप्रत्यर्थिनोर्द्वयोरपिक्रियाप्रा-
प्नोति मिथ्याक्रियापूर्ववादेकारणेप्रतिवादिनीतिस्मरणात् तदुभयमेकस्मिन्व्यवहारेविरुद्धम् तथासुवर्णरूपकशतंचानेनगृ
हीतमित्यभियोगे सुवर्णनगृहीतं रूपकशतंगृहीतंप्रतिदत्तंचेति कारणप्राङ्न्यायसंकरेतुप्रत्यर्थिनएवक्रियाद्वयं प्राङ्न्याय-
कारणोक्तौतु प्रत्यर्थीनिर्दिशेत्क्रियामिति तथासुवर्णंगृहीतंप्रतिदत्तंरूपकेव्यवहारमार्गेणपराजितइति अत्रप्राङ्न्यायेजयपत्रे-
णवा प्राङ्न्यायदर्शिभिर्वाभावयितव्यम् कारणोत्तरेतुसाक्षिलेख्यादिभिर्भावयितव्यमितिविरोधः एवमुत्तरत्रयसंकरेपि
द्रष्टव्यम् यथानेनसुवर्णरूपकशतंवस्त्राणिचगृहीतानीत्यभियोगेसत्यंसुवर्णंगृहीतंप्रतिदत्तम् रूपकशतंनगृहीतं वस्त्रवि
षयेतुपूर्वंन्यायेनपराजितइति एवंचतुःसंकरेपि एतेषांचानुत्तरत्वंयौगपद्येन तस्यतस्यांशस्यतेनतेनविनासिद्धेःक्रमेणो
त्तरत्वमेव क्रमश्चार्थिनःप्रत्यर्थिनःसभ्यानांचेच्छयाभवति यत्रपुनरुभयोःसंकरःतत्रयस्यप्रभूतार्थविषयत्वं तत्क्रियोपादाने
नपूर्वंव्यवहारःप्रवर्तनीयः पश्चादल्पविषयोत्तरोपादानेनव्यवहारोद्रष्टव्यः यत्रत्वप्रतिपत्तेःउत्तरांतरस्यचसंकरस्तत्रोत्तरांत-
रोपादानेनव्यवहारोद्रष्टव्यः संप्रतिपत्तौक्रियाभावात् यथाहारीतेन मिथ्योत्तरंकारणंचस्यातामेकत्रचेदुभे सत्यंचापिसहा

व्य॰अ
२

७

न्येन तत्र ग्राह्यं किमुत्तरमित्यत्रस्त्वोक्तम् यत्रप्रभूतार्थविषयं यत्र वास्याल्पक्रियाफलम् उत्तरं तत्र तज्ज्ञेयमसंकीर्णमतोन्यथा संकीर्णं
भवतीति शेषः ऐच्छिकः क्रमो भवतीत्यर्थः तत्र प्रभूतार्थम् यथानेन सुवर्णरूपकशतं वस्त्राणि च गृहीतानीत्यभियोगे सत्यं
सुवर्णरूपकशतं च न गृहीतं वस्त्राणि तु गृहीतानि प्रतिदत्तानि चेति तत्र मिथ्योत्तरस्य प्रभूतविषयत्वात् अर्थिनः क्रियामादाय
प्रथमं व्यवहारः प्रवर्तयितव्यः पश्चाद्वस्त्रविषयो व्यवहारः एवं मिथ्याप्राङ्न्यायसंकरे कारणप्राङ्न्यायसंकरे च योजनीयम् त
थात स्मिन्नेवाभियोगे सत्यं सुवर्णरूपकशतं च गृहीतं दास्यामि वस्त्राणि तु न गृहीतानि गृहीतानि प्रतिदत्तानीति वा वस्त्रविष
ये पूर्वं पराजित इति चोत्तरे संप्रतिपत्तेर्भूरिविषयत्वेपि तत्र क्रियाभावान्मिथ्याद्युत्तरक्रियामादाय व्यवहारः प्रवर्तयितव्यः य
त्र तु मिथ्याकारणोत्तरयोः कृत्स्नपक्षव्यापित्वं यथा शृंगग्राहिकतया कश्चिद्वदति इयं गौर्मदीया अमुकस्मिन्काले नष्टा अद्यास्य
गृहे दृष्टेति अन्यस्तु मिथ्यैवैतत् एतत्प्रदर्शितकालात्पूर्वमेवास्मद्गृहे स्थिता मम गृहे जाता चेति वदति इदं तावत्पक्षनिराकरण
समर्थत्वान्नानुत्तरम् नापि मिथ्यैव कारणोपन्यासात् नापि कारणम् एकदेशस्याभ्युपगमाभावात् तस्मात्सकारणमिथ्यो-
त्तरमिदम् अत्र च प्रतिवादिनः क्रिया कारणे प्रतिवादिनीति वचनात् ननु मिथ्या क्रिया पूर्ववादे इति पूर्ववादिनः कस्मात्क्रिया न
भवति तस्य शुद्धमिथ्याविषयत्वात् कारणे प्रतिवादिनीत्येतदपि कस्माच्छुद्धकारणविषयं न भवति नैतत् सर्वस्यापि का
रणोत्तरस्य मिथ्यासहचरितरूपत्वात् शुद्धकारणोत्तरस्याभावात् प्रसिद्धकारणोत्तरे प्रतिज्ञातार्थैकदेशस्याभ्युपगमेनैकदे

शस्यमिथ्यात्वम् यथासत्यंरूपकशतंगृहीतं नधारयामीति प्रतिदत्तत्वादिति प्रकृतोदाहरणेतुप्रतिज्ञातार्थैकदेशस्याप्यु
पगमोनास्ति इतिविशेषः एतच्चहारीतेनस्पष्टमुक्तम् मिथ्याकारणयोर्वापिग्राह्यंकारणमुत्तरमिति यत्रमिथ्याप्राङ्न्याययोः
पक्षव्यापित्वं यथारूपकशतंधारयामीत्यभियोगेमिथ्यैतदस्मिन्नर्थेपूर्वमयंपराजितइति अत्रापिप्रतिवादिनएवक्रिया प्राङ्न्या
यकारणोक्तौतुप्रत्यर्थीनिर्दिशेत्क्रियामिति वचनात् शब्दस्यप्राङ्न्यायस्याभावादनुत्तरत्वप्रसंगात् संप्रतिपत्तेरपिसाध्यत्वेनोपदि
ष्टस्यपक्षस्यासिद्धत्वोपन्यासेन साध्यत्वनिराकरणादुत्तरत्वम् यदातुकारणप्राङ्न्यायसंकरः यथाशतमनेनगृहीतमित्यभियु
क्तः प्रतिवदति सत्यंगृहीतंप्रतिदत्तंचेत्यस्मिन्नेवार्थेप्राङ्न्यायेनायंपराजितइति तत्रप्रतिवादिनोयथारुचीतिनक्वचिद्वादिप्रतिवा

## ततोर्थीलेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ८

दिनोरेकस्मिन्व्यवहारेक्रियाद्वयप्रसंगइतिनिर्णयः एवमुत्तरेपत्रेनिवेशितेसाध्यसिद्धेःसाधनायत्तत्वात्साधननिर्देशंकःकुर्यादि
त्यपेक्षितेआह ततस्तदनंतरमर्थीसाध्यवान् सद्यएवानंतरमेवलेखयेत् प्रतिज्ञातःसाध्यःसचासावर्थश्चेतिप्रतिज्ञातार्थः
तस्यसाधनंसाध्यतेनेनेतिसाधनंप्रमाणम् अत्रसद्योलेखयेदिति वदतोत्तराभिधाने कालविलंबनमप्यंगीकृतमितिगम्यते
तच्चोत्तरत्रविवेचयिष्यते अर्थीप्रतिज्ञातार्थसाधनंलेखयेदितिवदतायस्यसाध्यमस्तिसप्रतिज्ञातार्थसाधनंलेखयेदित्युक्तम्

८

अतश्च प्राङ्न्यायोत्तरे प्राङ्न्यायस्यैव साध्यत्वात्प्रत्यर्थ्येवार्थीज्ञातइति स एव साधनं लेखयेत् कारणोत्तरेपि कारणस्यैव साध्यत्वा
त्कारणवाद्येवार्थीति स एव लेखयेत् मिथ्योत्तरे तु पूर्ववाद्येवार्थी स एव साधनं निर्दिशेत् तथार्थी लिखयेदिति वदता अर्थ्येव लेख
येत् नान्यइत्युक्तम् अतश्च संप्रतिपत्त्युत्तरे साध्याभावेन भाषोत्तरवादिनोर्द्वयोरप्यर्थित्वाभावात्साधननिर्देश एव नास्ती
ति तावतैव व्यवहारः परिसमाप्यतइति गम्यते एतदेव हारीतेन स्पष्टमुक्तम् प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रि
याम् मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेदिति ८ ततः किमित्यत आह तस्य साधनस्य प्रमाणस्य वक्ष्यमाणलिखि

तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोन्यथा चतुष्पाद्व्यवहारोयं विवादेषु प्रदर्शितः ९

तसाक्ष्यादिलक्षणस्य सिद्धौ निर्वृत्तौ सिद्धिं साध्यस्य जयलक्षणां प्राप्नोति अतोस्मात्प्रकारादन्यथा प्रकारांतरेण साधनासिद्धौ वि
परीतं साध्यस्यासिद्धिं पराजयलक्षणामाप्नोतीति संबंधः एवं व्यवहाररूपमभिधायोपसंहरति व्यवहारान्नृपः पश्येदित्यु
क्तो व्यवहारः सोयमित्थं चतुष्पाच्चतुरंशकल्पनया विवादेषु ऋणादानादिषु प्रदर्शितो वर्णितः तत्र प्रत्यर्थिनोग्रतो लेख्यइति भाषा
पादः प्रथमः श्रुतार्थस्योत्तरं लेख्यमित्युत्तरपादो द्वितीयः ततोर्थी लेखयेत्सद्यइति क्रियापादस्तृतीयः तत्सिद्धौ सिद्धिमाप्नोती
ति साध्यसिद्धपादश्चतुर्थः यथोक्तम् परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु वाक्यान्न्यायाद्व्यवस्थानं व्यवहार उदाहृतः

भाषोत्तरक्रियासाध्यसिद्धिभिः क्रमवृत्तिभिः आक्षिप्तचतुरंशस्तु चतुष्पादभिधीयत इति संप्रतिपत्त्युत्तरे तु साधनानिर्देशा
द्भाषार्थस्यासाध्यत्वाच्च न साध्यसिद्धिलक्षणः पादोस्तीति त्रिपात्त्वमेव उत्तराभिधानानंतरं सभ्यानामर्थिप्रत्यर्थिनोः कस्य
क्रिया स्यादिति परामर्शलक्षणस्य प्रत्याकलितस्य योगीश्वरेण व्यवहारपादत्वेनानभिधानात् व्यवहर्त्तुः संबंधाभावाच्च न
व्यवहारपादत्वमिति स्थितं इति व्यवहारमातृका १ एवं सर्वव्यवहारोपयोगिनीं व्यवहारमातृकामभिधायाधुनाक्वचि
द्व्यवहारविशेषे कंचिद्विशेषं दर्शयितुमाह अभियुज्यत इति अभियोगोपराधः तमभियोगमनिस्तीर्य अपरिहृत्य एनम

अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् अभियुक्तं च नान्येन नोक्तं विप्रकृतिं नयेत् १०

भियोक्तारं न प्रत्यभियोजयेत् अपराधेन न संयोजयेत् यद्यपि प्रत्यवस्कंदनं प्रत्यभियोगरूपं तथापि स्वापराधपरिहारात्म
कत्वात् नास्य प्रतिषेधविषयत्वम् अतः स्वाभियोगानुपमर्दनरूपस्य प्रत्यभियोगस्यायं निषेधः इदं प्रत्यर्थिनमधिकृत्योक्तम्
अथ अर्थिनं प्रत्याह अभियुक्तं च नान्येनेति अन्येनाभियुक्तमनिस्तीर्णाभियोगमन्योर्थी नाभियोजयेत् किंच उक्तमावेद
नसमये यदुक्तं तद्विप्रकृतिं विरुद्धस्वभावं न नयेत् न प्रापयेत् एतदुक्तं भवति यद्वस्तु येन रूपेणावेदनसमये निवेदितं तद्वस्तु त
थैव भाषाकालेऽपि लेखनीयं नान्यथेति ननु प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिनेत्यत्रैवेदमुक्तं किमर्थं पुनरुच्यते नोक्तं विप्रकृ

तिंनयेदिति उच्यते यथावेदितमर्थिनेत्यनेनावेदनसमयेयद्वस्तुनि वेदितं तदेवभाषासमयेपितथैवलेखनीयंएकस्मिन्नपिप
देनवस्त्वंतरमित्युक्तम् यथानेनरूपकशतंत्वन्ध्यागृहीतंइत्यावेदनसमयेप्रतिपाद्यप्रत्यर्थिसान्निधौभाषासमयेवस्त्रशतंत्वद्या
गृहीतमितिनवक्तव्यम् तथासतिपदांतरागमनेपिवस्त्वंतरगमनाद्धीनवादीदंड्यःस्यादिति नोक्तंविप्रकृतिंनयेदिति अनेनै
कवस्तुत्वेपिपदांतरगमनंनिषिध्यते यथारूपकशतंत्वन्ध्यागृहीत्वायंनप्रयच्छतीत्यावेदनकलेभिधायभाषाकालेरूपकशतं
बलादपहृतवानइतिवदतीति तत्रवस्त्वंतरगमनंनिषिद्धमिहतुपदांतरगमनंनिषिध्यतइतिनपौनरुक्त्यं एतदेवस्पष्टीकृतंना
रदेन पूर्वपादंपरित्यज्ययोन्यमालंबतेपुनः पादसंक्रमणाज्ज्ञेयोहीनवादीसवैनरइति हीनवादीदंड्योभवति नप्रकृतादर्था
द्धीयते अतःप्रत्यर्थिनोर्थिनश्चप्रमादपरिहारार्थमेवायमभियोगमनिस्तीर्येत्याद्युपदेशो नप्रकृतार्थसित्यसिद्धिविषयः अतए
ववक्ष्यति छलंनिरस्यभूतेनव्यवहारान्नयेन्नृपइति एतच्चार्थव्यवहारेद्रष्टव्यम् मन्युकृतेतुव्यवहारेप्रमादाभिधानेप्रकृता
दपिव्यवहाराद्धीयतएव यथाहनारदः सर्वेष्वर्थविवादेषुवाक्छलेनावसीदति परस्त्रीभूम्यृणादानेशास्योप्यर्थान्नहीय
तइति अस्यार्थः सर्वेष्वर्थविवादेषुनमन्युकृतेषुवाक्छलेप्रमादाभिधानेपिनावसीदतिनपराजीयते नप्रकृतादर्थाद्धीयतेइ
त्यर्थः अत्रोदाहरणं परस्त्रीत्यादि परस्त्रीभूम्यृणादानेप्रमादाभिधानेनदंड्योपियथाप्रकृतादर्थान्नहीयते एवंसर्वेष्वर्थविवा-
देष्विति अर्थविवादग्रहणान्मन्युकृतविवादेषु प्रमादाभिधानेप्रकृतादप्यर्थाद्धीयतइतिगम्यते यथाहमनेनशिरसिपादेनता-

डित इत्यावेदनसमये अभिधायभाषाकाले हस्तेन पादेन वा ताडित इति वदन्न केवलं दंड्यः पराजीयते च १॰ अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् इत्यस्यापवादमाह कलहे वाग्दंडपारुष्यात्मके साहसेषु विषशस्त्रादिनिमित्तप्राणव्यापादनादिषु प्रत्यभियोग संभवे स्वाभियोगमनिस्तीर्याप्यभियोक्तारं प्रत्यभियोजयेत् नन्वत्रापि पूर्वपक्षानुपमर्दनरूपत्वेनानुत्तरत्वात्प्रत्यभियोगस्य प्रतिज्ञांतरत्वे युगपद्व्यवहारासंभवः समानः सत्यम् नात्र युगपद्व्यवहाराय प्रत्यभियोगोपदेशः अपि तु न्यूनदंडप्राप्तये अधिकदंडनिवृत्तये वा तथाहि अनेनाहं ताडितः शप्तो वेत्यभियोगे पूर्वमहमनेन ताडितः शप्तो वेति प्रत्यभियोगे दंडाल्पत्वम् यथाह नारदः पूर्वमा

कुर्यात्प्रत्यभियोगंच कलहे साहसेषु च उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये ११

क्षारमेद्यस्तु नियतं स्यात्स दोषभाक् पश्चाद्यः सोप्यसत्कारी पूर्वे तु विनयो गुरुरिति यदा पुनर्द्वयोर्युगपत्ताडनादिप्रवृत्तिस्तत्राधिकं दंडनिवृत्तिः पारुष्ये साहसे वापि युगपत्संप्रवृत्तयोः विशेषश्चेन्न लभ्येत विनयः स्यात्समस्तयोरिति एवं युगपद्व्यवहारप्रवृत्त्यसंभवेपि कलहादौ प्रत्याभियोगोर्थवान्नृणादानादिषु तु निरर्थक एव अर्थिप्रत्यर्थिनोर्विधिमुक्त्वा ससभ्यस्य सभापतेः कर्तव्यमाह उभयोरर्थिप्रत्यर्थिनोः सर्वेषु विवादेषु निर्णयस्य कार्यं कार्यनिर्णयः आहिताग्न्यादिषु पाठात्कार्यशब्दस्य पूर्वनिपातः निर्णयस्य कार्यं च साधितधनदानं दंडदानं च तस्मिन्समर्थः प्रतिभूः प्रतिभवति तत्कार्यं चेत्तद्भवतीति प्रतिभूर्ग्राह्यः

ससभ्येनसभापतिना तस्यासंभवेर्थिप्रत्यर्थिनोरक्षणेपुरुषानियोक्तव्याः तेभ्यश्चताभ्यांप्रतिदिनंवेतनंदेयम् तथाहकात्यायनः अथ
चेत्प्रतिभूर्नास्ति कार्ययोग्यस्तुवादिनः संरक्षितोदिनस्यांतेदद्याद्भृत्यायवेतनमिति अर्थिप्रत्यर्थिनोर्निर्णयकार्येससभ्येनसभापतिना-
प्रतिभूर्ग्राह्यइत्युक्तम् ११ किंतन्निर्णयकार्यंयस्मिन्प्रतिभूर्गृह्यतइत्यपेक्षितआह अर्थिनानिवेदितस्याभियोगस्यप्रत्यर्थिनापन्हवेकृते
यद्यर्थिनासाक्ष्यादिभिःभावितोंगीकारितः प्रत्यर्थीतदादद्याद्धनंप्रकृतमर्थिनोराज्ञेचतत्सममपलापदंडं अथार्थीभावयितुंनशक्नोति त
दासएवमिथ्याभियोगीजातइत्यभियोगादभियुक्तधनाद्द्विगुणंधनंदद्याद्राज्ञे प्राड्न्यायेमत्यवस्कंदनेचेदमेवयोजनीयम् तत्रार्थेवापन्ह

निन्हवेभावितोदद्याद्धनंराज्ञेचतत्समम् मिथ्याभियोगीद्विगुणमभियोगाद्धनंवहेत् १२

ववादीतिप्रत्यर्थिना भावितोराज्ञेप्रकृतधनसमंदंडंदद्यात् अथप्रत्यर्थीप्राड्न्यायंकारणंवाभावयितुंनशक्नोतितदा सएवमिथ्याभियो
गीतिराज्ञेद्विगुणंधनंदद्यात् अर्थिनेचप्रकृतंधनं संप्रतिपत्त्युत्तरेतुदंडाभावएव एतच्चऋणादानविषयमेव पदांतरेषुतत्रतत्र
दंडाभिधानादधनव्यवहारेष्वस्यासंभवाच्चनसर्वविषयत्वं राज्ञाधमर्णिकोदाप्यइत्यस्यऋणादानविषयत्वेपि तत्रैवविशेषंवक्ष्यामः
एतदेवसर्वव्यवहारविषयत्वेनापियोजनीयम् कथं अभियोगस्यनिन्हवेभियुक्तेनकृतेयद्यभियोक्तासाक्ष्यादिभिर्भावितोभि
युक्तस्तदातत्समंतत्रतत्रप्रतिपदोक्तमेव चशब्दोवधारणे धनंदंडंदद्याद्राज्ञइत्यनुवादः अथाभियोक्ताभियोगंवक्तुंनशक्नोति

तदाभिथ्याभियोगीतिप्रतिपदोक्तं धनंदंडंद्विगुणंदद्यादितिविधीयते अत्रापिषाड्गुण्येप्रत्यवस्कंदनेचपूर्ववदेवयोजनीयम् १२ ततोर्थीले-
खयेत्सद्यः प्रतिज्ञातार्थसाधनमिति वदतोत्तरपादलेखनेकालप्रतीक्षणंदर्शितम्तत्रापवादमाह साहसंविषशस्त्रादिनिमित्तंप्राणव्या-
पादनादि स्तेयं चौर्यं पारुष्यं वाग्दंडपारुष्यम् वक्ष्यमाणलक्षणं गौर्दोग्ध्री अभिशापः पातकाभियोगः अत्ययः प्राणधनातिपातस्त-
स्मिन् द्वंद्वैकवद्भावादेकवचनं स्त्रियांकुलस्त्रियांदास्यांच कुलस्त्रियांचारित्रविवादे दास्यांस्वत्वविवादे विवादयेदुत्तरंदापयेत् सद्यएव-

साहसस्तेयपारुष्यगोभिशापात्ययेस्त्रियाम् विवादयेत्सद्यएवकालोन्यत्रेच्छयास्मृतः १३ देशाद्देशांतरंयातिसृक्कि-
णीपरिलेढिच ललाटंस्विद्यतेचास्यमुखंवैवर्ण्यमेतिच १४ परिशुष्यत्स्खलद्वाक्योविरुद्धंबहुभाषते वाक्चक्षुः
पूजयतिनो तथोष्ठौनिर्भुजत्यपि १५ स्वभावाद्विकृतिंगच्छेन्मनोवाक्कायकर्मभिः अभियोगेचसाक्ष्येवादुष्टःसपरिकी-
र्तितः १६

नकालप्रतीक्षणंकुर्यात् अन्यत्रविवादांतरेषुकालउत्तरदानकालः इच्छयार्थिप्रत्यर्थिसभ्यसभापतीनांस्मृतउक्तः
१३ दुष्टलक्षणमाह मनोवाक्कायकर्मभिर्यःस्वभावादेव नभयादिनिमित्ताद्विकृतिं विकारंयाति गच्छति असावभियोगेसाक्ष्येवादुष्टः
परिकीर्तितः तांविकृतिंविभज्यदर्शयति देशाद्देशांतरंयातिनक्वचिदवतिष्ठते सृक्किणीओष्ठपर्यंतौपरिलेढिजिह्वाग्रेणास्पर्शयति
घट्टयतीति कर्मणोविकृतिंयाति अस्यललाटंस्वेदबिंदुचितंभवति मुखंचवैवर्ण्यंविवर्णत्वंपांडुत्वंकृष्णत्वंवा एतिगच्छतीति कायस्य

विकृतिः परिशुष्यत्स्खलद्वाक्यः परिशुष्यत्सगद्गदं स्खलद्व्यत्यस्तं वाक्यं यस्य सतथोक्तः विरुद्धं पूर्वापरविरुद्धं बहुभाषतइति
वाचो विकृतिः परोक्तांवाचं प्रतिवचनदानेन नप्रपूजयति चक्षुर्वा प्रतिवीक्षणेन नपूजयतीति मनसोविकृतेर्लिंगं तथा ओष्ठौनि
र्भुज तिवक्रयतीत्यपिकायस्यविकृतिः एतच्चदोषसंभावनामात्रमुच्यते नदोषनिश्चयाय स्वाभाविकनैमित्तिकविकारयोर्विवे
कस्यदुर्ज्ञेयत्वात् अथकश्चिन्निपुणमतिर्विवेकंप्रतिपद्येत तथापिनपराजयनिमित्तंकार्यंभवति नहिमरिष्यतोलिंगदर्शनेन मृत
कार्यंकुर्वंति एवमस्यपराजयोभविष्यतीतिलिंगादवगतेपिनपराजयनिमित्तकार्यप्रसंगः १४ १५ १६ किंच संदिग्धमर्थमधमर्णेनानं-

संदिग्धार्थंस्वतंत्रोयः साधयेद्यश्चनिःपतेत् नचाहूतोवदेत्किंचिद्धीनोदंड्यश्चसस्मृतः १७

गीकृतमेवयः स्वतंत्रः साधननिरपेक्षः साधयत्यासेधादिनासहीनोदंड्यश्चभवति यश्चस्वयंसंप्रतिपन्नंसाधनेनवासाधितंया
चमानोनिष्पतेत्पलायेत यश्चाभियुक्तोराज्ञाचाहूतःसदसिनकिंचिद्वदति सोपिहीनोदंड्यश्चस्मृतइतिसंबध्यते अभियोगेथ
साक्ष्येवादुष्टःसपरिकीर्तितइति प्रस्तुतत्वाद्धीनपरिज्ञानमात्रमेवमाभूदितिदंड्यग्रहणं दंड्यस्यापिशास्त्योप्यर्थान्नहीयतइ
त्यर्थादहीनत्वदर्शनादत्रतन्माभूदिति हीनग्रहणं अथयत्रद्वावपियुगपद्धर्माधिकारिणंप्राप्तौभाषावादिनौ तद्यथा कश्चित्प्रति
ग्रहेणक्षेत्रंलब्ध्वा कंचित्कालमुपभुज्य कार्यवशात्सकुटुंबोदेशांतरंगतः अन्योपितदेवक्षेत्रंप्रतिग्रहेणलब्ध्वाकंचित्कालमुपभुज्य
देशांतरंगतः ततोद्वावपियुगपदागतो

मदीयंक्षेत्रमिदंमदीयंक्षेत्रमितिपरस्परंविवदमानौधर्माधिकारिणंप्राप्तौतत्रकस्याक्रियेत्याकांक्षितआह उभयतःउभयोरपिवा-
दिनोःसाक्षिषुसंभवत्सु साक्षिणःपूर्ववादिनः पूर्वस्मिन्कालेमयाप्रतिगृहीतमुपभुक्तंचेति योवदत्यसौपूर्ववादी नपुनर्यःपूर्वं
निवेदयति तस्यसाक्षिणःप्रष्टव्याः यदात्वन्यएवंवदति सत्यमनेनपूर्वंप्रतिगृहीतमुपभुक्तंच किंतुराज्ञेदमेवक्षेत्रमस्मादेवक्र
येणलब्ध्वामह्यंदत्तमिति अन्येनवाप्रतिग्रहेणलब्ध्वामह्यंदत्तमिति तत्रपूर्वपक्षोसाध्यतयाधरीभूतस्तस्मिन् उत्तरकालप्र
तिगृहीतमुपभुक्तंचेति वादिनःसाक्षिणःप्रष्टव्याभवंति इदमेवव्याख्यानंयुक्ततरम् मिथ्योत्तरे पूर्ववादिनःसाक्षिणोभवंति

साक्षिषूभयतःसत्सुसाक्षिणःपूर्ववादिनः पूर्वपक्षेऽधरीभूतेभवंत्युत्तरवादिनः१८

प्राङ्न्यायकारणोक्तौपूर्वपक्षेधरीभूतेउत्तरवादिनःसाक्षिणोभवंतीतिव्याख्यानंनयुक्तं अस्यार्थस्यततोर्थालिखयेत्सद्यःप्रति
ज्ञातार्थसाधनमित्यनेनैवोक्तत्वात्पुनरुक्तिप्रसंगात् पूर्वव्याख्यानमेवस्पष्टीकृतंनारदेन मिथ्याक्रियापूर्ववादेकारणेप्रति
वादिनि प्राङ्न्यायविधिसिद्धौतु जयपत्रंक्रियाभवेदित्युक्त्वा द्वयोर्विवदतोरर्थेद्वयोःसत्सुचसाक्षिषु पूर्वपक्षोभवेद्यस्य
भवेयुस्तस्यसाक्षिणइतिवदता एतस्यचसर्वव्यवहारविलक्षणत्वात् भेदेनोपन्यासः१८ ७ ७

अपिच यदिविवादोव्यवहारः सपणः पणनंपणस्तेनसहवर्ततइतिसपणः स्यात्तदातत्रसपणेव्यवहारेहीनंपराजितंपूर्वोक्तंदंडंस्वकृतं चपणंराज्ञे अर्थिनेचविवादास्पदीभूतंधनंदापयेद्राजा यत्रपुनरेकःकोपावेशवशाद्यद्यहमत्रपराजितोभवामि तदापणशतंदास्यामीति प्रतिजानीते अन्यस्तुनकिंचित्प्रतिजानीते तत्रापिव्यवहारःप्रवर्तते तस्मिंश्चप्रवृत्तेपणप्रतिज्ञावादीयदिहीयते तदासएवसपणंदंडं दाप्यः अन्यस्तुपराजितोदंडंदाप्यः नपणंस्वपणंचेतिविशेषोपादानात् यत्रत्वेकःशतमन्यस्तुपंचाशतंप्रतिजानीते तत्रापिपराजये-स्वकृतमेवपणंदाप्यौ सपणश्चेद्विवादःस्यादितिवदतापणरहितोपिविवादोदर्शितः १९ किंच छलंप्रमादाभिहितंनिरस्यपरित्यज्यभू

सपणश्चेद्विवादःस्यात्तत्रहीनंतुदापयेत् दंडंचस्वपणंचैवधनिनेधनमेवच १९ छलंनिरस्यभूतेनव्यवहारान्नयेन्नृपः भूतम
प्यनुपन्यस्तंहीयतेव्यवहारतः २० तेनवस्तुतत्वानुसारेण व्यवहारान्नयेदंतंनृपः तस्माद्भूतमपिवस्तुतत्वमपि अनुपन्यस्तमनभिहि तं हीयते हानिमुपगच्छति व्यवहारतोव्यवहारेणसाक्ष्यादिभिः तस्माद्भूतानुसरणंकर्तव्यं यथार्थिप्रत्यर्थिनौसत्यमेववदतस्तथासस-भ्येनसभापतिनायतितव्यंसामादिभिरुपायैः तथासतिसाक्ष्यादिनैरपेक्ष्येणैवनिर्णयोभवति अथसर्वथापिभूतानुसरणंनशक्यते कर्तुंनथासति साक्ष्यादिभिर्निर्णयःकार्यइत्यनुकल्पः यथोक्तं भूतछलानुसारित्वाद्द्विगतिःसमुदाहृतः भूतंतत्वार्थसंयुक्तंप्रमादाभि हितंछलमिति तत्रभूतानुसारीव्यवहारोमुख्यः छलानुसारीत्वनुकल्पःसाक्षिलेख्यादिभिर्व्यवहारनिर्णये कदाचिद्दूरत्वनुसरणंभ

वति कदाचिन्नभवति साक्ष्यादीनांव्यभिचारस्यापिसंभवात् २० भूतमप्यनुपन्यस्तंहीयतेव्यवहारतइत्यत्रोदाहरणमाह नैकम नेकंस्रुवर्णरजतवस्त्रादिलिखितमभियुक्तमर्थिनाप्रत्यर्थीयदिसर्वमेवनिन्हुते अपजानीते तदार्थिनैकदेशेहिरण्येसाक्ष्यादिभिःप्र त्यर्थीभावितोंगीकारितः सर्वरजताद्यर्थंपूर्वलिखितंदाप्योर्थिनेनृपेण नयाद्यस्त्वनिवेदितः पूर्वभाषाकाले अनिवेदितःपश्चादर्थि नापूर्वं मयाविस्मृतइतिनिवेद्यमानो नयात्योनदापयितव्योनृपेण एतच्चनकेवलंवाचनिकमेकदेशेप्रत्यर्थिनोमिथ्यावादित्वनिश्चया देकदेशांतरेपिमिथ्यावादित्वसंभवात् अर्थिनश्चैकदेशेसत्यवादित्वनिश्चयादेकदेशांतरेपि सत्यवादित्वसंभवात् एवंतर्कापरना

निन्हुतेलिखितंनैकमेकदेशेविभावितः

मसंभावनाप्रत्ययानुगृहीतादस्मादेवयोगीश्वरवचनात्सर्वंदापनीयंनृपेणेतिनिर्णयः एवंचतर्कवाक्यानुसारेणनिर्णयेक्रियमाणे- वस्तुनोन्यथात्वेपिव्यवहारदर्शिनांनदोषः तथाचगौतमोन्यायाधिगमेतर्कोभ्युपायस्तेनाभ्युपेत्यय्थास्यानंगमयेदित्युक्तातस्मा दा जात्यायावनिंद्याविद्युपसंहरति नचैकदेशभावितोनुपादेयवचनःप्रत्यर्थीत्येतावदिहगम्यते एकदेशविभावितोनृपेणासर्वं दाप्यइतिवचनात् यत्तुकात्यायनेनोक्तम् अनेकार्थाभियोगेपियावत्संसाधयेद्धनी साक्षिभिस्तावदेवासौलभतेसाधितंधन- मिति तत्पुत्रादिदेयपित्रादिऋणविषयम् तत्रहिबहूनर्थानभियुक्तःपुत्रादिर्नजानामीतिप्रतिवदन्निन्हववादीनभवतीत्येक

देशविभावितोपिनकश्चिदसत्यवादीतिनिन्हुतोलिखितंनैकमितिशास्त्रंतत्रनप्रवर्तते निन्हवाभावादपेक्षिततत्कभावाच्च अनेकार्थाभि
योगेपीतिकात्यायनवचनंसामान्यविषयम् विशेषशास्त्रस्याविषयंनिन्हवोत्तरंपरिहृत्याज्ञानोत्तरेप्रवर्तते ननुऋणादिषुविवादेषु-
स्थिरप्रायेषुनिश्चितम् ऊनेवाप्यधिकेवार्थेप्रोक्तेसाध्यंनसिध्यतीति वदताकात्यायनेनानेकार्थाभियोगेसाक्षिभिरेकदेशेभाविते:
धिकेवाभाविते साध्यंसर्वमेवनसिध्यतीत्युक्तं तथासत्येकदेशेभाविते अभाविते कदेशासिद्धिःकुतस्त्या उच्यते लिखितसर्वार्थसाध

दाप्यः सर्वन्नृपेणार्थंनग्राह्यस्त्वनिवेदितः २१

नतयोपन्यस्तैः साक्षिभिरेकदेशाभिधानेधिकाभिधानेवाकृत्स्नमेवसाध्यंनसिध्यतीतितस्यार्थः तत्रापिनिश्चितंनसिध्यतीतिवचनात्पू
र्ववत्संशयएवेतिप्रमाणांतरस्यावसरोस्त्येव छलंनिरस्येतिनियमात् साहसादौतु सकलसाध्यसाधनतयोद्दिष्टैःसाक्षिभिरेक
देशेपिसाधितेकृत्स्नसाध्यसिद्धिर्भवत्येव तावतैवसाहसादेःसिद्धत्वात्कात्यायनवचनाच्च साध्यार्थांशेपिगदितेसाक्षिभिःसकलंभवेत्
स्त्रीसंगेसाहसेचौर्येयत्साध्यंपरिकीर्तितमिति ननुनिन्हुतेलिखितंनैकमितीयंस्मृतिस्तथानेकार्थाभियोगेपीतिइयमेवस्मृतिरेव

तत्रानयोः सत्योः परस्परविरोधे सतीतरेतर बाधनादप्रामाण्यं कस्मान्न भवति विषयव्यवस्थाकिमित्याश्री-
यत इत्याह यत्र स्मृत्यो परस्परतो विरोधस्तत्र विरोधपरिहाराय विषयव्यवस्थापनादावुत्सर्गापवादादिलक्षणो न्यायो बलवा
न्समर्थः स च न्यायः कुतः प्रत्येतव्य इत्यत आह व्यवहारत इति व्यवहारा हृद्व्यवहारादन्वयव्यतिरेकलक्षणादवगम्यते अतश्च प्रकृ
तोदाहरणे विषयव्यवस्थैवयुक्ता एवमन्यत्रापि विषयव्यवस्था विकल्पादि यथासंभवं योज्यम् एवं सर्वत्र प्रसंगे पवादमाह धर्मशास्त्रा

## स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः

नुसारेणेत्येनेनैवोशनसाप्यर्थशास्त्रस्य निरस्तत्वात् धर्मशास्त्रांतर्गतमेव राजनीतिलक्षणमर्थशास्त्रमिह विवक्षितं अर्थशास्त्रधर्मशा
स्त्रस्मृत्योर्विरोधे अर्थशास्त्राद्बलवद्धर्मशास्त्रमिति स्थितिर्मर्यादा यद्यपि समानकर्तृकतया अर्थशास्त्रधर्मशास्त्रयोः स्वरूपगतो विशेषो ना
स्ति तथापि प्रमेयस्य धर्मस्य ——— प्राधान्यादर्थस्य चाप्राधान्याद्धर्मशास्त्रं बलवदित्यभिप्रायः धर्मस्य प्राधान्यं शास्त्रादौ दर्शितम्
तस्माद्धर्मशास्त्रार्थशास्त्रयोर्विरोधे अर्थशास्त्रस्य बाध एव न विषयव्यवस्था नापि विकल्पः किमत्रोदाहरणम् न तावत् गुरुं वा
बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् आततायिनमायांतं हन्यादेवाविचारयन् नाततायिवधे दोषो हंतुर्भवति कश्चन प्रच्छन्नं
वा प्रकाशं वा मन्युस्तं मन्युमृच्छति तथा आततायिनमायांतमपि वेदांतगं रणे जिघांसंतं जिघांसीयान्न तत्र ब्रह्महा भवेदित्याद्य

र्थशास्त्रम् इयंविशफद्भिरुदितापमाप्याकामतोद्विजम् कामतोब्राह्मणवधेनिष्कृतिर्नविधीयतइत्यादिधर्मशास्त्रं तयोर्विरोधेध
र्मशास्त्रंबलवदितियुक्तं अनयोरेकविषयत्वासंभवेनविरोधाभावान्नबलाबलचिंतावतरति तथाहि शास्त्रंद्विजातिभिर्ग्राह्यंधर्मो
यत्रोपरुध्यतइति उपक्रम्यात्मनश्चपरित्राणेदक्षिणानांचसंगरे स्त्रीविप्राभ्युपपत्तौचघ्नन्धर्मेणनदंडभागित्यात्मरक्षणेदक्षिणादी-
नांयज्ञोपकरणानांचरक्षणेयुद्धेच स्त्रीब्राह्मणहिंसायांचाततायिनमकूटशस्त्रेणघ्नन्दंडभागित्युक्तम् तस्यार्थवादार्थमिदमुच्यते गुरुं
वाबालवृद्धौवेत्यादि गुर्वादीनत्यंतावध्यानप्याततायिनोहन्यात्किमुतान्यानिति वाशब्दश्रवणादपिवेदांतगमित्यत्रापिशब्दश्रवणा

अर्थशास्त्रात्तुबलवद्धर्मशास्त्रमितिस्थितिः २२

न्नगुर्वादीनांवध्यत्वप्रतीतिः नाततायिवधेदोषोन्यत्रगोब्राह्मणादितिसुमंतुवचनाच्च आचार्यंचप्रवक्तारंमातरंपितरंगुरुम् नहिं-
स्याद्ब्राह्मणान्गाश्चसर्वांश्चैवतपस्विनइतिमनुवचनाच्च आचार्यादीनामाततायिनांहिंसाप्रतिषेधेनेदंवचनमर्थवन्नान्यथा हिंसाप्रा
प्रतिषेधस्यसामान्यशास्त्रेणैवसिद्धत्वात् नाततायिवधेदोषो हंतुर्भवतिकश्चनेत्येतदपिब्राह्मणादिव्यतिरिक्तविषयमेव यतोग्नि
दोगरदश्चैवशस्त्रपाणिर्धनापहः क्षेत्रदारहरश्चैवषडेतेआततायिनः यथा उद्यतासिर्विषाग्निश्चशापोद्यतकरस्तथा आथर्वणे
नहंताचपिशुनश्चापिराजनि भार्यातिक्रमकारीचरंध्रान्वेषणतत्परः एवमाद्यान्विजानीयात्सर्वानेवाततायिनइतिसामान्येना

नतायिनोदर्शिताः अतश्चब्राह्मणादयः आततायिनश्च आत्मादित्राणार्थं हिंसानभिसंधिनानिवार्यमाणाः प्रमादाद्यदि
विपद्येरन् तत्रलघुप्रायश्चित्तंराजदंडाभावश्चेतिनिश्चयः तस्मादन्यदिहोदाहरणंवक्तव्यं उच्यते हिरण्यभूमिलाभेभ्यो
मित्रलब्धिर्वरायतः अतोयतेततस्यामिपावित्यर्थशास्त्रं धर्मशास्त्रानुसारेणक्रोधलोभविवर्जितइतिधर्मशास्त्रं तयोःक्वचि
द्विषयेविरोधोभवति तथाचतुष्पाद्व्यवहारेवर्तमानेएकस्यजयेवधार्यमाणेमित्रलब्धिर्भवति नधर्मशास्त्रमनुसृतंभवति
नोन्यस्यजयेवधार्यमाणेधर्मशास्त्रमनुसृतंभवति मित्रलब्धिर्विपरीता तत्रार्थशास्त्राद्धर्मशास्त्रंबलवत् अतएवधर्मार्थसन्निपा

प्रमाणंलिखितंभुक्तिःसाक्षिणश्चेतिकीर्तितं एषामन्यतमाभावेदिव्यान्यतममुच्यते २३

तेअर्थग्राहिणएतदेवेतिप्रायश्चित्तस्यगुरुत्वंदर्शितमापस्तंबेन एतदेवेतिद्वादशवार्षिकंप्रायश्चित्तंपरामृश्यते २२ ततोर्थीलि
खयेत्सद्यःप्रतिज्ञातार्थसाधनमित्युक्तम् किंतत्साधनमित्यपेक्षितआह प्रमीयतेपरिच्छिद्यतेनेनेतिप्रमाणं तच्चद्विविधं मानु
षंदैविकंचेति तत्रमानवंत्रिविधं लिखितंभुक्तिःसाक्षिणश्चेतिकीर्तितंमहर्षिभिः तत्रलिखितंद्विविधं शासनंचीरकंचेति
शासनमुक्तलक्षणं चीरकंतुवक्ष्यमाणलक्षणं भुक्तिरुपभोगः साक्षिणोवक्ष्यमाणस्वरूपप्रकाराः ननुलिखितस्यसाक्षिणां
चशब्दाभिव्यक्तिद्वारेणशाब्देंतर्भावाद्युक्तंप्रामाण्यं भुक्तेस्तुकथंप्रामाण्यमुच्यते भुक्तिरपिकैश्चिद्विशेषणैर्युक्तास्वत्वहेतुभूत

क्रयादिकमव्यभिचारादनुमापयंत्यनुपप द्यमानावाकल्पयंतीत्यनुमानेनार्थापत्तेश्चांतर्भवतीतिप्रमाणमेव एषांलिखितादीनांत्रयाणाम
न्यतमस्याप्यभावे दिव्यानांवक्ष्यमाणस्वरूपभेदानामन्यतमंजातिदेशकालद्रव्याद्यपेक्षयाप्रमाणमुच्यते मानुषाभावएवदिव्यस्यप्रा
माण्यमस्मादेववचनादवगम्यते दिव्यस्यस्वरूपप्रामाण्ययोरागमगम्यत्वात् अतश्चयत्रपरस्परविवादेनयुगपद्धर्माधिकरणंप्रा
प्तयोरेकोमानुषींक्रियामपरस्तुदैवीमवलंबते तत्रमानुष्येवग्राह्या तथाचकात्यायनः यद्येकोमानुषींब्रूयादन्योब्रूयात्तुदैविकीं
मानुषींतत्रगृह्णीयान्नतुदैवींक्रियांनृपइति यत्रापिप्रधानैकदेशसाधनंमानुषंसंभवति तत्रापिनदैवमाश्रयणीयं यथा रूपकशत
मनयावृद्ध्यागृहीत्वा यन्नप्रयच्छति इत्यभियोगापह्नवेग्रहणसाक्षिणःसंति नोसंख्यायांवृद्धिविशेषेवा अतोदिव्येनभावयामीत्यु
क्ते तत्रैकदेशविभावितन्यायेनापिसंख्यावृद्धिविशेषसिद्धेर्नदिव्यस्यावकाशः उक्तंचकात्यायनेन यद्येकदेशव्याप्तापिक्रियाविद्येत
मानुषी साग्राह्यानतुपूर्णापिदैविकीवदतांनृणामिति यत्तुगूढसाहसिकानांतुप्राप्तंदिव्यैःपरीक्षणमिति तदपिमानुषासंभवकृतनियमा
र्थं यदपिनारदेनोक्तम् अरण्येनिर्जनेरात्रावंतर्वेश्मनिसाहसे न्यासापन्हवनेचैवदिव्यासंभवतिक्रियेति तदपिमानुषासंभवएव त-
स्मान्मानुषाभाव एवदिव्येननिर्णयइत्यौत्सर्गिकमस्यचापवादोदृश्यते प्रक्रांतेसाहसेवादे पारुष्येदंडवाचिके बलोद्भूतेषुकार्येषुसाक्षिणो
दिव्यमेवचेति तथालेख्यादीनामपिक्वचिन्नियमोदृश्यते यथा पूगश्रेणीगणादीनांयास्थितिःपरिकीर्तिता तस्यास्तुसाधनंले
ख्यंनदिव्यंनचसाक्षिणः तथा द्वारमार्गक्रियाभोगजलवाहादिषुक्रिया भुक्तिरेवतुगुर्वीस्यान्नदिव्यंनचसाक्षिणः दत्तादत्तेष्व

भृत्यानांस्वामिनांनिर्णयेसति विक्रयादानसंबंधेक्रीत्वाधनमनिच्छति धृतेसमाव्हयेत्चैवविवादेसमुपस्थिते साक्षिणःसाधनंप्रोक्तंनदिव्यंनचलेख्यकमिति २३ उभयत्रप्रमाणसद्भावेप्रमाणगतबलाबलविवेकेचासति पूर्वापरयोःकार्ययोः कस्यबलीयस्त्वमित्यतआह ऋणादिषुसर्वेष्वर्थविवादेषु उत्तराक्रियाक्रियतइति क्रियाकार्यंबलवती उत्तरकार्येसाधिते तद्वादीजयी भवति पूर्वकार्येसिद्धेपितद्वादीपराजीयते तद्यथा कश्चिद्ग्रहणेप्रधारणंसाधयति कश्चित्प्रतिदानेप्रधारणं तत्रग्रहणप्रतिदानयोःप्रमाणसिद्धयोःप्रतिदानंबलवदिति प्रतिदानवादीजयति तथापूर्वंद्विकंशतं गृहीत्वाकालांतरेत्रिकंशतमंगीकृतवान्

सर्वेष्वर्थविवादेषुबलवत्युत्तराक्रिया आधौप्रतिग्रहेक्रीतेपूर्वातुबलवत्तरा २४

तत्रोभयत्रप्रमाणसद्भावेपित्रिकशतग्रहणंबलवत् पश्चाद्भावित्वात्पूर्वबाधेनात्मुत्पत्तेः उक्तंच पूर्वबाधेन नोत्पत्तिरुत्तरस्यहिसेत्स्यतीति अस्यापवादमाह आध्यादिषुत्रिषुपूर्वमेवकार्यंबलवत् तद्यथा एकमेवक्षेत्रमन्यस्याधिंकृत्वाकिमपिगृहीत्वापुनरन्यस्याप्याधाय किमपिगृह्णातितत्रपूर्वस्यैवतद्भवतिनोत्तरस्यैवंप्रतिग्रहेक्रयेच नन्वाहितस्यतदानीमस्वत्वात्पुनराधानमेवनसंभवति एवं दत्तस्यचक्रीतस्यदानक्रयौनोपपद्येते तस्मादिदंवचनमनर्थकम् उच्यते अस्वत्वेपिमोहात्कश्चिल्लोभाद्वापुनराधानादिकंकरोति तत्रपूर्वंबलवदितिन्यायमूलमेवेदंवचनमित्यचोद्यम् २४

आध्यादिषु दंडविशेषप्रतिपादनार्थमाह आध्यादीनांश्रोत्रियद्रव्यपर्यंतानांचिरकालोपभोगबलेनापहर्तारंविवादास्पदीभूतंधनंस्वामिने
दापयेत् इत्यनुवादः दंडंच तत्समंविवादास्पदीभूतद्रव्यसमंराज्ञेदापयेदितिविधिः यद्यपिगृहक्षेत्रादिषु तत्समो दंडोनसंभवति तथा
पिमर्यादायाःप्रभेदेचसीमातिक्रमणेतथेत्यादिवक्ष्यमाणोदंडोद्रष्टव्यः अथतत्समदंडेनापहर्तुर्दमनंनभवति बहुधनत्वेनतदाशक्त्य
पेक्षंधनंदापयेत् यावतातस्यदर्पोपशमोभवति तावद्दापयेत् दंडोदमनादित्याहुस्तेनादांतान्दमयेदितिदंडग्रहणस्यदमनार्थत्वात्
यस्यतु तत्सममपिद्रव्यंनास्ति सोपियावतापीड्यतेतावद्दाप्यः यस्यपुनःकिमपिधनंनास्ति असौधिग्दंडादिनादमनीयः तथाचमनुः

आध्यादीनांविहर्तारंधनिनेदापयेद्धनम् दंडंचतत्समंराज्ञेशक्त्यपेक्षमथापिवा २७

धिग्दंडंप्रथमंकुर्याद्वाग्दंडंतदनंतरम् तृतीयंधनदंडंतुवधदंडमतःपरम् वधदंडोपिशारीरोब्राह्मणव्यतिरिक्तानांदशधादर्शितः
तथाहमनुः दशस्थानानिदंडस्यमनुःस्वायंभुवोब्रवीत् त्रिषुवर्णेषुयानिस्युरक्षतोब्राह्मणोव्रजेत् उपस्थमुदरंजिह्वाहस्तौपादौच
पंचमम् चक्षुर्नासाचकर्णौचधनंदेहस्तथैवचेति एतेषांयन्निमित्तापराधस्तत्रैवोपस्थादौनिग्रहःकार्यइतिद्रष्टव्यम् कर्मवाकार
यितव्यो बंधनागारंवाप्रवेशयितव्यः यथोक्तंकात्यायनेन धनदानासहंबुध्वास्वाधीनंकर्मकारयेत् अशक्तौबंधनागारंप्रवे

श्योब्राह्मणाद्दत्तइति ब्राह्मणस्यपुनर्द्रव्याभावेकर्मवियोगादीनिप्रयोज्यानि यथाहगौतमः कर्मवियोगविख्यापननिर्वासनांककरणान्यवृत्तावितिति नारदेनापि वधःसर्वस्वहरणंपुरान्निर्वासनांकने तदंगच्छेदइत्युक्तोदंडउत्तमसाहसइति अविशेषेणसर्वेषामेषदंडविधिः स्मृतइत्युक्त्वोक्तम् वधाद्दतेब्राह्मणस्यनवधंब्राह्मणोर्हतीति शिरसोमुंडनंदंडस्तस्यनिर्वासनंपुरात् ललाटेचाभिशस्तांकःप्रयाणंगर्दभेनचेति अंकनेचव्यवस्थादर्शिता गुरुतल्पेभगःकार्यःसुरापानेसुराध्वजः स्तेयेतुश्वपदंकार्यंब्रह्महण्यशिराःपुमानिति यत्तुचक्षुर्निरोधोब्राह्मणस्येत्यापस्तंबवचनम् ब्राह्मणस्यपुरान्निर्वासनसमयेवस्त्रादिनाचक्षुर्निरोधःकर्तव्यइति

आगमोप्यधिकोभोगाद्विनापूर्वक्रमागतात्

तस्यार्थोनिचक्षुरुद्धरणम् अक्षतोब्राह्मणोव्रजेत् नशारीरोब्राह्मणदंडइत्यादिमनुगौतमवचनविरोधातइत्यलंप्रसंगेन २७ स्वत्वाव्यभिचारित्वेनभोगस्यस्वत्वेप्रामाण्यमुक्तम् भोगमात्रस्यस्वत्वव्यभिचारित्वात्कीदृशोभोगःप्रमाणमित्यतआह स्वत्वहेतुःप्रतिग्रहक्रयादिरागमः सभोगादप्यधिकोबलीयान् स्वत्वबोधने भोगस्यागमसापेक्षत्वात यथाहनारदः आगमेनविशुद्धेनभोगोयातिप्रमाणताम् अविशुद्धागमोभोगःप्रामाण्यंनैवगच्छतीति नचभोगमात्रात्स्वत्वावगमः परकीयस्याप्यपहारादिनोपभोगप्रसंगात् अतएवभोगंकेवलतोयस्तुकीर्तयेन्नागमंक्वचित् भोगच्छलापदेशेनविज्ञेयःसतुतस्करइतिस्मर्यते अतश्चसागमोदीर्घकालोनिरंतरोनिराक्रो

शः प्रत्यर्थिप्रत्यक्षश्चेति पंचविशेषणयुक्तो भोगः प्रमाणमित्युक्तं भवति तथाच स्मर्यते सागमो दीर्घकालश्चाविच्छेदोपरवोज्झितः प्रत्यर्थि
संनिधानोपि परिभोगोपि पंचधेति क्वचिदागमनिरपेक्षस्यापि भोगस्य प्रामाण्यमित्याह विनापूर्वक्रमागतादिति पूर्वेषां पित्रादीनां त्रयाणां क्र
मः पूर्वक्रमः तेनागतो यो भोगस्तस्माद्विना आगमोभ्यधिक इति संबंधः स पुनरागमादभ्यधिकः आगमनिरपेक्षः प्रमाणमित्यर्थः न
त्वाप्यागमज्ञाननिरपेक्षो न सत्तानिरपेक्षः सत्तातु तेनैवावगम्यत इति बोद्धव्यम् विनापूर्वक्रमागतादित्येतच्च स्मार्तकालप्रदर्शनार्थम् आ
गमोभ्यधिको भोगादितिच स्मार्तकालविषयम् अतश्च स्मरणयोग्ये काले योग्यानुपलब्ध्या आगमाभावनिश्चयासंभवादागमज्ञा
नसापेक्षस्यैव भोगस्य प्रामाण्यम् अस्मार्ते तु काले योग्यानुपलब्ध्यभावेनागमाभावनिश्चयासंभवादागमज्ञाननिरपेक्ष एव संत
तो भोगः प्रमाणं एतदेव स्पष्टीकृतं कात्यायनेन स्मार्तकाले क्रिया भूमेः सागमा भुक्तिरिष्यते अस्मार्तेनागमाभावात्क्रमात्त्रिपुरु-
षागतेति स्मार्तश्च कालो वर्षशतपर्यंतः शतायुर्वै पुरुष इति श्रुतेः अनुगमाभावादिति योग्यानुपलब्ध्यभावेनागमाभावनिश्चया
भावादिति अतश्च वर्षशताधिको भोगः संततोप्रतिरवः प्रत्यर्थिप्रत्यक्षश्चागमाभावे वानिश्चिते अव्यभिचारादाक्षिप्तागमः
स्वत्वं गमयति अस्मार्तेपि काले नागमस्मृतिपरंपरायां सत्यां न भोगः प्रमाणमत एवानागमं तु यो भुंक्ते बहून्यब्दशतान्यपि चौर
दंडेन तं पापं दंडयेत्पृथिवीपतिरित्युक्तं नचानागमं तु यो भुंक्ते इत्येकवचननिर्देशाद्बहून्यब्दशतान्यपीति अपिशब्दप्रयोगात्
प्रथमस्य पुरुषस्य निरागमे चिरकालोपभोगेपि दंडविधानमिति मंतव्यम् द्वितीये तृतीये वा पुरुषे निरागमस्य भोगस्य प्रामाण्य

प्रसंगान्नचैतदिष्यते आदौतुकारणंदानंमध्येभुक्तिस्तुसागमेतिनारदस्मरणात् तस्मात्सर्वत्रनिरागमोपभोगेअनागमंतुयोभुंक्तइ
त्येतद्द्रष्टव्यम् यदप्यन्यायेनापियद्भुक्तंपित्रापूर्वनरैस्त्रिभिः नतच्छक्यमपाहर्तुंक्रमात्त्रिपुरुषागतमिति तदपिपित्रासहपूर्व
नरैस्त्रिभिरितियोज्यम् तत्रापिक्रमात् त्रिपुरुषागतमित्यस्मार्तकालोपलक्षणम् त्रिपुरुषविवक्षायामेकवर्षाभ्यंतरेपिपुरुषत्र
यातिक्रमसंभवात् द्वितीयेवर्षेनिराग मस्यभोगस्यप्रामाण्यप्रसंगः तथासतिस्मार्तेकालेक्रियाभूमेःसागमाभुक्तिरिष्यत
इतिस्मृतिविरोधः अन्यायेनापियद्भुक्तमित्येतच्चान्यायेनापिभुक्तमपहर्तुंनशक्यम् किंपुनरन्यायानिश्चययइतिव्याख्येयमपि

आगमेपिबलंनैवभुक्तिस्तोकापियत्रनो २८

शब्दश्रवणात् यच्चोक्तं यद्विनागममत्यंतंभुक्तंपूर्वैस्त्रिभिर्भवेत् नतच्छक्यमपाहर्तुंक्रमात्त्रिपुरुषागतमिति अत्राप्यत्यंतमाग
मंविनेति अत्यंतमुपलभ्यमानमागमंविनेतिव्याख्येयम् नपुनरागमस्वरूपंविनेति आगमस्वरूपाभावेभोगशतेनापिनस्वत्वंभव-
तीत्युक्तम् क्रमात्त्रिपुरुषागतमित्येतदुक्तार्थं ननुस्मरणयोग्येकालेभोगस्यागमसापेक्षस्यप्रामाण्यमनुपपन्नम् तथाहि य
द्यागमः प्रमाणांतरेणावगतस्तदा तेनैवस्वत्वावगमान्नभोगस्यस्वत्वेआगमेवाप्रामाण्यं अथप्रमाणांतरेणागमोनावगतःकथं
तद्विशिष्टोभोगःप्रमाणं उच्यते प्रमाणांतरेणावगतागमसहितएवनिरंतरोभोगःकालांतरेस्वत्वंगमयति अवगतोप्यागमो

२०

भुक्तेः कैश्चिद्विशेषणैर्युक्तायाः प्रामाण्यं दर्शयिष्यन् कस्याश्चिद्भुक्तेः कार्यांतरमाह परेणासंबंधेन भुज्यमानां भुवं धनं वा पश्यतः अब्रुव
तः मदीयेयं भूः नत्वया भोक्तव्येति अप्रतिषेधयतः तस्या भूमेर्विंशतिवार्षिकी अप्रतिरवं विंशतिवर्षोपभोगनिमित्ता हानिर्भवति ध
नस्य तु हस्त्यश्वादेर्दशवार्षिकी हानिः ननु एतदनुपपन्नम् नह्यप्रतिषेधात्स्वत्वमपगच्छति अप्रतिषिद्धस्य दानविक्रियादिवत् स्व
त्वनिवृत्तिहेतुत्वस्य लोकशास्त्रयोरप्रसिद्धत्वात् नापि विंशतिवर्षोपभोगात् स्वत्वम् उपभोगस्य स्वत्वे प्रमाणत्वात् प्रमाणस्य च
प्रमेयं प्रत्यनुत्पादकत्वात् रिक्थक्रियादिषु स्वत्वकारणहेतुषु अपाठाच्च तथाहि स्वामी रिक्थक्रियासंविभागपरिग्रहाधिगमेषु ब्राह्मण

पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी परेण भुज्यमानाया धनस्य दशवार्षिकी २५

स्याधिकं लब्धं क्षत्रियस्य विनिर्जितम् निर्विष्टं वैश्यशूद्रयोरित्यष्टावेव स्वत्वकारणहेतून् गौतमः पठति नभोगम् नचेदमेव वचनं विंश
तिवर्षोपभोगस्य स्वत्वापत्तिहेतुत्वं प्रतिपादयतीति युक्तम् स्वत्वस्य स्वत्वहेतूनां च लोकप्रसिद्धत्वेन शास्त्रैकसमधिगम्यत्वाभा-
वात् एतच्च विभागप्रकरणे निपुणतरमुपपादयिष्यते गौतमवचनं तु नियमार्थं अपि च अनागमं च यो भुंक्ते बहून्यब्दशता
न्यपि चौरदंडेन तं पापं दंडयेत्पृथिवीपतिरित्येतदनागमोपभोगस्य स्वत्वहेतुत्वे विरुध्यते नचानागमं तु यो भुंक्ते इत्येतत्परोक्षभो
गविषयं पश्यतोऽब्रुवत इति प्रत्यक्षभोगविषयमिति युक्तं वक्तुं अनागमं तु यो भुंक्ते इत्यविशेषाभिधानात् नोपभोगे बलं का

र्यमाहर्त्रा तत्कृतेन वा पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थित इति कात्यायनवचनाच्च समक्षभोगे च हानिकरणाभावेन हाने रसंभवात् न चैतन्मंतव्यम् आधिप्रतिग्रहक्रयेषु पूर्वस्याः क्रियायाः प्राबल्याद्पवादेन भूविषये विंशतिवर्षोपभोगयुक्तायाः धनविषये दशवर्षोपभोगयुक्तायाः उत्तरविषयक्रियायाः प्राबल्यमनेनोच्यत इति यतस्तेषूत्तरैव क्रिया तत्त्वतो नोपपद्यते स्वमेव ह्याधेयं देयं विक्रेयं च भवति न चाहितस्य दत्तस्य विक्रीतस्य वा स्वत्वमिति अस्वस्य दाने प्रतिग्रहे च दंडः स्मर्यते अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति उभौ तौ चौरवच्छास्यौ दाप्यौ चोत्तमसाहसमिति तथाध्यादीनां त्रयाणामपवादत्वे स्यश्लोकस्याधिसीमादीनामुत्तरश्लोकेऽपवादो नोपपद्यते तस्माद्भूम्यादीनां हानिरनुपपन्नैव नापि व्यवहारहानिः यतः उपेक्षां कुर्वतस्तस्य तूष्णींभूतस्य तिष्ठतः काले विपन्ने पूर्वोक्ते व्यवहारो न सिध्यतीति नारदेनोपेक्षायां लिंगाभावकृता व्यवहारहानिरुक्ता न वस्त्वभावकृता तथा मनुनापि अजडश्चेदपोगंडो विषयश्चास्य भुज्यते भग्नं तद्व्यवहारेण भोक्ता तद्द्रव्यमर्हतीति व्यवहारतो भंगो दर्शितो न वस्तुतः व्यवहारभंगश्चैवं भोक्ता किल वदति अजडोयमपोगंडो बालोयमस्य सन्निधौ विंशतिवर्षाण्यप्रतिरवं मया भुक्तं तत्र बहवः साक्षिणः संति यद्यस्य स्वमन्यायेन मया भुज्यते तदायं किमित्येतावंतं कालमुदास्ते इति तत्र चायं निरुत्तरो भवतीति एवं निरुत्तरस्यापि वास्तवो व्यवहारो भवत्येव छलं निरस्य भूतेन व्यवहारान्नयेन्नृप इति नियमात् अथ मतं यद्यपि न वस्तुहानिर्नापि व्यवहारहानिस्तथापि पपश्यतो प्रतिषेधतो व्यवहारहानिशंका भवतीति तन्निवृत्तये तूष्णीं न स्थातव्यमित्युपदिश्यत इति तच्च न स्मार्तकालायां भुक्ते हानिशंकाकारणत्वाभावात् तू

र्षाणि न स्थातव्यमित्येतावता तन्मात्राभिधित्सायां विंशतिग्रहणमविवक्षितं स्यात् अथोच्यते विंशतिग्रहणमूर्ध्वं पत्रदोषोद्भावननिराकर
णार्थम् यथाह कात्यायनः शक्तस्य संनिधावर्थो यस्य लेख्येन भुज्यते विंशतिवर्षाण्यतिक्रांतं तत्पत्रं दोषवर्जितमिति तदपि न आ
ध्यादिष्वपि विंशतेरूर्ध्वं पत्रदोषोद्भावननिराकरणस्य समत्वेनापवादासंभवात् यथाह कात्यायनः अथ विंशतिवर्षाणि आधिर्भुक्तः स
निश्चितः तेन लेख्येन तत्सिद्धिर्लेख्यदोषविवर्जिता तथा सीमाविवादे निर्णीते सीमापत्रं विधीयते तस्य दोषाः प्रवक्तव्या यावद्वर्षाणि
विंशतिरिति एतेन धनस्य दशवार्षिकीत्येतदपि प्रत्युक्तं तस्मादस्य श्लोकस्य सत्योऽर्थो वक्तव्यः उच्यते भूमेर्धनस्य च फलहानिरिह विवक्षिता
न वस्तुहानिर्नापि व्यवहारे हानिः तथाहि निराक्रोश विंशतिवर्षोपभोगादूर्ध्वं यद्यपि स्वामी न्यायतः क्षेत्रं लभेत तथापि फलानुसरणं न लभ
ते अप्रतिषेधलक्षणात् स्वापराधादस्माच्च वचनात् परोक्षभोगे तु विंशतेरूर्ध्वमपि फलानुसरणं लभत एव पश्यत इति वचनात् प्रत्य
क्षभोगे च साक्रोशे अब्रुवत इति वचनात् विंशतेः प्राक् प्रत्यक्षे निराक्रोशे च लभते विंशतिग्रहणात् ननु तदुत्पन्नस्यापि फलस्य स्वत्वा
त्तद्धानिरनुपपन्नैव बाढं तस्य स्वरूपविनाशेन तथैवावस्थाने यथा तदुत्पन्नपूगपनसवृक्षादीनाम् यत्पुनस्तदुत्पन्नमुपभोगान्नष्टं तत्र
स्वरूपनाशादेव स्वत्वनाशः अनागमं तु यो भुंक्ते बहून्यब्दशतान्यपि चौरदंडेन तं पापं दंडयेत्पृथिवीपतिरित्यनेन वचनेन निष्क्रयरूपेण
गणयित्वा चौरवत्तत्समद्रव्यदानं प्राप्तं हानिर्विंशतिवार्षिकीति अपोद्यते राजदंडः पुनरस्त्येव विंशतेरूर्ध्वमपि अनागमोपभोगादप
वादाभावाच्च तस्मात्स्वाम्युपेक्षालक्षणस्वापराधादस्माच्च वचनाद्विंशतेरूर्ध्वं फलं नष्टं न लभत इति स्थितम् एतेन धनस्य दशवार्षिकीत्येत

द्पिव्याख्यातम् २५ अस्यापवादमाह आधिश्चसीमाचउपनिक्षेपश्च आधिसीमोपनिक्षेपाः जडश्चबालश्चजडबालौ तयोर्धनेजडबालधने आ
धिसीमोपनिक्षेपाश्चजडबालधनेच आधिसीमोपनिक्षेपजडबालधनानितैर्विना उपनिक्षेपोनामरूपसंख्याप्रदर्शनेनरक्षणार्थंपरस्यहस्ते
निहितंद्रव्यं यथाहनारदः स्वंद्रव्यंयत्रविस्रंभान्निक्षिपत्यविशंकितः निक्षेपोनामतत्प्रोक्तंव्यवहारपदंबुधैरिति उपनिधानमुपनिधिः
आध्यादिषुपश्यतोऽब्रुवतोपिभूमेर्विंशतेरूर्ध्वं धनस्यदशभ्योवर्षेभ्यऊर्ध्वमपिहानिर्नभवति पुरुषापराधस्यतथाविधस्याभावात्
उपेक्षाकारणस्यतत्रासंभवात् तथाहि आधेराधित्वोपाधिकएवभोगइत्यपेक्षायामपिनपुरुषापराधः सीम्नश्चिरकृततुषांगारादिचिन्हैःस्व

आधिसीमोपनिक्षेपजडबालधनैर्विना तथोपनिधिराजस्त्रीश्रोत्रियाणांधनैरपि २५

साध्यत्वादुपेक्षासंभवति उपनिक्षेपोपनिध्योर्भुक्तेःप्रतिषिद्धत्वात्प्रतिषेधातिक्रमोपभोगेच सोदयालाभादुपेक्षोपपत्तिः जडबाल
योर्जडत्वाद्बालत्वादुपेक्षायुक्तैव राज्ञोबहुकार्यव्याकुलत्वात् स्त्रीणामज्ञानात् अप्रागल्भ्याच्च श्रोत्रियस्याध्ययनाध्यापनतदर्थवि
चारानुष्ठानव्याकुलत्वादुपेक्षायुक्तैव तस्मादाध्यादिषुसर्वत्रोपेक्षाकारणेसंभवात् समस्तभोगेनिराक्रोशेचनकदाचिदपिफलहानिः
२५

भोगरहितो न कालांतरे स्वत्वं गमयितुमलम् मध्ये दानविक्रयादिना स्वत्वागमसंभवादिति सर्वमनवद्यम् आगमसापेक्षो भोगः प्र
माणमित्युक्तं आगमस्तर्हि भोगनिरपेक्ष एव प्रमाणमित्यत आह यस्मिन्नागमे स्वल्पापि भुक्तिर्नैनास्ति तस्मिन्नागमे बलं सं
पूर्णता नैवास्ति अयमभिसंधिः स्वस्वत्वनिवृत्तिः परस्वत्वापादनं च दानं परस्वत्वापादनं च परो यदि स्वीकरोति तदा संपद्यते-
नान्यथा स्वीकारश्च त्रिविधः मानसो वाचिकः कायिकश्चेति तत्र मानसो ममेदमिति संकल्परूपः वाचिकस्तु ममेदमित्या
द्यभिव्याहारोल्लेखी सविकल्पकः प्रत्ययः कायिकस्तु पुनरुपादानाभिमर्शनादिरूपोनेकविधः तत्र च नियमः स्मर्यते दद्यात्कृष्णाजिनं
पृष्ठे गां पुच्छे करिणं करे केसरेषु तथैवाश्वं दासीं शिरसि दापयेदिति आश्वलायनोऽप्याह अनुमंत्रयेत्प्राण्यभिमृशेदप्राणिं कन्यां चेति त
त्र हिरण्यवस्त्रादावुदकदानानंतरमेवोपादानादिसंभवात् त्रिविधोपि स्वीकारः संपद्यते क्षेत्रादौ पुनः फलोपभोगव्यतिरेकेण कायि
कस्वीकारासंभवात् स्वल्पेनाप्युपभोगेन भवितव्यम् अन्यथा दानक्रियादेः संपूर्णता न भवतीति फलभोगलक्षणकायिकस्वीकार
विकल आगमो दुर्बलो भवति तत्सहितादागमात् एतच्च द्वयोः पूर्वापरकालापरिज्ञाने पूर्वापरकालपरिज्ञाने तु विगुणोपि पूर्व-
कालागम एव बलीयानिति अथवा लिखितं साक्षिणो भुक्तिः प्रमाणमित्युक्तं एतेषां समवाये कुत्र कस्य वा प्राबल्यमित्यत्रेदमुपति
ष्ठते आगमोभ्यधिको भोगाद्विना पूर्वक्रमागतात् आगमेपि बलं नैव भुक्तिः स्तोकापि यत्र नो इति अयमर्थः आद्ये पुरुषे साक्षि
भिर्भावित आगमो भोगादप्यधिको बलवान् पूर्वक्रमागतान्द्भोगाद्विना स पुनः पूर्वक्रमागतो भोगश्चतुर्थपुरुषे लिखितेन भावितात्

दागमाद्बलवान् मध्येतुभोगरहितादागमात्स्तोकभोगसहितोप्यागमोबलवानिति एतदेवनारदेनस्पष्टीकृतम् आदौतुकारणंदानं मध्येभुक्तिस्तुसागमा कारणंभुक्तिरेवैकासंततायाचिरंतनीति २८ पश्यतोब्रुवतइत्यत्रविंशतिवर्षोपभोगादूर्ध्वंभूमेर्धनस्यापिदश वर्षोपभोगादूर्ध्वंफलानुसरणंनभवतीत्युक्तम् तत्रफलानुसरणवद्दंडानुसरणमपिनभविष्यतीत्याशंक्यपुरुषव्यवस्थयाप्रमाणव्यवस्थयाच दंडव्यवस्थांदर्शयितुमाह येनपुरुषेणभूम्यादेरागमःस्वीकारःकृतःसपुरुषःकुतस्तेक्षेत्रादिकमित्यभियुक्तस्तमागमंप्रतिग्रहादेरितिलिखितादिभिरुद्धरेत्भावयेत् अनेनचाद्यस्यपुरुषस्यागममनुद्धरतोदंडइत्युक्तंभवति तत्सुतोद्वितीयो

आगमस्तुकृतोयेनसोभियुक्तस्तमुद्धरेत् नतत्सुतस्तत्सुतोवाभुक्तिस्तत्रगरीयसी २९

भियुक्तोनागममुद्धरेत् किंतु अविच्छिन्नाप्रतिरवसमक्षभोगम् अनेनचागममनुद्धरतोद्वितीयस्यनदंडोपितुविशिष्टंभोगमनुद्धरतोदंडइतिप्रतिपादितम् तत्सुतस्तृतीयोनागमंनापिविशिष्टंभोगमुद्धरेदपितुक्रमागतभोगमात्रम् अनेनापितृतीयस्यक्रमायातभोगानुद्धरणेदंडो नागमानुद्धरणेनविशिष्टभोगानुद्धरणेचेत्यभिहितं तत्रतयोर्द्वितीयतृतीययोर्भुक्तिरेवगरीयसी तत्रापिद्वितीयेगुरुस्तृतीयेगरीयसीतिविवेक्तव्यं त्रिष्वप्यागमानुद्धरणेऽर्थहानिःसमानैवदंडेतुविशेषइतितात्पर्यार्थः उक्तंच आगमस्तुकृतोयेनसदंड्यस्तमनुद्धरन् नतत्सुतस्तत्सुतोवाभोग्यहानिस्तयोरपीति २९

अस्मार्तकालोपभोगस्यागमज्ञाननिरपेक्षस्यप्रामाण्यमुक्तं विनापूर्वक्रमागतादित्यत्र तस्यापवादमाह यदापुनराहर्त्रादिभिरभियुक्तोरू
तव्यवहारनिर्णयएवपरेतःपरलोकंगतोभवेत्तदा तस्यरिक्थीपुत्रादिस्तमागममुद्धरेत् यस्मात्तत्रतस्मिन्व्यवहारेभुक्तिरागमरहितासा
क्ष्यादिभिःसाधितापिनप्रमाणं पूर्वाभियोगेनभोगस्यसापवादत्वात् नारदेनाप्युक्तम् नवारूढविवादस्यप्रेतस्यव्यवहारिणःपुत्रे-
णसोऽर्थःसंशोध्योनतंभोगोनिवर्तयेदिति अनिर्णीतव्यवहारेव्यवहर्तरिप्रेतेव्यवहारीननिवर्ततेइतिस्थितम् ३० निर्णीतिव्यवहा

योभियुक्तःपरेतःस्यात्तस्यरिक्थीतमुद्धरेत् नतत्रकारणंभुक्तिरागमेनविनाकृता ३० नृपेणाधिकृताःपूगाःश्रेणयोऽ
थकुलानिच पूर्वपूर्वंगुरुज्ञेयंव्यवहारविधौनृणाम् ३१ रेस्थितेचव्यवहर्तरिवाव्यवहारः क्वचित्पुनःप्रवर्तते क्वचिन्नप्रवर्त

तइतिव्यवस्थासिद्धयेव्यवहारदर्शिनांबलाबलमाह नृपेणराज्ञाअधिकृताः व्यवहारदर्शनेनियुक्ताःराज्ञासभासदःकार्यइत्यादि
नोक्ताः पूगाः समूहाः भिन्नजातीनांभिन्न वृत्तीनांएकस्थाननिवासिनाम् यथाग्रामनगरादयः श्रेणयोनानाजातीयानामेकजाती-
नामप्येकजातीयकर्मोपजीविनांसंघाताः यथाहेडाबुकादीनांतांबूलिककुविंदचर्मकारादीनांच कुलानि ज्ञातिसंबंधिबंधूनांसमूहाः
एतेषांनृपाधिकृतादीनांचतुर्णांपूर्वपूर्वं यद्यत्पूर्वपठितंतत्तद्गुरुबलवज्ज्ञेयम् वेदितव्यम् नृणांव्यवहर्तॄणांव्यवहारविधौव्यवहारदर्शी
नकार्ये एतदुक्तंभवति नृपाधिकृतैर्निर्णीतिव्यवहारेपराजितस्ययद्यप्यसंतोषःकुदृष्टिबुद्ध्याभवति तथापिनपूगादिषुपुनर्व्यवहारो

भवति एवंपूगनिर्णीतेपिनश्रेण्यादिगमनम् तथाश्रेणीनिर्णीतेकुलगमनंनभवति कुलनिर्णीतेतुश्रेण्यादिगमनम् श्रेणिनि र्णीते पूगादिगमनम् पूगनिर्णीते नृपाधिकृतगमनंभवतीति नारदेनपुनर्नृपाधिकृतौनिर्णीतेपिव्यवहारे नृपगमनंभवतीत्यु क्तम् कुलानिश्रेणयश्चैवगणाश्चाधिकृतानृपाः प्रतिष्ठाव्यवहाराणांगुर्वेषामुत्तरोत्तरमिति तत्रचनृपगमनेसोत्तरसभ्यै नराज्ञापूर्वैःसभ्यैः सपणव्यवहारे निर्णीयमानेयद्यसौकुदृष्टवादे पराजितस्तदासौदंड्यः अथासौजयतितदाधिकृताःस भ्यादंड्याः दुर्बलैर्व्यवहारदर्शिभिर्दृष्टोव्यवहारःपरावर्तते प्रबलदृष्टस्तु ननिवर्ततइत्युक्तम् ३१ इदानींप्रबलदृष्टेपिव्यवहारः

बलोपाधिविनिर्वृत्तान्व्यवहारान्निवर्तयेत् स्त्रीनक्तमंतरागारबहिःशत्रुकृतांस्तथा ३२ मत्तोन्मत्तार्तव्यसनिबालभीता दियोजितः असंबंधकृतश्चैवव्यवहारोनसिध्यति ३३

कश्चिन्निवर्ततइत्याह बलेनबलात्कारेणउपाधिनाभयेनविनिर्वृ त्तान्निष्पन्नान्व्यवहारान्निवर्तयेत् तथास्त्रीभिर्नक्तंरात्रावस्त्रीभिरपि अंतरागारेगृहाभ्यंतरे बहिर्ग्रामादिभ्यः शत्रुभिश्चकृतान्व्य वहारान्निवर्तयेदितिसंबंधः ३२ अपिच मत्तोमदनीयद्रव्येण उन्मत्तउन्मादेन पंचविधेनवातपित्तश्लेष्मसंनिपातग्रहसंभवेनोपसृ ष्टः आर्तोव्याध्यादिना व्यसनमिष्टवियोगोनिष्टप्राप्तिःतज्जनितंदुःखं तद्वान्व्यसनी बालोव्यवहारायोग्यः भीतोऽरातिभ्यः आदिग्रह णात्पुरराष्ट्रादिविरुद्धः पुरराष्ट्रविरुद्धश्चयश्चराज्ञाविसर्जितः अनादेयोभवेद्वादोधर्मविद्भिरुदाहृतइतिमनुस्मरणात् एतैर्योजि

तः कृतो व्यवहारो न सिध्यति अनियुक्ता संबंधकृतोपि व्यवहारो न सिध्यतीति संबंधः यत्तु स्मरणम् गुरोः शिष्ये पितुः पुत्रे दंपत्योः
स्वामिभृत्ययोः विरोधेपि मिथस्तेषां व्यवहारो न सिध्यतीति तदपि गुरुशिष्यादीनामात्यंतिकव्यवहारप्रतिषेधपरं न भवति तेषामपि
कथंचिद्व्यवहारस्येष्टत्वात् तथाहि शिष्यादिशिष्टिरवधेनाशक्तौ रज्जुवेणुविदलाभ्यां तनुभ्यामन्येन घ्नन् राज्ञा शास्य इति गौतमस्मर-
णात् नोत्तमांगे कथंचनेति मनुस्मरणाच्च यदि गुरुः कोपावेशवशान्महता दंडेनोत्तमांगे ताडयति तदा स्मृतिव्यपेतेन मार्गेणाधर्षितः शिष्यो यदि राज्ञे
निवेदयति तदा भवत्येव व्यवहारपदम् तथा भूर्या पितामहोपात्तेत्यादिवचनात् पितामहोपात्ते भूम्यादौ पितापुत्रयोः स्वाम्ये समाने यदि पिता विक्र-
यादिना पितामहोपात्तं भूम्यादि नाशयति तदा पुत्रो यदि धर्माधिकरणं प्रवेशयति तदा पितापुत्रयोरपि भवत्येव व्यवहारः यथा दुर्भिक्षे-
व्याधिकार्ये च व्याधौ संप्रतिरोधके गृहीतं स्त्रीधनं भर्ता नाकामो दातुमर्हतीति स्मरणात् दुर्भिक्षादिव्यतिरेकेण यदि स्त्रीधनं भर्ता व्ययीकृ-
त्य विद्यमानधनोपि याच्यमानो न ददाति तदा दंपत्योरपीष्यत एव व्यवहारः यथा भक्तदासस्य स्वामिना सह व्यवहारं वक्ष्यति गर्भदास-
स्यापि गर्भदासादीनधिकृत्य यश्चैषां स्वामिनं कश्चिन्मोचयेत्प्राणसंशयात् दासत्वात्स विमुच्येत पुत्रभागं लभेत चेति नारदोक्तत्वा-
त् तदमोचने पुत्रभागादाने च स्वामिना सह व्यवहारः केन वार्यते तस्मात् दृष्टादृष्टयोः श्रेयस्करो न भवति गुर्वादिभिर्व्यवहार इति प्र-
थमं शिष्यादयो निवारणीया राज्ञा सभ्येनेति गुरोः शिष्य इत्यादेः श्लोकस्य तात्पर्यार्थः अत्यंतनिर्बंधे तु शिष्यादीनामप्युक्तरीत्या
प्रवर्तनीयो व्यवहारः यदपि एकस्य बहुभिः सार्द्धं स्त्रीणां प्रेष्यजनस्य च अनादेयो भवेद्वादो धर्मविद्भिरुदाहृत इति नारदवचनम्

तत्रैकस्यापिगणद्रव्यंहरेद्यस्तुसंविदंलंघयेत्त्रयः तथाएकंघ्नंतंबहूनांचेत्यादिस्मरणादेकार्यैर्बहुभिः सार्द्धंव्यवहारइष्यतएवेतिभिन्नार्थैर्बहुभिरेकस्ययुगपद्व्यवहारोनभवतीतिद्रष्टव्यम् स्त्रीणामित्यपिगोपशौंडिकादिस्त्रीणांस्वातंत्र्याद्व्यवहारोभवत्येवेति तदन्यासांकुलस्त्रीणांपतिषुजीवत्सु तत्पारतंत्र्यादनादेयोव्यवहारइतिव्याख्येयं प्रेष्यजनस्यचेति एतदपिप्रेष्यजनस्यस्वामिपारतंत्र्यात् स्वार्थव्यवहारेपिस्वाम्यनुज्ञयैवव्यवहारोनान्यथेतियोजनीयम् ३२ परावर्त्यव्यवहारमुक्त्वाइदानींपरावर्त्यंद्रव्यमाह प्रनष्टंहिरण्यादि शौल्किकस्थानपालादिभिरधिगतंराज्ञेसमर्पितंयत्तद्राज्ञाधनिनेदातव्यम् यदिधनीरूपसंख्यादिभिर्लिंगैर्भावयति यदिनभावयति तद्वातत्समंदंड्यःअसत्य

प्रनष्टाधिगतंदेयंनृपेणधनिनेधनम् विभावयेन्नचेल्लिंगैस्तत्समंदंडमर्हति ३४

वादित्वात् अधिगमस्यस्खलनिमित्तत्वात् सत्वेभासेतत्त्यराद्वृत्तिरनेनोक्ता अत्रचकालावधिंवक्ष्यति शौल्किकैःस्थानपालैर्वानष्टापहृतमाहृतम् अर्वाक्संवत्सरात्स्वामीहरेतपरतोनृपइति मनुनापुनः संवत्सरत्रयमवधित्वेननिर्दिष्टम् प्रनष्टस्वामिकंरिक्थं राजात्र्यब्दंनिधापयेत् अर्वाक्त्र्यब्दाद्धरेत्स्वामीपरतोनृपतिर्हरेदिति तत्रवर्षत्रयपर्यंतमवश्यंरक्षणीयम् तत्रयदिसंवत्सरादर्वाक्स्वाम्यागच्छेत्तदाकृत्स्नमेवदद्यात् यदापुनःसंवत्सरादूर्ध्वमागच्छतितदाकिंचिद्भागंरक्षणमूल्यंगृहीत्वाशेषंस्वामिनेदद्यात्

यथाह आददीतायषड्भागंप्रनष्टाधिगतान्नृपः दशमंद्वादशंवापिसतांधर्ममनुस्मरन्निति तत्रप्रथममेववर्षेकृत्स्नमेवदद्यात् द्वि
तीयेद्वादशंभागं तृतीयेदशमं चतुर्थादिषुषष्ठंभागंगृहीत्वाशेषंदद्यात् राजभागस्यचतुर्थोंशोऽधिगंत्रेदातव्यः स्वाम्यनागमेतुकृ
त्स्नस्यधनस्यचतुर्थमंशमधिगंत्रेदत्वाशेषंराजागृह्णीयात् तथाहगौतमः प्रनष्टस्वामिकमधिगम्यसंवत्सरंराज्ञारक्ष्यमूर्ध्व
मधिगंतुश्चतुर्थोंशोराज्ञः शेषमित्यत्रसंवत्सरमित्येकवचनमविवक्षितम् राजात्र्यब्दंनिधापयेदितिस्मरणात् हरेतपरतोनृपइ
त्येतदपिस्वामिन्यनागतेत्र्यब्दादूर्ध्वंव्ययीकरणाभ्यनुज्ञानतः परमागतेतुस्वामिनि व्ययीभूतेपिद्रव्येराजास्वांशमवतार्यतत्स-

राजालब्ध्वानिधिंदद्याद्विजेभ्योर्द्धंद्विजःपुनः विद्वानशेषमादद्यात्ससर्वस्यप्रभुर्यतः ३५ इतरेणनिधौलब्धेराजाष
ष्ठांशमाहरेत् अनिवेदितविज्ञातोदाप्यस्तंदंडमेवच ३५ मंदद्यात् एतच्चहिरण्यादिविषयम् गवादिविषयेवक्ष्यतिपणा

नेकशफेदद्यादित्यादिना ३४ रथ्याशुल्कशालादिनिपतितस्यसुवर्णादेर्नष्टस्याधिगमेविधिमुक्त्वा अधुनाभूमौचिरनिखातस्यसु
वर्णादेर्निधिशब्दवाच्यस्याधिगमेविधिमाह उक्तलक्षणंनिधिंराजालब्ध्वा अर्द्धंब्राह्मणेभ्योदत्वाशेषंकोशेनिवेशयेत् ब्राह्मणस्तु
विद्वान्श्रुताध्ययनसंपन्नः सदाचारोयदिनिधिंलभेततदासर्वमेवगृह्णीयात् यस्मादसौसर्वस्यजगतःप्रभुः इतरेणतुराजवि
द्ब्राह्मणव्यतिरिक्तेन अविद्ब्राह्मणक्षत्रियादिनानिधौलब्धेराजाषष्ठांशमधिगंत्रेदत्वाशेषंनिधिंस्वयमेवाहरेत् यथाहवसिष्ठः

अप्रज्ञायमानंवित्तंयोधिगच्छेद्राजातद्धरेत् षष्ठमंशमधिगंत्रे दद्यादिति गौतमोपि निध्यधिगमे राजधनंभवति नब्राह्मणस्याभिरूपस्य
अब्राह्मणोव्याख्याताषष्ठमंशंलभेतेत्येके इति अनिवेदितइतिकर्तरिनिष्ठा अनिवेदितश्चासौविज्ञातश्चराज्ञेप्यनिवेदिताविज्ञातः यःकश्चिन्नि
धिंलब्ध्वाराज्ञेननिवेदितवान् विज्ञातश्चराज्ञासस्वर्वंनिधिंदाप्यो दंडश्चशक्त्यपेक्षया अथनिधेरपिस्वाम्यागत्यरूपकसंख्यादिभिः स्वत्वंभाव
यतितदा तस्मैराजानिधिंदत्वाषष्ठंद्वादशंवांशंस्वयमाहरेद् यथाहमनुः ममायमितियोब्रूयान्निधिंसत्येनमानवः तस्याददीतषड्भागंरा
जाद्वादशमेववेति अंशविकल्पस्तुवर्णकालाद्यपेक्षयावेदितव्यः ३५ ३६ चौरहृतंप्रत्याह चौरैर्हृतंद्रव्यंचोरेभ्योविजित्य जानपदायस्व

देयंचौरहृतंद्रव्यंराज्ञाजानपदायतु अददद्धिसमाप्नोतिकिल्बिषंयस्यतस्यतत् ३७

देशनिवासिनेयस्यतत्द्रव्यंतस्यराज्ञादातव्यम् हियस्मात् अददत् अप्रयच्छत् यस्यतदपहृतंद्रव्यं तस्यकिल्बिषमाप्नोति तस्यचौरस्य
यथाहमनुः दातव्यंसर्ववर्णेभ्योराज्ञाचोरैर्हृतंधनम् राजातदुपयुंजानश्चौरस्याप्नोतिकिल्बिषमिति यदिचौरहस्तादादायस्वयमुपयुं
क्ते तदाचौरस्यकिल्बिषमाप्नोति अथचौरहृतमुपेक्षतेतद्राजानपदस्यकिल्बिषमथचौरहृताहरणाय यतमानोपिनशक्नुयादाहर्तुंतदा
तावद्धनंस्वकोशाद्दद्यात् यथाहगौतमः चौरहृतमवजित्ययथास्थानंगमयेत् कोशाद्वादद्यादिति कृष्णद्वैपायनोऽपि प्रत्याहर्तुं
नशक्तस्तुधनंचौरहृतंयदि स्वकोशात्तद्धिदेयंस्यादशक्तेनमहीक्षितेति साधारणासाधारणरूपांव्यवहारमातृकामभिधायाधुना

ष्टादशानां व्यवहारपदानामाद्यमृणादानपदं दर्शयति अशीतिभागो वृद्धिः स्यादित्यादिना आधिः प्रणश्येद्विगुणे धन इत्येवमंतेन त
च्चऋणादानं सप्तविधं ईदृशमृणं देयं ईदृशमदेयं अनेनाधिकारिणा देयं अस्मिन् समये देयं अनेन प्रकारेण देयमित्यधमर्णे पं
चविधम् उत्तमर्णे दानं ग्रहणविधिश्चेति द्विविधमिति एतच्च नारदेन स्पष्टीकृतम् ऋणं देयमदेयं च येन यत्र यथा च यत् दानग्रह
णधर्मश्च ऋणादानमिति स्मृतमिति ३७ तत्र प्रथममुत्तमर्णस्य दानविधिमाह तत्पूर्वकत्वादितरेषां मासिमासि प्रतिमासं बंधकं
विश्वासार्थं यदाधीयते आधिरिति यावत् बंधकेन सह वर्त्तत इति सबंधकः प्रयोगस्तस्मिन् सबंधके प्रयोगे प्रयुक्तमस्य द्रव्यस्य

अशीतिभागो वृद्धिः स्यान्मासि मासि सबंधके वर्णक्रमाच्छतं द्वित्रिचतुःपंचकमन्यथा ३८

अशीतितमो विभागो वृद्धिर्धर्म्या भवति अन्यथा बंधकरहिते प्रयोगे वर्णानां ब्राह्मणादीनां क्रमेण द्वित्रिचतुःपंचकं शतं धर्म्यं भवति ब्राह्म
णेऽधमर्णे द्विकं शतं क्षत्रिये त्रिकं वैश्ये चतुष्कं शूद्रे पंचकम् मासि मासीत्येव द्वौ वा त्रयो वा चत्वारो वा पंच वा द्वित्रिचतुःपंचाः अस्मिन् शते वृद्धि
र्दीयत इति द्वित्रिचतुःपंचकं शतम् तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयत इति संख्याया अतिशदंतायाः कन् तदंतविधिश्चात्र द्
ष्टव्यः वृद्धिर्वृद्धिश्चक्रवृद्धिः प्रतिमासं तु कालिका इच्छाकृता कारिता स्यात्कायिका कायकर्मणा इयं च वृद्धिर्मासि मासि गृह्यत इति कालि
का इयमेव वृद्धिर्दिवसगणनया विभज्य प्रतिदिवसं गृह्यमाणा कायिका भवति तथा च नारदेन कायिका कालिका चैव कारिता च

तथापरा चक्रवृद्धिश्चशाखेषुसस्यवृद्धिश्चतुर्विधेत्युक्तम् कायाविरोधिनीशश्वत्पणपादादिदायिका प्रतिमासंस्रवंतीयावृद्धिःसाकालि
कामता वृद्धिः साकारितानामाधमर्णेनस्वयंकृता वृद्धेरपिपुनर्वृद्धिश्चक्रवृद्धिरुदाहृतेति ३८ गृहीतृविशेषेणप्रकारांतरमाह कां
तारमरण्यं तत्रगच्छंतीतिकांतारगाः येवृद्ध्याधनंगृहीत्वाधिकलाभार्थमतिगहनं प्राणधनविनाशशंकास्थानंप्रविशंतिते दशकंशतंद
द्यु र्येचसमुद्रगास्तेविंशकंशतंमासिमासीत्येव एतदुक्तंभवति कांतारगेभ्योदशकंसामुद्रेभ्यश्चविंशकम् उत्तमर्णोदद्यात् मूल्यनाश
स्यापिशंकितत्वादिति इदानींकारितांवृद्धिमाह सर्वेवाब्राह्मणादयोधमर्णाः अबंधकेस्वबंधकेवास्व कृतांस्वाभ्युपगतांवृद्धिंसर्वासु

कांतारगास्तुदशकंसामुद्राविंशकंशतम् दद्युर्वास्वकृतांवृद्धिंसर्वेसर्वासुजातिषु ३९

जातिषुदद्युः क्वचिदकृतापिवृद्धिर्भवति यथाहनारदः नवृद्धिःप्रीतिदत्तानांस्यादनाकारिताक्वचित् अनाकारितमप्यूर्ध्वंवत्सरा-
र्द्धाद्विवर्द्धतइति यस्तुयाचितकंगृहीत्वादेशांतरंगतस्तंप्रतिकात्यायनेनोक्तं योयाचितकमादायतमदत्वादिशंव्रजेत् उर्ध्वंसंवत्सरा-
त्तस्यतद्धनंवृद्धिमाप्नुयादिति यश्चयाचितकमादाययाचितोप्यदत्वादेशांतरंव्रजति तंप्रतितेनैवोक्तं कृतोद्धारमदत्वायोयाचित-
स्तुदिशंव्रजेत् ऊर्ध्वंमासत्रयात्तस्यतद्धनंवृद्धिमाप्नुयादिति यःपुनःस्वदेशेस्थितएवयाचितोयाचितकंनददाति तंयाचितकाला
दारभ्यवृद्धिंदापयेद्राजा यथाह स्वदेशेपिस्थितोयस्तुनदद्याद्याचितःक्वचित् तंततोकारितांवृद्धिमनिच्छंतंचदापयेदिति अना

कारितवृद्धेरपवादोनोक्तः पण्य मूल्यंभृतिर्न्यासो दंडोयश्चप्रकल्पितः वृथादानाक्षिकपणा वर्द्धंतेनाविवक्षिताइति अविवक्षिताअनाकारि
ताइति ३९ अधुनाद्रव्यविशेषेणवृद्धिविशेषमाह संततिरेववृद्धिः पशूनांस्त्रीणांपोषणासमर्थस्य तत्पुष्टिसंततिकामस्यप्रयोगःसंभव
ति ग्रहणंचक्षीरपरिचर्यार्थिनः अधुनाप्रयुक्तस्यद्रव्यस्यवृद्धिग्रहणमंतरेणापिचिरकालावस्थितस्य कस्यद्रव्यस्यकियतीपरावृद्धिरित्य
पेक्षितआह रसस्यतैलघृतादेर्वृद्धिग्रहणमंतरेणचिरकालावस्थितस्यस्वकृतयावृद्ध्या वर्द्धमानस्याष्टगुणावृद्धिःपरा नातःपरंवर्द्धते तथा
वस्त्रधान्यहिरण्यानां यथासंख्यंचतुर्गुणात्रिगुणाद्विगुणाचवृद्धिःपरा वसिष्ठेनतुरसस्यत्रैगुण्यमुक्तम् द्विगुणंहिरण्यंत्रिगुणंधान्यं धा

संततिस्तुपशुस्त्रीणांरसस्याष्टगुणापरा वस्त्रधान्यहिरण्यानांचतुस्त्रिद्विगुणापरा ४०

न्येनैवरसाव्याख्याताः पुष्पमूलफलानिच तुलाधृतमष्टगुणमिति मनुनातुधान्यस्यपुष्पमूलफलादीनांचपंचगुणत्वमुक्तम् धान्येशदेलवे
वाह्येनातिक्रामतिपंचतामिति शदः क्षेत्रफलं पुष्पमूलफलादिलवोमेषोर्णाचमरीकेशादिः वाह्योबलीवर्दतुरगादिः धान्यशदलववाह्य
विषयावृद्धिः पंचगुणत्वंनातिक्रामतीति तत्राधमर्णयोग्यतावशेनदुर्भिक्षादिकालवशेनचव्यवस्थाद्रष्टव्या एतच्चसकृत्प्रयोगेसकृदाहरणे
चवेदितव्यम् पुरुषांतरसंक्रमणेनप्रयोगांतरकरणेतस्मिन्नेववापुरुषेएकरसेताभ्यांप्रयोगांतरीकरणेस्वर्णादिकंद्वैगुण्याद्यतिक्रम्यपू
र्ववद्वर्द्धते सकृत्प्रयोगेपिप्रतिदिनंप्रतिमासंप्रतिसंवत्सरंवा वृद्ध्याहरणेधमर्णदेयस्य द्वैगुण्यासंभवात्पूर्वाहृतवृद्ध्यासह द्वैगुण्यमतिक्र

म्यवर्द्धतएव यथाहमनुः कुसीदवृद्धिर्द्वैगुण्यंनात्येतिसकृदाहितेति सकृदाहृतेत्यपिपाठोस्ति उपचयार्थंप्रयुक्तंद्रव्यंकुसीदं तस्यवृद्धिःकुसीदवृद्धिः द्वैगुण्यंनात्येतिनातिक्रामति यदिसकृदाहितासकृत्प्रयुक्ता पुरुषांतरसंक्रमणादिनाप्रयोगांतरकरणेद्वैगुण्यमत्येतीति स कृदाहृतेतिपाठे तुशनैःशनैःप्रतिदिनंप्रतिमासंप्रतिसंवत्सरंवाधमर्णादाहृताद्वैगुण्यमत्येतीतिव्याख्येयम् तथागौतमेनाप्युक्तम् चिरस्थानेद्वैगुण्यंप्रयोगस्येति प्रयोगस्येत्येकवचननिर्देशात्प्रयोगांतरकरणेद्वैगुण्यातिक्रमोभिप्रेतः चिरस्थानइतिनिर्देशात् शनैःशनैर्वृद्धिग्रहणेद्वैगुण्यातिक्रमोदर्शितः ४० ऋणप्रयोगधर्माउक्ताः सांप्रतंप्रयुक्तस्यधनस्यग्रहणधर्माउच्यंते प्रपन्नमभ्युपगत

प्रपन्नंसाधयन्नर्थंनवाच्योनृपतेर्भवेत् साध्यमानोनृपंगच्छन्दंडोदाप्यश्चतद्धनम् ४१

मधमर्णाधनंसाक्ष्यादिभिर्भावितंवासाधयन्प्रत्याहरन् धर्मादिभिरुपायैरुत्तमर्णोनृपतेर्वाच्योनिवारणीयोनभवति धर्मादयश्चोपायामनुनादर्शिताः धर्मेणव्यवहारेणछलेनाचरितेनच प्रयुक्तंसाधयेदर्थंपंचमेनबलेनचेति धर्मेणप्रीतियुक्तेनसत्यवचनेनव्यवहारेणसाक्षिलेख्याद्युपन्यासेन छलेनउत्सवादिव्याजेनभूषणादिग्रहणेन आचरितेन अभोजनेन पंचमेनोपायेनबलेननिगडबंधनादिना उपचयार्थंप्रयुक्तंद्रव्यमेतैरुपायैरात्मसात्कुर्यादिति प्रपन्नंसाधयन्नर्थंनवाच्यइतिवदन् अप्रतिपन्नंसाधयन्राज्ञानिवारणीयइतिदर्शयति एतदेवस्पष्टीकृतंकात्यायनेन पीडयेद्योधनीकश्चिद्दृणिकंन्यायवादिनम् तस्मादर्थात्सहीयेततत्समंचाप्नुयाद्दममिति

यस्तु धर्मादिभिरुपायैः प्रपन्नार्थं साध्यमानो याच्यमानो नृपं गच्छेद्राजानमभिगम्य साधयंतमभियुंक्ते स दंड्यो भवति शक्त्यनुसारेण तद्धनं दा-
प्यश्च राज्ञा दापने च प्रकारा दर्शिताः राजा तु स्वामिनं विप्रं सांत्वेनैव प्रदापयेत् देशाचारेण चान्यांस्तु दुष्टान् संपीड्य दापयेत् रिक्थिनं सुहृदं वापि
छलेनैव प्रदापयेदिति साध्यमानो नृपं गच्छेदित्येतत् स्मृत्याचारव्यपेतेनेत्यस्य प्रत्युदाहरणं च बोद्धव्यम् ५१ बहुषूत्तमर्णिकेषु युगपत्साक्षेपे
को धमर्णिकः केन क्रमेण दाप्यो राज्ञेत्यपेक्षित आह समानजातीयेषु धनिषु येनैव क्रमेण धनं गृहीतं तेनैव क्रमेणाधमर्णिको राज्ञा दाप्यः भि-

गृहीतानुक्रमाद्दाप्यो धनिनामधमर्णिकः दत्त्वा तु ब्राह्मणायैव नृपतेस्तदनंतरम् ४२
राज्ञाधमर्णिको दाप्यः साधिताद्दशकं शतम् पंचकं च शतं दाप्यः प्राप्तार्थो ह्युत्तमर्णिकः ४३

न्नजातीयेषु तु ब्राह्मणादिक्रमेण ५२ यदा पुनरुत्तमर्णो दुर्बलः प्रतिपन्नमर्थं धर्मादिभिरुपायैः साधयितुमशक्नुवन्राज्ञा साधितार्थो भ-
वति तदाऽधमर्णस्य दंडमुत्तमर्णस्य च भृतिदानमाह अधमर्णिको राज्ञा प्रतिपन्नार्थात्साधिताद्दशकं शतं दाप्यः प्रतिपन्नस्य साधि-
तार्थस्य दशममंशं राजाधमर्णिकाद्दंडरूपेण गृह्णीयादित्यर्थः उत्तमर्णस्तु प्राप्तार्थः पंचकं शतं भृतिरूपेण दाप्यः साधितार्थस्य विंशतितमं
भागमुत्तमर्णाद्राजा भृत्यर्थं गृह्णीयादित्यर्थः अप्रतिपन्नार्थसाधने तु दंडविभागो दर्शितो निन्हवे भावितो दद्यादित्यादिना सधनमधमर्णि-
कं प्रत्युक्तम् ५३

अधुनानिर्धनमधमर्णिकंप्रत्याह ब्राह्मणादि रुत्तमर्णोहीनजातिंक्षत्रियादिजातिंपरिक्षीणंनिर्धनमृणार्थंऋणनिरुत्त्यर्थंकर्मस्वकर्म स्वजात्यनुरूपंकारयेत् तत्कुटुंबाविरोधेन ब्राह्मणःपुनःपरिक्षीणोनिर्धनः शनैःशनैः यथोदयंयथासंभवमृणंदाप्यः अत्रचहीनजातिग्रहणंसमजातेरप्युपलक्षणम् अतश्चसमानजातिमपिपरिक्षीणंयथोचितंकर्मकारयेत् ब्राह्मणग्रहणंचश्रेष्ठजातेरुपलक्षणं अतश्चक्षत्रियादिरपिपरिक्षीणोवैश्यादेः शनैर्दाप्योयथोदयम् एतदेवमनुनास्पष्टीकृतम् कर्मणापिसमंकुर्याद्धनिकेनाधमर्णिकः

हीनजातिंपरिक्षीणमृणार्थंकर्मकारयेत् ब्राह्मणस्तुपरिक्षीणःशनैर्दाप्योयथोदयम् ४४
दीयमानंनगृह्णातिप्रयुक्तंयःस्वकंधनम् मध्यस्थस्थापितंचेत्स्याद्वर्द्धतेननततःपरम् ४५
अविभक्तैःकुटुंबार्थेयदृणंतत्कृतंभवेत् दद्युस्तद्रिक्थिनःप्रेतेप्रोषितेवाकुटुंबिनि ४६

समोऽपकृष्टजातिश्चदद्याच्छ्रेयांस्तुतच्छनैरिति उत्तमर्णेनसमंनिवृत्तोत्तमर्णाधमर्णव्यपदेशमात्मानमधमर्णःकर्मणाकुर्यादित्यर्थः ४४ किंच उपचयार्थंप्रयुक्तंधनं अधमर्णेनदीयमानमुत्तमर्णोवृद्धिलोभाद्यदिनगृह्णाति तदाधमर्णेनमध्यस्थहस्तेस्थापितंयदिस्यात्तदाततःस्थापनादूर्ध्वंनवर्द्धते अथस्थापितंयाच्यमानोनददाति ततःपूर्ववद्वर्द्धतएव ४५ इदानींदेयमृणंयदायेन देयंतदाह अविभक्तैर्बहुभिः कुटुंबार्थमेकैकेनवायदृणंकृतंतदृणंकुटुंबीदद्यात् तस्मिन्प्रेतेप्रोषितेवातद्रिक्थिनःसर्वेदद्युः ४६

येनदेयमित्यत्रप्रत्युदाहरणमाह पत्याकृतंमृणंयोषिद्भार्यानिवदद्यात् पुत्रेणकृतंयोषिन्मातानदद्यात् तथापुत्रेणकृतंपितानदद्यात् तथा भार्याकृतंपतिः कुटुंबार्थाद्दतइतिसर्वविशेषणम् अतश्चकुटुंबार्थंयेनकेनापिकृतंततत्कुटुंबिनादेयम् तदभावेतद्दायहरैःदेयमित्य कमेव ४७ पुत्रपौत्रैर्ऋणंदेयमितिवक्ष्यतितस्यपुरस्तादपवादमाह सुरापानेनयत्कृतमृणंकामकृतंस्त्रीव्यसननिर्वृत्तं द्यूतेपराजय निर्वृत्तंदंडशुल्कयोरवशिष्टं वृथादानंधूर्तबंदिमल्लादिभ्योयत्प्रतिज्ञातं धूर्तेबंदिनिमल्लेचकुवेद्येकितवेशठे चारचारणचौरेषुदत्तंभ वतिनिष्फलमितिस्मरणात् एतदृणंपित्राकृतंपुत्रादिःशौंडिकादिभ्योनदद्यात् यत्रदंडशुल्कावशिष्टकमित्यवशिष्टग्रहणात्सर्वंदातव्य

नयोषित्पतिपुत्राभ्यांनपुत्रेणकृतंपिता दद्यादृतेकुटुंबार्थान्नपतिःस्त्रीकृतंतथा ४७ सुराकामद्यूतकृतंदंडशुल्कावशिष्ट कं वृथादानंतथैवेहपुत्रोदद्यान्नपैतृकं ४८ गोपशौंडिकशैलूषरजकव्याधयोषितां ऋणंदद्यात्पतिस्तासांयस्माद्वृत्तिस्तदाश्र या ४९

मितिनमंतव्यम् दंडंवादंडशेषंवाशुल्कंतच्छेषमेववा नदातव्यंतुपुत्रेणयच्चनव्यवहारिकमित्यौशनसस्मरणात् गौतमेनाप्यु क्तं मद्यशुल्कद्यूतकामदंडान्नपुत्रानध्यावहेयुरिति नपुत्रस्योपरिभवंतीत्यर्थः अनेनादेयमृणमुक्तम् ४८ नपतिःस्त्रीकृतंतथेत्यस्याप वादमाह गोपोगोपालः शौंडिकःसुराकारः शैलूषोनटः रजकोवस्त्राणांरंजकः व्याधोमृगयुः एतेषांयोषिद्भिर्यदृणंकृतंतत्पतिभिर्देयं य स्मात्तेषांवृत्तिर्जीवनंतदाश्रयायोषिदधीना यस्माद्वृत्तिस्तदाश्रयेतिहेतुव्यपदेशादन्येपियेयोषिदधीनजीवनास्तेपियोषित्कृतमृणंदद्युरिति गम्यते ४९

पतिकृतंभार्यानदद्यादित्यस्यापवादमाह मुमूर्षुणाप्रवत्स्यतावापत्यानियुक्तयाऋणदानेयत्प्रतिपन्नंतत्प्रतिकृतमृणंदेयं यच्चपत्या सहभार्ययाऋणंकृतं तदपिभर्त्रभावेभार्यया अपुत्रयादेयम् यच्चस्वयमेवकृतंऋणं तदपिदेयम् ननुप्रतिपन्नादित्रयंस्त्रियादेय मितिनवक्तव्यम् संदेहाभावात् उच्यते भार्यापुत्रश्चदासश्चत्रयएवाधनाः स्मृताः यत्तेसमधिगच्छंतियस्यैतेतस्यतद्धनमिति वचनान्निर्धनत्वेनप्रतिपन्नादिष्वदानाशंकायामिदमुच्यते प्रतिपन्नंस्त्रियादेयमित्यादि नचानेनवचनेनस्त्र्यादीनांनिर्धनत्वमभि

प्रतिपन्नंस्त्रियादेयंपत्यावासहयत्कृतम् स्वयंकृतंवायदृणंनान्यत्स्त्रीदातुमर्हति ५०

धीयतेपारतंत्र्यमात्रप्रतिपादनपरत्वात् एतच्चविभागप्रकरणेस्पष्टीकरिष्यते नान्यत्स्त्रीदातुमर्हतीत्येतत्तर्हिनवक्तव्यम् विधा नेनान्यत्रप्रतिषेधसिद्धेः उच्यते प्रतिपन्नंस्त्रियादेयंपत्यावासहयत्कृतमित्येतयोरपवादार्थमुच्यते अन्यत्कुराकारादिवचनो पात्तंप्रतिपन्नमपि पत्यासहकृतमपिनदेयमिति ५०

पुनरपियहणंदातव्यंयेनचादातव्यंयत्रचकालेदातव्यंतत्त्रितयमाह पितायदिदातव्यमृणमदत्वाप्रेतोदूरदेशगतोचिकित्सनीयव्याध्या
द्यभिभूतोवातदा तत्कृतमृणमारव्यापनेपुत्रेणपौत्रेणवापितृधनाभावेपि पुत्रत्वेनपौत्रत्वेनच तत्रक्रमोप्ययमेव पित्रभावेपुत्रःपु
त्राभावेपौत्रइति पुत्रेणपौत्रेणवानिन्हवेकृते अर्थिनासाक्ष्यादिभिर्भावितमृणंदेयम् पुत्रपौत्रैरित्यन्वयः अत्रपितरिप्रोषितइत्ये
तावदुक्तम् कालविशेषस्तुनारदेनोक्तोद्रष्टव्यः नार्वाक्संवत्सराद्विंशात्पितरिप्रोषितेसुतः ऋणंदद्यात्पितृव्येवाज्येष्ठेभ्रातर्यथा
पिवेति प्रेतेप्यप्राप्तव्यवहारकालोनदद्यात्प्राप्तव्यवहारकालस्तुदद्यात् सचकालस्तेनैवदर्शितः गर्भस्थैःसदृशोज्ञेय आष्टमाद्द

पितरिप्रोषितेप्रेतेव्यसनाभिप्लुतेपिवा पुत्रपौत्रैर्ऋणंदेयंनिन्हवेसाक्षिभावितम् ५१

त्सराच्छिशुः बालआषोडशाद्वर्षात्पौगंडश्चेतिशब्द्यते परतोव्यवहारज्ञः स्वतंत्रःपितरावृतइति यद्यपिपितृमरणादूर्ध्वंबालोपि-
स्वतंत्रोजातस्तथापि नर्णभाग्भवति यथाह अप्राप्तव्यवहारश्चेत्स्वतंत्रोपिहिनर्णभाक् स्वातंत्र्यंहिस्मृतंज्येष्ठेज्यैष्ठ्यंगुणवयःकृत
मिति तथाआसेधाव्हाननिषेधश्चदृश्यते अप्राप्तव्यवहारश्चदूतोदानोन्मुखोव्रती विषमस्थाश्चनासेध्यानचैतानाव्हयेन्नृपइति
तस्मात् अतःपुत्रेणजातेनस्वार्थमुत्सृज्ययत्नतः ऋणात्पितामोचनीयोयथाननरकंव्रजेदिति पुत्रेणव्यवहारज्ञतयाजातेननिष्पन्ने-
नेतिव्याख्येयम् श्राद्धेतुबालस्याप्यधिकारः नब्रह्माभिव्याहरेदन्यत्रस्वधानिनयनादितिगौतमस्मरणात् पुत्रपौत्रैरितिबहुव

चननिर्देशाद्बहवः पुत्रा यदि विभक्ताः स्वांशानुरूपेणऋणं दद्युः अविभक्ताश्चेत्संभूयसमुत्थानेन गुणप्रधानभावेन वर्तमानानां प्रधानभूत एव वा दद्यादिति गम्यते यथाह नारदः अत ऊर्ध्वं पितुः पुत्रा ऋणं दद्युर्यथांशतः अविभक्ता विभक्ता वा यस्तामुद्वहते धुरमिति अत्र च पुत्रपौत्रैर्ऋणं देयमित्यविशेषेणोक्तं तथापि पुत्रेण यथा पिता सवृद्धिकं ददाति तथैव ऋणं देयम् पौत्रेण तत्समं मूल्यमेव दातव्यं न वृद्धिरिति विशेषो वगंतव्यः ऋणमात्मीयवत्पित्र्यं देयं पुत्रैर्विभावितम् पैतामहं समं देयमदेयं तत्सुतस्य तु इति बृहस्पतिवचनात् अत्र विभावितमित्यविशेषोपादानात्साक्षिविभावितमित्यत्र साक्षिग्रहणं प्रमाणोपलक्षणम् समं यावद्गृहीतं तावदेव देयं न वृद्धिः तत्सुतस्य प्रपौत्रस्यादेयमगृहीतधनस्य एतच्चोत्तरश्लोके स्पष्टयिष्यते ५१ ऋणापाकरणे ऋणी तत्पुत्रः पौत्र इति त्रयः कर्तारो दर्शिता स्तेषां च समवाये क्रमो पि दर्शितः इदानीं कर्त्रंतरसमवाये च क्रममाह

रिक्थग्राह ऋणं दाप्यो योषिद्ग्राहस्तथैव च पुत्रोनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः ५२

अन्यदीयं द्रव्यमन्यस्य क्रयादिव्यतिरेकेण यत्स्वी भवति तद्रिक्थं विभागद्वारेण रिक्थं गृह्णातीति रिक्थग्राहः स ऋणं दाप्यः एतदुक्तं भवति यो यदीयं द्रव्यं रिक्थरूपेण गृह्णाति स तत्कृतमृणं दाप्यो न चौरादिरिति योषितं भार्यां गृह्णातीति योषिद्ग्राहः स न तथैव ऋणं दाप्यः यदीयां योषितं यो गृह्णाति स तत्कृतमृणं दाप्यः योषितो

ऽविभाज्यद्रव्यत्वेन रिक्थव्यपदेशानर्हत्वाद्भेदेन निर्देशः पुत्रश्चानन्याश्रितद्रव्यः ऋणंदाप्यः अन्यमाश्रितमन्याश्रितं अन्याश्रितंमातापितृ
संबंधिद्रव्यंयस्यासावन्याश्रितद्रव्यः नअन्याश्रितद्रव्यः अनन्याश्रितद्रव्यः पुत्रहीनस्यरिक्थिनऋणंदाप्यइतिसंबंधः एतेषांसमवाये
क्रमश्चपाठक्रमएव रिक्थग्राहऋणंदाप्यस्तदभावेयोषिद्ग्राहस्तदभावेपुत्रइति नन्वेतेषांसमवायएवनोपपद्यते नभ्रातरोनपित
रः पुत्रारिक्थहराः पितुरिति पुत्रेसत्यन्यस्यरिक्थग्रहणासंभवात् योषिद्ग्राहोपिनोपपद्यते नद्वितीयश्चसाध्वीनांक्वचिद्भर्तोपदि
श्यतइतिस्मरणात् तद्दणंपुत्रोदाप्यइत्यप्ययुक्तम् पुत्रपौत्रैर्ऋणंदेयमित्युक्तत्वात् अनन्याश्रितद्रव्यइतिविशेषणमप्यनर्थकम्
पुत्रेसतिद्रव्यस्यान्याश्रयणासंभवात् संभवेचरिक्थग्राहीत्यनेनैवगतार्थत्वात् पुत्रहीनस्यरिक्थिनइत्येतदपिनवक्तव्यम् पु
त्रेसत्यपिरिक्थग्राहीऋणंदाप्यइतिस्थितम् असतिपुत्रेरिक्थग्राहीसुतरांदाप्यइतिसिद्धमेवेति अत्रोच्यते पुत्रेसत्यप्य-
न्योरिक्थग्राहीसंभवति क्लीबांधबधिरादीनांपुत्रत्वेपिरिक्थग्राह्याभावात् तथाचक्लीबादीननुक्रम्यभर्तव्यास्तुनिरंशकाइति
वक्ष्यति तथासवर्णापुत्रोऽन्यायवृत्तिर्नलभेतैतेकेषामितिगौतमस्मरणात् अतश्चक्लीबादिषुपुत्रेषुसत्सु अन्यायवृत्तेचसवर्णा
पुत्रेसतिरिक्थग्राहीपितृव्यतत्सुतादिः योषिद्ग्राहोयद्यपिशास्त्राविरोधेननसंभवतितथाप्यतिक्रांतनिषेधः पूर्वपतिकृतर्णापा
करणाधिकारीभवत्येव यश्चतस्नृणांस्वैरिणीनामंतिमांगृह्णातियश्चपुनर्भुवांतिसृणांप्रथमाम् यथाहनारदः परपूर्वाःस्त्रियः
स्त्वन्याः सप्तप्रोक्तायथाक्रमम् पुनर्भूस्त्रिविधातासांस्वैरिणीतुचतुर्विधा कन्यैवाक्षतयोनिर्यापाणिग्रहणदूषिता पुनर्भूःप्रथमा

नामपुनः संस्कारकर्मणा देशधर्माननवेक्ष्यस्त्रीगुरुभिर्याप्रदीयते उत्पन्नसाहसान्यस्मैसाद्वितीयाप्रकीर्तिता उत्पन्नसाहसाउत्पन्न
व्यभिचारा असत्कृद्देवरेषुस्त्रीबांधवैर्याप्रदीयते सवर्णायसपिंडायसातृतीयाप्रकीर्तिता स्त्रीप्रसूताप्रसूतावापत्यावेवतुजीवति
कामात्समाश्रयेदन्यंप्रथमास्वैरिणीतुसा कौमारंपतिमुत्सृज्ययात्वन्यंपुरुषंश्रिता पुनःपत्युर्गृहंयायात्साद्वितीयाप्रकीर्तिता मृते
भर्तरितुप्राप्तान्देवरादीनपास्यया उपगच्छेत्परंकामात्सातृतीयाप्रकीर्तिता प्राप्तादेशाद्धनक्रीताक्षुत्पिपासातुराचया तवाहमि
त्युपगतासाचतुर्थीप्रकीर्तिता अंतिमास्वैरिणीनांयाप्रथमाचपुनर्भुवाम् ऋणंतयोःपतिकृतंदद्याद्यस्तउपाश्रितइति तदन्योपियो
षिद्ग्राहऋणापाकरणेधिकारीतेनैवदर्शितः यातुसप्रधनैवस्त्रीसापत्यावान्यमाश्रयेत् सोस्यादद्याहृणंभर्तुरुत्सृजेद्वातथैवतां
प्रकृष्टेनधनेनसहवर्ततेइति सप्रधना बहुधनेतियावत् तथा अधनस्यह्यपुत्रस्यमृतस्योपैतियत्स्त्रियम् ऋणंवोढुःसभज-
तेसैवचास्यधनंस्मृतमिति पुत्रस्यपुनर्वचनंक्रमार्थं अनन्याश्रितद्रव्यइति बहुषुपुत्रेषु रिक्थाभावेअंशग्रहणयोग्यस्यैवऋ
णापाकरणेधिकारोनायोग्यस्यांधादेरित्येवमर्थम् पुत्रहीनस्यरिक्थिनइत्येतदपिपुत्रपौत्रहीनस्यप्रपौत्रादयोयदिरिक्थंगृह्ण-
न्ति तदाऋणंदाप्याः नान्यथेत्येवमर्थं पुत्रपौत्रैश्चरिक्थग्रहणाभावेपिदाप्याविशुक्तं यथाहनारदः क्रमादव्याहतंप्राप्तंपुत्रै
र्यन्नर्णमुद्धृतम् दद्युःपैतामहंपौत्रास्तच्चतुर्थान्निवर्ततइति सर्वंनिरवद्यम् यद्वायोषिद्ग्राहाभावेपुत्रोदाप्यइत्युक्तम् पुत्राभा
वेयोषिद्ग्राहोदाप्यइत्युच्यते पुत्रहीनस्यरिक्थिनइतिरिक्थशब्देनयोषिदेवोच्यते सैवचास्यधनंस्मृतमितिस्मरणात् योय

स्यहरतेदारान्सतस्यहरतेधनमितिच ननुयोषिद्ग्राहाभावेपुत्रऋणंदाप्यःपुत्राभावेयोषिद्ग्राहइतिपरस्परविरुद्धम् उभयसद्भावेनकश्चिद्दाप्य
इति नैषदोषः अंतिमस्वैरिणीग्राहिणःप्रथमपुनर्भूग्राहिणःसमधनस्त्रीह्यारिणश्चाभावेपुत्रोदाप्यःपुत्राभावेतुनिर्धननिरपत्ययोषिद्ग्राहीदा
प्यइति एतदेवोक्तंनारदेन धनस्त्रीह्यारिपुत्राणामृणभाग्योधनंहरेत् पुत्रोसतोःस्त्रीधनिनोःस्त्रीहारीधनिपुत्रयोरिति धनस्त्रीहारिपु
त्राणांसमवायेयोधनंहरेत्सऋणभाक् स्त्रीधनिनोःस्त्रीचधनंचस्त्रीधनेतेविद्येतेययोस्तौस्त्रीधनिनौतयोःस्त्रीधनिनोरसतोःपुत्रएवऋ
णभाक्भवति धनिपुत्रयोरसतोःस्त्रीहार्येवर्णभाक् स्त्रीहार्यभावेपुत्रऋणभाक् पुत्राभावेस्त्रीहारीतिविरोधप्रतिभासपरिहारःपूर्व
वत् पुत्रहीनस्यरिक्थिनइत्यस्यान्याव्यारव्याएतेधनस्त्रीहारिपुत्राःऋणंकस्यदाप्याइतिविवक्षायांउत्तमर्णस्यदाप्यास्तदभावेतत्पुत्रादेःतत्पु
त्राद्यभावेकस्यदाप्याइत्यपेक्षायामिदमुपतिष्ठतेपुत्रहीनस्यरिक्थिनइति पुत्राद्यन्वयहीनस्योत्तमर्णस्ययोरिक्थीरिक्थग्रहणयोग्यःसपि
डादिस्तस्यरिक्थिनोदाप्याः तथाचनारदेन ब्राह्मणस्यतुयद्देयंसान्वयस्यचनास्तिचेत् निर्वपेत्तत्सकुल्येषुतदभावेस्वबंधुष्वित्यभि
हितम् यदातुनसकुल्याःस्युर्नचसंबंधिबांधवाः तदादद्याद्द्विजेभ्यस्तुतेष्वसत्स्वप्सुनिक्षिपेदिति ५२ अधुनापुरुषविशेषेऋणग्रह
णंप्रतिषेधन्प्रसंगादन्यदपिप्रतिषेधति प्रतिभुवोभावःप्रातिभाव्यं भ्रातृणांदंपत्योःपितापुत्रयोश्चाविभक्तेद्रव्येद्रव्यविभागात्प्रा
क्प्रातिभाव्यमृणंसाक्ष्यंचनस्मृतंमन्वादिभिः अपितुप्रतिषिद्धम् साधारणधनत्वात् प्रातिभाव्यसाक्षित्वयोःपक्षेद्रव्यव्ययावसान
त्वात् ऋणस्यचावश्यप्रतिदेयत्वात् एतच्चपरस्परानुमतिव्यतिरेकेण परस्परानुमत्यात्वविभक्तानामपिप्रातिभाव्यादिभवत्येव

विभागादूर्ध्वंपरस्परानुमतिव्यतिरेकेणापिभवतिननुदंपत्योर्विभागात्साक्ष्यप्रातिभाव्यादिप्रतिषेधोनयुज्यते तयोर्विभागाभावेनविशेषणानर्थक्या
त् विभागाभावश्चापस्तंबेनदर्शितः जायापत्योर्नविभागोविद्यतइति सत्यम् श्रौतस्मार्ताग्निसाध्येषुकर्मसुतत्फलेषुचविभागाभावोन
पुनःसर्वकर्मसुद्रव्येषुवा तथाहि जायापत्योर्नविभागोविद्यतेइत्युक्त्वाकिमितिनविद्यतेइत्यपेक्षायांहेतुमुक्तवान् पाणिग्रहणाद्धिसह
त्वंकर्मसुतथापुण्यफलेषुचेति हियस्मात्पाणिग्रहणादारभ्यकर्मसुसहत्वंश्रूयते जायापतीअग्निमादधीयातामिति तस्मादाधानेस
हाधिकारादाधानसिद्धाग्निसाध्येषुकर्मसुसहाधिकारः तथा कर्मस्मार्तंविवाहाग्नावित्यादिस्मरणाद्विवाहसिद्धाग्निसाध्येष्वपिकर्मसु

भ्रातॄणामथदंपत्योःपितुःपुत्रस्यचैवहि प्रातिभाव्यमृणंसाक्ष्यमविभक्तेनतुस्मृतम् ५३

सहाधिकारएव अतश्चोभयविधाग्निनिरपेक्षेषु कर्मसुपूर्तेषुजायापत्योःपृथगेवाधिकारःसंपद्यते तथापुण्यानांफलेषुस्वर्गादिषु
जायापत्योः सहत्वंश्रूयते दिविज्योतिरजरमारभेयातामित्यादि येषुपुण्यकर्मसुसहाधिकारस्तेषांफलेषुसहत्वमितिबोद्ध
व्यम् नपुनःपूर्तानांभर्त्रनुज्ञयानुष्ठितानांफलेष्वपि ननुद्रव्यस्वामित्वेपिसहत्वमुक्तम् द्रव्यपरिग्रहेषुचनहिभर्तुर्विप्रवासेनैमित्तिकेदा
नेस्तेयमुपदिशंतीति सत्यम् द्रव्यस्वामित्वंपत्न्यादर्शितमनेननपुनर्विभागाभावः यस्माद्द्रव्यपरिग्रहेषुचेत्युक्त्वातत्रकारणमुक्तम् भर्तु
र्विप्रवासेनैमित्तिकेऽवश्यकर्तव्येदानेतिथिभोजनभिक्षाप्रदानादौहियस्मान्नस्तेयमुपदिशंतिमन्वादयःतस्माद्भार्यायामपिद्रव्यस्वा-

भित्वमस्ति अन्यथास्तेयंस्यादिति तस्माद्भर्तुरिच्छयाभार्यायामपिद्रव्यविभागोभवत्येव नस्वेच्छया यथावक्ष्यति यदिकुर्यात्समानंशान्पत्न्यः कार्याः समांशकाइति ५३ अधुनाप्रातिभाव्यंनिरूपयितुमाह प्रातिभाव्यंनामविश्वासार्थंपुरुषांतरेणसहसमयः तच्चविषयभेदात्त्रिधाभिद्यते यथादर्शनेदर्शनापेक्षायांएनंदर्शयिष्यामीति प्रत्ययेविश्वासे मत्प्रत्ययेनास्य धनंप्रयच्छ नायंत्वांवंचयिष्यते यतोमुकस्यपुत्रोयंउर्वराप्रायभूरस्यग्रामवरोस्तीति दानेयद्ययंनददाति तदानीमहमेवदास्यामीति प्रातिभाव्यंविधीयतइतिप्रत्येकंसंबंधः आद्यौतुदर्शनप्रत्ययप्रतिभुवौ वितथे अन्यथाभावे अदर्शनेविश्वासव्यभिचारेच दाप्यौराज्ञा प्रस्तुतंधनमुत्तमर्णस्य इतरस्यदानप्रतिभुवः सुताअपिदा

दर्शनेप्रत्ययेदानेप्रातिभाव्यंविधीयते आद्यौतुवितथेदाप्यावितरस्यसुताअपि ५४

दर्शनेप्रतिभूर्यत्र मृतःप्रात्ययिकोपिवा नतत्पुत्राऋणंदद्युर्दद्युर्दानाययःस्थितः ५५

प्याः वितथइत्येव शाठ्येननिर्धनत्वेनवाधमर्णेप्रतिकुर्वति इतरस्यसुताअपीति वदतापूर्वयोः सुतानदाप्याइत्युक्तम् सुताइतिवदतानपौत्रादाप्याइतिदर्शितम् ५४ एतदेवस्पष्टीकर्तुमाह यदादर्शनप्रतिभूः प्रात्ययिकोपिवाप्रतिभूर्दिवंगतः तदातयोः पुत्राः प्रातिभाव्यायातंपैतृकमृणंनदद्युः यस्तुदानायस्थितःप्रतिभूर्दिवंगतस्तस्यपुत्रादद्युर्नपौत्राः तेचमूल्यमेवदद्युर्नवृद्धिम् ऋणंपैतामहंपौत्रःप्रातिभाव्यागतंसुतः समंदद्यात्तत्सुतौतुनदाप्याविति निश्चयइतिव्यासवचनात् प्रातिभाव्यव्यतिरिक्तंपैतामहमृणंपौत्रःसमंया

बङ्गृहीतंतावदेवदद्यान्नवृद्धिं तथाकृतोपिप्रातिभाव्यागतंपित्र्यमृणंसममेवदद्यात् तयोःपुत्रपौत्रयोःकृतौपौत्रप्रपौत्रावपिप्रातिभाव्या
यातंचऋणं यथाक्रममगृहीतधनौनदाप्याविति यदपिस्मरणं खादकोवित्तहीनःस्याल्लग्नकोवित्तवान्यदि मूलंतस्यभवेद्देयंनवृद्धिं
दातुमर्हतीति तदपिलग्नकःप्रतिभूः खादकोधमर्णः लग्नकोयदिवित्तवान्मृतस्तस्यपुत्रेणमूल्यमेवदातव्यं नवृद्धिरितिव्याख्येयं यत्र
दर्शनप्रतिभूः प्रत्ययप्रतिभूर्वाबंधकंपर्याप्तंगृहीत्वाप्रतिभूर्जातस्तत्र तत्पुत्राअपितस्मादेवबंधकात्प्रातिभाव्यायातमृणंदद्युरेव यथा
हकात्यायनः गृहीत्वाबंधकंयत्रदर्शनेस्यस्थितोभवेत् विनापित्राधनात्तस्माद्दाप्यःस्यात्तदृणंकृतइति दर्शनग्रहणंप्रत्ययस्योपलक्षणं वि

बहवःस्युर्यदिस्वांशैर्दद्युःप्रतिभुवोधनम् एकच्छायाश्रितेष्वेषुधनिकस्ययथारुचि ५६

नापित्रापितरिप्रेतेदूरदेशंगतेवेति ५५ यस्मिन्ननेकप्रतिभूसंभवस्तत्रकथंदातव्यमित्याह यद्येकस्मिन्प्रयोगे द्वौबहवोवाप्रतिभुवः
स्युस्तदृणंसंविभज्यस्वांशेनदद्युः एकच्छायाश्रितेषुप्रतिभूषु एकस्याधमर्णस्यछायासादृश्यंतामाश्रिताःएकच्छायाश्रिताः अधमर्णोय
थाकृत्स्नद्रव्यदानायस्थितस्तथादानेप्रतिभुवोपिप्रत्येकंकृत्स्नदानायस्थिताः एवंदर्शनेप्रत्ययेच तथैकच्छायाश्रितेषुप्रतिभूषुसत्सुध
निकस्योत्तमर्णस्ययथारुचियथाकामं अतश्चधनिकोवित्ताद्यपेक्षयास्वार्थंयःप्रार्थयते सएवकृत्स्नंदद्यान्नांशतः तेष्वेकच्छायाश्रिते
षुयदिकश्चिद्देशांतरंगतस्तत्पुत्रश्चसंनिहितस्तदाधनिकेच्छयासर्वंदाप्यः मृतेतुकस्मिंश्चित्तत्सुतःस्वपित्रंशमवृद्धिकंदाप्यःयथा

हकात्यायनः एकच्छायांप्रविष्टानांदाप्योयस्तत्र दृश्यते प्रोषितेतत्सुतः सर्वंपित्र्यंशंतु मृतेसममिति ५६ प्रातिभाव्येऋणदानविधिमुक्त्वाप्रतिभूदत्तस्यप्रतिक्रिया
विधिमाह यद्द्रव्यंप्रतिभूस्तत्पुत्रोवाधनिकेनोपपीडितः प्रकाशंसर्वजनसमक्षंराज्ञाधनिनांदापितोनपुनर्द्वैगुण्यलोभेनस्वयमुपेत्यदत्तं यथाहनारदः पंचार्थंप्रति
भूर्दद्याद्धनिकेनोपपीडितः ऋणिकस्तंप्रतिभुवेद्विगुणंप्रतिदापयेदिति ऋणिकैरधमर्णैस्तस्यप्रतिभुवस्तद्द्विगुणंप्रतिदातव्यंस्यात् तच्चकालविशेषमनपे-
क्ष्यसद्यएवद्विगुणंदातव्यं वचनारंभसामर्थ्यात् एतच्चहिरण्यविषयं ननुइदंप्रतिभूवचनंद्वैगुण्यमात्रंप्रतिपादयति तच्चपूर्वोक्तकालकलाक्रमाबाधेनाप्युपप
द्यते यथाजातेष्टिविधानंशुचित्वाबाधेन अपिचसद्यः सवृद्धिकत्वेपिपक्षेपशुस्त्रीणांसद्यःसंतत्यभावान्मूल्यदानमेवप्राप्नोतीतितदसत् वस्त्रदानांहिरण्या

प्रतिभूर्दापितोयत्तुप्रकाशंधनिनांधनम् द्विगुणंप्रतिदातव्यमृणिकैस्तस्यतद्भवेत् ५७

नांचतुस्त्रिद्विगुणापरेत्यनेनैवकालकलाक्रमे
णद्वैगुण्यादिसिद्धेः द्वैगुण्यमात्रविधानइदंवचनमनर्थकंस्यात् पशुस्त्रीणांतुकालक्रमपक्षेपिसंतत्यभावेस्वरूपदानमेव यदाप्रतिभूरपिद्रव्य
दानानंतरं कियतापिकालेनाधमर्णेनसंघटतेतदासंततिरेवसंभवत्येव यद्वापूर्वसिद्धसंतत्यासहपशुस्त्रियोदास्यतीति नकिंचिदेतत् अ
थप्रातिभाव्यंप्रीतिकृतंचप्रतिभुवादत्तंप्रीतिदत्तमेव नचप्रीतिदत्तस्ययाचनात्प्राग्वृद्धिरस्ति यथाह प्रीतिदत्तंतुयत्किंचिद्वर्द्धतेनत्वयाचितम्
याच्यमानमदत्तंचेद्वर्द्धतेपंचकंशतमिति अतश्चास्यप्रीतिदत्तस्यायाचितस्यापिदानदिवसादारभ्ययावद्द्विगुणंकालक्रमेणवृद्धिरित्यनेनवचने
नोच्यतेइतितदप्यसत् अस्यार्थस्यास्माद्वचनादप्रतीतेर्द्विगुणंप्रतिदातव्यमित्येतावदिहप्रतीयते तस्मात्कालक्रममनपेक्ष्यैवद्विगुणंप्रतिदात-
व्यं वचनारंभसामर्थ्यादितिसुष्ठूक्तं ५७

प्रतिभूदत्तस्य सर्वत्र द्वैगुण्ये प्राप्ते ऽपवादमाह हिरण्यद्वैगुण्यवत्कालानादरेणैव स्त्रीपश्वादयः प्रतिपादितवृद्ध्या दाप्याः श्लोकस्तु व्याख्यात एव
यस्य द्रव्यस्य यावती वृद्धिः परा काष्ठोक्ता तद्द्रव्यं प्रतिभूदत्तं खादकेन तया वृद्ध्या सह कालविशेषमनपेक्ष्य सद्यो दातव्यमिति तात्पर्यार्थः यदा तु दर्शन
प्रतिभूः संप्रतिपन्ने काले ऽधमर्णं दर्शयितुमसमर्थः तदा तदन्वेषणाय तस्य पक्षत्रयं दातव्यम् तत्र यदि तं दर्शयति तदा मोक्तव्यो ऽन्यथा प्रस्तुतं ध-
नं दाप्यः नष्टस्यान्वेषणार्थं तु दाप्यं पक्षत्रयं परम् यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत् काले व्यतीते प्रतिभूर्यदि तं नैव दर्शयेत् निबंधं
दापयेत्तत्तु प्रेते चैष विधिः स्मृत इति कात्यायनवचनात् लग्नकविशेषनिषेधश्च तेनैवोक्तः नस्वामी न च वै शत्रुः स्वामिनाधिकृतस्तथा निरुद्धो

संततिः स्त्रीपशूनां चैव धान्यं त्रिगुणमेव च वस्त्रं चतुर्गुणं प्रोक्तं रसश्चाष्टगुणस्तथा ५८

दंडितश्चैव संदिग्धश्चैव न क्वचित् नैव रिक्थी न मित्रं च न चैवात्यंतवासिनः राजकार्यनियुक्तश्च ये च प्रव्रजिता नराः नाशक्तो धनिने दातुं दंडं राज्ञे
च तत्समम् नाविज्ञातो गृहीतव्यः प्रतिभूस्त्वक्रियां प्रतीति संदिग्धोऽभिशस्तः अत्यंतवासिनो नैष्ठिकब्रह्मचारिणः इति प्रतिभूविधिः
धनप्रयोगे विश्वासहेतू द्वौ प्रतिभूराधिश्च यथाह नारदः विस्रंभहेतू द्वावत्र प्रतिभूराधिरेव चेति तत्र प्रतिभूर्निरूपितः इदानीमाधिर्नि
रूप्यते आधिर्नाम गृहीतस्य द्रव्यस्योपरि विश्वासार्थमधमर्णेनोत्तमर्णे ऽधिक्रियते आधीयत इत्याधिः स च द्विविधः कृतकालो ऽकृतका-
लश्च पुनश्चैकैकशो द्विविधः गोप्यो भोग्यश्च यथाह नारदः अधिक्रियत इत्याधिः स विज्ञेयो द्विलक्षणः कृतकालोपनेयश्च यावद्देयो-

द्यतस्तथा सपुनर्द्विविधः प्रोक्तोगोप्योभोग्यस्तथैवचेति कृतेकालेआधानकालएवामुष्मिन्कालेदीपोत्सवादौमयायमाधिर्मोक्तव्योन्यथातदेवाधि र्भविष्यतीति एवंनिरूपितेकालेउपनेयः आत्मसमीपंनेतव्योमोचनीयइत्यर्थः देयंदानंदेयमनतिक्रम्य यावद्देयमुद्यतोनियतःस्थापितइत्यर्थः यावद्देयमुद्यतोयावद्देयोद्यतः गृहीतधनप्रत्यर्पणावधिरनिरूपितकालइत्यर्थः गोप्योरक्षणीयः ५८ एवंचतुर्विधस्याधेर्विशेषमाह प्रयुक्ते धनेस्वकृतयावृद्ध्याकालक्रमेणाद्विगुणीभूतेयद्याधिरधमर्णेनद्रव्यदानेननमोक्ष्यते तदानश्यति अधमर्णस्यधनप्रयोक्तुःस्वंभवति कालकृ- तःकृतकालः आहिताग्न्यादिषुपाठात्कालशब्दस्यपूर्वनिपातः सतुकालेनिरूपितेप्राप्तेनश्येत् द्वैगुण्यात्प्रागूर्ध्वंवा फलभोग्यःफलंभोग्यंय

आधिःप्रणश्येद्द्विगुणेधनेयदिनमोक्ष्यते कालेकालकृतोनश्येत्फलभोग्योननश्यति ५९

स्यासौफलभोग्यः क्षेत्रारामादिःसकदाचिदपिननश्यति कृतकालस्यगोप्यस्यभोग्यस्यचनकालातिक्रमेनाशउक्तः कालेकालकृतोनश्येदि- ति अकृतकालस्यभोग्यस्यनाशाभावउक्तः फलभोग्योननश्यतीति पारिशेष्यादाधिःप्रणश्येदित्येतदकृतकालगोप्याधिविषयमवतिष्ठते द्वैगुण्यातिक्रमेणनिरूपितकालातिक्रमेणचविनाशेचतुर्दशदिवसप्रतीक्षणंकर्तव्यंबृहस्पतिवचनात् हिरण्येद्विगुणीभूतेपूर्णेकालेकृता धेः बंधकस्यधनीस्वामीद्विःसप्ताहंप्रतीक्ष्यच तदंतराधनंदत्वाऋणीबंधमवाप्नुयादिति नन्वाधिःप्रणश्येदित्ययुक्तमनुपपन्नं अधमर्ण- स्यस्वत्वनिवृत्तिहेतोर्दानविक्रयादेरभावात् धनिनश्चस्वत्वहेतोःप्रतिग्रहक्रयादेरभावात् मनुवचनविरोधाच्च नचाधेःकालसंरोधा

न्निसर्गोस्तिनविक्रयइति कालेनसंरोधः कालसंरोधश्चिरकालमवस्थानं तस्मात्कालसंरोधाच्चिरकालावस्थानादाधेर्ननिसर्गोस्ति ना
न्यत्राधिकरणमस्ति नचविक्रयः एवमाधीकरणविक्रयप्रतिषेधाद्धनिनः स्वत्वाभावोवगम्यतइति उच्यते आधीकरणमेवलोकेसो
पाधिकस्वत्वनिवृत्तिहेतुः आधिस्वीकारश्चसोपाधिकस्वत्वापत्तिहेतुः प्रसिद्धः तत्रधनद्वैगुण्येनिरूपितकालेप्राप्तेचद्रव्यदानस्यात्यंत
निवृत्तेरनेन वचनेनाधमर्णस्यात्यंतिकीस्वत्वनिवृत्तिः उत्तमर्णस्यचात्यंतिकंस्वत्वंभवति नचमनुवचनविरोधः यतोनत्वेवाधौसोपका
रकौसीदींवृद्धिमाप्नुयादिति भोग्याधिंप्रस्तुत्येदमुच्यते नचाधेः कालसंरोधान्निसर्गोस्तिनविक्रयइति भोग्यस्याधेश्चिरकालावस्था

गोप्याधिभोगेनोवृद्धिः सोपकारेथहापिते नष्टोदेयोविनष्टश्चदैवराजकृतादृते ६०

नेप्याधीकरणविक्रयनिषेधेनधनिनः स्वत्वंनभवति इहाप्युक्तं फलभोग्योननश्यतीति गोप्याधौतुपृथगारब्धंमनुना नभोक्तव्यो
बलादाधिर्भुंजानोवृद्धिमुत्सृजेदिति इहापिवक्ष्यते गोप्याधिभोगेनोवृद्धिरिति आधिःप्रणश्येद्द्विगुणइतितुगोप्याधिंप्रत्युच्यतेइति
सर्वमविरुद्धम् ५९ किंच गोप्याधेस्ताम्रकटाहादेरुपभोगेनवृद्धिर्भवति अल्पेप्युपभोगेमहत्यपिवृद्धिर्हातव्या सम यातिक्र
मात् तथासोपकारे उपकारेउपकारकारिणिबलीवर्दताम्रकटाहादौ भोग्याधौ सवृद्धिकेहापिते हानिंव्यवहाराक्षमत्वंगमितेनो
वृद्धिरितिसंबंधः नष्टोविकृतिंगतः ताम्रकटाहादिश्छिद्रभेदनादिनापूर्ववत्कृत्वादेयः तत्रगोप्याधिर्नष्टश्चेत्पूर्ववत्कृत्वादेयः उपभु

क्तोपिचेद्दृद्धिरपिहातव्या भोग्याधिर्यदिनष्टस्तदा पूर्ववत्कृत्वादेयः वृद्धिसद्भावेवृद्धिर्हातव्या विनष्टःआत्यंतिकंनाशंप्राप्तः सोपिदेयोमू
ल्यादिद्वारेणतद्दाने सवृद्धिकंमूल्यंलभते यदानददातितदा मूलनाशः विनष्टेमूलनाशःस्याद्दैवराजकृताहतइतिनारदवचनात् दैवरा
जकृताहते दैवमग्न्युदकदेशोपप्लवादिदेवकृताद्विनाशाद्विना तथा स्वापराधरहिताद्राजकृतात् दैवराजकृतेतुविनाशेसवृद्धिकंमूलंदात
व्यम् अधमर्णेनाध्यंतरंवा यथाह स्त्रोतसापहृतेक्षेत्रेराज्ञाचैवापहारिते आधिरन्योथकर्तव्योदेयंवाधनिनेधनमिति तत्रस्त्रोतसापहृते
इतिदैवकृतोपलक्षणम् ६० अपिच आधेर्भोग्यस्यगोप्यस्यचस्वीकरणादुपभोगादाधिग्रहणसिद्धिर्नसाक्षिलेख्यमात्रेण नाप्युद्देशमा-

आधेः स्वीकरणात्सिद्धीरक्ष्यमाणोप्यसारताम् यातश्चेदन्यआधेयोधनभाग्वाधनीभवेत् ६१

त्रेण यथाहनारदः आधिस्तुद्विविधःप्रोक्तोजंगमःस्थावरस्तथा सिद्धिरस्योभयस्यापिभोगोयद्यस्तिनान्यथेति अस्यचफ
लं आधौप्रतिग्रहेक्रीतेपूर्वातुबलवत्तरेति स्वीकारांताक्रियापूर्वाबलवती स्वीकाररहितातुपूर्वापिनबलवतीति सचाधिःप्रयत्नेन
रक्ष्यमाणोऽपि कालवशेनयद्यसारतामधिकृतएव सवृद्धिकमूल्यद्रव्यापर्याप्ततांगतस्तदाधिरन्यः कर्तव्योधनिने धनंवादेयम् र-
क्ष्यमाणोप्यसारतामितिवदताधिः प्रयत्नेन रक्षणीयोधनिनेतिज्ञापितम् ६१ २ २ २

आधिः प्रणश्येद्द्विगुणेइत्यस्यापवादमाह चरित्रंशोधनाचरितं चरित्रेणबंधकं तेनयद्द्रव्यमात्मसात्कृतंपराधीनंवाकृतं एतदुक्तंभवति धनिनः स्वच्छाशयत्वेन बहुमूल्यमपिद्रव्यमाधीकृत्याधमर्णेनाल्पमेवद्रव्यमात्मसात्कृतं यदिवाधमर्णस्यस्वच्छाशयत्वेनाल्पमूल्यमाधिं गृहीत्वा बहुद्रव्यमेवाधनिनाधमर्णाधीनंकृतमिति तद्धनंसवृद्धिकंदाप्यासहदापयेत् अयमाशयः एवंरूपंबंधकंद्विगुणीभूतेपिद्रव्येनन श्यति किंतु द्रव्यमेवद्विगुणंदातव्यमिति तथासत्यंकारकृतम् करणंकारोभावेघत्र् सत्यस्यकारःसत्यंकारः कारे सत्यागदस्येति मुम् सत्यंकारेणकृतंसत्यंकारकृतम् अयमभिसंधिः यदाबंधकार्पणसमयएवेत्थंपरिभाषितंद्विगुणीभूतेपिद्रव्येद्रव्यमेवदातव्यंना

चरित्रबंधककृतंसवृद्ध्यादापयेद्धनम् सत्यंकारकृतंद्रव्यंद्विगुणंप्रतिदापयेत ६२

धिनाशइति तदातद्द्विगुणंदापयेदिति अन्योर्थः चरित्रमेवबंधकंचरित्रबंधकं चरित्रशब्देनगंगास्नानाग्निहोत्रादिजनितमपूर्वमुच्यते य त्रतदेवाधीकृत्य यद्द्रव्यमात्मसात्कृतं तदातत्रतदेवद्विगुणीभूतंदातव्यंनाधिनाशइति आधिप्रसंगादन्यदुच्यते सत्यंकारकृतमिति क्रय विक्रयादिव्यवस्थानिर्वाहाय यदंगुलीयकादिपरहस्तेकृतंतद्व्यवस्थातिक्रमे द्विगुणंदातव्यम् तत्रापियेनांगुलीयकाद्यर्पितंसएवचेद्व्य वस्थातिवर्तीतेन तदेवदातव्यम् इतरश्चेद्व्यवस्थातिवर्तीतदा तदेवांगुलीयकादिद्विगुणंप्रतिदापयेदिति ६२ ७

किंच धनदानेनाधिमोक्षणायोपस्थितस्याधिर्मोक्तव्योधनिना नवृद्धिलोभेन स्थापितव्यः अन्यथा अमोक्षणेस्तेनः चौरवद्दंड्यो-
भवति असन्निहितेपुनःप्रयोक्तरि कुलेतदा आप्तहस्ते सवृद्धिकं धनंनिधायाधमर्णकः स्वीयंबंधकंगृह्णीयात् ६३ अथप्रयोक्ताप्य
सन्निहितस्तदाप्तावश्चधनस्य गृहीतारो नसंति यदिवासंनिहितेप्रयोक्तर्याधिविक्रयेणधन दित्साधमर्णस्य तत्रकिंकर्तव्यमित्यपेक्षित
आह तस्मिन्काले यत्तस्याधेर्मूल्यं तत्परिकल्प्य तत्रैवधनिनि तयाधिंवृद्धिरहितंस्थापयेन्नततऊर्ध्वेविवर्द्धते यावद्धनीधनंगृहीत्वा

उपस्थितस्यमोक्तव्य आधिःस्तेनोऽन्यथाभवेत् प्रयोजकेऽसतिधनंकुलेन्यस्याधिमाप्नुयात्
६३ तत्कालकृतमूल्योवातत्रतिष्ठेदवृद्धिकः विनाधारणिकाद्वापिविक्रीणीतससाक्षिकं ६४

तमाधिंमुंचति यावद्वातन्मूल्यद्रव्यमृणेप्रवेशयति यदातुद्विगुणीभूतेपिधनेद्विगुणंधनमेवगृहीतव्यम् नत्वाधिनाशइतिविचारित
मृणग्रहणकालएव तदाद्विगुणीभूतेद्रव्ये असन्निहितेचाधमर्णेधनिनाकिंकर्तव्यमित्यत आह धारणिकादधमर्णाद्विना अधमर्णे
असन्निहितेसाक्षिभिस्तदाप्तैश्चसह तमाधिंविक्रीयधनंगृह्णीयाद्धनी वाशब्दोव्यवस्थितविकल्पार्थः यदर्णग्रहणकालेद्विगुणीभूते
पिधनेधनमेवगृहीतव्यम् नाधिनाशइति नविचारितम् तदा आधिःप्रणश्येद्विगुणइत्याधिनाशःविचारिते त्वयंपक्षइति ६४

भोग्याधौविशेषमाह यदाप्रयुक्तंधनंस्वकृतयावृद्ध्या द्विगुणीभूतंतदाधौकृते तदुत्पन्नेद्रव्येद्विगुणेधनिनः प्रविष्टे धनिनाधिर्मोक्तव्यः यदिवादा
वेवाधौदत्तेद्विगुणीभूतेद्रव्येत्वयाधिर्मोक्तव्यइतिपरिभाषयाकारणांतरेणवाभोगाभावेन यदाद्विगुणीभूतमृणं तदाधौभोगार्थंधनिनिप्रविष्टेतदु
त्पन्नेद्रव्येद्विगुणेसत्याधिर्मोक्तव्यः अधिकभोगेतदपिदेयम् सर्वथासवृद्धिकमूल्यापाकरणार्थाध्युपभोगविषयमिदंवचनम् तमेनंक्षया-
धिमाचक्षते लौकिकाः यत्रतुवृद्ध्यर्थएवाध्युपभोगइतिपरिभाषा तत्रद्विगुण्यातिक्रमेपियावन्मूल्यदानं यावत्तुभुक्तमेवाधिं एतदेवस्पष्टी

यदातुद्विगुणीभूतमृणमाधौतदाखलु मोच्यआधिस्तदुत्पन्नेप्रविष्टेद्विगुणेधने ६५

कृतंबृहस्पतिना ऋणीबंधमवाप्नुयात् फलभोग्यंपूर्णकालंदत्वाद्रव्यंतुसामकम् यदिप्रकर्षितंतत्स्यात्तदानधनभाग्धनी ऋणापाकरणाद्बं
धंपरस्परमतंविनेति अस्यार्थः फलंभोग्यंयस्यासौफलभोग्यः बंधआधिः सचद्विविधः सवृद्धिमूल्यापाकरणार्थोवृद्धिमात्रार्थापाकरणार्थश्च
तत्र सवृद्धिमूल्यापाकरणार्थंबंधंपूर्णकालं पूर्णःकालोयस्यासौपूर्णकालस्तमाप्नुयाद्दणी यदासवृद्धिकंमूल्यंफलद्वारेणधनिनःप्रविष्टंतदाबंधमा
प्नुयादित्यर्थः वृद्धिमात्रापाकरणार्थंतु बंधकंसामकंदत्वाप्नुयाद्दणी समंमूल्यंसममेवसामकम् ६५ ७ ७

अस्यापवादमाह तद्बंधकंप्रकर्षितमतिशयितंवृद्धेरप्यधिकफलंयदिस्यात्तदानधनभाग्धनी सामकंनलभतेधनी मूल्यमदत्वैवर्णीबंधमाप्नुयादिति यावत् अथत्वप्रकर्षितंतद्बंधनंवृद्धमप्यपर्याप्तम् तदासामकंदत्वापिबंधंनलभेताधमर्णः वृद्धिविशेषमपिदत्वैवलभेतेत्यर्थः पुनरुभयत्रापवाद माह उत्तमाधमर्णयोः परस्परानुमत्यभावेयदिप्रकर्षितमित्याद्युक्तं परस्परानुमतौतूत्कृष्टमपिबंधकंयावन्मूल्यदानमुपभुंक्ते धनीनिकृष्टम- पिमूल्यमात्रदानेनाधमर्णोलभतइति इतिऋणादानप्रकरणम् ६६ उपनिधिंप्रत्याह निक्षेप्यद्रव्यस्याधारभूतंद्रव्यांतरं वासनंकरं डादितत्स्थंवासनस्थंयद्द्रव्यंरूपसंख्यादिविशेषमनाख्याय अकथयित्वामुद्रितमन्यहस्तेरक्षणार्थंविस्रंभादर्प्यतेस्थाप्यते तद्द्रव्यमौपनिधिक-

यदिप्रकर्षितंतत्स्यात्परस्परमतंविना ६६ वासनस्थमनाख्याय हस्तेन्यस्ययदर्प्यते द्रव्यंतदौपनिधिकंप्रतिदेयंतथैवतु ६७

नदाप्योपहृतंतंतुराजदैविकतस्करैः भ्रेषश्चेन्मार्गितेदत्तेदाप्योदंडंचतत्समम् ६८

मुच्यतेयथाहनारदः असंख्यातम विज्ञातंसमुद्रंयन्निधीयते तज्जानीयादुपनिधिंनिक्षेपगणितंविदुरिति प्रतिदेयंतथैवतु यस्मिन्स्थापितंतेनयथैवपूर्वंसमुद्रादि चिह्नितमर्पितंतथैवस्थापकायप्रतिदेयंप्रत्यर्पणीयम् ६७ प्रतिदेयमित्यस्यापवादमाह तमुपनिधिंराज्ञादैवेनोदकादिनातस्करै- र्वापहृतंनष्टंनदाप्योसौ यस्मिन्नुपहितंधनिनएवतत्द्रव्यंनष्टंयदिजिह्मकारितंनभवति यथाहनारदः ग्रहीतुः सहियोर्थेननष्टो नष्टःसदायिनः दैवराजकृतेतद्वद्वेत्तज्जिह्मकारितमिति अस्यापवादः स्वामिनामार्गितेयाचितेयदिनददाति तदुत्तरकालंयद्यपिरा-

जादिभिर्भ्रेषोनाशः संजातस्तथापि तद्द्रव्यं मूल्यकल्पनयाधनिने ग्रहीतादाप्योराज्ञेचतत्समंदंडम् ६८ भोक्तारमप्याह यः स्वेच्छयास्वाम्य ननुज्ञयोपहितंद्रव्यमाजीवत्युपभुंक्ते व्यवहरतिवा प्रयोगादिनालाभार्थमसावुपभोगानुसारेण लाभानुसारेणच दंड्यस्तंचोपधिंसोद यमुपभोगेसवृद्धिके व्यवहारे सलाभंधनिने दाप्यः वृद्धिप्रमाणंच कात्यायनेनोक्तम् निक्षेपंवृद्धिशेषंचक्रयंविक्रयमेवच याच्यमानंन चेद्दद्याद्वर्द्धतेपंचकंशतमिति एतच्चभक्षितेद्रष्टव्यम् उपेक्षाज्ञान नष्टेतु तेनैवविशेषोदर्शितः भक्षितंसोदयंदाप्यः समंदाप्यउपेक्षितं किंचिन्न्यूनंप्रदाप्यःस्यात् द्रव्यमज्ञाननाशितमिति किंचिन्न्यूनमिति चतुर्थांशहीनं उपनिधेर्धर्मान् याचितादिष्वतिदिशति याचिताद्यु

आजीवन्स्वेच्छयादंड्योदाप्यस्तंचापिसोदयम् याचितान्वाहितन्याससनिक्षेपादिष्वयंविधिः ६९

ष्वप्येषु वस्त्रालंकारादियाचित्वानीतं यदेकस्य हस्तेनिहितंद्रव्यं तेनाप्यनुपश्चादन्यहस्तेस्वामिनेदेहीतिनिहितंतदन्वाहितं न्यासोनामगृह स्वामिनोदर्शयित्वातत्परोक्षमेवगृहजनहस्तेप्रक्षेपोगृहस्वामिनेसमर्पणीयमिति समक्षंतुसमर्पणंनिक्षेपः आदिशब्देनसुवर्णकारा दिहस्तेकटकादिनिर्माणायन्यस्तस्यसुवर्णादेः प्रतिन्यासस्यच परस्परप्रयोजनापेक्षया त्वयेदंमदीयंरक्षणीयं मयेदंत्वदीयंरक्ष्यतेइति न्यस्तस्यग्रहणम् यथाहनारदः एषएवविधिर्दृष्टोयाचितान्वाहितादिषु शिल्पिषूपनिधौन्यासेप्रतिन्यासेतथैवचेति एतेषुयाचिता दिष्वयंविधिः उपनिधेयःप्रतिदानादिविधिः सएववेदितव्यः इतिनिक्षेपप्रकरणम् प्रमाणंलिखितंभुक्तिः साक्षिणश्चेतिकीर्तितं

मित्युक्तं तत्रभक्तिर्निरूपिता सांप्रतंसाक्षिस्वरूपंनिरूप्यते साक्षीचसाक्षाद्दर्शनाच्छ्रवणाच्चभवति यथाहमनुः समक्षदर्शना-
त्साक्ष्यंश्रवणाच्चैवसिध्यतीति सचद्विविधः कृतोकृतश्चेति साक्षित्वेननिरूपितःकृतः तत्रकृतःपंचविधोकृतश्चषड्विधइत्येकादशवि
धः यथाहनारदः एकादशविधःसाक्षीशास्त्रेदृष्टोमनीषिभिः कृतःपंचविधोज्ञेयःषड्विधोकृतउच्यतइति तेषांचभेदस्तेनैवदर्शि
तः लिखितःस्मारितश्चैवयदृच्छाभिज्ञएवच गूढश्चोत्तरसाक्षीचसाक्षीपंचविधःस्मृतइति लिखितादीनांचस्वरूपंकात्यायनेनोक्तं
अर्थिनास्वयमानीतोयोलेख्येसंनिवेश्यते ससाक्षीलिखितोनामस्मारितःपत्रकादृतइति स्मारितःपत्रकादृतइत्यस्यविवरणंतेनैवकृतम् यस्तुका
र्यप्रसिद्ध्यर्थंदृष्ट्वाकार्यंपुनःपुनः स्मार्यतेह्यर्थिनासाक्षीसस्मारितइहोच्यतइति यस्तुयदृच्छयागतःसाक्षीक्रियतेसयदृच्छाभिज्ञः अनयोः
पत्रारूढत्वेपिभेदस्तेनैवदर्शितः प्रयोजनार्थमानीतःप्रसंगादागतश्चयः द्वौसाक्षिणौत्वलिखितौपूर्वपक्षस्यसाधकाविति तथा अर्थिना
स्वार्थसिद्ध्यर्थंप्रत्यर्थिवचनंस्फुटम् यःश्रावितःस्थितोगूढोगूढसाक्षीसउच्यतेइति तथा साक्षिणामपियःसाक्ष्यमुपर्युपरिभाषते श्रवणा-
च्छ्रावणाद्वापिससाक्ष्युत्तरसंज्ञितइति षड्विधस्याप्यकृतस्यभेदोनारदेनदर्शितः ग्रामश्चप्राड्विवाकश्चराजाचव्यवहारिणाम् कार्येष्व-
धिकृतोयःस्यादर्थिनाप्रहितश्चयः कुल्याःकुलविवादेषुविज्ञेयास्तेपिसाक्षिणइति प्राड्विवाकग्रहणंलेखकसभ्योपलक्षणार्थं लेख
कःप्राड्विवाकश्चसभ्याश्चैवानुपूर्वशः नृपेपश्यतितत्कार्यंसाक्षिणःसमुदाहृताइति ६९ तेपिसाक्षिणःकीदृशाःकियंतश्चभवंतीत्यत
आह तपस्विनस्तपःशीलाः दानशीलादाननिरताः कुलीनामहाकुलप्रसूताः सत्यवादिनः सत्यवादनशीलाः धर्मप्रधानानार्थकाम

प्रधानाः ऋजवोऽकुटिलाः पुत्रवंतोविद्यमानपुत्राः धनान्विताबहुसुवर्णादिधनयुक्ताः श्रौतस्मार्तक्रियापराः नित्यनैमित्तिकानुष्ठानरताः एवंभूताःपुरुषाः त्र्यवराः साक्षिणोभवंति त्रयः अवराःअन्यूनायेषांतेत्र्यवराः त्रिभ्योर्वाङ्न्येभवंति परतस्तुयथाकामंभवंतीत्यर्थः जातिमनतिक्रम्ययथाजाति जातयोमूर्द्धावसिक्तादयः अनुलोमजाःप्रतिलोमजाश्च तत्रमूर्द्धावसिक्तानांमूर्द्धावसिक्ताःसाक्षिणोभवंति एवमंबष्ठादिष्वपिद्रष्टव्यम् वर्णमनतिक्रम्ययथावर्णं वर्णाब्राह्मणादयः तत्रब्राह्मणानांब्राह्मणाएवोक्तलक्षणाउक्तसंख्याकाः साक्षिणोभवंति एवंक्षत्रियादिष्वपिद्रष्टव्यम् यथास्त्रीणांसाक्ष्यंस्त्रियएवकुर्युः यथाहमनुः स्त्रीणांसाक्ष्यंस्त्रियःकुर्युरिति सजातिसवर्णसंभवेसर्वेमूर्द्धाव

तपस्विनोदानशीलाःकुलीनाःसत्यवादिनः धर्मप्रधानाऋजवःपुत्रवंतोधनान्विताः ७०

त्र्यवराः साक्षिणोज्ञेयाःश्रौतस्मार्तक्रियापराः यथाजातियथावर्णंसर्वेसर्वेषुवास्मृताः ७१

सिक्तादयोब्राह्मणादयश्चसर्वेषुमूर्द्धावसिक्तादिषुब्राह्मणादिषुचयथासंभवंसाक्षिणोभवंति उक्तलक्षणानांसाक्षिणामसंभवेप्रतिषेधराहितानामन्येषामपिसाक्षित्वप्रतिपादनार्थमसाक्षिणोद्रष्टव्याः तेचपंचविधानारदेनदर्शिताः असाक्ष्यपिहिशास्त्रेषुदृष्टःपंचविधोबुधैः वचनाद्दोषतोभेदात्स्वयमुक्तेर्मृतांतरइति केपुनर्वचनादसाक्षिणइत्यतआह श्रोत्रियास्तापसास्वृद्धायेचप्रव्रजितादयः असाक्षिणस्तेवचनान्नात्रहेतुरुदाहृतइति तापसावानप्रस्थाः आदिशब्देनपित्राविवदमानादीनांग्रहणम् यथाहशंखः पित्राविवदमानगुरुकुलवासि

परिव्राजकवानप्रस्थानिर्ग्रंथाश्चसाक्षिणइति दोषादसाक्षिणोदर्शिताः स्तेनाःसाहसिकाश्चंडाः कितवावंचकास्तथा असाक्षिणस्तेदुष्ट
त्वात्तेषुसत्यंनविद्यतइति चंडाः कोपनाः कितवाद्यूतकृतः भेदादसाक्षिणांस्वरूपंतेनैवदर्शितम् साक्षिणांलिखितानांचनिर्दिष्टानां
चवादिना तेषामेकोन्यथावादीभेदात्सर्वेनसाक्षिणइति यथास्वयमुक्तिस्वरूपंचोक्तम् स्वयमुक्तिरनिर्दिष्टःस्वयमेवेत्ययोवदेत् सूचीत्यु
क्तः सशास्त्रेषुनससाक्षित्वमर्हतीति मृतांतरस्यापिलक्षणमुक्तम् योर्थःश्रावयितव्यःस्यात्तस्मिन्नसतिचार्थिनि कृतद्ददतुसाक्षित्वमि
त्यसाक्षीमृतांतरइति येनार्थिनाप्रत्यर्थिनावासाक्षिणांयोर्थःश्रावयितव्योभवेत् यूयमत्रार्थेसाक्षिणइति तस्मिन्नर्थिनिप्रत्यर्थिनिवाअसति

स्त्रीबालवृद्धकितवमत्तोन्मत्ताभिशस्तकाः रंगावतारिपाखंडिकूटकृद्विकलेंद्रियाः ७२
पतितास्नार्थसंबंधिसहायरिपुतस्कराः साहसीदृष्टदोषश्चनिर्धूताद्यास्त्वसाक्षिणः ७३

मृतेर्थेचानिवेदितेसाक्षित्वंकस्मिन्नर्थेकस्यवाकृतेसाक्ष्यंवदत्विति मृतांतरः साक्षीनभवति यत्रतुमुमूर्षुणास्वस्थेनवापित्रापुत्रादयःश्राविता
अस्मिन्नर्थेमीसाक्षिणइति तत्रमृतांतरोपिसाक्षी यथाहनारदः मृतांतरोर्थिनिप्रेतेमुमूर्षुश्राविताहृते यथा श्रावितोनातुरेणापियस्त्वर्थोधर्मसं
हितः मृतेपितत्रसाक्षीस्यात्षट्सुचान्वाहितादिष्विति ७० ७१ तानेतानसाक्षिणोदर्शयति स्त्रीप्रसिद्धा बालोऽप्राप्तव्यवहारः वृद्धोशीति
कावरः वृद्धग्रहणंवचननिषिद्धानामन्येषामपिश्रोत्रियादीनामुपलक्षणार्थं कितवोक्षदेवी मत्तः पानादिना उन्मत्तोग्रहाविष्टः अभिशस्तो

भियुक्तो ब्रह्महत्यादिना रंगावतारी चारणः पाखंडिनो निर्ग्रंथप्रभृतयः कूटकृत्कपटलेख्यादिकारी विकलेंद्रियः श्रोत्रादिरहितः पतितो ब्र-
ह्महादिः आप्तः सुहृत् अर्थसंबंधी विप्रतिपद्यमानार्थसंबंधी सहाय एककार्यः रिपुः शत्रुः तस्करः स्तेनः साहसी स्वबलावष्टंभकारी दृष्ट
दोषो दृष्टवितथवचनः निर्धूतो बंधुभिस्त्यक्तः आद्यशब्दादन्येषामपि स्मृत्यंतरोक्तानां दोषादसाक्षिणां भेदादसाक्षिणां स्वयमुक्ते र्मृतांत
रस्यन्चग्रहणम् एते स्त्रीबालादयः साक्षिणो न भवंति ७२ ७३ त्र्यवराः साक्षिणो ज्ञेया इत्यस्यापवादमाह ज्ञानपूर्वकं नित्यनैमित्ति-
कधर्मानुष्ठायी धर्मवित् स एकोप्युभयानुमतश्चेत्साक्षी भवति अपिशब्दाद्द्वावपि यद्यपि श्रौतस्मार्तक्रियापरा इति त्र्यवराणामपि धर्मवि

उभयानुमतः साक्षी भवत्येकोपि धर्मवित् सर्वः साक्षी संग्रहणे चौर्यपारुष्यसाहसे ७५

त्त्वं समानं तथापि तेषामुभयानुमत्यभावेपि साक्षित्वं भवत्येकस्य द्वयोर्वोभयानुमत्यैव साक्षित्वं भवतीत्यर्थवत् त्र्यवरग्रहणम् तपस्विनो दान
शीला इत्यस्यापवादमाह संग्रहणादीन् वक्ष्यमाणलक्षणानि तेषु सर्वे वचननिषिद्धास्तपः प्रभृतिगुणरहिताश्च साक्षिणो भवंति दोषादसाक्षि
णो भेदादसाक्षिणः स्वयमुक्तेश्चात्रापि साक्षिणो न भवंति सत्याभावादितिहेतोरत्रापि विद्यमानत्वात् मनुष्यमारणं चौर्यं परदाराभिमर्शनम्
पारुष्यमुभयं चेति साहसं स्याच्चतुर्विधमिति वचनाद्यद्यपि स्त्रीसंग्रहणचौर्यपारुष्याणां साहसत्वं तथापि तेषां स्वबलावष्टंभेन जनसमक्षं-
क्रियमाणानां साहसत्वम् रहसि क्रियमाणानां तु संग्रहणादिशब्दवाच्यत्वमिति तेषां साहसात्पृथगुपादानम् ७५ ७ ७

साक्षिश्रावणमाह अर्थिप्रत्यर्थिसन्निधौ साक्षिणः समवेतान् नासमवेताः पृष्टाः प्रब्रूयुरिति गौतमवचनात् वक्ष्यमाणं श्रावयेत् तत्रापि कात्यायनेन विशेषो दर्शितः सभान्तः साक्षिणः सर्वानर्थिप्रत्यर्थिसन्निधौ प्राड्विवाको नियुञ्जीत विधिनानेन सान्त्वयन् देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान् उदङ्मुखान्प्राङ्मुखान्वा पूर्वाह्णे वै शुचिः शुचीन् आहूय साक्षिणः पृच्छेन्नियम्य शपथैर्भृशम् समस्तान् विदिताचारान् विज्ञातार्थान्पृथक्पृथगिति तथा ब्राह्मणादिषु श्रावणे मनुना नियमो दर्शितः सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः गोबीजकां

साक्षिणः श्रावयेद्वापि प्रतिवादिसमीपगान् ये पातककृतां लोका महापातकिनां तथा ७५ अग्निदानां च ये लोका ये च स्त्रीबालघातिनाम् स तान्सर्वानवाप्नोति यः साक्ष्यमनृतं वदेत् ७६ सुकृतं यत्त्वया किंचिज्जन्मान्तरशतैः कृतं तत्सर्वं तस्य जानीहि यं पराजयसे मृषा ७७ चनैर्वैश्यं शू

द्रं सर्वैस्तु पातकैरिति ब्राह्मणमन्यथा ब्रुवतः सत्यं ते नश्यतीति शापयेत् क्षत्रियं वाहनायुधानि तव विफलानीति गोबीजकाञ्चनादीनि तव विफलानि भविष्यन्तीति वैश्यं शूद्रमन्यथा ब्रुवतस्तव सर्वाणि पातकानि भविष्यन्तीति शापयेत् अत्र चापवादस्तेनैव दर्शितः गोरक्षकान्वाणिजकांस्तथा कारुकुशीलकान् प्रेष्यान्वार्धुषिकांश्चैव विप्राञ्छूद्रवदाचरेदिति विप्रग्रहणं क्षत्रियवैश्ययोरुपलक्षणार्थम् कुशीलका गायकाः प्रतिवादिना साक्षिदूषणे दत्ते प्रत्यक्षयोग्यदूषणेषु बाल्यादिषु तथैव निर्णयः अयोग्येषु तु तद्वचनाल्लोकतश्च निर्णयो न साक्ष्यन्तरेणेति नानवस्था यदि साक्षिदोषमुद्भाव्य साधयितुं न शक्नोति प्रतिवादी तदासौ दोषानुसारेण दण्ड्यः अथ साधयति तदा न साक्षिणः यथाह अभावयन्दमं दाप्यो दूषणं साक्षिणां स्फुटम् भाविते साक्षिणो वर्ज्याः

साक्षिधर्मनिराकृताइति उद्दिष्टेषुच सर्वेषुसाक्षिषु दुष्टेष्वर्थीयदाक्रियांतरनिरपेक्षस्तदापराजितोभवति जितःसविनयंदाप्यःशास्त्रदृष्टे नकर्मणा यदिवादीनिराकांक्षःसाक्षिसत्वेष्ववस्थितइतिस्मरणात् साकांक्षश्चेत्क्रियांतरमवलंबेतेत्यभिप्रायः कथंश्रावयेदित्यत आह पातकोपपातकमहापातककारिणामग्निदानांस्त्रीबालघातिनांच येलोकास्तान्सर्वानसावाप्नोति यःसाक्ष्यमनृतंवदति यथाजन्मांतरशतैर्य त्सुकृतंकृतं तत्सर्वंतस्यभवति यस्तेनानृतवदनेनपराजितोभवतीतिश्रावयेदितिसंबंधः एतच्चशूद्रविषयंद्रष्टव्यं शूद्रंसर्वैस्तुपातकैरिति शूद्रेसर्वपातकश्रावणस्यविहितत्वात् गोरक्षकादिद्विजातिविषयंच गोरक्षकान्वाणिजका नित्युक्तत्वात् अन्यानेकजन्मार्जितसुकृ-

**अब्रुवन्हिनरःसाक्ष्यमृणंसदशबंधकम् राज्ञासर्वंप्रदाप्यःस्यात्षट्चत्वारिंशकेहनि ७८**

तसंक्रमणस्यमहापातकादिफलप्राप्तेश्चानृतमात्रेणानुपपत्तेः साक्षिसंत्रासार्थमिदमुच्यते यथाहनारदः पुराणैर्धर्मवचनैःसत्यमाहा- त्म्यकीर्तनैः अनृतस्यापवादैश्चभृशमुत्त्रासयेदिमानिति ७५ ७६ ७७ यदातुश्राविताःसाक्षिणःकथंचिन्नब्रूयुस्तदाकिंकर्तव्यमित्यत- आह यःसाक्ष्यमंगीकृत्यश्रावितःसन्कथंचिन्नवदति सराज्ञासर्वंसवृद्धिकमृणंधनिनेदाप्यः सदशबंधकंदशमांशसहितं दशमांशश्चराज्ञो भवति राज्ञाधमर्णिकोदाप्यः साधिताद्दशकंशतमित्युक्तत्वात् एतच्चषट्चत्वारिंशकेहनिप्राप्तेवेदितव्यम् ततोर्वाग्वदन्नदाप्यःइदंच व्याध्याद्युपप्लवरहितस्य यथाहमनुः त्रिपक्षादब्रुवन्साक्ष्यमृणादिषुनरोगदः तदृणंप्राप्नुयात्सर्वं दशबंधंचसर्वशइति अगदइतिराजदैवोप पूर्वविरहोपलक्षणम् ७८

यस्तु जानन्नपि साक्ष्यमेव नांगीकरोति दौरात्म्यात्तं प्रत्याह यः पुनर्नराधमो विप्रतिपन्नमर्थं विशेषतो जानन्नपि साक्ष्यं न ददाति नांगीकरोति
स कूटसाक्षिणां तुल्यः पापैः तुल्यो दंडेन च कूटसाक्षिणां च दंडं वक्ष्यति कूटसाक्षिणश्च दंडयित्वा पुनर्व्यवहारः न प्रवर्तनीयः कृतेपि कौटसा-
क्ष्ये विदिते निवर्तनीयः यथाह मनुः यस्मिन् यस्मिन् विवादे तु कौटसाक्ष्यं कृतं भवेत् तत्तत्कार्यं निवर्तेत कृतं चाप्यकृतं भवेदिति ७९ साक्षि
विप्रतिपत्तौ कथं निर्णय इत्यत आह साक्षिणां द्वैधे विप्रतिपत्तौ बहूनां वचनं ग्राह्यम् समेषु समसंख्येषु द्वैधे ये गुणिनस्तेषां वचनं प्रमाणं यदा पुनर्गु
णिनां विप्रतिपत्तिस्तदा ये गुणवत्तमाः श्रुताध्ययनतदर्थानुष्ठानधनपुत्रादिगुणसंपन्नास्तेषां वचनं ग्राह्यं यत्र तु गुणिनः कतिपये इतरे बहव

न ददाति हि यः साक्ष्यं जानन्नपि नराधमः स कूटसाक्षिणां पापैस्तुल्यो दंडेन चैव हि ७९ द्वैधे बहूनां वचनं समेषु गुणिनां तथा गुणि
द्वैधे तु वचनं ग्राह्यं ये गुणवत्तमाः ८० यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयः ८१

स्तत्रापि गुणिनामेव वचनं ग्राह्यं उभयानुमितः साक्षी भवत्येकोपि धर्मविदिति गुणातिशयस्य मुख्यत्वात् यत्तु भेदाद्साक्षिण इत्युक्तं तत्सर्वसा
म्येनागृह्यमाणाविशेषविषयम् ८० साक्षिभिश्च कथमुक्ते जयः कथं वा पराजय इत्यत आह यस्य वादिनः प्रतिज्ञां द्रव्यजातिसंख्यादिविशिष्टां
साक्षिणः सत्यां वदंति सत्यमेवं जानीमो वयमिति स जयी भवति यस्य पुनर्वादिनः प्रतिज्ञामन्यथा वैपरीत्येन मिथ्यैतदिति वदंति तस्य परा
जयो ध्रुवो निश्चितः यत्र तु प्रतिज्ञातार्थस्य विस्मरणादिनाभावाभावौ साक्षिणो न प्रतिपादयंति तत्र प्रमाणांतरेण निर्णयः कार्यः

नचराज्ञासाक्षिणः पुनः पुनः प्रष्टव्याः स्वभावोक्तमेववचनंग्राह्यं यथाह स्वभावोक्तंवचस्तेषांग्राह्यंयद्दोषवर्जितम् उक्तेतुसाक्षिणोराज्ञानप्रष्टव्याःपुनःपुनरिति ८१ अन्यथावादिनोयस्यध्रुवस्तस्यपराजयइत्यस्यापवादमाह पूर्वोक्तलक्षणैः साक्षिभिः साक्ष्येस्वाभिप्रायेप्रतिज्ञातार्थवैपरीत्येनाभिहिते यद्यन्ये पूर्वेभ्योगुणवत्तमाद्विगुणावाअन्यथा प्रतिज्ञातार्थानुगुण्येनसाक्ष्यंब्रूयुस्तदापूर्वेसाक्षिणः कूटामिथ्यावादिनोभवेयुः नन्वेतदनुपपन्नम् अर्थिप्रत्यर्थिसभ्यसभापतिभिः परीक्षितैः प्रमाणभूतैः साक्षिभिर्निर्गदितेऽर्थे प्रमाणांतरान्वेषणेऽनवस्थादोषप्रसंगात् निर्णिक्तेव्यवहारेतुप्रमाणमफलंभवेत् लिखितंसाक्षिणोवापिपूर्वमावेदितंनचेत् यथापक्वेषुधान्येषुनिष्फलाःप्रावृषोगुणाः निर्णिक्तव्यवहाराणांप्रमाणमफलंतथेतिनारदवचनाच्च उच्यते यदार्थीप्रतिज्ञातार्थस्यांतरात्मसाक्षित्वेनाविष्कृतदोषाणामपिसाक्षिणांवचनमर्थविसंवादित्वेनप्रमाणममन्यमानः साक्षिष्वपिदोषंकल्पयति तदाप्रमाणांतरान्वेषणंकेनवार्यते उक्तंच यस्यदुष्टंकरणं यत्रचमिथ्येतिप्रत्ययः सएवासमीचीनइति यदाचक्षुरादिकरणदोषानध्यवसायेप्यर्थविसंवादात्तज्जनितस्यज्ञानस्यप्रामाण्येनकरणदोषकल्पनातथेहापि साक्षिपरीक्षातिरेकेणवाक्यपरीक्षोपदेशाच्च साक्षिभिर्भाषितंवाक्यंसहसभ्यैःपरीक्षयेदिति कात्यायनेनाप्युक्तं यदाशङ्काक्रियान्यायात्तदातद्वाक्यशोधनं

उक्तेपिसाक्षिभिः साक्ष्ये यद्यन्येगुणवत्तमाः द्विगुणावान्यथाब्रूयुः कूटाः स्युःपूर्वसाक्षिणः ८२

शुद्धात्त्ववाक्याद्यः शब्दः स शब्दोर्थ इतिस्थितिरिति क्रियासाक्षिलक्षणा नार्थसंबंधिनोनाप्ताइतिन्यायाद्यदाशब्दा नदातद्वाक्यशोधनं साक्षिवाक्य
शोधनं कर्तव्यम् वाक्यशद्धिश्चसत्यार्थप्रतिपादनेन सत्येनशब्ध्यतेवाक्यमितिस्मरणात् एवंशब्दायाः क्रियायाः शब्दात्त्ववाक्याद्यः शब्दोवगतोर्थः
स शब्दस्तथाभूत इतिस्थितिरीदृशीमर्यादान्यायविदाम् कारणदोषबाधकप्रत्ययाभावेसत्यवितथएवार्थइत्यर्थः ननुस्वयमर्थिनाप्रमाणीकृताः सा-
क्षिणोतिक्रम्य कथंक्रियांतरंप्रमाणीक्रियते नैषदोषः यतः क्रियांबलवतींमुक्त्वादुर्बलांयोवलंबते सजयेवधृतेसभ्यैः पुनस्तांनाप्नुयात्क्रियामि
ति कात्यायनेनजयावधारणोत्तरकालं क्रियांतरपरिग्रहनिषेधाज्जयावधारणात्प्राक्क्रियांतरपरिग्रहोदर्शितः नारदेनापि निर्णिक्तेव्यवहारे
तुप्रमाणमफलंभवेदितिवदताजयावधारणोत्तरकालमेवप्रमाणांतरंनिषिद्धंनप्रागपि तस्मादुक्तेपिसाक्षिभिः साक्ष्येअपरितुष्यताक्रियां
तरमंगीकर्तव्यमितिस्थितम् एवंस्थितेयद्यभिहितवचनेभ्यः साक्षिभ्योगुणवत्तमाः द्विगुणावापूर्वनिर्दिष्टाअसन्निहिताः साक्षिणः संति
तदातएवप्रमाणीकर्तव्याः स्वभावेनैवयद्ब्रूयुस्तद्ग्राह्यंव्यावहारिकमिति अस्यसर्वव्यवहारशेषत्वात् निर्णिक्तेव्यवहारेतुप्रमाणमफ
लंभवेत् लिखितंसाक्षिणोवापिपूर्वमावेदितंनचेदितिनारदवचनाच्च पूर्वनिर्दिष्टानामसंभवेत्वनिर्दिष्टाअपितथाविधाएवसाक्षिणो
ग्राह्या नदिव्यं संभवेसाक्षिणांप्राज्ञोवर्जयेद्दैविकींक्रियामितिस्मरणात् तेषामसंभवेदिव्यंप्रमाणंकर्तव्यम् अतः परमपरितुष्यताप्य
र्थिनानप्रमाणांतरमन्वेषणीयम् मनुवचनादितिपरिसमापनीयोव्यवहारः यत्रतु प्रत्यर्थिनः स्वप्रत्ययविसंवादित्वेन साक्षिवचन
स्याप्रामाण्यंमन्यमानस्यसाक्षिषुदोषारोपणेपरितोषस्तत्रप्रत्यर्थिनः क्रियोपन्यासावसराभावात्ससाहावधिकंदैविकराजिकव्यस

नोद्भवेनसाक्षिपरीक्षणंकर्तव्यं तत्रचदोषावधारणेसाक्षिणोविवादास्पदीभूतमृणंदाप्याः सारानुसारेणदंडनीयाश्च अथदोषानवधारणंत-
दाप्रत्यर्थिनातावतासंतोष्टव्यम् यथाहमनुः यस्यदृश्येतसप्ताहादुक्तवाक्यस्यसाक्षिणः रोगोग्निर्ज्ञातिमरणमृणंदाप्योधनंचसइति
एतच्चयस्योचुःसाक्षिणःसत्यांप्रतिज्ञांसजयीभवेदित्यस्यापरितुष्यत्प्रत्यर्थिविषयेपवादोद्रष्टव्यः केचिदुक्तेपिसाक्षिभिःसाक्ष्येइत्येतद्वच
नमर्थिनानिर्दिष्टेषुसाक्षिष्वर्थ्यनुकूलमभिहितवत्सु यदिप्रत्यर्थीगुणवत्तमान्द्विगुणान्वासाक्षिणःपूर्वोक्तविपरीतंवादयतितदापूर्ववादिनः
साक्षिणः कूटाइतिव्याचक्षते तदसत् प्रत्यर्थिनः क्रियानुपपत्तेः तथाहि अर्थीनामसाध्यस्यार्थस्यनिर्देष्टा तत्प्रतिपक्षः तदभाववादी
प्रत्यर्थी तत्राभावस्यभावसिद्धिसापेक्षत्वाद्भावस्यचाभावनिरपेक्षसिद्धित्वाद्भावस्यैवसाध्यत्वंयुक्तं अभावस्वरूपेणसाक्ष्यादिप्रमेय
त्वाभावात् अतश्चार्थिनएवक्रियायुक्ता अपिचोत्तरानुसारेणसर्वत्रैवक्रियानियतास्मर्यते प्राङ्न्यायकरणोक्तौतुप्रत्यर्थीनिर्दिशे-
त्क्रियाम् मिथ्योक्तौपूर्ववादीतुप्रतिपत्तौनसाभवेदिति नचैकस्मिन्व्यवहारेद्वयोःक्रिया नचैकस्मिन्विवादेतुक्रियास्याद्वादिनोर्द्वयोरिति
स्मरणात् तस्मात्प्रतिवादिनःसाक्षिणोगुणवत्तमाद्विगुणावान्यथाब्रूयुरित्यनुपपन्नं अयमतम् यत्रद्वावपिभावप्रतिज्ञावादिनौमदी
यमिदंदायादप्राप्तमिति पूर्वापरभागविभागानाकलितमेववदतस्तत्रद्वयोःसाक्षिषुसत्सु कस्यसाक्षिणोग्राह्याइत्याकांक्षायांद्वयोर्विव
दतोरर्थेद्वयोःसत्सुचसाक्षिषु पूर्वपक्षोभवेद्यस्यभवेयुस्तस्यसाक्षिणइति वचनेनयःपूर्वंनिवेदयतितस्यसाक्षिणोग्राह्याइतिस्थिते
तस्यायमपवादः उक्तेपिसाक्षिभिःसाक्ष्येइति अतश्चपूर्वोत्तरयोर्वादिनोःसमसंख्येषुसमगुणेषुसाक्षिषुसत्सु पूर्ववादिनएवसा-

क्षिणः प्रष्टव्याः यदा तु उत्तरवादिनः साक्षिणो गुणवत्तमा द्विगुणा वा तदा प्रतिवादिनः साक्षिणः प्रष्टव्याः एवं च नाभावस्य साध्यता उभयोरपि भाववादित्वात्तु
विंधोत्तरविलक्षणत्वाच्च प्रकृतोदाहरणे न क्रियाव्यवस्था एकस्मिन्व्यवहारे यद्येकस्यार्थिनः क्रियाद्वयं परमतं तथा वादिप्रतिवादिनोः क्रियाद्वयेप्यविरोध इति तद
प्याचार्यो नानुमन्यते उक्तेपि पिसाक्षिभिः साक्ष्ये इति अतः शब्दादर्थात्प्रकरणाद्वार्थस्यानवगमादित्यलं प्रसंगेन ८२ कूटसाक्षिणो दर्शितास्तेषां दंडमाह यो धनदानादि
ना कूटान्साक्षिणः करोति स कूटकृत् साक्षिणश्चेति तथा कूटास्ते विवादात्पराजये यो दंडस्तत्र तत्रोक्तः तं दंडं द्विगुणं पृथक्पृथगेकैकशो दंडनीयाः ब्रा
ह्मणस्तु विवास्यो राष्ट्रान्निर्वास्यो न दंडनीयः एतच्च लोभादिकारणविशेषापरिज्ञाने अनभ्यासे द्रष्टव्यम् लोभादिकारणविशेषपरिज्ञा

पृथक्पृथग्दंडनीयाः कूटकृत्साक्षिणस्तथा विवादाद्द्विगुणं दंडं विवास्यो ब्राह्मणः स्मृतः ८३

ने अभ्यासे च मनुनोक्तम् लोभात्सहस्रं दंड्यः स्यान्मोहात्पूर्वं तु साहसम् भयाद्दौ मध्यमौ दंडौ मैत्र्यात्पूर्वं चतुर्गुणम् कामाद्दशगुणं पूर्वं क्रो
धात्तु त्रिगुणं परम् अज्ञानाद्द्वे शते पूर्णे बालिश्याच्छतमेव त्विति तत्र लोभोर्थलिप्सा मोहो विपर्ययज्ञानं भयं संत्रासः मैत्री स्नेहातिश
यः कामः स्त्रीव्यतिरेकाभिलाषः क्रोधोमर्षः अज्ञानमस्फुटज्ञानम् बालिश्यं ज्ञानानुत्पादः सहस्रादिषु ताम्रिकाः पणा गृह्यंते तथा
कूटसाक्ष्यं तु कुर्वाणां स्त्रीन्वर्णान्धार्मिको नृपः प्रवासयेद्दंडयित्वा ब्राह्मणं तु विवासयेदिति एतच्चाभ्यासविषयं कुर्वाणानिति वर्तमा

नर्निदेशात्त्री न्वर्णान् क्षत्रियादीन् पूर्वोक्तं दंडं दंडयित्वा प्रवासयेत् मारयेत् अर्थशास्त्रे प्रवासशब्दस्य मारणे प्रयोगात् अस्य चार्थ
शास्त्रस्वरूपत्वात् तत्रापि प्रवासनमोष्ठच्छेदनं जिह्वाच्छेदनं प्राणवियोजनं च कौटसाक्ष्यविषयानुसारेण द्रष्टव्यम् ब्राह्मणं तु दंड
यित्वा विवासयेत् स्वराष्ट्रान्निष्कासयेत् यद्वा विवासयेत् वाससो विगतो विवासाः विवासं करोतीति णिचि कृते णाविष्टवत्प्रातिप
दिकस्येति टिलोपे रूपम् नग्नीकुर्यादित्यर्थः अथवा वसत्यस्मिन्निति वासो गृहं विवासयेत् भग्नगृहं कुर्यादिति ब्राह्मणस्यापि लो-
भादिकारणविशेषापरिज्ञाने अनभ्यासे च तत्र तत्रोक्तो दंड एव अभ्यासे त्वर्थदंडो विवासनं च तत्रापि जातिद्रव्यानुबंधाद्यपेक्ष-
या विवासनं नग्नीकरणं गृहभंगो देशान्निर्वासनं चेति व्यवस्था द्रष्टव्या लोभादिकारणविशेषापरिज्ञाने अनभ्यासे चाल्पविषये कौट
साक्ष्ये ब्राह्मणस्यापि क्षत्रियादिवदर्थदंड एव महाविषये तु देशान्निर्वासनमेव अत्राप्यभ्यासे सर्वेषामेवमनूक्तं द्रष्टव्यम् न च ब्रा
ह्मणस्यार्थदंडो नास्तीति मंतव्यम् अर्थदंडाभावे शरीरदंडे च निषिद्धे स्वल्पेप्यपराधे नग्नीकरणगृहभंगांककरणविप्रवासनदंडा
भावो वा प्रसज्येत चतुर्णामपि वर्णानां प्रायश्चित्तमकुर्वताम् शरीरं धनसंयुक्तं दंडं धर्म्यं प्रकल्पयेदिति स्मरणाच्च तथा सहस्रं-
ब्राह्मणो दंड्यो गुप्तां विप्रां बलाद्व्रजन्निति स्मरणात् यत्तु शंखवचनं त्रयाणां वर्णानां धनापहारवधबंधक्रियाविवासनांककरणं
ब्राह्मणस्येति तत्र धनापहारः सर्वस्वापहारो विवक्षितो वधसाहचर्यात् शारीरस्त्ववरोधादिर्जीवितांतः प्रकीर्तितः काकिण्या
दिस्त्वर्थदंडः सर्वस्वांतस्तथैव चेति वधसर्वस्वहरणयोः सहपाठात् यदप्युक्तम् राष्ट्रादेनं बहिः कुर्यात्समग्रधनमक्षतमिति त

त्वयमकृतसाहसविषयम् नसर्वविषयम् शारीरस्तुब्राह्मणस्यनकदाचिद्भवति नजातुब्राह्मणंहन्यात्सर्वपापेष्वपिस्थितमितिसामान्येनमनु
स्मरणात् तथा नब्राह्मणवधाद्भूयानधर्मोविद्यतेभुवि तस्मादस्यवधंराजामनसापिनचिंतयेदिति ८३ अपिच यःस्तुसाक्षित्वमंगीकृ
त्यान्यैःसाक्षिभिःसहसाक्ष्यंश्रावितःसन्निगदकालेनमोहतोरागाद्याक्रांतचित्तस्तत्साक्ष्यमन्येभ्यःसाक्षिभ्योनिन्हुते नाहमत्रसाक्षीभ
वामीति सविवादपराजयेयोदंडस्तंदंडमष्टगुणंदाप्यः ब्राह्मणंपुनरष्टगुणद्रव्यंदंडदानासमर्थंविवासयेत् विवासनंचनग्नीकरणगृहभं

यःसाक्ष्यंश्रावितोऽन्येभ्योनिन्हुतेतत्तमोवृतः सदाप्योऽष्टगुणंदंडंब्राह्मणंतुविवासयेत् ८४

गदेशनिर्वासनलक्षणंविषयानुसारेणद्रष्टव्यम् इतरेषांत्वष्टगुणद्रव्यदंडासंभवेस्वजात्युचितकर्मकरणानिगडबंधनकारागृहप्रवेशा
दिद्रष्टव्यम् एतच्चपूर्वश्लोकेप्यनुसर्तव्यं यदासर्वेसाक्ष्यंनिन्हुवतेतदासर्वेसमानदोषाः यदातुसाक्ष्यमुक्त्वापुनरन्यथावदंतितदानुबं
धाद्यपेक्षयादंड्याः यथाहकात्यायनः उक्त्वान्यथाब्रुवाणाश्चदंड्याःस्युर्वाक्छलान्विताःइति नचान्येनोक्ताःसाक्षिणोन्येनरहस्यनुस
र्तव्याः यथाहनारदः नपरेणसमुद्दिष्टमुपेयात्साक्षिणंनरः भेदयेन्नैवचान्येनहीयेतैवंसमाचरन्निति ८४ ५

साक्षिणामवचनमसत्यवचनंच सर्वत्रप्रतिषिद्धं तदपवादार्थमाह यत्रवर्णिनांशूद्रविट्क्षत्रविप्राणांसत्यवचनेनवधःसंभाव्यतेतत्रसाक्ष्यनृतंवदेत् सत्यंन वदेत् अनेनचसत्यवचनप्रतिषेधेनसाक्षिणःपूर्वप्रतिषिद्धमसत्यवचनमवचनंचाभ्यनुज्ञायते यत्रशंकाभियोगादौसत्यवचनेवर्णिनोवधोऽनृतवचनेनक स्यापिवधस्तत्रानृतवचनमभ्यनुज्ञायते यत्रतुसत्यवचनेऽर्थिप्रत्यर्थिनोरन्यतरस्यवधोऽसत्यवचनेचान्यतरस्यवधस्तत्र तूष्णींभावाभ्यनुज्ञा राजा यद्यनुमन्यते अथराजाकथमप्यकथनेनमुंचतितदाभेदाद साक्षित्वंकर्तव्यम् तस्याप्यसंभवेसत्यमेववेदितव्यमसत्यवचनेनवर्णिवधदोषोऽसत्य वचनदोषश्च सत्यवचनेतुवर्णिवधदोषएव तत्रचयथाशास्त्रंप्रायश्चित्तंकर्तव्यम् तत्रासत्यवचने तूष्णींभावेच शास्त्राभ्यनुज्ञानात्सत्यवाया

वर्णिनांहिवधोयत्रतत्रसाक्ष्यनृतंवदेत् तत्पावनायनिर्वाप्यश्चरुःसारस्वतोद्विजैः ८५

भावइत्यतआह तत्पावनाय अनृतवचनावचननिमित्तप्रत्यवायपरिहारायसारस्वतश्चरुर्द्विजैरेकैकशोनिर्वाप्यःकर्तव्यः सरस्वतीदेवताअ स्येतिसारस्वतः अनवस्त्रावितांतरूष्मपक्कओदनेचरुशब्दःप्रसिद्धः इहायमभिसंधिः साक्षिणामनृतवचनमवचनंच यन्निषिद्धंतदिहाभ्य नुज्ञानम् यत्तुनानृतंवदेदब्रुवन्विब्रुवन्वापिनरोभवति किल्बिषीतिचसामान्येनानृतवचनमवचनंचनिषिद्धम् तदतिक्रमनिमित्तमिदंप्राय- श्चित्तम् नचमंतव्यम् साक्षिणामनृतवचनावचनाभ्यनुज्ञानेपि साधारणानृतवचनावचनप्रतिषेधातिक्रमनिमित्तप्रत्यवायस्यतादवस्थ्याद वचनाभ्यनुज्ञावचनमनर्थकमिति यतःसाक्षिणामसत्यवचनावचनप्रतिषेधातिक्रमयोर्भूयान्प्रत्यवायः साधारणानृतवचनावचनयो

रल्पीयानित्यर्थवदभ्यनुज्ञावचनं यद्यपिभूयसःप्रत्यवायस्येतिनिवृत्त्या आनुषंगिकस्याल्पीयसः प्रत्यवायस्यनिवृत्तिरन्यत्र तथापीहाप्यनु ज्ञावचनात्प्रायश्चित्तविधानाच्च भूयसोनिवृत्त्याल्पीयानप्यानुषंगिकोपिप्रत्यवायोननिवर्ततइतिगम्यते एतदेवान्यत्रप्रश्नेषुवर्णिवधाशंकायां पांथादीनामनृतवचनावचनाभ्यनुज्ञानंवेदितव्यम् नचतत्रप्रायश्चित्तमस्ति प्रतिषेधांतराभावात् निमित्तांतरेणकालांतरेर्थतत्त्वावगमेपि साक्षिणामन्येषांचदंडाभावोऽस्मादेववचनादवगम्यतइति इतिसाक्षिप्रकरणम् ८५ भुक्तिसाक्षिणौनिरूपितौ सांप्रतंलेख्यंनिरूप्यते तत्रलेख्यंद्विविधम् शासनं जानपदंचेति शासनंनिरूपितंजानपदमभिधीयते तच्चद्विविधम् स्वहस्तकृतमन्यकृतंचेति तत्रस्वहस्तकृतम

यःकश्चिदर्थोनिष्णातःस्वरुच्यातुपरस्परम् लेख्यंतुसाक्षिमत्कार्यंतस्मिन्धनिकपूर्वकम् ८६

साक्षिकं अन्यकृतंससाक्षिकम् अनयोश्चदेशाचारानुसारेणप्रामाण्यम् यथाहनारदः लेख्यंतुद्विविधंज्ञेयंस्वहस्तान्यकृतंतथा असाक्षिम त्साक्षिमच्चसिद्धिर्देशस्थितेस्तयोरिति तत्रान्यकृतमाह धनिकाधमर्णयोर्योर्थोहिरण्यादिःपरस्परं स्वरुच्याइयताकालेनेतावद्वृद्ध्यभि यतीप्रतिमासंवृद्धिरितिनिष्णातोव्यवस्थितः तस्मिन्नर्थेकालांतरेविप्रतिपत्तौवस्तुतत्त्वनिर्णयार्थंलेख्यंसाक्षिमदुक्तलक्षणसाक्षियुक्तंधनि कपूर्वकं धनिकःपूर्वोयस्मिंस्तद्धनिकपूर्वं धनिकनामलेखनपूर्वकमितियावत् कार्यंकर्तव्यं उक्तलक्षणाःसाक्षिणोवाकर्तव्याः कर्तातुयत्कृ तंकार्यंसिद्ध्यर्थंतस्यसाक्षिणः प्रवर्तंतेविवादेषुस्वकृतंवाथलेख्यकमितिस्मरणात् ८६ ७ ७ ७

अपिच समासंवत्सरः मासश्चैत्रादिः तदर्धंपक्षः शुक्लः कृष्णोवा अहस्तिथिः प्रतिपदादिः नाम धनिकाधमर्णयोः जातिर्ब्राह्मणादिः स्वगोत्रंवासिष्ठादिगोत्रं एतैः समादिभिश्चिन्हितम् तथासब्रह्मचारिकंबह्वृचादिशाखाप्रयुक्तं गुणनामबह्वृचःकठइति आत्मीयपितृनामधनिकर्णिकपितृनाम आदिशब्दात् द्रव्यजातिसंख्यावारादेर्ग्रहणम् एतैश्चचिन्हितंलेख्यंकार्यमितिगतेनसंबंधः ८७ किंच धनिकाधमर्णयोर्योर्थः स्वरुच्याव्यवस्थितस्तस्मिन्नर्थेसमाप्तेलेखितेऋणी अधमर्णोनामात्मीयंस्वहस्तेनास्मिल्लेख्ये यदुपरिलेखितं

समामासतदर्धाहर्नामजातिस्वगोत्रकैः सब्रह्मचारिकात्मीयपितृनामादिचिन्हितम् ८७ समाप्तेतुऋणीनामस्वहस्तेननिवेशयेत् मतंमेमुकपत्रस्ययदत्रोपरिलेखितम् ८८ साक्षिणश्चस्वहस्तेनपितृनामकपूर्वकम् अत्राहममुकः साक्षीलिखेयुरितितेसमाः ८९

तन्ममामुकपुत्र कस्यमतमभिप्रेतमितिनिवेशयेत्पत्रेलिखेत् ८८ तथा तस्मिल्लेख्येयेसाक्षिणोलिखितास्तेप्यात्मीयपितृनामलेखनपूर्वकमस्मिन्नर्थेहममुकोदेवदत्तःसाक्षीतिस्वहस्तेनैकैकशोलिखेयुः तेचसमाःसंख्यातोगुणतश्चकर्तव्याः यद्यधमर्णः साक्षीवालिपिज्ञोनभवति तदाधमर्णोन्येनसाक्षीचसाक्ष्यंतरेणसर्वसाक्षिसन्निधौस्वमतंलेखयेत् यथाहनारदः अलिपिज्ञऋणीयःस्यात्स्वमतंतुसलेखयेत् साक्षीवासाक्षिणान्येनसर्वसाक्षिसमीपतइति ८९ ५ ५ ५

किंच ततोलेखको धनिकाधमर्णिकाभ्याममुभाभ्यांप्रार्थितेन मयामुकेन देवदत्तेन विष्णुमित्रसूनुना एतल्लेख्यंलिखितमित्यंतेलिखेत् १०
सांप्रतंस्वकृतंलेख्यमाह यल्लेख्यंस्वहस्तेनलिखितमधमर्णेन तत्साक्षिभिर्विनापिप्रमाणंस्मृतंमन्वादिभिः बलोपाधिकृताहते बलेनब-
लात्कारेण उपाधिना लोभक्रोधभय मदादिलक्षणेनयत्कृतं तस्माद्विना नारदोप्याह मत्ताभियुक्तस्त्रीबालबलात्कारकृतंचयत्
तदप्रमाणंलिखितंभयोपाधिकृतंतथेति तच्चतत्स्वहस्तकृतपरकृतंचलेख्यं देशाचारानुसारेण सबंधकव्यवहारेऽबंधकव्यवहारे

उभयाभ्यर्थितेनैतन्मयाह्यमुकसूनुना लिखितंह्यमुकेनेतिलेखकोंतेततोलिखेत् १०
विनातुसाक्षिभिर्लेख्यंस्वहस्तलिखितंतुयत् तत्प्रमाणंस्मृतंलेख्यं बलोपाधिकृताहते ११

चयुक्तमर्थक्रमापरिलोपेन लिप्यक्षरापरिलोपेनच लेख्यमित्येतावन्नपुनः साधुशब्दैरेवप्रातिस्विकदेशभाषयापिलेखनीयम् यथाहना
रदः देशाचाराविरुद्धंयद्व्यक्ताधिविधिलक्षणम् तत्प्रमाणंस्मृतंलेख्यमविलुप्तक्रमाक्षरमिति विधानंविधिः आधेर्विधिराधीकर
णं तस्यलक्षणं गोप्याधिभोग्याधिकालकृतमित्यादितद्व्यक्तं विस्पष्टं यस्मिंस्तद्व्यक्ताधिविधिलक्षणं अर्थानांक्रमः क्रमश्चाक्षराणिचक्रमाक्षरा-
णि अविलुप्तानिक्रमाक्षराणियस्मिंस्तदविलुप्तक्रमाक्षरं तदेवंभूतंलेख्यंप्रमाणं राजशासनवन्नसाधुशब्दनियमोत्रेत्यभिप्रायः ११

लेख्यप्रसंगेनलेख्यारूढमप्यृणंत्रिभिरेवदेयमित्याह यथासाक्ष्यादिकृतमृणंत्रिभिरेवदेयं तथालेख्यकृतमप्याहर्तृ तत्पुत्रतत्पुत्रैस्त्रिभिरेवदे
यं नचतुर्थादिभिरितिनियम्यते ननुपुत्रपौत्रैरृणंदेयमित्यविशेषेणऋणमात्रंत्रिभिरेवदेयमितिनियतमेव बाढं अस्यैवोत्सर्गस्यपत्रारूढर्ण
विषयेस्मृत्यंतरप्रभवामपवादशंकामपनेतुमिदंवचनमारब्धं तथाहि पत्रलक्षणमभिधायकात्यायनेनाभिहितम् एवंकालमतिक्रांतं
पितॄणांदाप्यतेऋणमिति इत्थंपत्रारूढमृणमतिक्रांतकालमपिपितॄणांसंबंधीदाप्यते अत्रपितॄणामितिबहुवचननिर्देशात्कालमतिक्रांतमिति
वचनाच्चचतुर्थादिर्दाप्यइतिप्रतीयते यथाहारीतेनापि लेख्यंयस्यभवेद्धस्तेलाभंतस्यविनिर्दिशेदिति अत्रापियस्यहस्तेलेख्यमस्तितस्य

ऋणंलेख्यकृतंदेयंपुरुषैस्त्रिभिरेवतु आधिस्तुभुज्यतेतावद्यावत्तन्नप्रदीयते ९२

र्णलाभइतिसामान्येनचतुर्थादिभ्योप्यृणलाभोस्तीतिप्रतीयते ततश्चैतदाशंकानिवृत्त्यर्थमेतद्वचनमित्युक्तम् वचनद्वयंचयोगीश्वरवचनानुसा
रेणयोजनीयम् अस्यापवादमाह सबंधकेपिपत्रारूढेऋणेत्रिभिरेवदेयमितिनियमाद्दणापाकरणानधिकारेणापहरणेप्यनधिकारप्राप्ताविदमु
च्यते यावच्चतुर्थेनपंचमेनवाऋणंनदीयते तावदेवाधिर्भुज्यते इतिवदतासबंधकर्णापाकरणेचतुर्थादेरप्यधिकारोदर्शितः नन्वेतदप्युक्त
मेव फलभोग्योननश्यतीति सत्यम् तदप्येतस्मिन्नसत्यपवादवचनेपुरुषत्रयविषयमेवस्यादितिसर्वमनवद्यम् ९२ मासं
गिकंपरिसमाप्य प्रकृतमेवानुसरति व्यवहाराक्षमेपत्रेपत्रांतरंकुर्यादितिविधीयते व्यवहाराक्षमत्वंचात्यंतव्यवहितदेशांतरस्थेपत्रे

दुर्लेख्ये दुष्टानि संदिह्यमानान्यथावाचकानि वा लेख्यानि लिप्यक्षराणि पदानि वा यस्मिंस्तत् दुर्लेख्यं तस्मिन्दुर्लेख्ये नष्टे कालवशेनोन्मृष्टे मषीदौर्ब
ल्यादिना मृदितलिप्यक्षरे हृते तस्करादिना भिन्ने विदलिते दग्धे प्रज्वलिते छिन्ने द्विधाभूते सति भवति एतच्चार्थिप्रत्यर्थिनोः परस्परानुम-
तौ सत्यां विमत्यां तु व्यवहारप्राप्तिदेशांतरस्थपत्रानयनाय दुर्गाध्वापेक्षया कालो दातव्यः दुर्गदेशावस्थितेन ष्टे वा पत्रे साक्षिभिरेव व्यवहार
निर्णयः कार्यः यथाह नारदः लेख्ये देशांतरन्यस्ते शीर्णे दुर्लिखिते हृते सतस्तत्कालकरणमसतो द्रष्टृदर्शनमिति सतो विद्यमानस्य प
त्रस्य देशांतरस्थस्यानयनाय कालकरणं कालावधिर्दातव्यः असतः पुनरविद्यमानस्य पूर्वं ये द्रष्टारः साक्षिणस्तैर्दर्शनं व्यवहारे परि

देशांतरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा भिन्ने दग्धेथवा छिन्ने लेख्यमन्यत्तु कारयेत् ९३

समापनं कार्यम् यदा तु साक्षिणो न संति तदा दिव्येन निर्णयः कार्यः अलेख्यसाक्षिके दैवीं व्यवहारे विनिर्दिशेदिति स्मरणात् एतच्च जानपदं व्य
वस्थामात्रम् राजकीयमपि व्यवस्थापत्रमीदृशमेव भवति इयांस्तु विशेषः राज्ञः स्वहस्तसंयुक्तं स्वमुद्राचिन्हितं तथा राजकीयं स्मृतं लेख्यं
सर्वेष्वर्थेषु साक्षिमदिति यथान्यदपि राजकीयं जयपत्रकं वृद्धवसिष्ठेनोक्तम् यथोपन्यस्तसाध्यार्थसंयुक्तं सोत्तरक्रियम् सावधारण
कं चैव जयपत्रकमिष्यते प्राड्विवाकादिहस्तांकं मुद्रितं राजमुद्रया सिद्धेऽर्थे वादिने दद्याज्जयिने जयपत्रकमिति तथा सभासदोपि द
त्तं मे मुकपुत्रस्येति स्वहस्तं दद्युः सभासदश्च ये तत्र स्मृतिशास्त्रविदः स्थिताः यथा लेख्यविधौ तद्वत्स्वहस्तं दद्युरेव ते इति स्मरणात्

सभासदांचपरस्परानुमतिव्यतिरेकेणन व्यवहारोनिःशल्योभवति यथाहनारदः यत्रसभ्योजनःसर्वः साध्वेतदितिमन्यते सनिःशल्योवि
वादःस्यात्सशल्यस्त्वन्यथाभवेदिति एतच्चतुष्पाद्व्यवहारएव साधयेत्साध्यमर्थंयच्चतुष्पादान्वितंचयत् राजमुद्रांकितंचैवजयपत्रक-
मिष्यतइतिस्मरणात् यत्रतुहीनता यथा अन्यवादिक्रियाद्वेषीनोपस्थातानिरुत्तरः आहूतव्यपलापीचहीनःपंचविधःस्मृतइति तत्रन
जयपत्रकमस्ति अपितुहीनपत्रकमेव तच्चकालांतरेदंडप्राप्त्यर्थं जयपत्रंतुप्राङ्न्यायविधिसिद्ध्यर्थमितिशेषः ९३ लेख्यसंदेहेनिर्णय
निमित्तान्याह शङ्कमशङ्कुंवेतिसंदिग्धलेख्यस्य शुद्धिः स्वहस्तलिखितादिभिःस्यात् स्वहस्तेनलिखितंयल्लेख्यांतरं तेनशुद्धिः यदिसह

संदिग्धलेख्यशुद्धिःस्यात्स्वहस्तलिखितादिभिः युक्तिप्राप्तिक्रियाचिन्हसंबंधागमहेतुभिः ९५

शान्यक्षराणिभवंतितदाशुद्धिः स्यादित्यर्थः आदिशब्दात्साक्षिलेखकस्वहस्तेलिखितांतरसंवादाच्चशुद्धिरिति युक्त्याप्राप्तिर्युक्तिप्राप्तिः देश
कालपुरुषाणांद्रव्येणसहसंबंधःप्राप्तिः अस्मिन्देशेऽस्मिन्कालेऽस्यपुरुषस्येदंद्रव्यं घटतइतियुक्तिः क्रियातत्साक्ष्युपन्यासः चिन्हमसा
धारणंश्रीकारादिः संबंधः अर्थिप्रत्यर्थिनोः पूर्वमपिपरस्परविश्वासेनदानग्रहणादिसंबंधः आगमोस्यैतावतोर्थस्यसंभावितःप्राप्त्युपा
यः एतेहेतवः एभिर्हेतुभिः संदिग्धलेख्यशुद्धिःस्यादित्यन्वयः यदातुलेख्यसंदेहेनिर्णयोनजायतेतदासाक्षिभिर्निर्णयःकार्यः यथाहका-
त्यायनः दूषकेपत्रकेवादीनदारूढांस्तुनिर्दिशेदिति साक्षिसंभवविषयमिदं साक्ष्यसंभवविषयमिदंतुहारीतवचनं नमयैतत्कृतंपत्रंकूटमे
तेनकारितं अधरीकृत्यतत्पत्रमर्थे दिव्येननिर्णयइति ९४

एवंशोधितेपत्रेऋणेचदातव्येप्राप्तेयदाकृत्स्नमेवदातुमृणमसमर्थस्तदाकिंकर्तव्यमित्यत आह यदाधमर्णिकः सकलमृणंदातुमसम-
र्थस्तदाशक्त्यनुसारेणदत्वादत्वा पूर्वकृतस्यलेख्यस्यपृष्ठेभिलिखेत् एतावन्मयादत्तमितिउत्तमर्णोवाउपगतंप्राप्तंधनंतस्यैवलेख्यस्यपृष्ठे
दद्यादभिलिखेत्एतावन्मयालब्धमितिकथंस्वहस्तपरिचिन्हितं स्वहस्तलिखिताक्षरचिन्हितंयद्वोपगतंप्रवेशपत्रं स्वहस्तलिखितचिन्हितमधम-
र्णायोत्तमर्णोदद्यात् ९५ ऋणेतुकृत्स्नेदत्तेकिंकर्तव्यमित्यतआह क्रमेणसकृदेववाकृत्स्नमृणंदत्वापूर्वकृतंलेख्यंपाटयेत् यदातुदुर्गदे
शावस्थितंलेख्यंनष्टंवातदाशुद्ध्यै अधमर्णत्वनिवृत्त्यर्थमन्यल्लेख्यंकारयेदुत्तमर्णम् अधमर्णपूर्वोक्तक्रमेणोत्तमर्णोविशुद्धिपत्रमधम

लेख्यस्यपृष्ठेभिलिखेद्दत्वादत्वर्णिकोधनम् धनीवोपगतंदद्यात्स्वहस्तपरिचिन्हितम् ९५ दत्वर्णंपाटयेल्लेख्यं
शुद्ध्यैवान्यत्तुकारयेत् साक्षिमच्चभवेद्यद्वातद्दातव्यंससाक्षिकम् ९६ तुलाग्न्यापोविषंकोशोदिव्यानीहविशुद्धये

र्णायदद्यादित्यर्थः ससाक्षिकेऋणेकृत्स्नेदातव्येकिंकर्तव्यमित्यतआह यत्तुससाक्षिकमृणंतत्पूर्वसाक्षिसमक्षमेवदद्यात् इतिलेख्यप्रकरणं
९६ लिखितसाक्षिभुक्तिलक्षणंत्रिविधंमानुषंप्रमाणमुक्तम् अथावसरप्राप्तंदिव्यंप्रमाणमभिधारयन् तुलाग्न्यापइत्यादिभिराद्यैःपंच
भिःश्लोकैःदिव्यमातृकांकथयति तत्रतावद्दिव्यान्युद्दिशति तुलादीनिकोशांतानिपंचदिव्यानीहधर्मशास्त्रेविशुद्धयेसंदिग्धस्यार्थस्य
संदिग्धनिवृत्तयेदातव्यानीति अन्यत्रान्यान्यपितंदुलादीनिदिव्यानिसंति घटोग्निरुदकंचैवविषंकोशस्तथैवच तंदुलाश्चैवदिव्यानिसप्त

मस्तप्तमाषकइतिपितामहस्मरणात् अतः कथमेतावंत्येवेत्यत आह एतेनमहाभियोगेष्वेवनान्यत्रेतिनियम्यते नपुनरिमान्येव दिव्या
नीति महत्त्वावधिंचवक्ष्यति नन्वल्पाभियोगेपिकोशइष्यते कोशमल्पेपिदापयेदितिस्मरणात् सत्यंकोशस्यतुलादिषुपाठेनमहाभि-
योगेष्वेवेतिनियमार्थम् किंतुसावष्टंभाभियोगेपिप्राप्त्यर्थः अन्यथाशंकाभियोग एवस्यात् अवष्टंभाभियुक्तानांघटादीनिविनिर्दिशे-
त् तंदुलाश्चैवकोशश्च शंकास्वेवनसंशयइतिस्मरणात् महाभियोगेषुशंकितेषुसावष्टंभेषुचाविशेषेणप्राप्तावपवादमाह एतानि
तुलादीन्यभियोक्तरिशीर्षकस्थेपियुक्तस्यभवंति शीर्षकंशिरः व्यवहारस्यचतुर्थःपादोजयपराजयलक्षणस्तेनचदंडोलक्ष्यते तत्र

**महाभियोगेष्वेतानि शीर्षकस्थेभियोक्तरि १७ रुच्यावान्यतरः कुर्यादितरोवर्तयेच्छिरः विनापिशीर्षकात्कुर्यान्नृपद्रोहे
थपातके १८**

तिष्ठतीतिशीर्षकस्थः तत्सयुक्तः दंडभागित्यर्थः १७ ततोर्थीलिखयेत्सद्यः प्रतिज्ञातार्थसाधनमिति भावप्रतिज्ञावादिन एवक्रियाव्यव
स्यादर्शिता तदपवादार्थमाह रुच्याभियोक्त्रभियुक्तयोः परस्परसंप्रतिपत्त्यान्यतरोभियुक्तोवादिव्यंकुर्यादितरोभियुक्तः शिरः शारीरमर्थदं
डंवावर्तयेदंगीकुर्यात् अयमभिसंधिः नमानुषप्रमाणवद्दिव्यंप्रमाणंभावैकगोचरं अपितुभावाभावविशेषेणगोचरयति अतश्चमिथ्यो
त्तरे प्रत्यवस्कंधेप्राङ्न्यायेवार्थिप्रत्यर्थिनोरन्यतरेच्छयादिव्यंभवतीति अल्पाभियोगेमहाभियोगेशंकासावष्टंभयोरप्यविशेषेणकोशोभवती

त्युक्तं तुलादीनि विषांतानितु महाभियोगेष्वेव सावष्टंभेष्वेवेतिच नियमोदर्शितः तत्रावष्टंभाभियोगेष्वेवेत्यस्यापवादमाह राजद्रोहाति
शंकायां ब्रह्महत्यादिपातकाभिशंकायांच शिरस्थायिनाविनापितुलादीनिकुर्यात् महाचौर्याभिशंकायांच यथा राजभिः शंकितानांच निर्दि
ष्टानांच दस्युभिः आत्मशुद्धिपराणांच दिव्यं देयं शिरोविनेति तंदुलाः पुनरल्पचौर्यशंकायामेव चौर्येतु तंदुलादेयानान्यत्रेतिविनिश्चयइ-
तिपितामहवचनात् तप्तमाषस्तु महाचौर्याभिशंकायांचौर्यशंकाभियुक्तानां तप्तमाषोविधीयतइतिस्मरणात् अन्येपुनः शपथा अल्पार्थवि
षये सत्यवाहनशस्त्राणिगोबीजकनकानिच स्पृशेच्छिरांसिपुत्राणांदाराणांसुहृदांतथा अभियोगेषुसत्येषुकोशायानमथापिवा इत्येते
शपथाः प्रोक्ताः मनुनास्वल्पकारण इतिनारदादिस्मरणात् यद्यपिमानुषेप्रमाणनिर्णेयस्यनिर्णायकं यत्तद्दिव्यमितिलोकप्रसिद्ध्या शपथा
नामपिदिव्यत्वं तथापि कालांतरनिर्णयनिमित्तत्वेभ्योधटादिभ्योदिव्येभ्योभेदत्वव्यपदेशोब्राह्मणपरिव्राजकवत् कोशस्यतुशपथत्वेपिधटा
दिषुपाठोमहाभियोगविषयत्वेनावष्टंभाभियोगविषयत्वेनच धटादिसाम्यात्तन्तुसमनंतरनिर्णयनिमित्तत्वेन तंदुलानांतप्तमाषस्यस
मनंतरनिर्णयनिमित्तत्वेप्यल्पविषयत्वेनशंकाविषयत्वेनच धटादिवैलक्षण्यात्तेष्वपाठइतिसंतोष्टव्यम् एतानिच दिव्यानिशपथाश्च
यथासंभवमृणादिषु विवादेषुप्रयोक्तव्यानि यत्तुपितामहवचनम् स्थावरेषुविवादेषुदिव्यानिपरिवर्जयेदिति तदपिलिखितसा-
मंतादिसद्भावे दिव्यानिपरिवर्जयेदितिव्याख्येयम् ननुविवादांतरेष्वपिप्रमाणांतरसंभवेदिव्यानामनवकाशएव सत्यम्
ऋणादिषुविवादेषुउक्तलक्षणसाक्ष्युपन्यासे अर्थिनाकृतेपि प्रत्यर्थीयदिदंडाभ्युपगमावष्टंभेनदिव्यमवलंबते तदादिव्यमपिभ-

वति प्राक्षिणामाशयदोषसंभवाद्दिव्यस्यचनिर्दोषत्वेन वस्तुतत्वविषयत्वात्तल्लक्षणत्वाच्चधर्मस्य यथाहनारदः तत्रसत्येस्थितोधर्मो व्यवहारस्तुसाक्षिणि दैवसाध्येपौरुषेयीनलेख्यंवाप्रयोजयेदिति स्थावरेषुविवादेषुप्रत्यर्थिनादंडावष्टंभेनदिव्यावलंबनेकृतेपिसामंतादिदृष्टप्रमाणसद्भावेनदिव्यंग्राह्यमितिविकल्पनिराकरणार्थं स्थावरेषुविवादेष्वित्यादिपितामहवचनम् नात्यंतिकदिव्यनिराकरणार्थं लिखितसामंताद्यभावेस्थावरविवादेष्वनिर्णयप्रसंगात् ९८ किंच पूर्वेद्युरुपोषितमुदितेसूर्येसचैलंस्नातं दिव्यग्राहिणमाहूय नृपस्य सभ्यानांचब्राह्मणानांसन्निधौ सर्वाणिदिव्यानिकारयेत्प्राड्विवाकः त्रिरात्रोपोषितायस्युरेकरात्रोषितायवा नित्यंदिव्यानिदेयानिशुचये

सचैलंस्नानमाहूयसूर्योदयउपोषितम् कारयेत्सर्वदिव्यानिनृपब्राह्मणसन्निधौ ९९

चार्द्रवाससइति उपवासविकल्पःपितामहेनोक्तो बलवदबलवन्महाकार्याल्पकार्यविषयत्वेनव्यवस्थितोद्रष्टव्यः उपवासनियमश्चकारयितुः प्राड्विवाकस्यापि दिव्येषुसर्वकार्याणिप्राड्विवाकःसमाचरेत् अध्वरेषुयथाध्वर्युःसोपवासोनृपाज्ञयेतिपितामहवचनात् अत्रचयद्यपिसूर्योदयइत्यविशेषेणोक्तं तथापिशिष्टसमाचारान्द्वादुवारेदिव्यानिदेयानि तत्रापिपूर्वाह्णेग्निपरीक्षास्यात्पूर्वाह्णेचधटोभवेत् मध्याह्नेतुजलंदेयंधर्मतत्वमभीप्सता दिवसस्यतुपूर्वाह्णेकोशासिद्धिर्विधीयते रात्रौतुपश्चिमेयामेविषंदेयंसुशीतलइतिपितामहोक्तोविशेषोद्रष्टव्यः अनुक्तकालविशेषाणांतंदुलतप्तमाषप्रभृतीनांपूर्वाह्णएवप्रदानम् पूर्वाह्णेसर्वदिव्यानांप्रदानंपरिकीर्तितमितिसामान्येन

नारदस्मरणात् अहर्निस्त्रिधाविभक्ते पूर्वोभागः पूर्वाह्णोमध्योमध्यान्हः उत्तरोपराह्णः तथापरोपिकालविशेषोविधिप्रतिषेधमुखेनदर्शि
तः विधिमुखस्तावत् अग्नेःशिशिरहेमंतौवर्षाश्चैवप्रकीर्तिताः सरिद्ग्रीष्मेषुसलिलंहेमंतेशिशिरेविषम् चैत्रोमार्गशिराश्चैववैशाखश्चतथैव
च एतेसाधारणामासाःदिव्यानामविरोधिनः कोशस्तुसर्वदादेयस्तुलास्यात्सार्वकालिकीति कोशग्रहणंसर्वशपथानामुपलक्षणम् तंदुलानांपुन
र्विशेषानभिधानात्सार्वकालिकत्वम् प्रतिषेधमुखोपि नशीतेतोयसिद्धिःस्यान्नोष्णकालेग्निशोधनम् नप्रावृषिविषंदद्यात्प्रवातेनतुलांतथा ना
पराह्णेनसंध्यायांनमध्यान्हेकदाचनेति नशीतेतोयसिद्धिःस्यादित्यत्रशीतशब्देनहेमंतशिशिरवर्षाणांग्रहणम् नोष्णकालेग्निशोधनमित्य

## तुलास्त्रीबालवृद्धांधपंगुब्राह्मणरोगिणाम्

त्रोष्णकालशब्देनच ग्रीष्मशरदोः विधानलब्धस्यापिपुनर्निषेधआदरार्थः प्रयोजनंतुवक्ष्यते ९९ अधिकारिव्यवस्थामाह स्त्रीस्त्रीमात्रं
जातिवयोवस्थाविशेषानादरेण बालआषोडशाद्वर्षाज्जातिविशेषानादरेण वृद्धोशीतिकावरः अंधोनेत्रविकलः पंगुःपादविकलः ब्रा
ह्मणोजातिमात्रम् रोगीव्याधितः एतेषांशोधनार्थंतुलैवेतिनियम्यते अग्निःफालस्तप्तमाषश्चक्षत्रियस्य जलमेववैश्यस्य वाशब्दोऽ
वधारणे विषस्ययवाउक्तपरिमाणाःसप्तेवशूद्रस्यशोधनार्थंभवंति ब्राह्मणस्यतुलाविधानात् शूद्रस्ययवाःसप्तविषस्यैवेति विषविधा
नादग्निर्जलंवेतिक्षत्रियवैश्यविषयम् युक्तं एतदेवस्पष्टीकृतंपितामहेन ब्राह्मणस्यधटोदेयः क्षत्रियस्यहुताशनः वैश्यस्यसलिलंप्रोक्तंवि

षंशूद्रस्यदापयेदिति यत्तुस्त्र्यादीनांदिव्याभावस्मरणं सव्रतानांभृशार्तानांव्याधितानांतपस्विनाम् स्त्रीणांचनभवेद्दिव्यंयदिधर्मस्त्वपेक्षित
इतितदुच्यावान्यतरःकुर्यादितिविकल्पनिवृत्त्यर्थं एतदुक्तंभवति अवष्टंभाभियोगेषुस्त्र्यादीनामभियोक्तृत्वेभियोज्यानामेवदिव्यमेतेषा
मभियोज्यत्वेप्यभियोक्तृणामेवदिव्यम् परस्पराभियोगेतुविकल्पएव तत्रापितुलैवेत्यनेनवचनेननियम्यते तथामहापातकादिशंका
भियोगेस्त्र्यादीनांतुलैवेति एतच्चवचनंसर्वदिव्यसाधारणेषुमार्गशिरश्चैत्रवैशाखेषुस्त्र्यादीनांसर्वदिव्यसमवधानेनियामकतयार्थवत्
नचसार्वकालंस्त्रीणांतुलैवेति स्त्रीणांचनविषंप्रोक्तंनचापिसलिलंस्मृतम् धटकोशादिभिस्तासामंतस्तत्त्वंविचारयेदितिविषसलिलव्य-

अग्निर्जलंवाशूद्रस्ययवाःसप्तविषस्यवा १००

निरिक्तधटकोशाग्न्यादिभिःशुद्धिविधानात् एवंबालादिष्वपियोजनीयम् तथाब्राह्मणादीनामपिनसार्वकालिकस्तुलादिनियमः सर्वे-
षामेववर्णानांकोशशुद्धिर्विधीयते सर्वाण्येतानिसर्वेषांब्राह्मणस्याविषंविनेतिपितामहवचनात् तस्मात्साधारणेकालेबहुदिव्यसम
वधानेतुलादिनियमार्थमेवेदंवचनम् कालांतरेतुतत्तत्कालविहितंसर्वेषां तथाहि वर्षास्वग्निरेवसर्वेषां हेमंतशिशिरयोस्तुक्षत्रि
याणामग्निविषयोर्विकल्पः ब्राह्मणस्यत्वग्निरेव नकदाचिद्विषंब्राह्मणस्य ब्राह्मणस्याविषंविनेतिप्रतिषेधात् ग्रीष्मशरदोस्तुसलि
लमेव येषांतुव्याधिविशेषेणाग्न्यादिनिषेधः कुष्ठिनांवर्जयेदग्निंसलिलंश्वासकासिनाम् पित्तश्लेष्मवतांनित्यंविषंतुपरिवर्जयेदिति

तेषामग्न्यादिकालेपिसाधारणंतुलाद्येवदिव्यंभवति तथा तोयमग्निर्विषंचैव दातव्यंबलिनांनृणामितिवचनाद्दुर्बलानामपि सर्वथापिविधिप्र
तिषेधाहृतकालानतिक्रमेण जातिवयोवस्थानाश्रितानिदिव्यानिदेयानि १०० महाभियोगेष्वेतानीत्युक्तं तत्राभियोगस्ययदपेक्ष्यमहत्त्वंतदि
दानीमाह पणसहस्रादर्वाक्फालंविषंतुलांवानकारयेत् मध्यवर्तिजलमपि यथोक्तम् तुलादीनिविषांतानिगुरुष्वर्थेषुदापयेदिति अत्रको
शस्याग्रहणम् कोशमल्पेपिदापयेदित्यल्पाभियोगेपितस्यस्मरणात् एतानिचत्वारिदिव्यानिपणसहस्रादूर्ध्वमेवभवंतीतिनार्वागित्य
र्थः नन्ववर्वागप्यग्न्यादीनिपितामहेनदर्शितानि सहस्रेतुधटंदद्यात्सहस्रार्द्धेतथायसम् अर्द्धस्यार्द्धेतुसलिलंतस्यार्द्धेतुविषंस्मृतमिति

नासहस्राद्धरेत्फालंनविषंनतुलांतथा

सत्यम् तत्रेत्थंव्यवस्था यद्द्रव्यापहारेपातित्यंभवति तद्विषयंपितामहवचनमितरत् द्रव्यविषयंयोगीश्वरवचनमिति एतच्चवचनद्वयं
स्तेयसाहसविषयम् अपन्हवेतुविशेषोदर्शितः कात्यायनेन दत्तस्यापन्हवोयत्रप्रमाणंतत्रकल्पयेत् स्तेयसाहसयोर्दिव्यंस्वल्पेप्यर्थेप्र
दापयेत् सर्वद्रव्यप्रमाणंतत्ज्ञात्वादिव्यंप्रकल्पयेत् हेमप्रमाणयुक्तंतुतदादिव्यंनियोजयेत् ज्ञात्वासंख्यांसुवर्णानांशतनाशेविषंस्मृ
तम् अशीतेस्तुविनाशेवैदद्यादेवहुताशनम् षष्ट्यानाशेजलंदेयंचत्वारिंशतिवैधटम् त्रिंशद्दशविनाशेतुकोशपानंविधीयते पंचा

धिकस्य वानाशे ततोर्द्धार्द्धस्य तंडुलाः ततोर्द्धार्द्धविनाशे हिस्पृशेत्सुत्रादिमस्तकान् ततोर्द्धार्द्धविनाशे तु लौकिकाश्च क्रियाः स्मृताः एवं विचा
रयन्राजा धर्मार्थाभ्यां न हीयत इति ज्ञात्वा संख्यां सुवर्णानामित्यत्र सुवर्णशब्दः षोडश माषाः सुवर्ण इत्युक्तपरिमाणवचनः नाशशब्दश्चात्रापि
न्हववचनः नासहस्रादित्यत्र तु ताम्रिकपणसहस्रं बोद्धव्यम् ननु नृपद्रोहे पातके चैतानि दिव्यान्युक्तानि तत्कथम् नासहस्राद्धरेत्फालमि
त्यत्राह नृपद्रोहेषु महापातकाभियोगे च सदा द्रव्यसंख्यामनपेक्ष्यैतानि दिव्यानि कुर्युरुपवासादिना शुचयः संतः तथा देशविशेषोपि ना
रदेनोक्तः सभाराजकुलद्वारे देवायतनचत्वरे निधेयो निश्चलः पूज्यो धूपमाल्यानुलेपनैरिति निधेयो धटः व्यवस्था च कात्यायनेनोक्ता

नृपार्थेष्वभिशापे च वहेयुः शुचयः सदा १०१ तुलाधारणविद्भिरभियुक्तस्तुलाश्रितः प्रतिमानसमीभूतो रेखां कृत्वावतारितः १०२

इंद्रस्थानेभिशस्तानां महापातकिनां नृणाम् नृपद्रोहे प्रवृत्तानां राजद्वारे प्रयोजयेत् प्रातिलोम्यप्रसूतानां दिव्यं देयं चतुष्पथे अतोन्येषु
तु कार्येषु सभामध्ये विदुर्बुधाः अस्पृश्याधमदासानां म्लेच्छानां पापकारिणाम् प्रातिलोम्यप्रसूतानां निश्चयो न तु राजनि तत्प्रसिद्धानि दि
व्यानि संशये नेषु निर्दिशेदिति इति दिव्यमातृका १०१ एवं सर्वदिव्योपयोगिनीं व्यवहारमातृकामभिधायेदानीं धटादिदिव्यानां प्रयोग
माह तुलायाधारणं तोलनं ये विदंति सुवर्णकारप्रभृतयः तैः प्रतिमानेन मृदादिना समीभूतः समीकृतस्तुलामाश्रितोधिरूढो नियुक्तो
भियोक्ता वादिव्यकारी लेखां कृत्वा येन सन्निवेशेन प्रतिमानसमीकरणदशायां शिक्यतले वस्थितस्तस्मिन् पांडुलेख्येनांकयित्वावता

रितस्तुलामभिमंत्रयेत प्रार्थयेत्तानेनमंत्रेण हेतुले त्वंसत्यस्यस्थानमसि पुरा आदिसृष्टौ देवैर्हिरण्यगर्भप्रभृतिभिर्विनिर्मितोत्पादिता तत्त
स्मात्सत्यं संदिग्धस्यार्थस्य स्वरूपं वद दर्शय कल्याणि शोभने अस्मात्संशयान्मां विमोचय हेमातः यद्यहं पापकृदसत्यवाद्यस्मि ततो मां त्वमधोनय
अथशुद्धः सत्यवाद्यस्मि ततो मामूर्ध्वं नयेति शाङ्खिवाकस्य तुलाभिमंत्रणमंत्रः स्मृत्यंतरोक्तः अयंतु दिव्यकारिणः जयपराजयलक्षणं तु मंत्रलिंगा
देवावगम्यते इतिनपृथगुक्तम् धटनिर्माणं पुनरारोहाद्यर्थं सिद्धमेव पितामहनारदादिभिः स्पष्टीकृतम् तद्यथा छित्वातु यज्ञियं वृक्षं यूपव-
न्मंत्रपूर्वकम् प्रणम्य लोकपालेभ्य स्तुलाकार्या मनीषिभिः मंत्रः सौम्योवानस्पत्यच्छेदनेजप्यएव चतुरस्रातुलाकार्या दृढारज्जीतथैव च कट

तंतुले सत्यधामासि पुरा देवैर्विनिर्मिता तत्सत्यं वद कल्याणि संशयान्मां विमोचय १०३
यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय शुद्धश्चेद्गमयोर्ध्वं मां तुलामित्यभिमंत्रयेत् १०४

कानिचद्देयानि त्रिषु स्थानेषु चार्थवत् चतुर्हस्तातुलाकार्या पादौ चोपरितत्समौ प्रांतरं तु तयोर्हस्तौ भवेदध्यर्द्धएव वा हस्तद्वयं निखेयं तु पाद
योरुभयोरपि तोरणे च तथा कार्ये पार्श्वयोरुभयोरपि धटादुच्चतरे स्यातां नित्यं दशभिरंगुलैः अवलंबौ च कर्तव्यौ तोरणाभ्यामधोमुखौ मृ
न्मयौ सूत्रसंबद्धौ धटमस्तकचुंबिनौ प्राङ्मुखो निश्चलः कार्यः शुचौ देशे धटस्तथा शिक्यद्वये समासज्य पार्श्वयोरुभयोरपि प्राङ्मुखान्कल्प
येद्दर्भान् शिक्ययोरुभयोरपि पश्चिमे तोलयेत्कर्तॄनन्यस्मिन्मृत्तिकां शुभाम् पिटकं पूरयेत्तस्मिन्निष्टकाग्रावपांसुभिः अत्रचमृत्तिकाग्रावपां

सूनांविकल्पः परीक्षकानियोक्तव्यास्तुलामानविशारदाः वणिजोहेमकाराश्च कांस्यकारास्तथैवच कार्यः परीक्षकैर्नित्यमवलंबसमोधटः उ
दकंच प्रदातव्यंधटस्योपरिपंडितैः यस्मिन्नपूवतेतोयंसविज्ञेयः समोधटः तोलयित्वानरंपूर्वंपश्चान्तमवतार्यतु धटंतुकारयेन्नित्यंपता
काध्वजशोभितम् तत्र आवाहयेद्देवान्विधिनानेनमंत्रवित् वादित्रतूर्यघोषैश्च गंधमाल्यानुलेपनैः प्राङ्मुखः प्रांजलिर्भूत्वाप्राड्विवाकस्ततो
वदेत् एह्येहि भगवन्धर्मत्वस्मिन्दिव्ये समाविश सहितोलोकपालैश्च वस्वादित्यमरुद्गणैः आवाह्यतुधटेधर्मंपश्चादंगानिविन्यसेत् इंद्रं
पूर्वेतुसंस्थाप्यप्रेतेशंदक्षिणेतथा वरुणंपश्चिमेभागे कुबेरंचोत्तरे तथा अग्न्यादिलोकपालांश्च कोणभागेषुविन्यसेत् इंद्रः पीतोयमः श्या
मोवरुणः स्फटिकप्रभः कुबेरस्तुसुवर्णाभोवन्हिश्चापिसुवर्णभः तथैवनिर्ऋतिः श्यामो वायुर्धूम्रः प्रशस्यते ईशानस्तु भवेद्रक्तः एवंध्या
येत्क्रमाद्विमान् इंद्रस्यदक्षिणेपार्श्वेवसूनाराधयेद्बुधः धरोध्रुवस्तथासोम आपश्चैवानिलोऽनलः प्रत्यूषश्च प्रभासश्च वसवोष्टौप्रकीर्ति
ताः देवेशेशानयोर्मध्ये आदित्यानांतथायनम् धातार्यमाच मित्रश्च वरुणोंशोभगस्तथा इंद्रोविवस्वान्पूषाच पर्जन्योदशमः स्मृतः तत-
स्त्वष्टाततोविष्णुरजघन्योजघन्यजः इत्येतेद्वादशादित्यानामभिः परिकीर्तिताः अग्नेः पश्चिमभागेतुरुद्राणामयनंविदुः वीरभद्रश्च शंभु
श्च गिरिशश्चमहायशाः अजैकपादहिर्बुध्न्यः पिनाकीचापराजितः भुवनाधीश्वरश्चैव कपालीचविशांपतिः स्थाणुर्भवश्च भगवान्रुद्रा
स्त्वेकादशस्मृताः प्रेतेशरक्षोमध्येतुमातृस्थानंप्रकल्पयेत् ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा वाराहीचैवमाहेंद्रीचामुंडागणसंयु
ता निर्ऋतेरुत्तरेभागेगणेशायतनंविदुः वरुणस्योत्तरेभागेमरुतांस्थानमुच्यते पवनः स्पर्शनोवायुरनिलोमारुतस्तथा प्राणः प्राणेश

जीवोचमरुतोष्टौप्रकीर्तिताः घटस्योत्तरभागेतु दुर्गामावाहयेद्बुधः एतासांदेवतानांतु स्वनाम्नापूजनंविदुः पूजावसानंधर्मायदत्वाचार्घादिकं
क्रमात् अर्घादिपश्चादंगानांभूषांतमुपकल्पयेत् गंधादिकांनिवेद्यांतांपरिचर्यांप्रकल्पयेदिति अत्रचतुलांपताकाध्वजालंकृतांविधायतस्या
मेत्येहीतिमंत्रेण धर्ममावाह्य धर्मायार्घंकल्पयामिनम इत्यादिनाप्रयोगेणार्घ्य पाद्याचमनीयमधुपर्काचमनीयस्नानवस्त्रयज्ञोपवीताचम
नीयमुकुटकटकादिभूषांतंदत्वा इंद्रादीनांदुर्गांतानांप्रणवाद्यैः स्वनामभिश्चतुर्थ्यंतैर्नमोंतैरर्घ्यादिभूषांतंपदार्थानुसमयोगंदत्वाधर्माय
गंधपुष्पधूपदीपनैवेद्यानिदत्वाइंद्रादीनांगंधादीनिपूर्ववद्दद्यात् गंधपुष्पाणिचघटपूजायांरक्तानिकार्याणि यथाहनारदः रक्तैर्गंधैश्च
माल्यैश्चदद्याधूपाक्षतादिभिः अर्चयेत्तुघटंपूर्वंततःशिष्टांस्तुपूजयेदिति इंद्रादीनांतुविशेषानभिधानाद्यथालाभंरक्तैरन्यैर्वापूजनमिति
पूजार्थंक्रमः एतच्चसर्वंप्राड्विवाकःकुर्यात् यथोक्तम् प्राड्विवाकस्ततोविप्रोवेदवेदांगपारगः श्रुतवृत्तोपसंपन्नःशांतचित्तोविमत्सरः स
त्यसंधःशुचिर्दक्षःसर्वप्राणिहितेरतः उपोषितःशुद्धवासाःकृतदंतानुधावनः सर्वासांदेवतानांचपूजांकुर्याद्यथाविधि तथा ऋत्विग्भिश्च
तुर्भिश्चतस्सृषुदिक्षुलौकिकाग्नौहोमःकार्यः यथाह चतुर्दिक्षुतथाहोमःकर्तव्योवेदपारगैः आज्येनहविषाचैव समिद्भिर्होमसाधनैः
सावित्र्याप्रणवेनाथस्वाहांतेनैवहोमयेत् प्रणवादिकांगायत्रीमुच्चार्य पुनःस्वाहाकारांतंप्रणवमुच्चार्य समिदाज्यचरून्प्रत्येकमष्टोत्तरशतं
जुहुयादित्यर्थः एवंहवनांतांदेवपूजांविधायानंतरमभियुक्तमर्थंवक्ष्यमाणमंत्रसहितंपत्रेलिखित्वातत्पत्रं शोध्यशिरोगतंकुर्यात् य
थाह यचार्थमभियुक्तःस्याल्लिखित्वातंतुपत्रके मंत्रेणानेनसहितंतत्कार्यंतुशिरोगतम् मंत्रश्चायम् आदित्यचंद्रावनिलोनलश्चद्यौ

भूमिरापोहृदयंयमश्च अहश्चरात्रिश्चउभेचसंध्येधर्मश्चजानातिनरस्यवृत्तमिति एतच्चधर्मावाहनादिशिरसिपत्रारोपणांतमनुष्ठानकांडंसर्व
दिव्यसाधारणम् यथोक्तम इमंमंत्रविधिंकृत्स्नंसर्वदिव्येषुयोजयेत् आवाहनंचदेवानांतथैवपरिकल्पयेदिति अनंतरंप्राड्विवाकोधटमामंत्रयते
धटमामंत्रयेच्चैवविधिनानेनशास्त्रविदितिस्मरणात् मंत्राश्चदर्शिताः त्वंधटब्रह्मणासृष्टपरीक्षार्थंदुरात्मनाम् धकाराद्धर्ममूर्तिस्त्वंटकारात्कुटि
लंनरम् धृतोभावयसेयस्माद्धटस्तेनाभिधीयसे त्वंवेत्सिसर्वजंतूनांपापानिसुकृतानिच त्वमेवदेवजानीषेनविदुर्यानिमानवाः व्यवहाराभिश
स्तोऽयंमानुषःशुद्धिमिच्छति तदेनंसंशयादस्माद्धर्मतस्त्रातुमर्हसीति शोध्यस्तु त्वंतुलेत्यादिमापूर्वंतेनैवमंत्रेणतुलामामंत्रयते अनंतरंप्रा
ड्विवाकः शिरोगतपत्रकंशोध्ययथास्थानंनिवेश्यचधटमारोपयति पुनरारोपयेत्तस्मिन्स्थितावस्थितपत्रकमितिस्मरणात् आरोपितंचवि
नाडीपंचकंयावत्तथैवावस्थापयेत् तत्कालपरीक्षांचज्योतिःशास्त्राभिज्ञःकुर्यात् ज्योतिर्विद्ब्राह्मणःश्रेष्ठःकुर्यात्कालपरीक्षणम् विनाड्यःपंच
विज्ञेयाःपरीक्ष्याःकालकोविदैरितिस्मरणात् दशगुर्वक्षरोच्चारणकालःप्राणः षट्प्राणाविनाडी उक्तंच दशगुरुवर्णःप्राणः षट्प्राणाःस्याद्विना
डिकातासाम् षष्ट्याघटीघटीनांषष्ट्याहोरात्रउक्तश्च स्वाग्निभिर्दिनैर्मासइति तस्मिंश्चकालेशुद्ध्यशुद्धिपरीक्षणार्थंशुचयःपुरुषाराज्ञानियो
क्तव्याः तेचशुद्ध्यशुद्धीकथयंति यथोक्तंपितामहेन साक्षिणोब्राह्मणाःश्रेष्ठायथादृष्टार्थवादिनः ज्ञानिनःशुचयोऽलुब्धानियोक्तव्यानृपेणतु
शंसंतिसाक्षिणःसर्वेशुद्ध्यशुद्धीनृपेतदेति शुद्ध्यशुद्धिनिर्णयकारणंचोक्तं तुलितोयदिवर्द्धेतसशुद्धःस्यान्नसंशयः समोवाहीयमानोवान
सशुद्धोभवेन्नरइति यत्तुपितामहवचनम् अल्पदोषःसमोज्ञेयोबहुदोषस्तुहीयतइति तत्रयद्यभियुक्तस्यार्थस्याल्पत्वंबहुत्वंचनदिव्येना

वधारयितुं शक्यते तथापि सकृदमतिपूर्वत्वेन च महत्त्वमिति दंडप्रायश्चित्ताल्पत्वमहत्त्वमवधार्यते यदा चानुपलक्ष्यमाणदृष्टकारण एव कक्ष्यादीनां छे
दो भंगो वा भवति तदाप्यशुद्धिरेव कक्षच्छेदे तुलाभंगे धटकर्कटयोस्तथा रज्जुच्छेदेक्षभंगे वा तथैवाशुद्धिमादिशेदिति स्मरणात् कक्ष्यं शिक्यत
लम् कर्कटौ तुलांतयोः शिक्याधारा वीषद्वक्रा वायसकीलकौ कर्कटशृंगसन्निभौ अक्षः पादस्तंभयोरुपरि निविष्टस्तुलाधारपादः यदा तु दृश्य
मानकारण एषां भंगस्तदा पुनरारोपयेत् शिक्यादिच्छेदभंगेषु पुनरारोपयेन्नरमिति स्मरणात् ततश्च ऋत्विक्पुरोहिताचार्यान्दक्षिणाभिश्च
तोषयेत् एवं कारयिता राजा भुक्त्वा भोगान्मनोरमान् महतीं कीर्तिमाप्नोति ब्रह्मभूयाय कल्पते यदा तूक्तलक्षणं धटं तथैव स्थापयितुमिच्छति
तदा वायसाद्युपघातनिरासार्थं कपाटादिसहितां शालां कुर्यात् विशालामुन्नतां शुभ्रां धटशालां तु कारयेत् यत्रस्थो नोपहन्येत श्वभिश्चांडा
लवायसैः तत्रैव लोकपालादीन् सर्वदिक्षु निवेशयेत् त्रिसंध्यं पूजयेच्चैनान् गंधमाल्यानुलेपनैः कपाटबीजसंयुक्तां परिचारकरक्षिताम् मृ
त्पानीयाग्निसंयुक्तामशून्यां कारयेन्नृप इति स्मरणात् बीजानि यवव्रीह्यादीनाम् इति धटविधिः १०२ ३ ४ इदानीं क्रमप्राप्त
मग्निविधिमाह दिव्यमातृकोक्तसाधारणधर्मेषु सत्सु तुलाविधानोक्तधर्मावाहनादिशिरःपत्रारोपणांते चविद्यंते सत्ययमग्निविधौ विशे
षः विमृदितव्रीहेर्विमृदि ताविघर्षिता व्रीहयः कराभ्यां येनासौ विमृदितव्रीहिस्तस्य करौ प्रक्षालयित्वा तिलकालकव्रणाकिणादिस्थाने षलक
रसादिनांकयित्वा यथाह नारदः हस्तक्षतेषु सर्वेषु कुर्याद्धंसपदानि वै इति अनंतरं सप्ताश्वत्थस्य पर्णानि हस्तयो रंजलीकृतयोर्न्यसेत्
पत्रै रंजलिमापूर्य आश्वत्थैः सप्तभिः समैरिति स्मरणात् तानि च हस्तसहितानि सूत्रेण तावद्वेष्टयेत् यावंत्यश्वत्थपर्णानि सप्तकृत्वो वेष्टयेदि

स्यर्थः सूत्राणिच्चसप्तशङ्क्वानिभवंति वेष्टयीतमितैर्हस्तौसप्तभिः सूत्रतंतुभिरितिनारदवचनात् तथासप्तशमीपत्राणिसप्तैवदूर्वापर्णा
नि चाक्षतांश्चदध्यक्तानक्षतांश्चाश्वत्थपत्राणामुपरिविन्यसेत् सप्तपिप्पलपत्राणि शमीपत्राण्यथाक्षतान् दूर्वायाःसप्तपत्राणिदध्यक्तां
श्चाक्षतान्न्यसेत्इतिस्मरणात् कुसुमानिचविन्यसेत् सप्तपिप्पलपत्राणि अक्षतंसुमनोदधि हस्तयोर्निक्षिपेत्तत्रसूत्रेणावेष्टनंतथेतिपि
तामहवचनात् सुमनसःपुष्पाणियदपिस्मरणम् अयस्तप्तंतुपाणिभ्यामर्कपत्रैस्तुसप्तभिः अंतर्हितंवहेत्शनैर्मदग्धःसप्तमेपदइ
तितदप्यश्वत्थपत्राभावेअर्कपत्रविषयंवेदितव्यम् अश्वत्थपत्राणांपितामहप्रशंसावचनेनमुख्यत्वावगमात् पिप्पलाज्जायतेवह्निः पिप्पलोवृक्षराट्

करौविमृदितव्रीहेर्लक्षयित्वाततोन्यसेत् सप्ताश्वत्थस्यपत्राणितावत्सूत्राणिवेष्टयेत् १०५
त्वमग्नेसर्वभूतानामंतश्चरसिपावक साक्षिवत्पुण्यपापेभ्योब्रूहिसत्यंकवेमम १०६

स्मृतः अतस्तस्यतुपत्राणिहस्तयोर्विन्यसेद्बुध इति १०५ कर्तुरग्न्यभिमंत्रणमाह अग्नेत्वंसर्वभूतानांजरायुजांडजस्वेदजोद्भिज्जानामं
तःशरीराभ्यंतरेचरसि उपयुक्तान्नपानादीनांपाचकत्वेनवर्त्तसे पावकशुद्धिहेतो कवेक्रांतदर्शिन् साक्षिवत्पुण्यपापेभ्यः सत्यंब्रूहि पुण्य
पापेभ्यइतिल्यब्लोपेपंचमी पुण्यपापान्यवेक्ष्यसत्यंब्रूहि दर्शयेदित्यर्थः अयःपिंडेत्रिभिस्तापैः संतप्ते संदंशेनपुरत आनीतेकर्तापश्चि
ममंडले प्राङ्मुखस्तिष्ठन् अनेनमंत्रेणाग्निंमंत्रयते यथाहनारदः अग्निवर्णमयःपिंडंसस्फुलिंगंसुरंजितम् तापेतृतीयेसंताप्यब्रू

यात्सत्यपुरस्कृतमिति अस्यार्थः लोहशब्दार्थसंतप्तलोहपिंडमुदके निक्षिप्य पुनः संताप्योदके निक्षिप्य तृतीये तापे संताप्य संदंशेन गृहीत्वा
पुरत आनीते सत्यपुरस्कृतं सत्यशब्दयुक्तं त्वमग्ने सर्वभूतानामित्यादिमंत्रं कर्ता ब्रूयादिति प्राड्विवाकस्तु मंडलभूभागाद्दक्षिणप्रदेशे लौकिक
मग्निमुपसमाधाय अग्नये पावकाय स्वाहेति आज्येनाष्टोत्तरशतवारं जुहुयात् शांत्यर्थं जुहुयादग्नौ घृतमष्टोत्तरं शतमिति स्मरणात् हुत्वा
च तस्मिन्नग्नावयःपिंडं प्रक्षिप्य तस्मिंस्ताप्यमाने धर्मावाहनादि हवनांतं पूर्वोक्तविधिं विधाय तृतीये तापे वर्तमाने अयःपिंडमग्निमेभिर्मंत्रैर
भिमंत्रयते त्वमग्ने वेदाश्चत्वारस्त्वं च यज्ञेषु हूयसे त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादिनाम् जठरस्थोहि भूतानां ततो वेत्सि शुभाशुभम् पा

तस्येत्युक्तवतो लोहं पंचाशत्पलिकं समम् अग्निवर्णं न्यसेत्पिंडं हस्तयोरुभयोरपि १०७

पं पुनासि वै यस्मात्तस्मात्पावक उच्यसे पापेषु दर्शयात्मानमर्चिष्मान् भव पावक अथवा शुद्धभावेषु शीतो भव हुताशन त्वमग्ने सर्वदेवाना
मंतश्चरसि साक्षिवत् त्वमेव देव जानीषे न विदुर्यानि मानवाः व्यवहाराभिशस्तोयं मानुषः शुद्धिमिच्छति तदेनं संशयादस्माद्धर्मतस्त्रा
तुमर्हसीति १०६ अपिच तस्येत्युक्तवतस्त्वमग्ने सर्वभूतानामित्याद्यभिमंत्रणं कृतवतो लोहं लोहविकारपिंडं पंचाशत्पलिकं पं
चाशत्पलमस्मिन्समं समग्निरहितम् सर्वतश्च समं वृत्तं श्लक्ष्णं च तथाष्टांगुलायामं अस्त्रिहीनं समं कृत्वा अष्टांगुलायाममयोमयम्
पिंडं तु तापयेदग्नौ पंचाशत्पलिकं सममिति पितामहस्मरणात् अग्निवर्णमग्निसदृशमुभयोर्हस्तयोरश्वत्थपत्रदधितृर्वाद्यंतरित
योर्न्यसेत् निक्षिपेत्प्राड्विवाकः १०७

ततः किं कुर्यादित्यत आह सप्तरुषरूसंलोहपिंडं अंजलिना गृहीत्वा सप्त मंडलानि शनैर्व्रजेत् एवकारेण मंडलेष्वेव पदन्यासं मंडलानतिक्र
मणं दर्शयति यथाह पितामहः नमंडलमतिक्रामेन्नाप्यर्वाक्स्थापयेत्पदमिति सप्तैव मंडलानि शनैर्व्रजेदित्युक्तम् तत्रैकैकं मंडलं किंप्र
माणं मंडलयोरंतरं च कियत्प्रमाणकमित्यत आह षोडशांगुलानि यस्य तत् षोडशांगुलकं षोडशांगुलप्रमाणं मंडलं बोद्धव्यम् मंडलयोरं
तरं मध्यं च तावदेव षोडशांगुलमेव सप्त मंडलानि व्रजेदित्त्विदता प्रथममेकमेवस्थानं मंडलमुक्तं अतश्चाष्ट मंडलानि षोडशांगुलकानि मंड
लांतराणि तु सप्त तावत्प्रमाणानि एतदेव नारदेन परिसंख्यायोक्तम् द्वात्रिंशदंगुलं प्राहुर्मंडलान्मंडलांतरम् अष्टाभिर्मंडलैरेवमंगु

सप्तमादाय सप्तैव मंडलानि शनैर्व्रजेत् षोडशांगुलकं ज्ञेयं मंडलं तावदंतरम् १०८

लानां शतद्वयम् चत्वारिंशत्समधिकं भूमेरंगुलमानत इति अयमर्थः अवस्थानमंडलात् षोडशांगुलान्मंडलांतरमन्यन्मंडलम् द्विती
याद्येकमेकं द्वात्रिंशदंगुलं सांतरालं तदेवमनवस्थानमंडलं षोडशांगुलं गंतव्यानि च सप्त मंडलानि सांतरालानि द्वात्रिंशदंगुलान्येव मष्टा-
भिर्मंडलैश्चत्वारिंशदधिकं शतद्वयं भूमेरंगुलमानतोंगुलमानमिति सार्वविभक्तिकस्तसिः अस्मिंस्तु पक्षे वस्थानमंडलं षोडशांगुलं निधा
य द्वात्रिंशदंगुलप्रमाणानां सप्तानां सांतरालमंडलभूभागानामेकं भूभागं द्विधा विभज्यांतरालभूभागान् षोडशांगुलप्रमाणान् विहाय मं
डलभूभागेषु षोडशांगुलप्रमाणेषु गंतृपदप्रमाणानि सप्त मंडलानि कार्याणि यथा तेनैवोक्तम् मंडलस्य प्रमाणं तु कुर्यात्तत्पदसंमित

मिति यत्तु पितामहेनोक्तम् कारयेन्मंडलान्यष्टौ पुरस्तान्नवमं तथा आग्नेयं मंडलं चाद्यं द्वितीयं वारुणं स्मृतम् तृतीयं वायुदैवत्यं चतुर्थं य
मदैवतम् पंचमं त्विंद्रदैवत्यं षष्ठं कौबेरमुच्यते सप्तमं सोमदैवत्यं सावित्रं त्वष्टमं तथा नवमं सर्वदैवत्यमिति दिव्यविदो विदुः द्वात्रिंशदंगु
लं प्राहुर्मंडलान्मंडलांतरम् अष्टाभिर्मंडलैरेवमंगुलानां शतद्वयम् षट्पंचाशत्समधिकं भूमेस्तु परिकल्पना कर्तुः पदसमं कार्यं मंडलं तु
प्रमाणतः मंडले मंडले देयाः कुशाः शास्त्रप्रचोदिताइति तन्नवमं सर्वदैवत्यमपरिमितांगुलप्रमाणं मंडलं विहायाष्टाभिर्मंडलैरष्टाभिश्चां
तरालैः प्रत्येकं षोडशांगुलप्रमाणैरंगुलानां षट्पंचाशदधिकं शतद्वयं संपद्यते तत्रापि गंतव्यानि सप्तैव मंडलानि यतः प्रथमे तिष्ठति न

मुक्त्वाग्निं मृदितव्रीहिरदग्धः शुद्धिमाप्नुयात् अंतरापतिते पिंडे संदेहे वा पुनर्हरेत् १०९

वमे क्षिपतीति न विरुध्यते अंगुलप्रमाणं च तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः प्रमाणमंगुलस्योक्तं वितस्तिर्द्वादशांगुलः हस्तो
वितस्तिद्वितयं दंडो हस्तचतुष्टयम् तत्सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयमिति बोद्धव्यम् १०८ सप्तमंडलानि गत्वा किं कर्तव्यमित्यत आह
अष्टमे मंडले स्थित्वा नवमे मंडले अग्निं सप्तमयः पिंडं त्यक्त्वा कराभ्यां व्रीहीन्मर्दयित्वा अदग्धहस्तश्चेच्छुद्धिमाप्नुयात् दग्धहस्तश्चेदशुद्ध इ
त्यर्थसिद्धम् यस्तु संत्रासात्प्रस्खलन् हस्ताभ्यामन्यत्र दह्यते तथाप्यशुद्धो न भवति यथाह कात्यायनः प्रस्खलन्नभिशस्तश्चेत्स्थानाद
न्यत्र दह्यते अदग्धं तं विदुर्देवास्तस्य भूयोपि दापयेदिति यदा गच्छतोंतरा सप्तमंडलादर्वागेव पिंडः पतति दग्धादग्धत्वे वा संशयस्त

दापुनर्हरेदित्यर्थआसमुक्तम् तत्रचायमनुष्ठानक्रमः पूर्वेद्युर्भूशुद्धिं विधाय परेद्युर्मंडलानियथाशास्त्रं निर्माय मंडलाधिदेवताश्च
तत्र संपूज्याग्निमुपसमाधाय शांतिहोमंनिर्वर्त्यारत्नावयःपिंडं निधाय धर्मावाहनादिसर्वदेवतापूजां हवनांतांनिर्वर्त्य उपोषितस्यस्नातस्या
र्द्रवाससः पश्चिमेमंडलेतिष्ठतोव्रीहिमर्दनादिकं करसंस्कारं विधायप्रतिज्ञापत्रंसमंत्रकं कर्तुः शिरसिबध्वा प्राड्विवाकस्तृतीयेतापेऽग्निम
भिमंत्र्यतप्तमयःपिंडं संदंशने गृहीत्वाकर्त्रभिमंत्रितं तस्यांजलौनिदध्यात् सोपिमंडलानिसप्तगत्वानवमेमंडलेप्रक्षिप्या दग्धः शुद्धोभव
तीति इत्यग्निविधिः १०९ संप्रत्युदकविधिमाह हेवरुणसत्येनमामभिरक्षत्वमित्यनेनमंत्रेण कर्तुरुदकमभिशाप्याभिमंत्र्य नाभिदघ्नो

सत्येनमाभिरक्षत्वं वरुणेत्यभिशाप्यकम् नाभिदघ्नोदकस्थस्यगृहीत्वोरूजलंविशेत् ११०

दकस्थस्यनाभिप्रमाणोदकस्थितस्यपुरुषस्योरूगृहीत्वाशोध्योजलंप्रविशेत् जलेनिमज्जेत् एतच्चवरुणपूजायांसत्यां गंधमाल्यैःसुरभि
भिर्मधुक्षीरघृतादिभिः वरुणायप्रकुर्वीतपूजामादौसमाहितइतिनारदस्मरणात् यथासाधारणेषुधर्मेषुधर्मावाहनादिसकलदेवतापूजा
होमसमंत्रकप्रतिज्ञापत्रशिरोनिवेशनांतेषुसत्स्वेव तथा तोयत्वंप्राणिनांप्राणसृष्टेराद्यंतुनिर्मितम् शुद्धेश्चकारणंप्रोक्तंद्रव्यानांदेहिनांत
था अतस्त्वंदर्शयात्मानंशुभाशुभपरीक्षणमितिप्राड्विवाकेनोदकाभिमंत्रणेकृतेशोध्यः सत्येनमाभिरक्षत्वंवरुणेत्युदकंप्रार्थयते उदकस्था
नानिचनारदेनोक्तानि नदीषुनत्त्ववेगासुसागरेषुवनेषुच ह्रदेषुदेवखातेषुतडागेषुसरःसुचेति तथापितामहेनापि स्थिरतोयेनिमज्जे

न्तुनग्राहिणिनचाल्पके तृणशैवालरहितेजलौकामत्स्यवर्जिते द्वेखातेषुयत्तोयंतस्मिन्कुर्याद्विशोधनम् आहार्यंवर्जयेन्नित्यंशीघ्रगास्व
नदीषुच आविशेत्सलिलेनित्यंतृणपंकविवर्जितेइति आहार्यंतडागादिभ्य आहृतंताम्रकुटाहादिक्षिप्तंजलम् नाभिप्रमाणोदकस्यश्रय
ज्ञियवृक्षोद्भवांधर्मस्थूणामवष्टभ्य प्राङ्मुखस्तिष्ठेत् उदकेप्राङ्मुखस्तिष्ठेद्धर्मस्थूणांप्रगृह्यचेतिस्मरणात् ११० ततःकिंकर्तव्यमित्यत
आह निमज्जनसमकालंगतेऽस्मिन् जविन्येकस्मिन्पुरुषे अन्योजवीशरपात स्थानस्थितः पूर्वमुक्तमिषुमानीयजलेनिमग्नांगंयदिपश्य
तितदा सशुद्धोभवति एतदुक्तंभवति त्रिषुशरेषुमुक्तेष्वेकोवेगवान् मध्यमेशरपातस्थानंगत्वातमादाय तत्रैवतिष्ठति अन्यस्तुपुरुषोवेगवान्

समकालमिषुंमुक्तमानीयान्योजवीनरः गतेतस्मिन्निमग्नांगंपश्येच्चेच्छुद्धिमाप्नुयात् १११

शरमोक्षस्थानेतिष्ठति एवंस्थितयोस्तयोस्तृतीयस्यांकरतालिकायांशोध्योनिमज्जति तत्समकालमेवतोरणमूलस्थितोपिद्रुततरंम
ध्यमशरपातस्थानंगच्छति शरग्राहीचतस्मिन्प्राप्तेद्रुततरंतोरणमूलंप्राप्यांतर्जलगतंयदिनपश्यतितदाशुद्धोभवतीति एतदेवस्पष्टी
कृतंपितामहेन गंतुश्चापिचकर्तुश्चसमंगमवमज्जनम् गच्छत्तोरणमूलात्तुलक्ष्यस्थानंजवीनरः तस्मिन्गतेद्वितीयोपिवेगादादाय
सायकम् गच्छेत्तोरणमूलंतुयतःसपुरुषोगतः आगतस्तुशरग्राहीनपश्यतियदाजले अंतर्जलगतंसम्यक्तदाशुद्धिंविनिर्दिशेदि

ति जविनोश्चपुरुषयोर्निर्धारणंकृतंनारदेन पंचाशतोधावकानांयोस्यातांमधिकौजवे तौचतत्रनियोक्तव्यौशरानयनकारणादिति तोर
णंचनिमज्जनसमीपस्थाने समेशोध्यकर्णप्रमाणोच्छ्रितंकार्यम् गत्वातुतज्जलस्थानतटेतोरणमुच्छ्रितम् कुर्वीतकर्णमात्रंतुभूमिभा
गेसमेशुचाविति नारदस्मरणात् शरत्रयंवेणवंच धनुर्मंगलद्रव्यैःश्वेतपुष्पादिभिः प्रथमंसंपूजयेत् शरान्संपूजयेत्पूर्वंवैणवंचध
नुस्तथा मंगलैर्धूपपुष्पैश्चततःकर्मसमाचरेदिति पितामहवचनात् धनुषःप्रमाणंलक्ष्यस्थानंचनारदेनोक्तम् क्रूरंधनुःसप्तश
तं मध्यमंषट्शतंस्मृतम् मंदंपंचशतंज्ञेयमेषज्ञेयोधनुर्विधिः मध्यमेनतुचापेनप्रक्षिपेच्चशरत्रयं हस्तानांतुशतेसार्द्धेलक्ष्यंकृ-
त्वाविचक्षणः न्यूनाधिकेतुदोषःस्यात्क्षिपतःसायकांस्तथेति अंगुलानांसप्ताधिकंशतंसप्तशतंक्रूरंधनुः एवंषट्शतंपंचशतंच
एवंचैकादशांगुलाधिकंहस्तचतुष्टयंक्रूरस्यधनुषःप्रमाणम् मध्यमस्यदशांगुलाधिकं मंदस्यनवांगुलाधिकमित्युक्तंभवति
शराश्चानायसाग्रावेणवाःकार्याः शरांश्चानायसाग्रांस्तुप्रकुर्वीतविशुद्धये वेणुकांडमयांश्चैवक्षेप्तातुस्थिरदक्षिपेदितिस्मरणात्
क्षेप्तातुक्षत्रियस्तद्वृत्तिर्वाब्राह्मणःसोपवासोनियोक्तव्यः यदाह क्षेप्ताचक्षत्रियःप्रोक्तस्तद्वृत्तिर्ब्राह्मणोपिवा अक्रूरहृदयःशांतः-
सोपवासस्तथाक्षिपेदिति त्रिषुमुक्तेषुमध्यमःशरोग्राह्यः तेषांचप्रेषितानांचशराणांशास्त्रचोदनात् मध्यमस्तुशरोग्राह्यःपुरुषेणब
लीयसेतिवचनात् तत्रापिपतनस्थानादानेतव्योनसर्पणस्थानात् शरस्यपतनंग्राह्यंसर्पणंतुविवर्जयेत् सर्पन्सर्पन्शरोयाया
दूरादूरतरंयतइतिवचनात् वातेचप्रवायतिविषमादिदेशेचशरमोक्षोनकार्यः इषुंनप्रक्षिपेद्विद्वान्मारुतेचातिवायति विषमेभूप्रदेशे

च्चवृक्षस्थाणुसमाकुले तृणगुल्मलतावल्लीपंकपाषाणसंयुतइतिपितामहवचनात् निमग्नांगंपश्येच्चेच्छुद्धिमाप्नुयादितिवदता उन्मज्जि-
तांगस्याशुद्धिर्दर्शिता स्थानांतरगमनेचाशुद्धिःपितामहेनोक्ता अन्यथानविशुद्धिःस्यादेकांगस्यापिदर्शनादिति स्थानाद्वान्यत्रगमना-
द्यस्मिन्पूर्वंनिवेशितइति एकांगस्यापिदर्शनादितिचकर्णाद्यभिप्रायेण शिरोमात्रंतु दृश्येतनकर्णौनापिनासिका अप्सुप्रवेशनेयस्यशु-
द्धंतदपिनिर्दिशेदितिविशेषाभिधानात् अयमत्रप्रयोगक्रमः उक्तलक्षणजलाशयसन्निधावुक्तलक्षणंतोरणंविधायउक्तप्रमाणे
देशेलक्ष्यंनिधाय तोरणसन्निधौसशरंधनुः संपूज्य जलाशयेवरुणमावाह्य पूजयित्वातत्तीरेधर्मादींश्च देवान् हवनांतमिष्ट्वा शोध्यस्यशि

त्वंविषब्रह्मणःपुत्रः सत्यधर्मेव्यवस्थितः त्रायस्वास्मादभीशापात्सत्येनभवमेऽमृतम् ११२
एवमुक्त्वाविषंशार्ङ्गंभक्षयेद्धिमशैलजम् यस्यवेगोविनाजीर्येच्छुद्धिंतस्यविनिर्दिशेत् ११३

रसिप्रतिज्ञापत्रमाबध्यप्राड्विवाकोजलमभिमंत्रयते तोयत्वंप्राणिनांप्राणइत्यादिनामंत्रेण अथशोध्यःसत्येनेत्यादिनामंत्रेणजलम-
भिमंत्र्यगृहीतस्थूणस्यनाभिमात्रोदकावस्थितस्य बलीयसःपुरुषस्य समीपमुपसर्पेति अथ शरेषुत्रिषुमुक्तेषुमध्यमशरपातस्थाने
मध्यमशरंगृहीत्वाजविन्येकस्मिन्पुरुषेस्थिते अन्यस्मिंश्चतोरणमूलेस्थितेप्राड्विवाकेनतालत्रयेदत्तेयुगपद्गमनमज्जनमथशरानयनमि-
ति इत्युदकविधिः १११ इदानींविषविधिमाह त्वंविषेत्यादिमंत्रेणविषमभिमंत्र्यकर्ताविषंहिमशैलजंशृंगप्रभवंभक्षयेत् तच्च

भक्षितं यस्य विषं वेगैर्विना जीर्यति स शङ्क्यो भवति विषवेगो नाम धातोर्धात्वंतरप्राप्तिः धातोर्धात्वंतरप्राप्तिर्विषवेगइतिस्मृतइतिवचनात् धा
तवश्चत्वगसृङ्मांसमेदोस्थिमज्जाशुक्राणीतिसप्त एवंचसप्तैवविषवेगाभवंति तेषांचलक्षणानिपृथगेवविषतंत्रेकथितानि वेगोरोमांचमाद्यो
रचयतिविषजः स्वेदवक्त्रोपशोषौ तस्योर्ध्वंस्तत्परौद्वावुरसिजनयतोवर्णभेदप्रवेपौ योवेगःपंचमोसौनमनविवशतांकंठभंगंचहिक्कांषष्ठोनिश्वा
समोहौवितरतिचमृतिंसप्तमोभक्षकस्येति अत्रचमहादेवस्यपूजाकर्तव्या यथाहनारदः दद्याद्विषंसोपवासेदेवब्राह्मणसन्निधौ धूपोप
हारमंत्रैश्चपूजयित्वामहेश्वरमिति प्राड्विवाकः कृतोपवासोमहादेवंपूजयित्वातस्यपुरतोविषंव्यवस्थाप्य धर्मादिपूजांहवनांतांविधायप्रतिज्ञा
पत्रंशोध्यस्यशिरसिनिधायविषमभिमंत्रयते त्वंविषब्रह्मणासृष्टंपरीक्षार्थंदुरात्मनाम् पापानांदर्शयात्मानंशुद्धानाममृतंभव मृत्युमूर्तेवि
षत्वंहिब्रह्मणापरिनिर्मितम् त्रायस्वैनंनरंपापात्सत्येनास्यामृतंभवेति एवमभिमंत्र्यदक्षिणाभिमुखायास्थितायदद्यात् नारदवचनात् द्वि
जानांसन्निधावेवदक्षिणाभिमुखेस्थिते उदङ्मुखःप्राङ्मुखोवाविषंदद्यात्समाहितइति विषंचवत्सनाभादिग्राह्यम् शृंगिणोवत्सनाभस्य-
हैमजस्यविषस्यवेतिपितामहवचनात् वर्ज्यानिचतथैवोक्तानि चारितानिचजीर्णानिकृत्रिमाणितथैवच भूमिजानिचसर्वाणिविषाणिपरिव
र्जयेदिति नारदेनापि भूषंचचारितंचैवधूपितंमिश्रितंतथा कालकूटमलांबुंचविषंयत्नेनवर्जयेदिति कालश्चनारदेनोक्तः तोलयित्वेपि
तंकालेदेयंतद्धिहिमागमे नापराह्णेनमध्याह्नेनसंध्यायांतुधर्मवित् इति कालांतरेनूक्तप्रमाणादल्पंदेयम् वर्षेचतुर्यवामात्राग्रीष्मेपंचयवाःस्मृ
ता हेमंतेसासप्तयवा शरद्यल्पाततोपिहीतिस्मरणात् अल्पेतिषड्यवेत्यर्थः हेमंतग्रहणेनशिशिरस्यापिग्रहणम् हेमंतशिशिरयोःसामासे

नेतिश्रुतेः वसंतस्यसर्वदिव्यसाधारणत्वात्तत्रापिसप्तयवा विषंचघृतप्लुतंदेयम् नारदवचनात् विषस्यपलषड्भागाद्भागोविंशतिमस्तुयः तमष्ट
भागहीनंतुशोध्येदद्याद्घृतप्लुतमिति पलंचात्रचतुःसुवर्णिकम् तस्यषष्ठोभागोदशमाषाः पंचदशयवाश्चभवंति त्रियवंत्वेवचकृष्णलंपंचकृष्णलंको
माषः इत्येकोमाषःपंचदशयवोभवति एवंदशानांमाषाणांयवाःसार्द्धशतंभवंति पूर्वेचदशयवाइतिषष्ट्यधिकंशतं यवाःपलस्यषष्ठोभागस्तस्मा
द्विंशतितमोभागोष्टौयवास्तस्याष्टमंभागंहीनः एकयवहीनः तंविंशतिमंभागंसप्तयवंघृतप्लुतंदद्यात् घृतंचविषात्त्रिंशद्गुणंग्राह्यम् पूर्वाह्णेशी
तलेदेशेविषंदेयंतुदेहिनाम् घृतेनियोजितंश्लक्ष्णंपिष्टंत्रिंशद्गुणान्वितमितिकात्यायनवचनात् त्रिंशद्गुणेनघृतेनान्वितंविषं शोध्यश्चकुहकादि
भ्योरक्षणीयः त्रिरात्रंपंचरात्रंवापुरुषैःस्वैरधिष्ठितम् कुहकादिभयाद्राजाधारयेद्दिव्यकारिणम् औषधीर्मंत्रयोगांश्चमणीनथविषापहान् क
र्तुःशरीरसंस्थांस्तुगूढोत्पन्नान्परीक्षयेदितिपितामहस्मरणात् यथाविषमपिरक्षणीयम् शार्ङ्गंहैमवतंशस्तंगंधवर्णरसान्वितम् अकृत्रि
मसमंमूढममंत्रोपहतंचयदितिनारदस्मरणात् तथाविषेपीतेयावत्करतालिकाशतपंचकंतावत्प्रतीक्षणीयो नंतरंचिकित्सनीयः यथाहनारदः
पंचतालिशतंकालंनिर्विकारोयदाभवेत् तदाभवतिसंशुद्धस्ततःकुर्याच्चिकित्सितमिति पितामहेनतुदिनांतोऽवधिरुक्तोल्पमात्राविषयः भ-
क्षितेतुयदास्वस्थोमूर्च्छाछर्दिविवर्जितः निर्विकारोदिनस्यांतेशुद्धंतमपिनिर्दिशेदिति अत्रचमाड्विवाकः सोपवासोमहादेवंसंपूज्यतत्पुरतो-
विषंस्थापयित्वाधर्मादीनिष्ट्वाशोध्यस्यशिरसिप्रतिज्ञापत्रंनिधायविषमभिमंत्र्यदक्षिणाभिमुखायस्थितायविषंप्रयच्छति सचशोध्योविष
मभिमंत्र्यभक्षयतीतिक्रमः इतिविषविधानम् ११२ ११३ अथकोशविधिमाह उग्रान्देवान्दुर्गादित्यादीन्समभ्यर्च्यगंध

पुष्पादिभिः पूजयित्वा संस्नाप्य तत्स्नानोदकमाहरेत् आहृत्य च तोयत्वंप्राणिनांप्राणइत्यादिना तत्तोयंप्राड्विवाकः संश्राव्य शोध्येनचतत्तोयं पात्रां
तरेकृत्वा सत्येनमाभिरक्षत्वंवरुणेत्यनेनाभिमंत्रितंपाययेत्प्रसृतित्रयम् एतच्चसाधारणधर्मेषुधर्मावाहनादिसकलदेवतापूजाहोमसमं
त्रकप्रतिज्ञापत्रशिरोनिवेशनांतेषु सत्स्वच अत्रचस्नाप्यदेवनियमः कार्यनियमोधिकारिनियमश्चपितामहादिभिरुक्तः भक्तोयो
यस्यदेवस्यपाययेत्तस्यतज्जलम् समभावेतुदेवानामादित्यस्यतुदापयेत् दुर्गायाःपाययेच्चोरान्येचशस्त्रोपजीविनः भास्करस्यतु
यत्तोयंब्राह्मणंतन्नपाययेत् दुर्गायाःस्नापयेच्छूलमादित्यस्यतुमंडलम् अन्येषामपिदेवानांस्नापयेदायुधानितिदेवतानियमः विस्र

देवानुग्रान्समभ्यर्च्यतत्स्नानोदकमाहरेत् संश्राव्यपाययेत्तस्माज्जलात्सप्रसृतित्रयम् ११४

म्भेसर्वशंकास्र संधिकार्येतथैवच एषुकोशःप्रदातव्योनित्यंचित्तविशुद्धय इतिकार्यनियमः पूर्वाह्णेसोपवासस्यस्नातस्यार्द्रपटस्यच सशूकस्या
व्यसनिनः कोशपानंविधीयते सशूक आस्तिकः मद्यपस्त्रीव्यसनिनांकितवानांतथैवच कोशःप्राज्ञैर्नदातव्योयेचनास्तिकवृत्तयः महापराधेनिर्धर्मे
कृतघ्नेक्लीबकुत्सिते नास्तिकव्रात्यदासेषु कोशपानंविवर्जयेदिति महापराधोमहापातकं निर्धर्मोवर्णाश्रमधर्मरहितःपाखंडीकुत्सितः प्रतिलोमजः दा
शाःकैवर्ताः इत्यधिकारिनियमः तथा गोमयस्यमंडलंकृत्वातत्रशोध्यमादित्याभिमुखंस्थापयित्वापाययेदितिनारदवचनादवगंतव्यम् यथाह
तमाहूयाभिशस्तंतुमंडलाभ्यंतरेस्थितम् आदित्याभिमुखंकृत्वापाययेत्प्रसृतित्रयमिति ११४ ५ ५

ननुतुलादिषुविषांतेषु समनंतरमेव शुद्ध्यशुद्धि भावना कोशेतु कथमित्यत आह चतुर्दशादन्हः पूर्वं यस्य राजिकं राजनिमित्तं दैविकं दैवप्र भवं व्यसनं दुःखं घोरं महत् नोनैव प्रजायते अल्पस्य देहिनामपरिहार्यत्वात्स शुद्धो वेदितव्यः ऊर्ध्वं पुनरवधेर्न दोषः यथाह नारदः ऊर्ध्वं यस्य द्विसप्ताहाद्दैवराजिकम् तं तु महद्भवेत् नाभियोज्यः सविदुषा कृतकालव्यतिक्रमादित्यर्थसिद्धमेवोत्कर्षम् अर्वाक्चतुर्दशादन्हइत्येतन्महाभियोगविषयम् महाभियोगेष्वेतानीतिप्रस्तुत्याभिधानात् अवध्यंतराणि पितामहेनोक्तानि अल्पविषयाणि कोशमल्पेपिदापयेदिति स्मरणात् तानि च त्रिरात्रात्स प्तरात्राद्वा द्वादशाहाद्द्विसप्तकात् वैकृतं यस्य दृश्येत पापकृत्स उदाहृत इति महाभियोगोक्तद्व्यादर्वाचीनं द्व्यं त्रिधा विभज्य त्रिरात्राद्यपि पक्षत्रयं

अर्वाक्चतुर्दशादन्हो यस्य नो राजदैविकम् व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः १५

व्यवस्थापनीयं इतिकोशविधिः तुलादीनि कोशांतानि पंच महादिव्यानि यथोद्देशं योगीश्वरेण व्याख्यातानि स्मृत्यंतरे त्वल्पाभियोगविषयाण्य- न्यानि दिव्यानि कथितानि यथाह पितामहः तंदुलानां प्रवक्ष्यामि विधिं भक्षणनोदितम् चौरे तु तंदुला देया नान्यस्येति विनिश्चयः तंदुलान्कारये च्छुक्लान् छलैर्नान्यस्य कस्यचित् मृन्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः स्नानोदकेन संमिश्रान् रात्रौ तत्रैव वासयेत् प्राङ्मुखो वापि संस्था तं शिरोरोपितपत्रकम् तंडुलान् भक्षयित्वा तु पत्रे निष्ठीवयेत्ततः पिप्पलस्य तु नान्यस्य अभावे भूर्जएव तु लोहितं यस्य दृश्येत हनुस्तालु च शीर्यति गात्रं च कंपयेद्यस्य तमशुद्धं विनिर्दिशेदिति शिरोरोपितपत्रकं तंडुलान् भक्षयित्वा निष्ठीवयेत्प्राड्विवाकः भक्षयेदितिण्यंता-

त्सिचिरूपं सर्वदिव्यसाधारणंच धर्मावाहनादि पूर्ववदिहापि कर्तव्यं इतितंडुलविधिः तप्तमाषविधिः पितामहेनोक्तः तथाहि सौवर्णराजतंवापितां
म्रंवाषोडशांगुलम् चतुरंगुलखातंतु मृन्मयंवाथ मंडलम् वर्तुलमित्यर्थः पूरयेद्घृततैलाभ्यां विंशत्यातुपलैस्तुतत् सुवर्णमाषकंतस्मिन्सु
तप्तेनिक्षिपेत्ततः अंगुष्ठांगुलियोगेनउद्धरेत्तप्तमाषकम् कराग्रंयोनधुनुयाद्विस्फोटोवानजायते शुद्धोभवतिधर्मेणनिर्विकारकरांगुलिः
उद्धरेदितिवचनात्पात्रादुत्क्षेपणमात्रंनबहिःप्रक्षेपणमादरणीयम् अपरकल्पः सौवर्णेराजतेताम्रेआयसेमृन्मयेपिवा गव्यंघृतमुपादा
य तदग्नौतापयेच्छुचिः सौवर्णींराजतींताम्रीमायसींवासुशोभिताम् सलिलेनसकृद्धौतांप्रक्षिपेत्ताम्रमुद्रिकाम् भ्रमद्वीचितरंगाढ्येसनख
स्पर्शगोचरे परीक्षेतार्द्रार्कपर्णेचुरुकारंसुघोषकम् ततश्चानेनमंत्रेणसकृत्तदभिमंत्रयेत् परंपवित्रममृतंघृतत्वंयज्ञकर्मसु दहपावकपा
पंत्वंहिमशीतंशुचोभव उपोषितंततः स्नातमार्द्रवाससमागतम् ग्राहयेन्मुद्रिकांतांतु घृतमध्यगतांतथा प्रदेशिनींचतस्याथपरीक्षेयुःपरी
क्षकाः यस्यविस्फोटकानस्युः शुद्धोसावन्यथाशुचिरिति अत्रापिधर्मावाहनाद्युसंधातव्यम् घृताद्यमंत्रणंप्राड्विवाकस्य त्वमग्नेसर्वभू
तानामितिशोध्यस्याग्न्यभिमंत्रणमंत्रः प्रदेशिनींपरीक्षेयुरितिवचनात् प्रदेशिन्यैवमुद्रिकोद्धरणम् इतितप्तमाषविधिः धर्माधर्मा
ख्यदिव्यविधिश्चपितामहेनोक्तः तथाच अधुनासंप्रवक्ष्यामिधर्माधर्मपरीक्षणम् हंतॄणांयाचमानानांप्रायश्चित्तार्थिनांनृणाम् हंतॄ
णामितिसाहसाभियोगेषु याचमानानामिति अर्थाभियोगेषुप्रायश्चित्तार्थिनामितिपातकाभियोगेषु राजतंकारयेद्धर्ममधर्मंसीसका
यसमिति प्रतिमाविधानंसीसकंवा आयसंवेति पक्षांतरमाह लिखेद्भूर्जेपटेवापिधर्माधर्मौसितासितौ अभ्युक्ष्यपंचगव्येन

गंधमाल्यैः समर्चयेत् सितपुष्पस्तु धर्मः स्यादधर्मोसितपुष्पधृक् एवंविधायोपलिख्य पिंडयोस्तौ निधापयेत् गोमयेन मृदा वापि पिंडौ
कार्यौ समंततः मृद्भांडकेनुपहते स्थाप्यौ चानुपलक्षितौ उपलिप्ते शुचौ देशे देवब्राह्मणसन्निधौ आवाहयेत्ततो देवान् लोकपालांश्च पूर्व
वत् धर्मावाहनपूर्वं तु प्रतिज्ञापत्रकं लिखेत् यदि पापविमुक्तोहं धर्मस्त्वायातु मे करइति अभिशस्तोभिमंत्रयते अभियुक्तस्तयोश्चै
कं प्रगृह्णीताविलंबितः धर्मे गृहीते शुद्धः स्यादधर्मे तु स हीयते एवं समासतः प्रोक्तं धर्माधर्मपरीक्षणमिति इति धर्माधर्मदिव्यविधिः
अन्ये च शपथाद्व्याल्पत्व महत्त्वविषया जातिविशेषविषयाश्च मन्वादिभिरुक्ताः यथा निष्के तु सत्यवचनं द्विनिषेपादलंभनम् त्रिका
द्वर्वाक्तु पुण्यं स्यात्कोशपानमतः परम् सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः गोबीजकांचनैर्वैश्यं शूद्रं सर्वैस्तु पातकैरित्यादयः अत्र
च शुद्धिविभावनामनुनोक्ता नचार्तिर्मूर्च्छतिक्षिप्रं स ज्ञेयः शपथे शुचिरिति आर्तिरपि यस्य नो राजदैविकं व्यसनं जायते घोरमित्यु
क्ते वा कालनियमश्च त्रिरात्रप्रभृतिः कार्यलाघवगौरवपर्यालोचनया द्रष्टव्यः एवं दिव्यैर्जयपराजयावधारणे दंडविशेषोपदर्शितः
कात्यायनेन शतार्द्धं दापयेच्छुद्धमशुद्धो दंडभाग्भवेदिति तं दंडमाह विषे तोये हुताशे च तुलाकोशे च तंडुले सप्तमाषके दिव्ये च क्र
माद्दंडं प्रकल्पयेत् सहस्रं षट्शतं चैव तथा पंचशतानि च चतुस्त्रिद्व्येकमेवं च हीनं हीनेषु कल्पयेदिति निन्हवे भावितो दद्यादित्युक्तं दं
डं नायं दिव्यनिबंधनो दंडः समुच्चीयते इति दिव्यप्रकरणम् ११५ तत्र दायशब्देन यद्धनं स्वामिसंबंधादेव निमित्तादन्यस्य स्वं भव
ति तदुच्यते स च द्विविधः अप्रतिबंधः सप्रतिबंधश्च तत्र पुत्राणां पौत्राणां च पुत्रत्वेन पौत्रत्वेन च पितृधनं पितामहधनं च स्वं भ-

वतीत्यप्रतिबंधोदायः पितृव्यभ्रात्रादीनांतुपुत्राभावेस्वाम्यभावेच्चस्वंभवतीतिपुत्रसद्भावः स्वामिसद्भावश्चप्रतिबंधस्तदभावे पितृव्यत्वेनचभ्रातृ
त्वेनच्चस्वंभवतीतिसप्रतिबंधोदायः एवंतत्पुत्रादिष्वप्यूहनीयः विभागोनामद्रव्यसमुदायविषयाणामनेकस्वाम्यानांतदेकदेशेषु द्रव्यस्यव्य
वस्थापनं एतदेवाभिप्रेत्योक्तंनारदेन विभागोर्थस्यपैत्र्यस्यतनयैर्यत्रकल्प्यते दायभागइतिप्रोक्तंदायभागपदंबुधैरिति पैत्र्यस्येतिस्वत्वनि
मित्तसंबंधोपलक्षणम् तनयैरित्यपिप्रत्यासन्नोपलक्षणं इदमिहनिरूपणीयम् कस्मिन्कालेकस्यकथंकैश्चविभागःकर्तव्यइति तत्रकस्मि
न्कालेकथंकैश्चेतितत्रतत्रश्लोकव्याख्यानएववक्ष्यते कस्यविभागइतिएतदिहाचिंत्यते किंविभागात्स्वत्वमुतस्वस्यसतोविभागइति तत्रस्व

प्रमाणंमानुषंदैवमितिभेदेनवर्णितम् अधुनावर्ण्यतेदायविभागोयोगमूर्तिना११८

त्वमेवतावन्निरूप्यते किंशास्त्रैकसमधिगम्यंस्वत्वमुतप्रमाणांतरसमधिगम्यमिति तत्रशास्त्रैकसमधिगम्यमितितावद्युक्तंगौतमवचनात्
स्वामीरिक्थक्रयसंविभागपरिग्रहाधिगमेषुब्राह्मणस्याधिकंलब्धंक्षत्रियस्यविजितं निर्विष्टंवैश्यशूद्रयोरिति प्रमाणांतरगम्येस्वत्वेनेदंवचनमर्थ
वत्स्यात् तथा योदत्तादायिनोहस्तालिप्सेतब्राह्मणोधनम् याजनाध्यापनाद्वापियथास्तेनस्तथैवसइति अदत्तादायिनःसकाशात् याजनादिद्वा
रेणद्रव्यमर्जयतांदंडविधानमुपपन्नंस्यात्स्वत्वस्यालौकिकत्वे अपिच लौकिकंचेत्स्वत्वंममस्वमनेनापहृतमितिनब्रूयात् अपहर्तुरेवस्वत्वात्

अन्यथास्वंतेनापहृतमितिनापहर्तुःस्वम् एवंतर्हिसुवर्णरजतादिस्वरूपवदस्यवास्यवास्वमितिसंशयोनस्यात् तस्माच्छास्त्रैकसमधिगम्यं स्वत्वमिति अत्रोच्यते लौकिकमेवस्वत्वं लौकिकार्थक्रियासाधनत्वात् व्रीह्यादिवत् आहवनीयादीनांहि शास्त्रगम्यानांनलौकिकक्रियासाधनत्वमस्ति नन्वाहवनीयादीनामपिपाकादिसाधनत्वमस्त्येव नैतत् नहितत्राहवनीयादिरूपेणपाकादिसाधनत्वं किंतर्हिप्रत्यक्षादिपरिदृश्याग्न्यादिरूपेण इहतुसुवर्णादिरूपेणनक्रियादिसाधनत्वमपितुस्वत्वमेव नहियस्ययत्स्वंनभवति तत्तस्यक्रयाद्यर्थक्रियां साधयति अपिच प्रत्यंतवासिनामप्यदृष्टशास्त्रव्यवहाराणांस्वत्वव्यवहारोदृश्यते क्रयविक्रयादिदर्शनात् किंच नियतोपायकंस्वत्वं लोकसिद्धमेवेतिन्यायविदोमन्यंते तथाहि लिप्सासूत्रेतृतीयेवर्णके द्रव्यार्जननियमानांक्रत्वर्थत्वेस्वत्वमेवनस्यात् स्वत्वस्यलौकिकत्वादिति पूर्वपक्षाभावमाशंक्यद्रव्यार्जनस्यप्रतिग्रहादिनास्वत्वसाधनत्वंलौकिकसिद्धमितिपूर्वपक्षः समर्थितोगुरुणा ननुचद्रव्यार्जनस्यक्रत्वर्थेस्वत्वमेवनभवतीतियागएवनसंवर्तेत प्रलपितमिदंकेनापि अर्जनंस्वत्वंनापादयतीतिविप्रतिषिद्धमितिवदता तथासिद्धांतेपि स्वत्वस्यलौकिकत्वमंगीकृत्येवविचारप्रयोजनमुक्तम् अतोनियमातिक्रमः पुरुषस्यनक्रतोरिति अस्यचार्थएवंविस्तृतः यदाद्रव्यार्जननियमानांक्रत्वर्थत्वंतदानियमार्जितेनैवद्रव्येणक्रतुसिद्धिः नियमातिक्रमार्जितेनद्रव्येणनक्रतुसिद्धिरिति नपुरुषस्यैवनियमातिक्रमदोषः पूर्वपक्षे राद्धांतेतु अर्जननियमस्यपुरुषार्थत्वात्तद तिक्रमेणार्जितेनापिद्रव्येणक्रतुसिद्धिर्भवतिपुरुषस्यैवनियमातिक्रमदोषइति नियमातिक्रमार्जितस्यापिस्वत्वमंगीकृतम् अन्यथाक्रतुसिद्ध्यभावात् नचैतावताचौर्यादिप्राप्तस्यापिस्वत्वंस्यादितिमंतव्यम् लोकेतत्रस्वत्व

प्रसिद्ध्यभावात् व्यवहारविसंवादात् एवंप्रतिग्रहाद्युपायैकस्वत्वे लौकिके स्थिते ब्राह्मणस्य प्रतिग्रहादय उपायाः क्षत्रियस्य विजितादयो
वैश्यस्य कृष्यादयः शूद्रस्य शुश्रूषादय इत्यदृष्टार्थनियमाः रिक्थादयस्तु सर्वसाधारणाः स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमे
ष्वित्युक्ताः तत्राप्रतिबंधोदायो रिक्थं क्रयः प्रसिद्धः संविभागः सप्रतिबंधोदायः प्रतिग्रहोनन्यपूर्वस्य जलतृणकाष्ठादेः स्वीकारः अधिगमो
निध्यादेः प्राप्तिः एतेषु निमित्तेषु सत्सु स्वामी भवति कृतेषु ज्ञायते स्वामी ब्राह्मणस्याधिकं लब्धमिति ब्राह्मणस्य प्रतिग्रहादिना लब्धं तदधि
कमसाधारणं क्षत्रियस्य विजितमिति अधिकमित्यनुवर्तते क्षत्रियस्य विजयदंडादिलब्धमसाधारणम् निर्विष्टं वैश्यशूद्रयोरिति अत्रा
प्यधिकमित्यनुवर्तते वैश्यस्य कृषिगोरक्ष्यादिलब्धं निर्विष्टं तदसाधारणम् शूद्रस्य द्विजशुश्रूषादिना भृतिरूपेण यल्लब्धं तदसाधारणं एव
मनुलोमजानां प्रतिलोमजानां च लोकप्रसिद्धेषु स्वत्वहेतुषु यद्यदसाधारणमुक्तं सूतानामश्वसारथ्यमित्यादि तत्तत्सर्वं निर्विष्टशब्देनोच्यते स
र्वस्यापि भृतिरूपत्वात् निर्वेशो भृतिभोगयोरिति त्रिकांडीस्मरणात् तत्तदसाधारणं वेदितव्यं यद्यपि पत्नीदुहितरश्चेत्यादिस्मरणं तत्रा
पि स्वामिसंबंधितया बहुषु दायविभागितया प्राप्तेषु लोकप्रसिद्धेपि स्वत्वे व्यामोहनिवृत्त्यर्थं स्मरणमिति सर्वमनवद्यं यदपि मम स्वमनेनापहृ
तमिति न ब्रूयात्स्वत्वस्य लौकिकत्व इति तदप्यसत् स्वत्वहेतुभूतक्रयादिसंदेहात्स्वत्वसंदेहोपपत्तेः विचारप्रयोजनं तु यद्गर्हितेनार्जयंति
कर्मणा ब्राह्मणा धनम् तस्योत्सर्गेण शुध्यंति जप्येन तपसैव चेति शास्त्रैकसमधिगम्ये स्वत्वे गर्हितेनासत्प्रतिग्रहवाणिज्यादिना लब्ध
स्य स्वत्वमेव नास्तीति तत्पुत्राणां तदविभाज्यमेव यदा तु लौकिकं स्वत्वं तदासत्प्रतिग्रहादिलब्धस्यापि स्वत्वात् तत्पुत्राणां तद्विभाज्यमेव

तस्योत्सर्गेणशक्त्यंतीतिभायश्चित्तमर्जयितुरेव तत्पुत्राणांतुदायत्वेनस्वत्वमितिनतेषांदोषसंबंधः सप्तवित्तागमाधर्म्यादायोलाभःक्र
योजयः प्रयोगकर्मयोगश्चसत्प्रतिग्रहएवचेतिमनुस्मरणात् इदानीमिदंसंदिह्यते किंच विभागात्स्वमुत स्वस्यसतोविभागइ
ति तत्रविभागात्स्वत्वमितितावद्युक्तम् जातपुत्रस्याधानविधानात् यदिजन्मनैवस्वत्वंस्यात्तदोत्पन्नस्यापिपुत्रस्यतत्स्वंसाधारणमि
तिद्रव्यसाध्येष्वाधानादिषुपितुरनधिकारःस्यात् तथाविभागात्प्राक्पितृप्रसादोलब्धस्यविभागप्रतिषेधोनोपपद्यते सर्वानुमत्याद
त्तत्वाद्विभागप्राप्त्याभावात् यथाह शौर्यभार्याधनेचोभेयच्चविद्याधनंभवेत् त्रीण्येतान्यविभाज्यानिप्रसादोयश्चपैतृकइति तथा
भर्त्राप्रीतेनयद्दत्तंस्त्रियैतस्मिन्मृतेपितत् सायथाकाममश्नीयाद्दद्याद्वास्थावरादृतइतिप्रीतिदानवचनंनोपपद्यते तज्जन्मनैवस्व
त्वेनचस्थावरादृतेयद्दत्तमितिसंबंधोयुक्तोव्यवहितयोजनाप्रसंगात् यदपि मणिमुक्ताप्रवालानांसर्वस्यैवपिताप्रभुः स्थावरस्यतु
सर्वस्यनपितानपितामहः तथा पितृप्रसादाद्भुज्यंते वस्त्राण्याभरणानिच स्थावरंतुनभुज्येतप्रसादेसतिपैतृकेइतिस्थावरस्यप्रसा
ददानप्रतिषेधवचनं तत्पितामहोपात्तस्थावरविषयम् अतीतेपितामहेतद्धनंपितापुत्रयोःसाधारणमपिमणिमुक्तादिपितुरेव
स्थावरंतुसाधारणमित्यस्मादेववचनादवगम्यते तस्मान्नजन्मनास्वत्वं किंतुस्वामिनाशाद्विभागाद्वास्वत्वम् अतएवपितुरूर्ध्वंविभा-
गात्प्राग्द्रव्यस्वत्वस्यप्रहीणत्वादन्येनगृह्यमाणंननिवार्यतइतिचोद्यस्यावकाशः तथैकपुत्रस्यापिपितृप्रयाणादेवपुत्रस्यस्वत्वमिति
नविभागमपेक्षतेइति अत्रोच्यते लोकप्रसिद्धमेवस्वत्वमित्युक्तम् लोकेचपुत्रादीनांजन्मनैवस्वत्वंप्रसिद्धतरम् नापन्हवमर्हं

ति विभागशब्दश्चबहुस्वामिकधनविषयः प्रसिद्धोनान्यदीयविषयोनप्रहीणविषयः तंतयोस्त्त्वेवार्थस्वामित्वाल्लभेतेत्याचार्याइतिगौ
तमवचनात् मणिमुक्ताप्रवालानामित्यादिवचनंचजन्मनास्वत्वपक्षएवोपपद्यते नचपितामहोपात्तस्थावरविषयमितियुक्तं नपितानपिता
महइतिवचनात् पितामहस्यहि स्वार्जितमपिपुत्रेपौत्रेचसत्यदेयमिति वचनंजन्मना स्वत्वंगमयति यथापरमते मणिमुक्तावस्त्राभ
रणादीनांपैतामहानामपिपितुरेवस्वत्वंवचनात् एवमस्मन्मतेपिपित्रार्जितानामप्येतेषांपितुर्दानाधिकारोवचनादित्यविशेषतः यत्तु
भर्त्राप्रीतेनेत्यादिविष्णुवचनं स्थावरस्यप्रीतिदानज्ञापनंतत्स्वोपार्जितस्यापिपुत्राद्यभ्यनुज्ञयैवेतिव्याख्येयम् पूर्वोक्तैर्मणिमुक्ता
दिवचनैः स्थावरव्यतिरिक्तस्यैवप्रीतिदानयोग्यत्वनिश्चयात् यदप्यर्थसाध्येषुवैदिकेषुकर्मस्वनधिकारइतितत्रतद्विधानबलादेवाधि
कारोगम्यते तस्मात्पैतृकेपैतामहेचद्रव्येजन्मनैवस्वत्वम् तथापिपितुरावश्यकेषुधर्मकृत्येषुवाचनिकेषुप्रसाददानकुटुंबभरणापद्वि-
मोक्षादिषुचस्थावरव्यतिरिक्तद्रव्यविनियोगेस्वातंत्र्यमितिस्थितम् स्थावरेषुस्वार्जितेपित्रादिप्राप्तेचपुत्रादिपारतंत्र्यमेव स्थावरंद्विप
दंचैवयद्यपिस्वयमर्जितम् असंभूयसुतान्सर्वान्नदानंनचविक्रयः येजातायेप्यजाताश्चयेचगर्भेव्यवस्थिताः वृत्तिंचतेभिकांक्षंतिनदानंन
चविक्रयइत्यादिस्मरणात् अस्यापवादः एकोपिस्थावरेकुर्याद्दानाधमनविक्रयम् आपत्कालेकुटुंबार्थेधर्मार्थेचविशेषतइति अस्यार्थः
अप्राप्तव्यवहारेषुपुत्रेषुपौत्रेषुवा अनुज्ञादानादावसमर्थेषुभ्रातृषुवा तथाविधेष्वविभक्तेष्वपिसकलकुटुंबव्यापिन्यामापदितत्पोषणे
वावश्यंकर्तव्येषुपितृश्राद्धादिषुस्थावरस्यदानाधमनविक्रयमेकोपिसमर्थःकुर्यादिति यत्तुवचनम् विभक्ताअविभक्तावासपिंडाःस्थाव

रे समाः एकोप्यनीशः सर्वत्र दानाधमनविक्रयइति तदप्यविभक्तेषु द्रव्यस्यमध्यगत्वादेकस्यानीश्वरत्वात् सर्वाभ्यनुज्ञावश्यंकार्या
विभक्तेषूत्तरकालं विभक्ताविभक्तसंशयव्युदासेन व्यवहारसौकर्याय सर्वाभ्यनुज्ञा नपुनरेकस्यानीश्वरत्वेनातोविभक्तानुमतिव्य-
तिरेकेणापि व्यवहारः सिद्ध्यतीत्येवेतिव्याख्येयम् यदपि स्वग्रामज्ञातिसामंतदायादानुमतेनच हिरण्योदकदानेन षड्भिर्गच्छ
तिमेदिनीति तत्रापिग्रामानुमतिः प्रतिग्रहः प्रकाशः स्यात्स्थावरस्यविशेषतइतिस्मरणात् व्यवहारप्रकाशनार्थमेवापेक्ष्यते न
पुनर्ग्रामानुमत्याविनाव्यवहारासिद्धिः सामंतानुमतिस्तु सीमाप्रतिपत्तिनिरासाय ज्ञातिदायादानुमतेस्तु प्रयोजनमुक्तमेव हिरण्यो
दकदानेनेतिस्थावरेविक्रयोनास्ति कुर्यादाधिमनुज्ञयेतिस्थावरस्यविक्रयप्रतिषेधात् भूमिंयः प्रतिगृह्णातियश्चभूमिंप्रयच्छति उ
भौतौपुण्यकर्तारौनियतौस्वर्गगामिनाविति दानप्रशंसादर्शनाच्चक्रयेपिकर्तव्ये सहिरण्यमुदकंदत्वा दानरूपेणस्थावरविक्रयंकुर्यादित्यर्थः
पैतृके पैतामहेच धने जन्मनैवस्वत्वेपिविशेषंभूर्यापितामहोपात्तेत्यत्रवक्ष्यामः ११६ इदानींयत्रकालेयेनचयथाविभागः कर्तव्यस्तं दर्शयन्ना
ह यदाविभागंपिताचिकीर्षति तदाइच्छयाविभजेत् पुत्रानात्मनः सकाशात् पुत्रंपुत्रौपुत्रान् इच्छयानिरंकुशत्वादनियमप्राप्तौनियमार्थ
माह ज्येष्ठंवाश्रेष्ठभागेनेति ज्येष्ठंश्रेष्ठभागेन मध्यमंमध्यभागेन कनिष्ठंकनिष्ठभागेनविभजेदित्यनुवर्तते श्रेष्ठादिविभागश्चमनुनोक्तः
ज्येष्ठस्यविंशउद्धारः सर्वद्रव्याच्चयद्वरम् ततोर्द्धंमध्यमस्यस्यात्तुरीयंतुयवीयसइति वाशब्दोवक्ष्यमाणपक्षापेक्षः सर्वेवास्युः समांशिनइ
ति सर्वेवाज्येष्ठादयः समांशभाजः कर्तव्याः अयंचविषमोविभागः स्वार्जितद्रव्यविषयः पितृक्रमायातेतुसमस्वाम्यस्यवक्ष्यमाणत्वा

न्नेच्छयाविषमोविभागोयुक्तः विभागंचेत्पिताकुर्यादितियदापितुर्विभागेच्छासतावदेकःकालः अपरोपिजीवत्यपिपितरिद्रव्यनिस्पृ
हेनिवृत्तरमणेमातरिचनिवृत्तरजस्कायांपितुरनिच्छायामपिपुत्रेच्छयैवविभागोभवति यथानारदेन अतऊर्ध्वंपितुःपुत्राविभजेयु
र्धनंसममिति पित्रोरूर्ध्वंविभागंप्रतिपाद्य मातुर्निवृत्तेरजसिप्रत्तासुभगिनीषुच निवृत्तेचापिरमणेपितर्युपरतस्पृहइतिदर्शितम् अत्र
पुत्राधनंसमंविभजेयुरित्यनुषज्यते गौतमेनापि ऊर्ध्वंपितुःपुत्रारिक्थंभजेरन्नित्युक्त्वानिवृत्तेचापिरजसीतिद्वितीयःकालोदर्शितः
जीवतिचेच्छतीति तृतीयः तथासरजस्कायामपिमातर्यनिच्छत्यपिपितर्यधर्मवर्तिनिदीर्घरोगग्रस्तेच पुत्राणामिच्छयाभवतीतिविभा

विभागंचेत्पिताकुर्यादिच्छयाविभजेत्सुतान् ज्येष्ठंवाश्रेष्ठभागेन सर्वेवास्युःसमांशिनः १७
यदिकुर्यात्समानंशान्पत्न्यःकार्याःसमांशिकाः नदत्तंस्त्रीधनंयासांभर्त्रावाश्वशुरेणवा १८

गः यथाहशंखः अकामेपितरिरिक्थविभागोवृद्धेविपरीतचेतसिरोगिणिचेति पितुरिच्छयाविभागोद्विधादर्शितः समोविषमश्च १७
तत्रसमविभागेविशेषमाह यदास्वेच्छयापितासर्वानेवसुतान्समविभागिनः करोतितदापत्न्यश्चपुत्रसमांशभाजः कर्तव्याः यासांपत्नीनांभ
र्त्राश्वशुरेणवास्त्रीधनंनदत्तं दत्तेतुस्त्रीधनेअर्द्धांशंवक्ष्यति दत्तेत्वर्द्धंप्रकल्पयेदिति यदातुश्रेष्ठभागादिनाज्येष्ठादीन्विभजतितदापत्न्यःश्रे
ष्ठादिभागान्नलभंते किंतूद्धृतोद्धारात्समुदायात्समानेवांशान्लभंते स्वोद्धारंच यथाहापस्तंबः परीभांडंचगृहेअलंकारोभार्यायाइति११८

ज्येष्ठंवाश्रेष्ठभागेनसर्वेवास्युःसमांशिनइतिपक्षद्वयेप्यपवादमाह स्वयमेवद्रव्यार्जनसमर्थस्यपितृद्रव्यमनीहमानस्यानिच्छतोयत्किंचिदसारम
पिदत्त्वा पृथक्क्रियाविभागःकार्यः पित्रातत्पुत्रादीनांदायजिघृक्षामाभूदिति ज्येष्ठंवाश्रेष्ठभागेनेतिन्यूनाधिकविभागोदर्शितः तत्रशास्त्रोक्तो
द्धारादिविषमविभागव्यतिरेकेणान्यथाविषमविभागनिषेधार्थमाह न्यूनाधिकविभागेनविभक्तानांपुत्राणामसौन्यूनाधिकविभागोयदिध
र्म्यः शास्त्रोक्तोभवति तदासौपितृकृतः कृतएवननिवर्ततेइतिमन्वादिभिःस्मृतः अन्यथातुपितृकृतोपिनिवर्ततइत्यभिप्रायः यथाहना
रदः व्याधितःकुपितश्चैवविषयासक्तमानसः अन्यथाशास्त्रकारीचन विभागेपिताप्रभुरिति ११९ इदानींविभागस्यकालांतरंकर्त्रं

शक्तस्यानीहमानस्यकिंचिद्दत्त्वापृथक्क्रियाम् न्यूनाधिकविभक्तानांधर्म्यःपितृकृतःस्मृतः ११९ विभजेरन्सुताःपित्रो
रूर्ध्वंरिक्थमृणंसमम्

तरंप्रकारनियममाह पित्रोर्मातापित्रोरूर्ध्वंप्रयाणादितिकालोदर्शितः सुताइतिकर्तारोदर्शिताः सममि
तिप्रकारनियमः सममेवेति रिक्थमृणंचविभजेरन् ननूर्ध्वंपितुश्चमातुश्चेत्युपक्रम्य ज्येष्ठएवतुगृह्णीयात्पित्र्यंधनमशेषतः शेषास्तु
मुपजीवेयुर्यथैवपितरंतथेत्युक्तोक्तम् ज्येष्ठस्यविंशउद्धारःसर्वद्रव्याच्चयद्वरम् ततोर्द्धंमध्यमस्यस्यात्तुरीयंतुयवीयसइति सर्वस्माद्ध
नसमुदायाद्विंशतितमोभागःसर्वद्रव्येभ्यश्चयच्छ्रेष्ठंतज्ज्येष्ठायदातव्यम् तदर्द्धंचत्वारिंशत्तमोभागोमध्यमंचद्रव्यंमध्यमायदातव्यम्
तदर्द्धमशीतितमोभागोहीनंचद्रव्यंकनिष्ठायदातव्यमिति मातापित्रोरूर्ध्वंविभजतामुद्धारविभागोमनुनादर्शितः तथा उद्धारेनु

द्धृते त्वेषामियं स्यादंशकल्पना एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्द्धं ततोऽनुजः अंशमंशं यवीयांस इति धर्मो व्यवस्थित इति ज्येष्ठस्य द्वौ भागौ तदनंतरंजातस्य सार्द्धएको भागः ततोऽनुजानामेकैकोपि भाग इत्युद्धारव्यतिरेकेणापि विषमो भागो दर्शितः पित्रोरूर्द्ध्वं विभजतां जीवद्विभागेच्च स्वयमेव विषमो विभागो दर्शितो ज्येष्ठं वा श्रेष्ठभागेनेति अतः सर्वस्मिन्नपि काले विषमो विभागोस्तीति कथं सममेव विभजेरन्निति नियम्यते अत्रोच्यते सत्यम् अयं विषमो भागः शास्त्रदृष्टस्तथापि लोकविद्विष्टत्वान्नानुष्ठेयः अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्नतिति निषेधात् यथा महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेदिति विधानेनापि लोकविद्विष्टत्वादननुष्ठानम् यथा वा मैत्रावरुणीं गां च शामनु

मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेन्वयः १२०

बंध्यामालभत इति गवालंभनविधानेपि लोकविद्विष्टत्वादननुष्ठानम् उक्तं च यथा नियोगधर्मो नो नानुबंध्यावधोपि वा तथोद्धारविभागोपि नैव संप्रति वर्तत इति आपस्तंबोपि जीवन्पुत्रेभ्यो दायं विभजेत्सममिति समतामुक्त्वा ज्येष्ठो दायाद इति एक इति कृत्स्नधनग्रहणं ज्येष्ठस्यैकीयमतेनोपन्यस्य देशविशेषे सुवर्णं कृष्णा गावः कृष्णं भौमं ज्येष्ठस्य रथः पितुः परीभांडं च गृहे लंकारो भार्याया ज्ञातिधनं चेत्येक इत्यैकीयमतेनैवोद्धारविभागं दर्शयित्वा तच्छास्त्रविप्रतिषिद्धमिति निराकृतवान् तं च शास्त्रविप्रतिषेधं स्वयमेव दर्शयति स्म मनुः पुत्रेभ्यो दायं व्यभजेदित्यविशेषेण श्रूयत इति तस्माद्विषमो भागः शास्त्रदृष्टोपि लोकविरोधाच्छ्रुतिविरोधाच्च नानुष्ठेय इति सम

मेवविभजेरन्निति नियम्यते मातापित्रोधनंसुताविभजेरन्नित्युक्तंतत्रमातृधनेपवादमाह मातुर्धनंदुहितरोविभजेरन् ऋणाच्छेषं मा
तृकृतमृणंपुत्रैरेवापाकरणीयंनदुहितृभिः ऋणावशिष्टंतुधनंदुहितरोगृह्णीयुरित्युक्तंचेत् पुमान्पुंसोधिकेशुक्रेस्त्रीभवत्यधिके-
स्त्रियाइतिस्त्र्यवयवानांदुहितृषुबाहुल्यात् स्त्रीधनंदुहितृगामि पितृधनंपुत्रगामि पित्र्यवयवानांपुत्रेषुबाहुल्यादिति तत्रचगौ
तमेनविशेषोदर्शितः स्त्रीधनंदुहितॄणामप्रत्तानामप्रतिष्ठितानांचेति अस्यार्थः प्रत्ताप्रत्तासमवायेप्रत्तानामेवस्त्रीधनं प्रत्ता

पितृद्रव्याविरोधेनयदन्यत्स्वयमर्जितम् मैत्रमौद्वाहिकंचैवदायादानांनतद्भवेत् १२१
क्रमादभ्यागतंद्रव्यंहृतमप्युद्धरेत्तुयः दायादेभ्योनतद्दद्याद्विद्ययालब्धमेवच १२२

स्वचाप्रतिष्ठितासमवायेप्रतिष्ठितानांचेति अप्रतिष्ठितानिर्धनाः दुहित्रभावेमातृधनमृणावशिष्टंकोगृह्णीयादित्यतआह ताभ्यो
दुहितृभ्योविनादुहितॄणामभावे अन्वयःपुत्रादिर्गृह्णीयात् एतच्चविभजेरन्सुताः पित्रोरूर्ध्वमित्यनेनैवसिद्धंस्पष्टार्थमुक्तम् १२०
अविभाज्यमाह मातापित्रोर्द्रव्याविनाशेनयत्स्वयमर्जितंमैत्रं मित्रसकाशाद्यल्लब्धंऔद्वाहिकंविवाहलब्धंदायादानांभ्रातॄणांतन्न
भवेत् क्रमात्पितृक्रमादायातंयत्किंचिद्द्रव्यंअन्यैर्हृतमसामर्थ्यादिनापित्रादिभिरनुद्धृतंयःपुत्राणांमध्येइतराभ्यनुज्ञयोद्धर
ति तद्दायादेभ्योभ्रात्रादिभ्योनदद्यात् उद्धर्तैवगृह्णीयात् तत्रक्षेत्रेतुरीयांशमुद्धर्तालभते शेषंतुसर्वेषांसममेव यथाहशंखः

पूर्वनष्टांतु योभूमिमेकश्चेदुद्धरेत्क्रमात् यथाभागंलभेतेन्येदत्त्वांशंतुतुरीयकमिति क्रमादभ्यागतामितिशेषः तथाविद्ययावाचाध्ययनेनाध्यापने
नवेदार्थव्याख्यानेनवायल्लब्धंतदपिदायादेभ्योनदद्यात् अर्जकएवगृह्णीयात् अत्रच पितृद्रव्याविरोधेनयत्किंचित्स्वयमर्जितमितिसर्वत्रशेषः
अतश्चपितृद्रव्याविरोधेनयन्मैत्रमर्जितं पितृद्रव्याविरोधेनयदौद्वाहिकं पितृद्रव्याविरोधेनयत्क्रमादायातमुद्धृतं पितृद्रव्याविरोधेनविद्यया
यल्लब्धमितिप्रत्येकमभिसंबध्यते तथाचपितृद्रव्याविरोधेनप्रत्युपकारेणयन्मैत्रं आसुरादिविवाहेषुयल्लब्धं यथापितृद्रव्यव्ययेनयत्क्रमा
दायातमुद्धृतं तथापितृद्रव्यव्ययेनलब्धयाविद्ययायल्लब्धं तत्सर्वंसर्वैर्भ्रातृभिःपित्राचविभजनीयम् तथापितृद्रव्याविरोधेनेत्यस्यसर्व
शेषत्वादेवपितृद्रव्याविरोधेनप्रतिग्रहलब्धमितिविभजनीयम् अस्यचसर्वशेषत्वाभावेमैत्रमौद्वाहिकमित्यादिनालब्धव्यम् अथपितृ
द्रव्याविरोधेनापियन्मैत्रादिलब्धंतस्याविभाज्यत्वाद्यन्मैत्रादिवचनमित्यर्थवदित्युच्यते तथासतिसमाचारविरोधः विद्यालब्धेनारदवच
नविरोधश्च कुटुंबंबिभृयाद्भ्रातुर्योविद्यामधिगच्छति भागंविद्याधनात्तस्मात्सलभेताश्रुतोपिसन्निति तथाविद्याधनस्याविभाज्यल
क्षणमुक्तं कात्यायनेन परभक्तोपयोगेनविद्याप्राप्तान्यतस्तुया तयालब्धंधनंयत्तुविद्याप्राप्तंतदुच्यतइति तथापितृद्रव्याविरोधेनेत्यस्य
भिन्नवाक्यत्वेप्रतिग्रहलब्धस्याविभाज्यत्वमाचारविरुद्धमापद्यते एतदेवस्पष्टीकृतंमनुना अनुपघ्नन्पितृद्रव्यंश्रमेणयदुपार्जयेत् दा
यादेभ्योनतद्दद्याद्विद्ययालब्धमेवचेति श्रमेणसेवायुद्धादिना ननुपितृद्रव्याविरोधेनयन्मैत्राल्लब्धंद्रव्यं तदविभाज्यमितिनवक्तव्यं
विभागप्राप्त्यभावात् यद्येनलब्धंतत्तस्यैवनान्यस्येतिप्रसिद्धतरम् प्राप्तिपूर्वकश्चप्रतिषेधः अत्रकश्चिदित्थंप्राप्तिमाह यत्किंचि

स्थितरि प्रेते धनं ज्येष्ठोधिगच्छति भागीयवीयसां तत्र यदि विद्यानुपालिन इति ज्येष्ठो वा कनिष्ठो वा मध्यमो वा पितरि प्रेते अप्रेते वा यवीयसां
वर्षीयसां चेति व्याख्यानेन पितरि सत्यसति च मैत्रादीनां विभाज्यत्वं प्राप्तं प्रतिषिध्यत इति तदसत् नह्यत्र प्राप्तस्य प्रतिषेधः किंतु निषिद्धस्या
नुवादोयम् लोकसिद्धस्यैवानुवादकान्येव प्रायेणास्मिन्प्रकरणे वचनानि अथवा समवेतैस्तु यत्प्राप्तं सर्वे तत्र समांशिन इति प्राप्तस्या
पवाद इति संतुष्यति भवान् अतश्च यत्किंचित्पितरि प्रेते इत्यस्मिन्वचने ज्येष्ठादिपदादिविवक्षया प्राप्तिरिति व्यामोहमात्रं अतो मैत्रा–
दिवचनैः पितुः प्रागूर्ध्वं वा विभज्यत्वेनोक्तस्य यत्किंचित्पितरि प्रेते इत्यपवाद इति व्याख्येयम् तथान्यदप्यविभाज्यमुक्तं मनुना वस्त्रं
पात्रमलंकारं कृतान्नमुदकं स्त्रियः योगक्षेमप्रचारं च न विभाज्यं प्रचक्षत इति धृतानामेव वस्त्राणामविभाज्यत्वम् यद्येन धृतं तत्त
स्यैव पितृधृतानि तु पितुरूर्ध्वं विभजतां श्राद्धभोक्त्रे दातव्यानि यथाह बृहस्पतिः वस्त्रालंकारशय्यादि पितुर्यद्वाहनादिकम् गंध
माल्यैः समभ्यर्च्य श्राद्धभोक्त्रे समर्पयेदिति अभिनवानि तु वस्त्राणि विभज्यान्येव पत्रं वाहनमश्वशिबिकादि तदपि यद्येनारूढं तत्त
स्यैव पित्र्यं तु वस्त्रवदेव अश्वादीनां बहुत्वे तु तद्विक्रयोपजीविनां विभाज्यत्वमेव वैषम्येणाविभाज्यत्वे ज्येष्ठस्य अजाविकं सैकश
फं न जातु विषमं भजेत् अजाविकं सैकशफं ज्येष्ठस्यैव विधीयत इति मनुस्मरणात् अलंकारोपि यो येन धृतः स तस्यैवाधृतः सा
धारणो विभाज्य एव पत्यौ जीवति यः स्त्रीभिरलंकारो धृतो भवेत् न तं भजेरन्दायादा भजमानाः पतंति त इति अलंकारो धृतो भवेदि
ति विशेषेणोपादानादधृतानां विभाज्यत्वं गम्यते कृतान्नं तंदुलमोदकादि तदप्यविभाज्यम् यथासंभवं भोक्तव्यम् उदकं उ

दकाधारः कूपादिः तच्च विषमंमूल्यद्वारेणनविभाज्यंपर्यायेणोपभोक्तव्यं स्त्रियश्चदास्योविषमानमूल्यद्वारेणविभाज्याः पर्यायेणकर्मकारयि
तव्याः अवरुद्धास्तुपित्रास्वैरिण्याद्याः समाअपिपुत्रैर्नविभाज्याः स्त्रीषुचसंयुक्तास्वविभागइतिगौतमस्मरणात् योगश्चक्षेमश्चयोगक्षे
मं योगशब्देनालब्धलाभकारणं श्रौतस्मार्ताग्निसाध्यमिष्टंकर्मलक्ष्यते क्षेमशब्देनलब्धपरीक्षणहेतुभूतंबहिर्वेदिदानतडागाराम-
निर्माणादिपूर्तंकर्मलक्ष्यते तदुभयंपैतृकमपिपितृद्रव्यविरोधार्जितमप्यविभाज्यं यथाहलौगाक्षिः क्षेमंपूर्तंयोगमिष्टमित्याहुस्त
त्वदर्शिनः अविभाज्येचतेप्रोक्तेशयनासनमेवचेति योगक्षेमशब्देनयोगक्षेमकारिणोराजमंत्रिपुरोहितादयउच्यंतेइतिकेचित् छ

सामान्यार्थसमुत्थानेविभागस्तुसमः स्मृतः अनेकपितृकाणांतुपितृतोभागकल्पना १२३

त्रचामरशस्त्रोपानत्प्रभृतयइत्यन्ये प्रचारोगृहारामादिषुप्रवेशनिर्गममार्गः सोप्यविभाज्यः यत्तूशनसाक्षेत्रस्याविभाज्यत्वमुक्तं अवि
भाज्यंसगोत्राणामासहस्रकुलादपि याज्यंक्षेत्रंचपत्रंच कृतान्नमुदकंस्त्रियइति तद्ब्राह्मणोत्पन्नक्षत्रियादिपुत्रविषयम् नप्रतिग्रहभू
र्देयाक्षत्रियायस्रुतायवै यद्यप्येषांपितादद्यान्मृतेविप्रासुतोहरेदितिस्मरणात् याज्यंयाजनकर्मलब्धंपितृप्रसादलब्धंपितृप्रसादल
ब्धस्याविभाज्यत्वंवक्ष्यते नियमातिक्रमस्याविभाज्यत्वमनंतरमेवनिरासितम् १२१ १२२ पितृद्रव्यविरोधेनयदर्जितं तद्विभजनी
यमितिस्थितम् तत्रार्जकस्यभागद्वयंवसिष्ठवचनात् येनचैषांस्वयमुपार्जितंस्यात्सद्व्यंशमेवलभेतेत्यस्यापवादमाह अविभक्तानां

भ्रातॄणांसाधारणस्यार्थस्यकृषिवाणिज्यादिनासमुत्थानेसम्यग्वर्धनेकेनचित्कृतेसमएवविभागोनार्जयितुरंशद्वयम् पित्र्येद्रव्येतुपुत्राणांवि
भागोदर्शितः इदानींपैतामहेपौत्राणांविभागविशेषमाह यद्यपिपैतामहेद्रव्येपौत्राणांजन्मनास्वत्वंपुत्रैरविशिष्टंतथापि तेषांपितृद्वारेणैव
पैतामहद्रव्यविभागकल्पना नस्वरूपापेक्षया एतदुक्तंभवति यदाविभक्ताभ्रातरःपुत्रानुत्पाद्यदिष्टंगतास्तदैकस्यद्वौपुत्रावन्यस्यत्रयोपर
स्यचत्वारइतिपुत्राणांवैषम्येतत्रद्वावेकंस्वपित्र्यमंशंलभते अन्येत्रयोप्येकमंशंपित्र्यंचत्वारोप्येकमंशंपित्र्यंलभंतइति तथाकेषुचित्पु
त्रेषुम्रियमाणेषु केषुचित्पुत्रानुत्पाद्यविनष्टेषुयमेवन्यायोध्रियमाणःस्वांशानेवलभंते नष्टानामपिपुत्राःपित्र्यानेवांशाल्लँभंतइतिवाचनिकाव्य

भूर्यापितामहोपात्तानिबंधोद्रव्यमेवच तत्रस्यात्सदृशंस्वाम्यंपितुःपुत्रस्यचैवहि १२४

वस्था १२३ अधुनाविभक्तेपितर्यविद्यमानभ्रातृकेवापौत्रस्यपैतामहेद्रव्येविभागोनास्ति म्रियमाणेपितरिपितृतोभागकल्पनेत्युक्तत्वा
त् भवतुवास्वार्जितवत् पितुरिच्छयैवेत्याशंकितआह भूःशालिक्षेत्रादिका निबंधएकस्यपर्णभारकस्येयंतिपर्णानि तथाएकस्यक्रमु
कफलभारकस्येयंतिक्रमुकफलानीत्याद्युक्तलक्षणः द्रव्यंसुवर्णरजतादि यत्पितामहेनप्रतिग्रहविजयादिनालब्धंतत्रपितुःपुत्रस्यच
स्वाम्यंलोकप्रसिद्धमितिकृत्वाविभागोस्ति हियस्मात्तत्सदृशंसमानं तस्मान्नपितुरूर्ध्वंयोविभागोनापिपितुर्भागद्वयम् अतःस्वपितृतो
भागकल्पनेत्यप्येतत्स्वाम्येसमेपिवाचनिकम् विभागंचेत्पिताकुर्यादित्येतत्स्वार्जितविषयं तथाद्वावंशौप्रतिपद्येतविभजन्नात्मनःपिते

त्येतदपिस्वार्जितविषयम् जीवतोरस्वतंत्रः स्याज्जरयापिसमन्वितइत्येतदपिपारतंत्र्यंमातापित्रर्जितद्रव्यविषयम् तथा अनीशास्तेपि जीवतोरित्येतदपि तथाच सरजस्कायांमातरिसस्पृहेचपितरिविभागमनिच्छत्यपिपुत्रेच्छयापैतामहद्रव्यविभागोभवति तथाविभक्ते नपित्रापैतामहेद्रव्ये दीयमानेविक्रीयमाणेवापौत्रस्यनिषेधेप्यधिकारः पित्रर्जितेतुननिषेधाधिकारः तत्परतंत्रत्वात् अनुमतिस्तुकर्तव्या तथाहि पैतृकेपैतामहेचस्वाम्यं यद्यपिजन्मनैवतथापिपैतृकेपरतंत्रत्वात् पितुःस्वार्जकत्वेनप्राधान्यात् पित्राविनियुज्यमानेस्वार्जिते द्रव्येपुत्रेणानुमतिःकर्तव्या पैतामहेतुद्वयोःसाम्यमविशिष्टमितिनिषेधाधिकारोप्यस्तीतिविशेषः मनुरपि पैतृकंतुपिताद्रव्यमनवा-

विभक्तेषुसुतोजातोसवर्णायांविभागभाक् दृश्याद्वातद्विभागःस्यादायव्ययविशोधितात् १२५ ।

प्तंयदाप्नुयात् नतत्पुत्रैर्भजेत्सार्द्धमकामःस्वयमर्जितमिति यत्पितामहार्जितंकेनाप्यपहृतंपितामहेनानुद्धृतं यदिपितोद्धरति तत्स्वार्जितमिवपुत्रैः सार्द्धमकामःस्वयंनविभजेदितिवदन् पितामहार्जितमकामोपिपुत्रेच्छयापुत्रैः सहविभजेदितिदर्शयति १२४ विभागोत्तरकालमुत्पन्नस्यकथंभागकल्पनेत्यतआह विभक्तेषुपुत्रेषुपश्चात्सवर्णायांभार्यायामुत्पन्नोविभागभाक् विभज्यतेइतिविभागः पित्रोर्विभागस्तंभजतीतिविभागभाक् पित्रोरूर्ध्वंतयोरंशंलभतइत्यर्थः मातृभागंचासत्यांदुहितरि मातुर्दुहितरःशेषमित्युक्तत्वात् असवर्णायामुत्पन्नस्तुस्वांशमेवपित्र्याल्लभते मातृकंतुसर्वमेव एतदेवमनुनोक्तम् ऊर्ध्वंविभागाज्जातस्तुपित्र्यमेवहरेद्धनमिति पित्रो

रिदंपित्र्यमितिव्याख्येयम् अनीशाः पूर्वजः पित्रोर्भ्रातुर्भागेविभक्तजः इतिस्मरणात् मातापित्रोर्विभागेविभागात्पूर्वमुत्पन्नोनस्वामीविभक्त-
जश्चभ्रातुर्भागेनास्तीत्यर्थः तथा विभागोत्तरकालंपित्रायत्किंचिदर्जितंतत्सर्वंविभक्तजस्यैव पुत्रैः सहविभक्तेनपित्रायत्स्वयमर्जितम् वि
भक्तजस्यतत्सर्वमनीशाः पूर्वजाः स्मृताइतिस्मरणात् येचविभक्ताः पित्रासहसंसृष्टास्तैः सार्द्धं पितुरूर्ध्वंविभक्तजोविभजेत यथाहमनुः
संसृष्टास्तेनवायेस्युर्विभजेतससैः सहेति पितुरूर्ध्वं पुत्रेषुविभक्तेषु पश्चादुत्पन्नस्यकथंभागकल्पनेत्यतआह तस्यपितरिप्रेतेभ्रातृवि
भागसमयेऽस्पष्टगर्भायांमातरिभ्रातृविगोत्तरकालमुत्पन्नस्यविभागस्तुहिभागः कुतइत्यतआह दृश्याद्भ्रातृभिर्गृहीताद्धनात् कीदृशा
त् आयव्ययविशोधितात् आयः प्रतिदिवसंप्रतिमासंप्रत्यब्दंवायदुत्पद्यते व्ययः पितृकृतर्णापाकरणम् ताभ्यामायव्ययाभ्यांयच्छोधि
तंतस्मात् उद्धृत्य तद्भागोदातव्यः स्यात् एतदुक्तंभवति प्रातिस्विकेषुभागेषुतदुत्थमायंप्रवेश्यपितृकृतंचर्णमपनीयावशिष्टेभ्यः स्वेभ्यः
स्वेभ्योभागेभ्यः किंचित्किंचिदुद्धृत्यविभक्तजस्यभागः स्वभागसमः कर्तव्यइति एतच्चविभागसमयेभ्रातृभार्यायामप्रजस्यास्पष्टगर्भा-
यांविभागादूर्ध्वमुत्पन्नस्यापिवेदितव्यम् स्पष्टगर्भायांतुप्रसवंवीक्ष्य विभागः कर्तव्यः यथाहवसिष्ठः अथभ्रातॄणांदायविभागो
याश्चानपत्याः स्त्रियस्तासामापुत्रलाभादिति गृहीतगर्भाणामाप्रसवात्प्रतीक्षणमितियोजनीयम् १२५ विभक्तजः पित्र्यंमातृकंच
सर्वंधनंगृह्णातीत्युक्तं तत्रयदिविभक्तः पितामातावाविभक्तायपुत्रायस्नेहवशादाभरणादिकंप्रयच्छति तत्रविभक्तजेनदानप्रतिषेधो
नकर्तव्यो नापिदत्तंप्रत्याहर्तव्यमित्याह मातापितृभ्यांविभक्ताभ्यांपूर्वंविभक्तस्यपुत्रस्ययद्दत्तमलंकारादितत्तस्यैवपुत्रस्यनविभक्त

जस्य स्वं भवति न्यायसाम्याद्विभागाद्यागपि यस्य यद्दत्तं तत्तस्यैव तथासति विभक्तजे विभक्तयोः पित्रोरंशं तदूर्ध्वं विभजतां यस्य यद्दत्तं तत्तस्यैव नान्यस्येति वेदितव्यम् जीवद्विभागे स्वपुत्रसमांशित्वं पत्नीनामुक्तम् यदिकुर्यात्समानंशानित्यादिना पितुरूर्ध्वं विभागेपि मातुः स्वपुत्रसमांशित्वं दर्शयितुमाह पितुरूर्ध्वं पितुः प्रयाणादूर्ध्वं विभजतां माताऽपि स्वपुत्रांशसमं अंशं हरेत् यदि स्त्रीधनं न दत्तं दत्ते त्वर्द्धांशहारिणीति वक्ष्यते १२६ पितरि प्रेते यद्यसंस्कृता भ्रातरः संति तत्संस्कारे कोधिक्रियत इत्यत आह पितुरूर्ध्वं विभजद्भिर्भ्रातृभिः सं

पितृद्रव्यां यस्य यद्दत्तं तत्तस्यैव धनं भवेत् पितुरूर्ध्वं विभजतां माताप्यंशं समं हरेत् १२६
असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः भगिन्यश्च निजादंशाद्दत्वांशं तु तुरीयकं १२७

स्कृता भ्रातरः समुदायद्रव्येण संस्कर्तव्याः असंस्कृतासु भगिनीषु विशेषमाह अस्यार्थः भगिन्यश्चासंस्कृताः संस्कर्तव्या भ्रातृभिः किं कृत्वा निजादंशाच्चतुर्थमंशं दत्वा अनेन दुहितरोपि पितुरूर्ध्वं अंशभागिन्य इति गम्यते तत्र निजादंशादिति प्रत्येक परिकल्पितादंशादुद्धृत्य चतुर्थोंशो दातव्य इति अयमर्थो न भवति किंतु यज्जातीया कन्या तज्जातीय पुत्रभागच्चतुर्थांशभागिनी कर्तव्या एतदुक्तं भवति यदि ब्राह्मणी सा कन्या तदा ब्राह्मणीपुत्रस्य यावानंशो भवति तस्य चतुर्थांशस्तस्या भवतीति तद्यथा यदि कस्यचिद्ब्राह्मण्येव एका पत्नी पुत्रश्चैकः कन्या चैका तत्र पित्र्यं सर्वमेव द्रव्यं द्विधा विभज्य तयैकं भागं चतुर्धा विभज्य तुरीयमंशं कन्यायै दत्वा शेषं पुत्रो गृह्णीयात् अथ तु द्वौ पुत्रौ

एकाकन्या तदापितृधनंसर्वंत्रेधाविभज्य एकंभागंचतुर्धाविभज्य तुरीयमंशंकन्यायैदत्वाशेषंद्वौपुत्रौविभज्यगृह्णीतः अथत्वेकःपुत्रोद्वे
कन्ये तदापित्र्यंधनंत्रेधाविभज्य एकंभागंचतुर्धाविभज्य तत्रद्वौभागौद्वाभ्यांकन्याभ्यांदत्वावशिष्टंसर्वंपुत्रोगृह्णात्येवंसमानजातीये-
षुसमविषमेषुभ्रातृषुभगिनीषुचयोजनीयम् यदातुब्राह्मणीपुत्रएकःक्षत्रियकन्यैका तत्रपित्र्यंधनंसप्तधाविभज्य क्षत्रियापुत्रभागां
स्त्रींश्चतुर्धाविभज्य तुरीयांशंक्षत्रियाकन्यायैदत्वाशेषंब्राह्मणीपुत्रोगृह्णाति यत्रतुद्वौब्राह्मणीपुत्रौ क्षत्रियाकन्याचैका तत्रपित्र्यंधनमे
कादशधाविभज्य तेषुत्रीनंशान्क्षत्रियापुत्रभागान्चतुर्धाविभज्य चतुर्थमंशंक्षत्रियाकन्यायैदत्वाशेषंसर्वंब्राह्मणीपुत्रौविभज्यगृह्णी
तः एवंजातिवैषम्येभ्रातृणांभगिनीनांचसंख्यायाःसाम्येवैषम्येचसर्वत्रोहनीयम् नचनिजादंशाद्दत्वांशंतुतुरीयकमिति तुरीयांश
विवक्षया संस्कारमात्रोपयोगिद्रव्यंदत्वेतिव्याख्यानंयुक्तम् मनुवचनविरोधाच्च येभ्योंशेभ्यस्तुकन्यायाःप्रदद्युर्भ्रातरःपृथक् स्वात्
स्वादंशाच्चतुर्भागंपतिताःस्युरदित्सवइति अस्यार्थः ब्राह्मणादयोभ्रातरोब्राह्मणीप्रभृतिभ्योभगिनीभ्यः तेभ्यःस्वजातिवि हि
तेभ्योंशेभ्यश्चतुरोंशान्हरेद्विप्रइत्यादिवक्ष्यमाणेभ्यः स्वात्स्वादंशादात्मीयभागाच्चतुर्थभागंदद्युःनचात्मीयभागादुद्धृत्यचतुर्थांशो
देयइत्युच्यते किंतुस्वजातिविहितादेकस्मादंशात्पृथक्पृथगेकस्यैकन्यायैचतुर्थांशोदेयइति जातिवैषम्येसंख्यावैषम्येच विभागक्लृ
प्तिरुक्तैव पतिताःस्युरदित्सवइत्यकरणेप्रत्यवायश्रवणादवश्यदातव्यताप्रतीयते अत्रापिचतुर्भागवचनमविवक्षितंसंस्कारोपयोगि
द्रव्यदानमेवविवक्षितमितिचेन्न स्मृतिद्वयेपिचतुर्थांशदानाविवक्षायांप्रमाणाभावाददानेप्रत्यवायश्रवणाच्चेति तदपिकैश्चिदुच्यते

अंशदानविवक्षायां बहुभ्रातृकायां बहुधनत्वं बहुभगिनीकस्य च निर्धनता प्राप्नोतीति तदुक्तनीत्या परिहृतमेव नह्यत्रात्मीयाद्भागादुद्धृत्य चतुर्थांशस्य दानमुच्यते येन तथा स्यादतः स्मृत्सहायमेधातिथिप्रभृतीनां व्याख्यानमेव चतुरस्रम् नभारुचेः तस्मात्पितुरूर्ध्वं कन्यायांशभागिनी पूर्वं चेद्यत्किंचित्पिता ददाति तदेव लभते विशेषवचनाभावादिति सर्वमनवद्यम् एवं विभागांश्चेत्पिता कुर्यादित्यादिना प्रबंधेन समानजातीयानां भ्रातॄणां परस्परं पित्रा च सह विभागक्लृप्तिरुक्ता १२७ अधुना भिन्नजातीयानां विभागमाह तिस्रो वर्णानुपूर्व्येणेति ब्राह्मणस्य चतस्रः क्षत्रियस्य तिस्रो वैश्यस्य द्वे शूद्रस्यैकेति भार्या दर्शितास्तत्र ब्राह्मणात्मजा ब्राह्मणोत्पन्ना वर्णशः वर्णशब्देन ब्राह्मणादिवर्णाः स्त्रिय उच्यंते संख्यैकवच

चतुस्त्रिद्व्येकभागाः स्युर्वर्णशो ब्राह्मणात्मजाः क्षत्रजास्त्रिद्व्येकभागा विड्जास्तु द्व्येकभागिनः १२८

नात्र वीप्सायामित्यधिकरणकारकादेकवचनाद्वीप्सायां शस् अतश्च वर्णे वर्णे ब्राह्मणोत्पन्ना यथाक्रमं चतुः स्त्रिद्व्येकभागाः स्युर्भवेयुः एतदुक्तं भवति ब्राह्मणेन ब्राह्मण्यामुत्पन्ना एकैकशश्चतुरश्चतुरो भागांल्लभंते तेनैव क्षत्रियायामुत्पन्नास्त्रींस्त्रीन् वैश्यायां द्वौ द्वौ शूद्रायामेकमेकमिति क्षत्रजाः क्षत्रियेणोत्पन्नाः वर्णश इत्यनुवर्तते यथाक्रमं त्रिद्व्येकभागाः क्षत्रियेणोक्तलक्षणेन क्षत्रियायामुत्पन्नाः प्रत्येकं त्रीन् त्रीन् भागान् लभंते वैश्यायां द्वौ द्वौ शूद्रायामेकमेकं विड्जाः वैश्येनोत्पन्नाः अत्रापि वर्णश इत्यनुवर्तते यथाक्रमं द्व्येकभागिनः वैश्येन वैश्यायामुत्पन्नाः प्रत्येकं द्वौ द्वौ भागौ लभंते शूद्रायामेकमेकं शूद्रस्यैकैव भार्येति भिन्नजातीयपुत्राभावात्तत्पुत्राणां पूर्वोक्त एव विभागः

यद्यपिचतुस्त्रिद्व्येकभागाइत्यविशेषेणोक्तं तथापिप्रतिग्रहप्राप्तभूव्यतिरिक्तविषयमिदंद्रष्टव्यम् यतःस्मरति नप्रतिग्रहभूर्देयाक्षत्रियादि
सुतायवै यद्यप्येषांपितादद्यान्मृतेविप्रासुतोहरेदिति प्रतिग्रहग्रहणात्क्रयादिनालब्धाभूः क्षत्रियादिसुतानामपिभवत्येव शूद्रापुत्रस्यावि
शेषप्रतिषेधाच्च शूद्र्यांद्विजातिभिर्जातोनभूमेर्भागमर्हतीति यदिक्रयादिप्राप्ताभूः क्षत्रियादिसुतानांनभवेत्तदाशूद्रापुत्रस्याविशेषप्रतिषेधोनो
पपद्यते यत्पुनः ब्राह्मणक्षत्रियविशांशूद्रापुत्रोनरिक्थभाक् यदेवास्यपितादद्यात्तदेवास्यधनंभवेदितितदपिजीवतापित्रायदिशूद्रापुत्रा
यकिमपिप्रदत्तंस्यात्तद्विषयं यदातुप्रसाददानंनास्तितदैकांशभागित्यविरुद्धम् १२८ सर्वविभागशेषंकिंचिदुच्यते परस्परापहृतंसमुदा

अन्योन्यापहृतंद्रव्यंविभक्तेयत्तुदृश्यते तत्पुनस्तेसमैरंशैर्विभजेरन्निति स्थितिः १२९

यद्द्रव्यंविभागकालेवाज्ञातं विभक्तेपितृधनेयद्दृश्यते तत्समैरंशैर्विभजेरन्नि त्येवंस्थितिः शास्त्रमर्यादा अत्रसमैरंशैरितिवदतामुद्धारवि
भागोनिषिद्धः विभजेरन्नितिवदतायेनदृश्यतेतेनैवनग्राह्यमितिदर्शितं एवंवचनस्यार्थवत्त्वान्नसमुदायद्रव्यस्यापहारेदोषाभावपरत्वम् ननुम
नुनाज्येष्ठस्यैवसमुदायद्रव्यापहारेदोषोदर्शितोनकनीयसाम् योज्येष्ठोविनिकुर्वीतलोभाद्भ्रातॄन्यवीयसः सज्येष्ठःस्यादभागश्चनियंतव्यश्चरा
जभिरितिवचनात् नैतत् यतःसंभावितस्वामित्वस्यपितृस्थानीयस्यज्येष्ठस्यापिदोषंवदताज्येष्ठपरतंत्राणांकनीयसांपुत्रस्थानीयानां
दंडापूपिकन्यायासुतरांदोषोदर्शितएव तथाचाविशेषेणदोषःश्रूयते योवैभागिनंभागान्नुदतेच्चयंतेवैनंसयदि वैनंनच्चयतेथपु

त्वमथपौत्रंत्वयतइति योभागिनंभागार्हंभागान्नुदते भागादपाकरोति भागंतस्मैनप्रयच्छति सभागान्नुन्नएनंनोत्तारंत्वयतेनाशयतिदी
षिणंकरोति यदिननाशयतितदातस्यपुत्रंपौत्रंवानाशयतीतिज्येष्ठविशेषमंतरेणैव साधारणद्व्यापहारिणोदोषःश्रुतः अथसाधार
णंद्रव्यमात्मनोपिस्वंभवतीति स्वबुद्ध्यागृह्यमाणंनदोषमावहतीति समंतदसत् स्वबुद्ध्यागृहीतेप्यवर्जनीयतयापरस्वमपिगृहीत-
मेवेतिनिषेधानुपवेशाद्दोषमावहत्येव यथामौद्गचरौविपन्नेसदृशतयामाषेषुगृह्यमाणेषु अयज्ञियामाषाइतिनिषेधोनप्रविशति
मुद्गावयवबुद्ध्यागृह्यमाणत्वादितिपूर्वपक्षिणोक्तेमुद्गावयवेषुगृह्यमाणेष्ववर्जनीयतयामाषावयवाअपिगृह्यंतएवेतिनिषेधःप्रविशत्ये

अपुत्रेणपरक्षेत्रेनियोगोत्पादितःसुतः उभयोरप्यसौरिक्थीपिंडदाताचधर्मतः१३०

वेतिराद्धांतिनोक्तम् तस्माद्वचनतोन्यायतश्चसाधारणद्व्यापहारेदोषोस्त्येवेतिसिद्धम् १२९ द्यामुष्यायणस्यभागविशेषंदर्शय
न् तस्यस्वरूपमाह अपुत्रांगुर्वनुज्ञातइत्याद्युक्तविधिना अपुत्रेणदेवरादिना परक्षेत्रेपरस्यभार्यायांगुरुनियोगेनोत्पादितःपुत्रउभ
योर्बीजिक्षेत्रिणोरसौरिक्थीरिक्थहारीपिंडदाताचधर्मतइत्यस्यार्थः यदासौनियुक्तोदेवरादिःस्वयमप्यपुत्रोपुत्रस्यक्षेत्रेस्वपरपुत्रार्थं
प्रवृत्तोयंजनयति सद्विपितृकोद्यामुष्यायणोद्वयोरपिरिक्थहारीपिंडदाताच यदातुनियुक्तःपुत्रवान् केवलंक्षेत्रिणःपुत्रार्थंप्रयतते
तदातदुत्पन्नाःक्षेत्रिणएवपुत्राभवंतीति नबीजिनःसचननियमेन बीजिनोरिक्थहारीपिंडदोवेति तथोक्तंमनुना क्रियाभ्युप

गमाच्चैवबीजार्थंयत्प्रदीयते तस्येहभागिनौदृष्टौबीजीक्षेत्रकएवचेति क्रियाभ्युपगमादिति अत्रोत्पन्नमपत्यमावयोरुभयोरपिभवत्विति
संविदंगीकरणाद्यत्क्षेत्रं क्षेत्रस्वामिनाबीजावपनार्थंबीजिनेदीयते तत्रतस्मिन्क्षेत्रेउत्पन्नस्यापत्यस्यबीजिक्षेत्रिणौभागिनौस्वामिनौदृष्टौ
महर्षिभिः तथाफलंत्वनभिसंधायक्षेत्रिणांबीजिनांतथा प्रत्यक्षंक्षेत्रिणामर्थोबीजाद्योनिर्बलीयसीति फलंत्वनभिसंधायेतिअत्रोत्पन्न
मपत्यमावयोरस्त्वित्येवमनभिसंधायपरक्षेत्रेयदपत्यमुत्पाद्यते तदपत्यंक्षेत्रिणएव यतोबीजाद्योनिर्बलीयसीतिगवाश्वादिषुतथाद
र्शनात् अत्रापिनियोगोवाग्दत्ताविषयएव इतरस्यनियोगस्यमनुनानिषिद्धत्वात् देवराद्वासपिंडाद्वास्त्रियासम्यङ्नियुक्तया प्रजे-
प्सिताधिगंतव्यासंतानस्यपरीक्षये विधवायांनियुक्तस्तुघृताक्तोवाग्यतोनिशि एकमुत्पादयेत्पुत्रंनद्वितीयंकथंचनेत्येवंनियोगमुत्प
न्नस्यमनुःस्वयमेवनिषेधति नान्यस्मिन्विधवानारीनियोक्तव्याद्विजातिभिः अन्यस्मिन्हिनियुंजानाधर्मंहन्युःसनातनं नौद्वाहिके
षुमंत्रेषुनियोगःकीर्त्यतेक्वचित् नविवाहविधावुक्तंविधवावेदनंपुनः अयंद्विजैर्हिविद्वद्भिःपशुधर्मोविगर्हितः मनुष्याणामपिप्रोक्तो
वेनेराज्यंप्रशासति समहीमखिलांभुंजन्राजर्षिप्रवरःपुरा वर्णानांसंकरंचक्रेकामोपहतचेतनः ततःप्रभृतियोमोहात्प्रमीतपतिकांस्त्रियम्
नियोजयत्यपत्यार्थेगर्हंतेतंहिसाधवइति नचविहितप्रतिषिद्धत्वाद्विकल्पइतिमंतव्यम् नियोक्तॄणांनिंदाश्रवणात् स्त्रीधर्मेषुव्यभिचारस्य
बहुदोषश्रवणात् संयमस्यप्रशस्तत्वाच्च यथामनुरेव कामंतुक्षपयेद्देहंपुष्पमूलफलैःशुभैः नतुनामापिगृह्णीयात्पत्यौप्रेतेपरस्यत्विति
जीवनार्थंपुरुषांतराश्रयणंप्रतिषिध्यते आसीतामरणात्क्षांतानियताब्रह्मचारिणी योधर्मएकपत्नीनांकांक्षंतीतमनुत्तमम् अनेकानि

स्रहस्राणि कौमारब्रह्मचारिणाम् दिवंगतानि विप्राणामकृत्वाकुलसंततिम् मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता स्वर्गं गच्छत्यपुत्रापि
यथा ते ब्रह्मचारिणः अपत्यलोभाद्या तु स्त्री भर्तारमतिवर्तते सेह निंदामवाप्नोति परलोकाच्च हीयते इति पुत्रार्थमपि पुरुषांतराश्रयणं नि
षेधति तस्माद्विहितप्रतिषिद्धत्वाद्विकल्प इति न युक्तम् १३० एवं विवाहसंस्कृतानियोगे प्रतिषिद्धे कस्तर्हि धर्म्यो नियोग इत्यत आह य
स्मै वाग्दत्ता कन्या सा प्रतिग्रहमंत्रेणैव तस्याः पतिरित्यस्मादेव वचनादवगम्यते तस्मिन्मृते देवरस्तस्य ज्येष्ठः कनिष्ठो वा निजः सोदरो विं

यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः तामनेन विधानेन निजो विंदेत देवरः १३१
यथाविध्यभिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् मिथो भजेता प्रसवात्सकृत्सकृदृतावृतौ १३२

देत परिणयेत् यथाविधि यथाशास्त्रमधिगम्य परिणीय अनेन विधानेन घृताभ्यंगवाङ्नियमादिना शुक्लवस्त्रां शुचिव्रतां मनोवाक्कायसंयतां मि
थो रहस्या गर्भग्रहणात् प्रत्यृतावेकैकं वारं गच्छेत् अनेन विवाहो वाचनिको घृताभ्यंगादिनियमवान्नियुक्ताभिगमनांगमिति न देवरस्य भार्यात्वमापाद
यति अतस्तदुत्पन्नमपत्यं क्षेत्रस्वामिन एव भवति न देवरस्य संविदा तूभयोरपि समानासमानजातीयपुत्राणां विभागक्लृप्तिरुक्ता १३१ १३२

अधुनामुख्यगौणपुत्राणांदायग्रहणव्यवस्थांदर्शयिष्यन्तेषांस्वरूपंतावदाह उरसोजातऔरसः पुत्रः सचधर्मपत्नीजः सवर्णाधर्मविवाहोढा धर्मपत्नी तस्यांजातऔरसःपुत्रोमुख्यः तत्समःपुत्रिकासुतः तत्समऔरससमः पुत्रिकायाःसुतःपुत्रिकासुतः अतएवौरससमः यथाहवसिष्ठः अभ्रातृकांप्रदास्यामितुभ्यंकन्यामलंकृताम् अस्यांयोजायतेपुत्रः समेपुत्रोभवेदितीति अथवापुत्रिकैवसुतःपुत्रिकासुतः सोप्यौरससमएव पित्रवयवानामल्पत्वात् मात्रवयवानांबाहुल्याच्च यथाहवसिष्ठः द्वितीयःपुत्रिकैवेति द्वितीयःपुत्रःपुत्रिकैवेत्यर्थः द्या

औरसोधर्मपत्नीजस्तत्समःपुत्रिकासुतः क्षेत्रजः क्षेत्रजातस्तुसगोत्रेणेतरेणवा १३३
गृहेप्रच्छन्नउत्पन्नोगूढजस्तुसुतःस्मृतः कानीनःकन्यकाजातोमातामहसुतोमतः १३४

मुष्यायणस्तुजनकस्यौरसादपकृष्टोऽन्यक्षेत्रोत्पन्नत्वात् क्षेत्रजःक्षेत्रजातस्तुसगोत्रेणेतरेणवा इतरेणासपिंडेनदेवरेणवोत्पन्नःपुत्रःक्षेत्रजः १३३ गूढजःपुत्रोभर्तृगृहेप्रच्छन्नउत्पन्नोहीनाधिकजातीयपुरुषजत्वपरिहारेणपुरुषविशेषजत्वनिश्चयाभावेपिसवर्णजत्वनिश्चयेसतिबोद्धव्यः कानीनस्तुकन्यकायामुत्पन्नःपूर्ववत्सवर्णात्समातामहपुत्रः यद्यनूढासाभवेत्तथापिपितृगृहएवसंस्थिता अथतूढातयावोढुरेवपुत्रः यथाहमनुः पितृवेश्मनिकन्यातुयंपुत्रंजनयेद्रहः तंकानीनंवदेन्नाम्नावोढुःकन्यासमुद्भवमिति १३४

पौनर्भवस्तुपुत्रोक्षतायांक्षतायांवापुनर्भुवांसवर्णादुत्पन्नः मात्राभर्त्राऽनुज्ञयाप्रोषितेप्रेतेवाभर्तरिपित्रावोभाभ्यांवासवर्णोयस्मैदीयतेसतस्यदत्त-
कःपुत्रः यथाहमनुः मातापितावादद्यातांयमद्भिःपुत्रमापदि सदृशंप्रीतिसंयुक्तंसदेयोदत्रिमःसुतइति आपद्ग्रहणादनापदिनदेयः दातुर
यंप्रतिषेधः तथाएकपुत्रोनदेयः नत्वेवैकंपुत्रंप्रतिगृह्णीयाद्दद्याद्वेतिवसिष्ठस्मरणात् तथानेकपुत्रसद्भावेपिज्येष्ठोनदेयः ज्येष्ठेनजातमात्रे-
णपुत्रीभवतिमानवइति तस्यैवपुत्रकार्यकरणेमुख्यत्वात् पुत्रप्रतिग्रहप्रकारश्चपुत्रंप्रतिगृहीष्यन्बंधूनाहूयराजनिचावेद्यनिवेशनमध्येव्या
हृतिभिर्हुत्वा अदूरबांधवंबंधुसन्निकृष्टएवप्रतिगृह्णीयादिति वसिष्ठेनोक्तः अदूरबांधवमित्ययंचदेशभाषाविप्रकृष्टस्यप्रतिषेधः एवंक्रीतस्व

अक्षतायांक्षतायांवाजातःपौनर्भवःसुतः दद्यान्मातापितावायंसपुत्रोदत्तकोभवेत् १३५ क्रीतश्चताभ्यांविक्री
तःकृत्रिमःस्यात्स्वयंकृतः दत्तात्मातुस्वयंदत्तोगर्भेविन्नःसहोढजः १३६ यंदत्तकृत्रिमेष्वपियोजनीयम् समानन्यायत्वा-
त् १३५ क्रीतस्तुपुत्रस्ताभ्यांमातापितृभ्यांमात्रापित्रावाविक्रीतःपुत्रवत् सचैकंज्येष्ठंचपुत्रंवर्जयित्वाआपदिसवर्णाइत्येव यत्तुमनुनोक्तम्
क्रीणीयाद्यस्त्वपत्यार्थंमातापित्रोर्यमंतिकात् सक्रीतकसुतस्तस्यसदृशोऽसदृशोपिवेति तद्गुणैःसदृशोऽसदृशोवेतिव्याख्येयम् नजात्या
सजातीयेष्वयंप्रोक्त इत्युपसंहारात् कृत्रिमःस्यात्स्वयंकृतःकृत्रिमस्तुपुत्रःस्वयंपुत्रार्थिनाधनक्षेत्रप्रदर्शनादिप्रलोभनैःपुत्रीकृतोमातापि
तृविहीनस्तत्सद्भावेतत्परतंत्रत्वात् दत्तात्मातुपुत्रोयोमातापितृविहीनस्ताभ्यांत्यक्तोवातवाहंपुत्रोभवामीतिस्वयंदत्तत्वमुपगतःसहोढजस्तु

गर्भेस्थितोगर्भिण्यांपरिणीतायांयः परिणीतः सवोढुः पुत्रः १३६ अपविद्धोमातापितृभ्यांमुत्सृष्टोयोगृह्यते सगृहीतुःपुत्रः सर्वत्रसवर्णइत्ये
व एवंमुख्यामुख्यपुत्राननुक्रम्येतेषांदायग्रहणेक्रममाह एतेषांपूर्वोक्तानांपुत्राणांद्वादशानांपूर्वस्यपूर्वस्याभावेउत्तरः उत्तरः पिंडदः श्रा
द्धदोंशहरोधनहरोवेदितव्यः औरसपौत्रिकेप्यसमवायेऔरसस्यैव धनग्रहणेप्राप्तेमनुरपवादमाह पुत्रिकायांकृतायांतुयदिपुत्रोनजा
यते समस्तत्रविभागःस्यात्ज्येष्ठतानास्तिहिस्त्रियाइति अन्येषामपिपूर्वस्मिन्पूर्वस्मिन्सत्यप्युत्तरेषांपुत्राणांचतुर्थांशभागित्वमुक्तं
वसिष्ठेन यस्मिंश्चेत्प्रतिगृहीतेऔरसउत्पद्येतचतुर्भागभागीस्यात् दत्तकइति दत्तकग्रहणंक्रीतकृत्रिमादीनांप्रदर्शनार्थम् पुत्रीकरणा

उत्सृष्टोगृह्यतेयस्तुसोपविद्धोभवेत्सुतः पिंडदोंशहरश्चैषांपूर्वाभावेपरः परः १३७

विशेषात् तथाचकात्यायनः उत्पन्नेत्वौरसेपुत्रेचतुर्थांशहराःसुताः सवर्णाअसवर्णास्तुग्रासाच्छादनभाजनाइति सवर्णादत्तक
क्षेत्रजादयस्तेसत्यौरसेचतुर्थांशहराः असवर्णाःकानीनगूढोत्पन्नसहोढपौनर्भवास्तेत्वौरसेसतिनचतुर्थांशहराः किंतुग्रासाच्छाद
नभाजनाः यदपिविष्णुवचनम् अप्रशस्तास्तुकानीनगूढोत्पन्नसहोढजाः पौनर्भवश्चनैवैतेपिंडरिक्थांशभागिनइति तदप्यौ
रसेसतिचतुर्थांशनिषेधपरमेव औरसाद्यभावेतुकानीनादीनामपिसकलपित्र्यधनग्रहणमस्त्येव पूर्वाभावेपरःपरइतिवच
नात् यादपिमनुवचनम् एकएवौरसःपुत्रःपित्र्यस्यचसुतःप्रभुः शेषाणामानृशंस्यार्थंप्रदद्यात्तुप्रजीवनमिति तदपिद

त्त्रकादीनामौरसप्रतिकूलत्वेनिर्गुणत्वेचवेदितव्यम् तत्रक्षेत्रजस्यविशेषोदर्शितस्तेनैव षष्ठंतुक्षेत्रजस्यांशंप्रदद्यात्पैतृकाद्धनात् औरसोविभज
न्दायंपित्र्यंपंचममेववेति प्रतिकूलत्वनिर्गुणत्वसमुच्चयेषष्ठमंशम् एकतरसद्भावेपंचममितिविवेक्तव्यं यदपिमनुनापुत्राणांषड्द्वयमुपन्यस्य
पूर्वषट्कस्यदायादबांधवमुत्तरषट्कस्यादायादबांधवत्वमुक्तम् औरसःक्षेत्रजश्चैवदत्तःकृत्रिमएवच गूढोत्पन्नोपविद्धश्चदायादाबांधवाश्चषट् कानी
नश्च सहोढश्चक्रीतःपौनर्भवस्तथा स्वयंदत्तश्चपौत्रीत्वषडदायादबांधवाइति तदपिस्वपितृसपिंडसमानोदकानांसन्निहितरिक्थहरांतराभावेपू
र्वषट्कस्यतद्रिक्थहरत्वमुत्तरषट्कस्यतुतन्नास्ति बांधवत्वंपुनःसमानगोत्रत्वेनचोदकप्रदानादिकार्यकरत्वंवर्गद्वयस्यापिसममेवेतिव्याख्येयम् गो
त्ररिक्थेजनयितुर्नभजे त्कृत्रिमःसुतः गोत्ररिक्थानुगःपिंडोव्यपैतिददतःस्वधेत्यत्रदत्रिमग्रहणस्यपुत्रप्रतिनिधिप्रदर्शनार्थत्वात् पितृधनहा
रित्वंतुपूर्वस्यपूर्वस्याभावेसर्वेषामविशिष्टम् नभ्रातरोनपितरःपुत्रारिक्थहराःपितुरित्यस्यौरसव्यतिरिक्तानांपुत्रप्रतिनिधीनांसर्वेषांरिक्थहा
रित्वप्रतिपादनपरत्वात् औरसस्यैकएवौरसःपुत्रःपित्र्यस्यवसुनःप्रभुरित्यनेनैवरिक्थभाक्त्वस्योक्तत्वात् दायादशब्दस्यदायादानपिदापयेदि-
त्यादौपुत्रव्यतिरिक्तरिक्थभाग्विषयत्वेनप्रसिद्धत्वाच्च वसिष्ठादिषुवर्गद्वयेपिकस्यचिद्व्यत्ययेनपाठोगुणवदगुणवद्विषयोवेदितव्यः गौतमीयेतु
पौत्रिकेयस्यदशमत्वेनपाठोविजातीयविषयः तस्मात्स्थितमेतत्पूर्वपूर्वाभावेपरःपरोंशभागिति यत्तु भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भ
वेत् सर्वेतेतेनपुत्रेणपुत्रिणोमनुरब्रवीदिति तदपिभ्रातृपुत्रस्यपुत्रीकरणसंभवेन्येषांपुत्रीकरणनिषेधार्थम् नपुनःपुत्रत्वप्रतिपादनाय
तत्कृतोगोत्रजोबंधुरित्यनेनविरोधात् १३७ ५ ५ ५ ५ ५

इदानीमुक्तोपसंहारव्याजेनतत्रैवनियममाह समानजातीयेष्वेवपुत्रेषु अयंपूर्वाभावेपरःपरइत्युक्तोविधिःनभिन्नजातीयेषु तत्रचकानीनगूढोत्प
न्नसहोढपौनर्भवाणांसवर्णत्वंजनकद्वारेणनस्वरूपेण तेषांवर्णजातिलक्षणाभावस्योक्तत्वात् तथानुलोमजानांक्षत्रियादीनामौरसेष्वंतर्भावात्ते
षामप्यभावेक्षेत्रजादीनांदायहरत्वंबोद्धव्यम् शूद्रापुत्रस्त्वौरसोपिकृत्स्नंभागमन्याभावेपिनलभते यथाहमनुः यद्यपिस्यात्तुसत्पुत्रोयद्यपु
त्रोपिवाभवेत् नाधिकंदशमाद्दद्याच्छूद्रापुत्रायधर्मतइति यदिसत्पुत्रोविद्यमानद्विजातिपुत्रोयद्यपुत्रोऽविद्यमानद्विजातिपुत्रोवास्यात्तस्मि
न्मृते क्षेत्रजादिर्वान्योवासापिंडःशूद्रापुत्रायतद्धनाद्दशमांशादधिकंनदद्यादित्यस्मादेवक्षत्रियावैश्यापुत्रयोःसवर्णापुत्राभावेसकलधनग्रहणंग

सजातीयेष्वयंप्रोक्तस्तनयेषुमयाविधिः जातोऽपिदास्यांशूद्रेणकामतोंशहरोभवेत् १३८

म्यते अधुनाशूद्रधनविभागेविशेषमाह शूद्रेणदास्यामुत्पन्नःपुत्रःकामतःपितुरिच्छयाभागंलभते पितुरूर्ध्वंतुयदिपरिणीताःपु
त्राःसंति तेभ्रातरस्तंदासीपुत्रं अर्धभागिनंकुर्युः स्वभागादर्द्धंदद्युरित्यर्थः अथपरिणीतापुत्रानसंति तदाकृत्स्नंधनंदासीपुत्रोगृह्णीयात्
यदिपरिणीतादुहितरस्तत्पुत्रावानसंति तत्सद्भावेत्वर्द्धभागिकएवदासीपुत्रः अत्रचशूद्रग्रहणाद्द्विजातिनादास्यामुत्पन्नःपितुरिच्छया
प्यंशंनलभते नाप्यर्द्धम् दूरतएवकृत्स्नं किंत्वनुकूलश्चेज्जीवनमात्रंलभते १३८ ५ ५ ५

मुख्यगौणसुतादायंगृह्णंतीतिनिरूपितम् तेषामभावेसर्वेषांदायादक्रमउच्यते पूर्वोक्ताद्वादशपुत्रायस्यनसंति असावपुत्रः तस्याप्‌
त्रस्यस्वर्यातस्यपरलोकंगतस्यधनभाक्‌धनग्राही एषांपत्न्यादीनामनुक्रांतानांमध्येपूर्वस्याभावउत्तरउत्तरोधनभागितिसंबंधः सर्वेषुमूर्द्धावसिक्ता
दिषु अनुलोमजेषुप्रतिलोमजेषुचवर्णेषुचब्राह्मणादिषुअयंदायग्रहणविधिर्दायग्रहणक्रमोवेदितव्यः तत्रप्रथमंपत्नीधनभाक्‌ पत्नीविवाह
संस्कृता पत्युर्नोयज्ञसंयोगइतिस्मरणात्‌ एकवचनंचजात्यभिप्रायेण अतश्चबह्व्यश्चेत्समानजातीयाविजातीयाश्चवांशंविभज्यधनंगृह्णंति

मृतेपितरिकुर्युस्तंभ्रातरस्त्वर्द्धभागिकम्‌ अभ्रातृकोहरेत्सर्वंदुहितॄणांसुताहृते १३९ पत्नीदुहितरश्चैं
वपितरौभ्रातरस्तथा तत्सुतागोत्रजाबंधुशिष्यसब्रह्मचारिणः १४० एषामभावेपूर्वस्यधनभागुत्त
रोत्तरः स्वर्यातस्यत्वपुत्रस्यसर्ववर्णेष्वयंविधिः १४१ वृद्धमनुरपिपत्न्याःसमग्रधनसंबंधंवक्ति अपुत्राशयनंभर्तुःपाल
यंतीव्रतेस्थिता पत्न्येवदद्यात्तत्पिंडंकृत्स्नमंशंलभेतचेति बृहद्विष्णुरपि अपुत्रधनंपत्न्यभिगामितदभावेदुहितृगामि तदभावेपितृगा
मितदभावेमातृगामीति कात्यायनोपि पत्नीपत्युर्धनहारीयास्यादव्यभिचारिणी तदभावेतुदुहितायद्यनूढाभवेत्तदेति तथा अपुत्रस्या
र्यकुलजापत्नीदुहितरोपिवा तदभावेपितामाताभ्राताःपुत्राश्चकीर्तित इति बृहस्पतिरपि कुल्येषुविद्यमानेषुपितृभ्रातृसनाभिषु असु
तस्यप्रमीतस्यपत्नीतद्भागहारिणी एतद्विरुद्धानीववाक्यानिलक्ष्यंते भ्रातॄणामप्रजाःप्रेयात्कश्चिच्चेत्प्रव्रजेतवा विभजेरन्धनंतस्य

शेषास्तेस्त्रीधनंविना भरणंचास्यकुर्वीरन्स्त्रीणामाजीवनक्षयात् रक्षंतिशय्यांभर्तुश्चेदाच्छिंद्युरितरासुचेति पत्नीसद्भावेपिभ्रातृणांधन
ग्रहणम् पत्नीनांचभरणमात्रंनारदेनोक्तं मनुनातु पिताहरेदपुत्रस्यरिक्थंभ्रातरएववेत्यपुत्रस्यधनंपितुर्भ्रातुर्वेतिदर्शितम् तथाअनपत्य
स्यपुत्रस्यमातादायमवाप्नुयात् मातर्यपिचवृत्तायांपितुर्माताहरेद्धनमितिमातुःपितामह्याश्चधनसंबंधोदर्शितः शंखेनापि स्वर्यातस्य
ह्यपुत्रस्यभ्रातृगामिद्रव्यंतदभावेपितरौहरेयातांज्येष्ठावापत्नीति भ्रातृणांपित्रोर्ज्येष्ठायाश्चपत्न्याः क्रमेणधनसंबंधोदर्शितः कात्यायने
नापि विभक्तेसंस्थितेद्रव्यंपुत्राभावेपिताहरेत् भ्रातावाजननीवाथमातावातत्पितुःक्रमादित्येवमादीनांविरुद्धार्थानांवाक्यानांयोगीश्वरेण
व्यवस्थादर्शिता ,पत्नीगृह्णीयादित्येतद्वचनजातंविभक्तभ्रातृस्त्रीविषयम् साचयदिनियोगार्थिनीभवति कुतएतत् नियोगसत्वापेक्षा
याःपत्न्याधनहरणंनस्वतंत्रायाइति पिताहरेदपुत्रस्येत्यादिवचनात्तत्रव्यवस्थाकारणंवक्तव्यम् नान्यद्व्यवस्थाकारणमस्तीतिगोतमवच
नाच्च पिंडगोत्रर्षिसंबंधारिक्थंभजेरन्स्त्रीवानपत्यस्यबीजंलिप्सेतेति अस्यार्थः पिंडगोत्रर्षिसंबंधा अनपत्यस्यरिक्थंभजेरन्स्त्रीवारिक्थंभजे
त यदिबीजंलिप्सेतेति मनुरपि धनंयोबिभृयाद्भ्रातुर्मृतस्यस्त्रियमेववा सोपत्यंभ्रातुरुत्पाद्यदद्यात्तस्यैवतद्धनमिति अनेनैतद्दर्शयति
विभक्तधनेपिभ्रातर्युपरतेऽपत्यद्वारेणैवधनसंबंधोनान्यथेति तथाविभक्तधनेपि कनीयान्ज्येष्ठभार्यायांपुत्रमुत्पादयेद्यदि समस्तत्र
विभागःस्यादितिधर्मोव्यवस्थितइति तथावसिष्ठोपि रिक्थलोभान्नास्तिनियोगइति रिक्थलोभान्नियोगंप्रतिषेधन् नियोगद्वारकएवपत्न्याधन
संबंधोनान्यथेतिदर्शयति नियोगाभावेतुपत्न्याभरणमात्रमेव नारदवचनात् भरणंचास्यकुर्वीरन्स्त्रीणामाजीवनक्षयादिति योगीश्वरेणापि

किलवक्ष्यते अपुत्रायोषितश्चैषांभर्तव्याःसाधुवृत्तयः निर्वास्याव्यभिचारिण्यःप्रतिकूलास्तथैवचेति अपिच द्विजातिधनस्ययज्ञार्थत्वा
त्स्त्रीणांचयज्ञेनधिकाराद्धनग्रहणमयुक्तम् तथाचकेनापिस्मृतं यज्ञार्थेज्ञानमुत्पन्नंतत्रानधिकृतास्तुये अरिक्थभाजस्तेसर्वेग्रासा-
च्छादनभाजनाः यज्ञार्थंविहितंवित्तंतस्मात्तद्विनियोजयेत् स्थानेषुधर्मजुष्टेषुनस्त्रीमूर्खविधर्मिष्विति तदनुपपन्नम् पत्नीदुहितर
इत्यत्रविनियोगस्याप्रतीतेरप्रस्तुतत्वाच्च अपिच इदमत्रवक्तव्यम् पत्नीधनग्रहणेनियोगोवानिमित्तं तदुत्पन्नमपत्यंवा तत्रनियोग-
स्यैवनिमित्तत्वे अनुत्पादितपुत्रायाअपिधनसंबंधःप्राप्नोति उत्पन्नस्यपुत्रस्यधनसंबंधोनप्राप्नोति अथतदपत्यस्यैवनिमित्तत्वं त
थासतिपुत्रस्यैवधनसंबंधात्पत्नीतिनारब्धव्यम् अथस्त्रीणांपतिद्वारकोधनसंबंधःपुत्रद्वारकोवानान्यथेतिमंतव्यंतदप्यसत् अ-
ध्यग्न्यध्यावहनिकंदत्तंचप्रीतिकर्मणि भ्रातृमातृपितृप्राप्तंषड्विधंस्त्रीधनंस्मृतमित्यादिविरोधात् किंचसर्वपुत्राभावेपत्नीदुहितरइ
त्यारब्धं तत्रनियुक्तायाधनसंबंधंवदताक्षेत्रजस्यैवधनसंबंधउक्तोभवति सचप्रागेवाभिहितइत्यपुत्रप्रकरणेपत्नीतिनारब्धव्यं
अथपिंडगोत्रर्षिसंबंधारिक्थंभजेरन्स्त्रीवानपत्यस्यबीजंलिप्सेतेतिगौतमवचनान्नियुक्तायाइतिधनसंबंधइतितदप्यसत् नहियदि
बीजंलिप्सेततदानपत्यस्यस्त्रीधनंगृह्णीयादित्ययमर्थोस्मात्प्रतीयते किंत्वनपत्यस्यधनंपिंडगोत्रर्षिसंबंधाभजेरन्स्त्रीच सास्त्रीबी
जंवालिप्सेतसंयतावाभवेदिति तस्याधर्मांतरोपदेशः वाशब्दस्यपक्षांतरवचनत्वेनयद्यर्थाप्रतीतेः अपिच संयतायाएव धनग्रहणं
युक्तं ननियुक्तायाःस्मृतिलोकनिंदितायाः अपुत्राशयनंभर्तुःपालयंतीव्रतेस्थिता पत्न्येवदद्यात्तत्पिंडंकृत्स्नमंशंलभेतचेति संय

तायाधनग्रहणमुक्तम् तथानियोगश्चनिंदितोमनुना नान्यस्मिन्विधवानारीनियोक्तव्याद्विजातिभिः अन्यस्मिन्हिनि
युंजानाधर्मंहन्युःसनातनमिति यत्तुवसिष्ठवचनम् रिक्थलोभान्नास्तिनियोगइति तदविभक्तेसंसृष्टिनिवाभर्तरिप्रेते
तस्याधनसंबंधोनास्तीतिस्वापत्यस्यधनसंबंधार्थंनियोगोनकर्तव्यइति व्याख्येयम् यदपिनारदवचनम् भर-
णंचास्यकुर्वीरन्स्त्रीणामाजीवनक्षयादिति तदपिसंसृष्टानांतुयोभागस्तेषामेवसइष्यतइति संसृष्टानांप्रस्तुतत्वात्
तत्स्त्रीणामनपत्यानांभरणमात्रप्रतिपादनपरम् नचभ्रातॄणामप्रजःप्रेयानित्येतस्यसंसृष्टिविषयत्वेसंसृष्टानांतुयोभागइत्यनेनपौनरु-
क्त्यमाशंकनीयम् यतःपूर्वोक्तविवरणेनस्त्रीधनस्याविभाज्यत्वंतत्स्त्रीणांचभरणमात्रंविधीयते यदप्यपुत्रायोषितश्चैषामित्यादिवचनंतत्
क्लीबादिस्त्रीविषयमितिवक्ष्यते यत्तुद्विजातिधनस्ययज्ञार्थत्वात्स्त्रीणांचयज्ञेनधिकारात्त्वधनग्रहणमयुक्तमितितदसत् सर्वस्यद्रव्यजान
स्ययज्ञार्थत्वेदानहोमाद्यसिद्धेः अथयज्ञशब्दस्यधर्मोपलक्षणत्वात् दानहोमादीनामपिधर्मत्वात्तदर्थत्वमविरुद्धमितिमतं एवंतर्ह्यर्थका
मयोर्धनसाध्ययोरसिद्धिरेवस्यात् तथासति धर्ममर्थंचकामंचयथाशक्तिनहापयेत् तथानपूर्वाह्णमध्यंदिनापराह्णानफलान्कु
र्याद्यथाशक्तिधर्मार्थकामेभ्यः तथानतथैतानिशक्यंतेसंनियंतुमसेवयेत्यादियाज्ञवल्क्यगौतममनुवचनविरोधः अपिच धन
स्ययज्ञार्थत्वेहिरण्यंधार्यमितिहिरण्यसाधारणस्यक्रत्वर्थतानिराकरणेनपुरुषार्थत्वमुक्तम् तदसंगतंस्यात् किंच यज्ञशब्दस्य
धर्मोपलक्षणपरत्वेस्त्रीणामपिपूर्तकर्माधिकाराद्धनग्रहणंयुक्ततरम् यत्तुपारतंत्र्यवचनं नस्त्रीस्वातंत्र्यमर्हतीत्यादि तदस्तु

या.स्मृ.मि.
७७

व्य.अ.
२

पारतंत्र्यं धनस्वीकारेतुकोविरोधः कथंतर्हियज्ञार्थंधसुसन्नमित्यादिवचनम् उच्यते यज्ञार्थमेवार्जितंयद्धनंतद्यज्ञएवनियोक्तव्यंपुत्रादि
भिरपीत्येवंपरंतत् यज्ञार्थंलब्धमददद्भासःकाकोपिवाभवेदितिदोषश्रवणस्यपुत्रादिष्वप्यविशेषात् यदपिकात्यायनेनोक्तम् अदायिकं
राजगामियोषिद्भृत्यौर्ध्वदेहिकं अपास्यश्रोत्रियद्रव्यंश्रोत्रियेभ्यस्तदर्पयेदिति अदायिकंदायादरहितंयद्धनंतद्राजगामि राज्ञोभवति योषिद्
भृत्यौर्ध्वदेहिकमपास्यतत्स्त्रीणामशनाच्छादनोपयुक्तं और्ध्वदेहिकंधनिनःश्राद्धाद्युपयुक्तंचापास्यपरिहृत्य राजगामिभवतीतिसंबंधः अ-
स्यापवादः श्रोत्रियद्रव्यंचयोषिद्भृत्यौर्ध्वदेहिकमपास्यश्रोत्रियायोपपादयेदिति एतदप्यविरुद्धस्त्रीविषयम् योषिद्ग्रहणात् नारदवच
नंच अन्यत्रब्राह्मणात्किंतुराजाधर्मपरायणः तत्स्त्रीणांजीवनंदद्यादेषदायविधिःस्मृत इत्यविरुद्धस्त्रीविषयमेव स्त्रीशब्दश्रवणात् इह
तुपत्नीशब्दादूढायाःसंयतायाधनग्रहणमविरुद्धम् तस्माद्विभक्तासंसृष्टिन्यपुत्रेस्वर्याते पत्नीधनंप्रथमंगृह्णातीत्ययमर्थः सिद्धोभवति
विभागस्योक्तत्वात् संसृष्टिनांवक्ष्यमाणत्वात् एतेनाल्पधनविषयत्वंश्रीकरादिभिरुक्तंनिरस्तंवेदितव्यं तथाह्यौरसेषुपुत्रेषुसत्स्वपिजीव
द्विभागे अजीवद्विभागेपत्न्याःपुत्रसमांशग्रहणमुक्तं यदिकुर्यात्समानंशान्पत्न्यःकार्याःसमांशिकाः पितुरूर्ध्वंविभजतांमाताप्यंशंस
मंहरेदितिच तथासत्पुत्रस्यस्वर्यातस्यधनंपत्नीभरणादतिरिक्तंनलभतइतिव्यामोहमात्रं अथपत्न्यःकार्याःसमांशिकाइत्यत्रमाताप्यं
शंसमंहरेदित्यत्रचजीवनोपयुक्तमेवधनंस्त्रीहरतीतिमतम् तदसत् अंशशब्दस्यसमशब्दस्यचानर्थक्यप्रसंगात् स्यान्मतं बहु
धनंजीवनोपयुक्तंधनंगृह्णाति अल्पेतुपुत्रांशसममंशंगृह्णातीति तन्न विधिवैषम्यप्रसंगात् तथाहि पत्न्यःकार्याःसमांशिका मा

ताप्यंशंसमंहरेदित्त्वि बहुधनेजीवनमात्रोपयुक्तम् वाक्यांतरमपेक्ष्य प्रतिपादयति अल्पधनेतुपुत्रांशसममंशं प्रतिपादयतीति तथाचातुर्मास्ये
षुद्वयोः प्रणयंतीत्यत्रपूर्वपक्षिणा सौमिक प्रणयनातिदेशोहेतुत्वेन वैश्वदेवउत्तरवेदिकमुपकिरंति नशुनासीरीयइत्युत्तरवेदिप्रतिषेधेदर्शि
ते राद्धांते कदेशिनान सौमिक प्रणयनातिदेशप्राप्तायाउत्तरवेद्याःप्रथमोत्तमयोः पर्वणोरयंप्रतिषेधः किंतुपात्रेवपंतीतिप्राकरणिकेनवचनेन।
प्राप्तायाउत्तरवेद्याः प्रतिषेधोयमित्यभिहिते पुनः पूर्वपक्षिणा पात्रेवपंतीतिप्रथमोत्तमयोः पर्वणोःप्रतिषेधमपेक्ष्य पाक्षिकीमुत्तरवेदिंप्राप-
यति मध्यमयोस्तुनिरपेक्ष्यमेवनित्यंच उत्तरवेदिंप्रतिपादय तीतिविधिवैषम्यंदर्शितम् राद्धांतेपि विधिवैषम्यतयाप्रथमोत्तमयोः पर्वणो
रुत्तरवेदिप्रतिषेधोनित्यानुवादो द्वयोः प्रणयंतीत्याद्यर्थवादपर्यालोचनयापात्रेवपंतीतिमध्यमयोरेव वरुणप्रघाससाकमेवपर्वणोरुत्तरवेदिं
विधत्तइतिदर्शितम् यदपिमतम् पिताहरेदपुत्रस्यरिक्थंभ्रातरएववेतिमनुस्मरणात् तथा स्वर्यातस्यह्यपुत्रस्यभ्रातृगामिद्रव्यंत
दभावेपितरौहरेयातां ज्येष्ठावापत्नीतिशंखस्मरणाच्च अपुत्रस्यधनंभ्रातृगामिइतिप्राप्तम् भरणंचास्यकुर्वीरन्स्त्रीणामाजीवनक्षयादि
त्यादिवचनाच्च भरणोपयुक्तंधनंपत्नीलभतइत्यपिस्थितम् एवंस्थितेबहुधने अपुत्रेस्वर्यातिभरणोपयुक्तंपत्नीगृह्णाति शेषंचभ्रातरो
यदातुपत्नीभरणमात्रोपयुक्तमेवद्रव्यमस्ति ततोन्यूनंवा तदाकिंपत्न्येवगृह्णात्युतभ्रातरोपीतिविरोधेपूर्वबलीयस्त्वज्ञापनार्थंपत्नीदुहि
तर इत्यारब्धमिति तदप्यत्रभगवानाचार्योनमृष्यति यतः पिताहरेदपुत्रस्यरिक्थंभ्रातरएववेतिविकल्पस्मरणान्नेदंक्रमपरं वचनम
पितुधनग्रहणेधिकारपरप्रदर्शनमात्रपरं तथासत्यपिपत्न्यादिग्रहणेघटनइतिव्याचक्षते शंखवचनमपिसंसृष्टभ्रातृविषयमिति

अपिचाल्पविषयत्वमस्माद्वचनात्प्रकरणाद्वानावगम्यते धनभागुत्तरोत्तरइत्यस्यचपत्नीदुहितरइतिविषयद्वयेवाक्यांतरमपेक्ष्याल्प
धनविषयत्वं पित्रादिषुतु धनमात्रविषयत्वमितिपूर्वोक्तं विधिवैषम्यंतदवस्थमेवेति यत्किंचिदेतत् यत्तुहारीतवचनम् विधवायौवनस्था
चेन्नारीभवतिकर्कशा आयुषःक्षपणार्थंतुदातव्यंजीवनंतदेति तदपिशंकितव्यभिचारायाःसकलधनग्रहणनिषेधपरम् अस्मादेववच
नादनाशंकितव्यभिचारायाःसकलधनग्रहणंगम्यते एतदेवाभिप्रेत्योक्तंशंखेन ज्येष्ठावापत्नीति ज्येष्ठागुणज्येष्ठा अनाशंकितव्यभि
चारा सासकलंधनंगृहीत्वान्यांकर्कशामपिमातृवत्पालयतीतिसर्वमनवद्यम् तस्मादपुत्रस्यस्वर्यातस्यविभक्तस्यासंसृष्टिनोधनंपरिणीता
स्त्रीसंयतासकलंगृह्णातीतिस्थितम् तदभावेदुहितरः दुहितरइतिबहुवचनंसमानजातीयानामसमानजातीयानांचसमविषमांशप्राप्त्य
र्थं तथाचकात्यायनः पत्नीभर्तुर्धनहरीयास्याद्व्यभिचारिणी तदभावेतुदुहितायद्यनूढाभवेत्तदेति बृहस्पतिरपि भर्तुर्धनहरीपत्नी
तांविनादुहितास्मृता अंगादंगात्संभवतिपुत्रवद्दुहितानृणाम् तस्मात्पितृधनंत्वन्यःकथंगृह्णीतमानवइति तत्रचोढानूढासमवायेनूढैवगृ
ह्णाति तदभावेतुदुहितायद्यनुढाभवेत्तदेतिविशेषस्मरणात् तथाप्रतिष्ठिताप्रतिष्ठितासमवायेऽप्रतिष्ठितैव तदभावेप्रतिष्ठिता स्त्रीधनं
दुहितॄणामप्रत्तानामप्रतिष्ठितानांचेतिगौतमवचनस्यपितृधनेपिसमानत्वात् नचैतत्पुत्रिकाविषयमितिमंतव्यम् तत्समःपुत्रिकासुतइतिपु
त्रिकायास्तत्सुतस्यचौरससमत्वेनपुत्रकरणेभिधानात् चशब्दाद्दुहित्रभावेदौहित्रोधनभाक् यथाहविष्णुः अपुत्रपौत्रसंतानेदौहित्रा
धनमाप्नुयुः पूर्वेषांतुस्वधाकारेपौत्रादौहित्रकामताइति मनुरपि अकृतावाकृतावापियंविंदेत्सदृशात्सुतम् पौत्रीमातामहस्तेनदद्या

त्सिंडं हरेद्धनमिति तदभावेस्यपितरौ पितरौ माता पितरौ धनभाजौ यद्यपियुगपद्व्यधिकरणावचनतायां द्वंद्वस्मरणात् तदपवादत्वादेकशेषस्य धन
ग्रहणेपित्रोः क्रमोनप्रतीयते तथापिविग्रहवाक्येमातृशब्दस्यपूर्वनिपातादेकशेषभावपक्षेच मातापितराविति मातृशब्दस्यपूर्वश्रवणात् पाठक्रमादे
वार्थक्रमावगमाद्धनसंबंधेपिक्रमापेक्षायांप्रतीतक्रमानुरोधेनैवप्रथमंमाताधनभाक् तदभावेपितेतिगम्यते किंच पितापुत्रांतरेष्वपिसाधारणोमा
तातुनसाधारणीति प्रत्यासत्त्यतिशयादनंतरः सपिंडाद्यस्तस्यतस्य धनंभवेदितिवचनान्मातुरेवप्रथमंधनग्रहणंयुक्तम् नचसपिंडेष्वेवप्रत्यासत्तिर्नि
यामिका अपितुसमानोदकादिष्वप्यविशेषेणधनग्रहणेप्राप्ते प्रत्यासत्तिरेवनियामिकेत्यस्मादेववचनादवगम्यतइति मातापित्रोर्मातुरेवचप्रत्यास-
त्यतिशयाद्धनग्रहणंयुक्ततरं तदभावेपिताधनभाक् पित्रभावेभ्रातरोधनभाजः तथाचमनुः पिताहरेदपुत्रस्यरिक्थंभ्रातरएववेति यत्तुन
धारेश्वरेणोक्तम् अनपत्यस्यपुत्रस्य मातादायमवाप्नुयात् मातर्यपिचवृत्तायांपितुर्माताहरेद्धनमिति मनुवचनाज्जीवत्स्वपिपितरिमातरिवृत्तायां
पितुर्मातापितामहीधनंहरेन्नपिता यतःपितृगृहीतंधनंविजातीयेष्वपिपुत्रेषुगच्छति पितामहीगृहीतंतुसजातीयेष्वेवगच्छतीति पितामह्येवग्र
ह्णातीति एतदप्याचार्योनानुमन्यते विजातीयपुत्राणामपि धनग्रहणस्योक्तत्वात् चतुस्त्रिद्व्येकभागाः स्युरित्यादिनेति यत्तुनरहार्यंब्राह्मणद्र
व्यंराज्ञोनित्यमितिस्थितिरितिमनुस्मरणम् तन्नृपाभिप्रायं नतुपुत्राभिप्रायं भ्रातृष्वपिसोदराः प्रथमंगृह्णीयुः भिन्नोदराणांमात्राविप्रकर्षात्
अनंतरः सपिंडाद्यस्तस्यतस्यधनंभवेदितिस्मरणात् सोदराणामभावेभिन्नोदराधनभाजः भ्रातृणामप्यभावेतत्पुत्राः पितृक्रमेणधनभाजः
भ्रातृभ्रातृपुत्रसमवायेभ्रातृपुत्राणामनधिकारः भ्रात्रभावेभ्रातृपुत्राणामधिकारवचनात् यदात्वपुत्रेभ्रातरिस्वर्याते तद्भ्रातॄणामविशेषेण

धनसंबंधज्ञाते भ्रातृधनविभागात्प्रागेव यदि कश्चिद्भ्राता मृतः तत्पुत्राणां पितृतोधिकारे प्राप्ते तेषां भ्रातॄणां विभज्य ग्रहणे पितृतो भागक
ल्पनेतियुक्तम् भ्रातृपुत्राणामप्यभावे गोत्रजा धनभाजः गोत्रजाः पितामही सपिंडाः समानोदकाश्च तत्र पितामही प्रथमं धनभाक् मा
तर्यपि च वृत्तायां पितुर्माता धनं हरेदिति मात्रनंतरं पितामह्या धनग्रहणे प्राप्ते पित्रादीनां भ्रातृसुतपर्यंतानां बद्धक्रमत्वेन मध्ये तु प्रवेशा-
भावात् पितुर्माता धनं हरेदित्यस्य वचनस्य धनग्रहणाधिकारप्राप्तिमात्रपरत्वादुत्कर्षे तत्सुतानंतरं पितामही गृह्णातीत्यविरोधात् पिता
मह्याश्चाभावे समानगोत्रजाः सपिंडाः पितामहादयो धनभाजः भिन्नगोत्राणां सपिंडानां बंधुशब्देन ग्रहणात् तत्र च पितृसंतानाभावे पिता
महः पितृव्यास्तत्पुत्राश्च क्रमेण धनभाजः पितामहसंतानाभावे प्रपितामही प्रपितामहस्तत्पुत्रास्तत्सूनवश्चेत्येवमासप्तमात् समानगोत्राणां
सपिंडानां धनग्रहणं वेदितव्यम् तेषामभावे समानोदकानां धनसंबंधः ते च सपिंडानामुपरि सप्त वेदितव्याः जन्मनामज्ञानावधिका वा यथा
ह बृहन्मनुः सपिंडता तु पुरुषे सप्तमे विनिवर्तते समानोदकभावस्तु निवर्तेताचतुर्दशात् जन्मनाम्नोः स्मृतेरेके तत्परं गोत्रमुच्यते इति
गोत्रजाभावे बंधवो धनभाजः बंधवश्च त्रिविधाः आत्मबंधवः पितृबंधवो मातृबंधवश्चेति यथोक्तं आत्मपितृष्वसुः पुत्राः आत्म
मातृष्वसुः सुताः आत्ममातुलपुत्राश्च विज्ञेया आत्मबांधवाः पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः पितुर्मातुलपुत्राश्च वि
ज्ञेयाः पितृबांधवाः मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः मातुर्मातुलपुत्राश्च विज्ञेया मातृबांधवा इति तत्र चांतरंगत्वात्प्रथममा-
त्मबंधवो धनभाजस्तदभावे पितृबंधवस्तदभावे मातृबंधव इति क्रमो वेदितव्यः बंधूनामभावे आचार्यः तदभावे शिष्याः पुत्राभावे

यः प्रत्यासन्नः सपिंडस्तदभावे आचार्या आचार्याभावेंऽतेवासीत्यापस्तंबस्मरणात् शिष्याभावे सब्रह्मचारी धनभाक् येनसहैकस्मादाचार्यादु पनयनाध्ययनतदर्थज्ञानप्राप्तिःसब्रह्मचारी तदभावेब्राह्मणद्रव्यंयःकश्चित्श्रोत्रियोगृह्णीयात् श्रोत्रियाब्राह्मणस्यानपत्यस्यरिक्थंभजेरन्नि तिगौतमस्मरणात् तदभावेब्राह्मणमात्रं यथाहमनुः सर्वेषामप्यभावेतुब्राह्मणारिक्थभागिनः त्रैविद्याःशुचयोदांतास्तथाधर्मोनहीयते इति नकदाचिदपिब्राह्मणद्रव्यंराजागृह्णीयात् अहार्यंब्राह्मणद्रव्यंराज्ञानित्यमितिस्थितिरितिमनुवचनात् नारदेनाप्युक्तम् ब्राह्मणार्थस्यतन्नाशेदायादश्चेत्कश्चन ब्राह्मणायैवदातव्यमेनस्वीस्यान्नृपोन्यथेति क्षत्रियादिधनंसब्रह्मचारिपर्यंतानामभावेराजाहरेत्

वानप्रस्थयतिब्रह्मचारिणांरिक्थभागिनः क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः १४२

नब्राह्मणः यथाहमनुः इतरेषांतुवर्णानांसर्वाभावेहरेन्नृपइति १४० १४१ पुत्राःपौत्राश्चदायंगृह्णंतितदभावेपत्न्यादय इत्युक्तं इदानींतदुभयोरपवादमाह वानप्रस्थस्ययतेर्ब्रह्मचारिणश्चक्रमेणप्रतिलोमक्रमेणाचार्यःसच्छिष्योधर्मभ्रात्रेकतीर्थाश्चरिक्थस्यधनस्यभागिनः ब्रह्मचारीनैष्ठिकः उपकुर्वाणस्यतुधनंमात्रादयएवगृह्णंति नैष्ठिकस्यतुधनंतदपवादत्वेनाचार्योगृह्णातीत्युच्यते यतेस्तुधनंसच्छिष्योगृह्णाति सच्छिष्यःपुनरध्यात्मशास्त्रश्रवणधारणतदर्थानुष्ठानक्षमः दुर्वृत्तस्याचार्यादेरपिभागानर्हत्वात् वानप्रस्थस्यधनंधर्मभ्रात्रेकतीर्थोगृह्णाति धर्मभ्रातात्प्रतिपन्नोभ्राता एकतीर्थाएकाश्रमी धर्मभ्राताचासावेकतीर्थश्चधर्मभ्रात्रेकतीर्थी एतेषामाचार्यादीनामभावे पुत्रादिषुसत्स्वप्ये

कतीर्थ्येवगृह्णाति नत्वन्यशास्त्राश्रमांतरगताः इतिवसिष्ठस्मरणादाश्रमांतरगतानांरिक्थसंबंधएवनास्तिकुतस्तद्विभागः नचनैष्ठिकस्य स्वार्जितधनसंबंधोयुक्तः प्रतिग्रहादिनिषेधात् अनिचयोभिक्षुरितिगौतमस्मरणात् भिक्षोरपिनस्वार्जितधनसंबंधसंभवः उच्यते वानप्रस्थस्यतावत् अन्होमासस्यषण्णांवातथासंवत्सरस्यवा अर्थस्यनिचयंकुर्यात्कृतमाश्वयुजेत्यजेदितिवचनाद्धनसंबंधोस्त्येवयतेरपि कौपीनाच्छादनार्थंवावासोपिबिभृयात्तथा योगसंभारभेदांश्चगृह्णीयात्पादुकेतथेत्यादिवचनाद्वस्त्रपुस्तकसंबंधोस्त्येव नैष्ठिकेपिशरीरयात्रार्थंवस्त्रादिसंबंधोस्त्येवेति तद्विभागकथनंयुक्तमेव १४२ इदानींस्वर्यातस्यापुत्रस्यपत्न्यादयोधनभाजइत्यस्यापवादमाह वि-

संसृष्टिनस्तुसंसृष्टीसोदरस्यतुसोदरः दद्यादपहरेच्चांशंजातस्यचमृतस्यच १४३

भक्तंधनंपुनर्मिश्रीकृतंसंसृष्टंतदस्यास्तीतिसंसृष्टी संसृष्टित्वंचनयेनकेनापि किंतुपित्राभ्रात्रापितृव्येणवा यथाहबृहस्पतिः विभक्तोयः पुनःपित्राभ्रात्रावैकत्रवैस्थितः पितृव्येणाथवैप्रीत्यासतत्संसृष्टउच्यतइति तस्यसंसृष्टिनोमृतस्यांशंविभागंविभागकालेअविज्ञातगर्भायांभार्यायांपश्चादुत्पन्नस्यपुत्रस्यसंसृष्टीदद्यात् पुत्राभावेसंसृष्ट्येवापहरेत् गृह्णीयात् नपत्न्यादिः संसृष्टिनस्तुसंसृष्टीत्यस्यापवादमाह संसृष्टिनः संसृष्टीत्यनुवर्तते अतश्चसोदरस्यसंसृष्टिनोमृतस्यांशंसोदरः संसृष्टीसंसृष्टानुजातस्यदद्यात् तदभावेपहरेदितिसंबंधः पूर्ववत् एवंचसोदरासोदरसंसर्गेसोदरसंसृष्टिनोधनंसोदरएवगृह्णाति नभिन्नोदरः संसृष्ट्यपीतिपूर्वोक्तस्यापवादः १४३

इदानींसंसृष्टिन्यपुत्रेस्वर्याते संसृष्टिनोभिन्नोदरस्यसोदरस्यचासंसृष्टिनः सद्भावेकस्यधनग्रहणमितिविवक्षायां द्वयोर्विभज्यग्रहणेकारणमाह
अन्योदर्यः सापत्नोभ्रातासंसृष्टीधनंहरेत् नपुत्रः अन्योदर्योधनंहरेदसंसृष्टी अनेनान्वयव्यतिरेकाभ्यामन्योदर्यस्यसंसृष्टित्वंधनग्रहणेकारणमु
क्तंभवति असंसृष्टीत्येतदुत्तरेणापिसंबध्यते अतश्चासंसृष्ट्यपिसंसृष्टिनोधनमाददीत कोसावित्यतआह संसृष्टइति संसृष्टएकोदरसंसृष्टः
सोदरइतियावत् अनेनासंसृष्टस्यापिसोदरस्यधनग्रहणेसोदरत्वंकारणमुक्तम् संसृष्टइत्युत्तरेणापिसंबध्यते तत्रचसंसृष्टीत्यर्थः
नान्यमातृजः अत्रैवशब्दाध्याहारेणव्याख्यानंकार्यं संसृष्ट्यप्यन्यमातृजएवसंसृष्टिनोधनंनाददीतेति एवंचासंसृष्ट्यपिवाददद्यादित्यपिश्चब्दश्र

अन्योदर्यस्तुसंसृष्टीनान्योदर्योधनंहरेत् असंसृष्ट्यपिवाददद्यात्संसृष्टोनान्यमातृजः १४५

वणात् संसृष्टोनान्यमातृजएवेत्यवधारणानिषेधाद्दसंसृष्टसोदरस्य संसृष्टभिन्नोदरस्यचविभज्यग्रहणंकर्तव्यमित्युक्तंभवति द्वयोरपि
धनग्रहणकारणस्यैकैकस्यसद्भावात् एतदेवस्पष्टीकृतंमनुना विभक्ताःसहजीवंतोविभजेरन्पुनर्यदीतिसंसृष्टिविभागंप्रक्रम्ययेषांज्ये
ष्ठः कनिष्ठोवाहीयेतांशप्रदानतः म्रियेतान्यतरोवापितस्यभागोनलुप्यते सोदर्याविभजेयुस्तंसमेत्यसहिताःसमम् भ्रातरोयेचसंसृष्टा
भगिन्यश्चसनाभयइतिवदतायेषांभ्रातृणांसंसृष्टिनांमध्येज्येष्ठःकनिष्ठोवामध्यमोवांशप्रदानतोंशप्रदाने सार्वविभक्तिकस्तसिः विभा-
गकालइतियावत् हीयतेस्वांशाद्भ्रश्यते आश्रमांतरपरिग्रहेणब्रह्महत्यादिनावाम्रियेत वातस्यभागोनलुप्यते अतःपृथगुद्धरणीयोनसंसृ

ष्टिन एव गृह्णीयुरित्यर्थः तस्योद्धृतस्य विनियोगमाह सोदर्याविभजेयुस्तमिति समुद्धृतं भागं सोदर्याः सहोदरा असंसृष्टा अपि समेत्य दे शांतरगता अपि समागम्य सहिताः संभूय समं नन्यूनाधिकभावेन येच भ्रातरो भिन्नोदराः संसृष्टास्ते न च सनाभयो भगिन्यश्च समं विभजेयुः समं विभज्य गृह्णीयुरित्यर्थः १४४ पुत्रपत्न्यादिसंसृष्टिनां यद्दायग्रहणमुक्तं तस्यापवादमाह क्लीबस्तृतीया प्रकृतिः पतितो ब्रह्महत्यादि ना तज्जः पतितोत्पन्नः पंगुः पादविकलः उन्मत्तकः वातिकपैत्तिकश्लैष्मिकसन्निपातग्रहावेशलक्षणैरुन्मादैरभिभूतः जडो विकलांतः करणः हिताहितावधारणाक्षम इति यावत् अंधो नेत्रेंद्रियविकलः अचिकित्स्यरोगः अप्रतिसमाधेयक्षयादिरोगग्रस्तः आद्यशब्देना

क्लीबोथ पतितस्तज्जः पंगुरुन्मत्तको जडः अंधोचिकित्स्यरोगाद्या भर्तव्याः स्युर्निरंशकाः १४५

श्रमांतरगतपितृद्वेष्ट्युपपातकिबधिरमूकनिरिंद्रियाणां ग्रहणं यथाह वसिष्ठः अनंशास्त्वाश्रमांतरगता इति नारदेनापि पितृद्विट्पतितः षंढो यश्च स्यादौपपातिकः औरसा अपि नैते शंलभेरन्क्षेत्रजाः कुत इति मनुरपि अनंशौ क्लीबपतितौ जात्यंधपतितौ तथा उन्मत्तजड मूकाश्च येच केचिन्निरिंद्रिया इति निरिंद्रियो निर्गतमिंद्रियं यस्माद्व्याध्यादिना स निरिंद्रियः एते क्लीबादयो ऽनंशा रिक्थभाजो न भवंति के वलमशनाच्छादनदानेन पोषणीया भवेयुः अभरणे तु पतितत्वदोषः सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा ग्रासाच्छादनमत्यंतं पतितो ह्यददद्भवेदिति मनुस्मरणात् अत्यंतं यावज्जीवमित्यर्थः एतेषां विभागात्प्रागेव दोषप्राप्तावनंशत्वमुपपन्नं न पुनर्विभक्तस्य विभा-

गोन्तरकालमप्यौषधादिनादोषनिर्हरणेभागप्राप्तिरस्त्येव विभक्तेषुसुतोजातःसवर्णायांविभागभागि त्यस्यसमानन्यायत्वात् पतिता
दिषुपुल्लिंगत्वमविवक्षितं अतश्चपत्नीदुहितृमात्रादीनामप्युक्तदोषदुष्टानामनंशत्वंवेदितव्यम् १५५ क्लीबादीनामनंशत्वात्तत्पुत्राणांम
प्यनंशत्वेप्राप्तेइदमाह एतेषांक्लीबादीनामौरसाःक्षेत्रजावापुत्रानिर्दोषा अंशग्रहणविरोधिक्लैब्यादिदोषरहिताभागहारिणोंशग्राहिणोभ
वंति तत्रक्लीबस्यक्षेत्रजःपुत्रःसंभवत्यन्येषामौरसाअपि औरसक्षेत्रजयोर्ग्रहणमितरपुत्रव्युदासार्थम् क्लीबादिदुहितॄणांविशेषमाह

औरसक्षेत्रजास्त्वेषांनिर्दोषाभागहारिणः सुताश्चैषांप्रभर्तव्यायावद्वैभर्तृसात्कृताः १५६
अपुत्रायोषितश्चैषांभर्तव्याःसाधुवृत्तयः निर्वास्याव्यभिचारिण्यःप्रतिकूलास्तथैवच १५७
पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् आधिवेदनिकाद्यंचस्त्रीधनंतत्प्रकीर्तितम् १५८

एषांक्लीबादीनांसुतादुहितरोयावद्विवाहसंस्कृताभवंति तावद्भरणीयाःचशब्दात्संस्कार्याश्च १५६ क्लीबादिपत्नीनांविशेषमाह एषांक्लीबा
दीनामपुत्राःपत्न्यःसाधुवृत्तयःसदाचाराश्चेद्भर्तव्याःभरणीयाः व्यभिचारिण्यस्तुनिर्वास्याःप्रतिकूलास्तथैवचनिर्वास्याःभरणीयाश्चाव्यभिचा
रिण्यश्चेत् नपुनःप्रातिकूल्यमात्रेणभरणमपिनकर्तव्यम् १५७ विभजेरन्सुताःपित्रोरित्यत्रस्त्रीपुंसधनविभागंसंक्षेपेणाभिधायपुरुषधन
विभागोविस्तरेणाभिहितः इदानींस्त्रीधनविभागंविस्तरेणविधास्यन्तत्स्वरूपंतावदाह पित्रामात्रापत्याभ्रात्राचयद्दत्तंयच्चविवाहकाले

ग्नावधिकृत्य मातुलादिभिर्दत्तं आधिवेदनिकं अधिवेदननिमित्तं अधिविन्नं स्त्रियै दद्यादित्यादि वक्ष्यमाणं आद्यशब्देन रिक्थक्रयसंवि-
भागपरिग्रहाधिगमनप्राप्तमेतत् स्त्रीधनं मन्वादिभिरुक्तं स्त्रीधनशब्दश्चयौगिको न पारिभाषिकः योगसंभवे परिभाषाया अयुक्तत्वात्
यत्पुनर्मनुनोक्तम् अध्यग्न्यध्यावहनिकं दत्तं च प्रीतिकर्मणि भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतमिति स्त्रीधनस्य षड्विधत्वं तन्न्यू
नसंख्याव्यवच्छेदार्थं नाधिकसंख्याव्यवच्छेदाय अध्यग्न्यादिस्वरूपं च कात्यायनेनाभिहितम् विवाहकाले यत्स्त्रीभ्यो दीयते वन्हिसन्निधौ त
दध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्तितम् यत्पुनर्लभते नारी नीयमाना पितुर्गृहात् अध्यावहनिकं नाम स्त्रीधनं तदुदाहृतम् प्रीत्याद

बंधुदत्तं यथाशुल्कमन्वाधेयकमेव च अतीतायामप्रजसि बांधवास्तदवाप्नुयुः १४९

त्तं तु यत्किंचित्श्वश्र्वा वा श्वशुरेण वा पादवंदनिकं चैव प्रीतिदत्तं तदुच्यते ऊढया कन्यया वापि पत्युः पितृगृहेपि वा भ्रातुः सकाशात्पित्रो
र्वा लब्धं सौदायिकं स्मृतमिति १४८ किंच बंधुभिः कन्याया मातृबंधुभिः पितृबंधुभिश्च दत्तं शुल्कं यद्गृहीत्वा कन्या दीयते अन्वाधेयकं
परिणयनादनु पश्चादाहितं दत्तं उक्तं च कात्यायनेन विवाहात्परतो यच्च लब्धं भर्तृकुलात्स्त्रिया अन्वाधेयं तु तद्द्रव्यं लब्धं पितृकुलात्तथे
ति स्त्रीधनं परिकीर्तितमिति गतेन संबंधः एवं स्त्रीधनमुक्तं तद्विभागमाह तत्पूर्वोक्तं स्त्रीधनमप्रजसि अनपत्यायां दुहितृदौहित्र-
पुत्रपौत्ररहितायां स्त्रियामतीतायां बांधवा भर्त्रादयो वक्ष्यमाणा गृह्णंति १४९ ७ ५ ७

सामान्येनबांधवाधनग्रहणाधिकारिणोदर्शिताइदानींविवाहभेदेनाधिकारिभेदमाह अप्रजः स्त्रियाः पूर्वोक्तायाःब्राह्मदैवार्षप्राजा
पत्येषुचतुर्षुविवाहेषुभार्यात्वंप्राप्तायाअतीतायाःपूर्वोक्तंधनंप्रथमंभर्तुर्भवति तदभावेतत्प्रत्यासन्नानांसपिंडानांभवति शेषेष्वा
सुरगांधर्वराक्षसपैशाचेषुविवाहेषु तदप्रज स्त्रीधनंपितृगामि माताचपिताचपितरौ तौगच्छतीतिपितृगामि एकशेषनिर्दिष्टायाअ
पिमातुः प्रथमंधनग्रहणंपूर्वमेवोक्तं तदभावेतत्प्रत्यासन्नानांधनग्रहणं सर्वेष्वेवविवाहेषुप्रसूताप्रसववतीचेद्दुहितॄणांतद्धनंभवति
अत्रदुहितृशब्देनदुहितृदुहितरउच्यंते साक्षाद्दुहितॄणांयातुर्दुहितरःशेषमित्यत्रोक्तत्वात् अतश्चमातृधनंमातरिवृत्तायांप्रथमं

अप्रजस्त्रीधनंभर्तुर्ब्राह्मणादिष्वतुर्ष्वपि दुहितॄणांप्रसूताचेच्छेषेषुपितृगामितत् १५०

दुहितरोगृह्णंति अत्रचोढानूढासमवायेऽनूढागृह्णंति तदभावेपरिणीताः तत्रापिप्रतिष्ठिताप्रतिष्ठितासमवायेऽप्रतिष्ठितागृह्णाति तदभावेप्र
तिष्ठिता यथाहगौतमः स्त्रीधनंदुहितॄणामप्रत्तानामप्रतिष्ठितानांचेति तत्रचशब्दात् प्रतिष्ठितानांच अप्रतिष्ठिता अनपत्यानिर्धनावा ए-
तच्चशुल्कव्यतिरेकेण शुल्कंसोदर्याणामेव भगिनीशुल्कःसोदर्याणामूर्ध्वंमातुरितिगौतमवचनात् सर्वासांदुहितॄणामभावेदुहितृदुहि-
तरोगृह्णंति दुहितॄणांप्रसूताचेदित्यस्माद्वचनात् तासांभिन्नमातृकाणांविषमाणांसमवायेमातृद्वारेणभागकल्पना प्रतिमातृवास्ववर्गे
भागविशेषइतिगौतमस्मरणात् दुहितृदौहित्रीणांसमवायेदौहित्रीणांकिंचिदेवदातव्यम् यथाहमनुः यास्तासांस्युर्दुहितरस्तासामपि

यथार्हतः मातामह्याधनात्किंचित्प्रदेयंप्रीतिपूर्वकमिति दौहित्रीणामप्यभावेदौहित्राधनहारिणः यथाहनारदः मातुर्दुहितरोभावेदुहितॄणांत
दन्वयइति तच्छब्देनसन्निहितदुहितृपरामर्शात् दौहित्राणामभावेपुत्रागृह्णंति ताभ्यऋतेन्वयइत्युक्तत्वात् मनुरपिदुहितॄणांच्चपुत्राणां
च्चमातृधनसंबंधंदर्शयति जनन्यांसंस्थितायांतुसमंसर्वेसहोदराः भजेरन्मातृकंरिक्थंभगिन्यश्चसनाभयइति मातृकंरिक्थंसर्वेसहोद
राःसमंभजेरन् सनाभयोभगिन्यश्चसमंभजेरन्नितिसंबंधः नपुनःसहोदराभगिन्यश्चसंभूयभजेरन्निति इतरेतरयोगस्यद्वंद्वैकशे
षाभावादप्रतीतेः विभागकर्तृत्वान्वयेनापिच्चशब्दोपपत्तेः यथादेवदत्तःकृषिंकुर्याद्यज्ञदत्तश्चेति समग्रहणमुद्धारविभागनिवृत्त्यर्थं सोद

दत्वाकन्यांहरन्दंड्योव्ययंदद्याच्चसोदयम्

रग्रहणंभिन्नोदरनिवृत्त्यर्थं अनपत्यहीनजातिस्त्रीधनंतुभिन्नोदराप्युत्तमजातिसपत्नीदुहितागृह्णाति तदभावेतदपत्यं तथाच्चमनुः
स्त्रियास्तुयद्भवेद्वित्तंपित्रादत्तंकथंचन ब्राह्मणीतद्धरेत्कन्यातदपत्यस्यवाभवेदिति ब्राह्मणीग्रहणमुत्तमजात्युपलक्षणं अतश्चानपत्यवैश्या
धनं क्षत्रियाकन्यागृह्णाति पुत्राणामभावेपौत्राः पितामहीधनहारिणः रिक्थभाजऋणंप्रतिकुर्युरितिगौतमस्मरणात् पुत्रपौत्रैर्ऋणंदेयमि
तिपौत्राणामपिपितामहर्णापाकरणेधिकारात् पौत्राणामप्यभावेपूर्वोक्तभर्त्रादयोबांधवाधनहारिणः १५० स्त्रीधनप्रसंगेनवाग्दत्ताविष
यंकिंचिदाह कन्यांवाचादत्वापहरन्द्रव्यानुबंधाद्यनुसारेणराज्ञादंडनीयः एतच्चापहरणकारणाभावे सतितुकारणेदत्तामपिहरेत्कं

न्यांश्चेयांश्चेद्दूरआव्रजेदित्यपहाराभ्यनुज्ञानान्नदंड्यः यच्चवाग्दाननिमित्तंवरेणस्वसंबंधिनांकन्यासंबंधिनांचोपचारार्थंधनंव्ययीकृतंतत्सर्वंसो दयंसवृद्धिकंकन्यादातावरायदद्यात् अथकथंचिद्वाग्दत्तासंस्कारात्प्राक्म्रियेततदाकिंकर्तव्यमित्यतआह यदिवाग्दत्तामृतातदायत्पूर्वमं गुलीयकादिशुल्कंवावरेणदत्तंतद्वरआददीत परिशोध्योभयव्ययं उभयोरात्मनः कन्यादातुश्चयोव्ययस्तंपरिशोध्यविगणय्यावशि ष्टमाददीत यत्तुकन्यायैमातामहादिभिर्दत्तंशिरोभूषणादिकंवाक्रमागतंतत्सहोदरभ्रातरोगृह्णीयुः रिक्थंकन्यायामृतायागृह्णीयुःसोदरा स्तदभावेमातुस्तदभावेपितुरितिबौधायनस्मरणात् १५१ मृतप्रजास्त्रीधनंभर्तृगामीत्युक्तं इदानींजीवत्याःसप्रजायाअपिस्त्रियाधन

मृतायांदत्तमादद्यात्परिशोध्योभयव्ययम् १५१ दुर्भिक्षेधर्मकार्येच व्याधौसंप्रतिरोधके गृहीतं
स्त्रीधनंभर्तानस्त्रियैदातुमर्हति १५२

ग्रहणेक्वचिद्भर्तुरभ्यनुज्ञामाह दुर्भिक्षेकुटुंबभरणार्थंधर्मकार्येअवश्यकार्ये- व्याधौच संप्रतिरोधकेबंदिग्रहणनिग्रहादौद्रव्यांतररहितःस्त्रीधनंगृह्णन् भर्तानपुनर्दातुमर्हति प्रकारांतरेणापहरन्दद्यात् भर्तृव्यतिरेकेण जीवत्याःस्त्रियाधनंकेनापिदायादेननगृहीतव्यम् जीवतीनांतुतासांयेतद्धरेयुःस्वबांधवाः तांश्छिष्याच्चौरदंडेनधार्मिकःपृथिवीपतिरि तिदंडविधानात् तथा पत्यौजीवतियःस्त्रीभिरलंकारोधृतोभवेत् नतंभजेरन्दायादाभजमानाःपतंतितेइतिदोषश्रवणाच्च १५२ आधिवेदनिकंस्त्रीधनमुक्तंतदाह यस्याउपरिविवाहःसाधिविन्नासाचासौस्त्रीचेत्यधिविन्नस्त्रीतस्यैअधिविन्नस्त्रियैआधिवेद

निकं आधिवेदन निमित्तं धनं समं यावदधिवेदनार्थं व्ययीकृतं तावद्दद्यात् यस्यैश्वशुरेण भर्त्रा वा स्त्रीधनं न दत्तं दत्ते पुनः स्त्रीधने आधिवेद-
निकद्रव्यस्यार्द्धं दद्यात् अर्द्धशब्दश्चात्र समविभागवचनो न भवति अतश्च यावता तत्पूर्वदत्तमाधिवेदनिकसमं भवति तावद्देयमित्यर्थः
१५३ एवं विभागमुक्त्वाइदानीं तत्संदेहे निर्णयहेतूनाह विभागस्य निन्हवे अपलापे ज्ञातिभिः पितृभिर्मातृभिः बंधुभिः मातुलादिभिः
साक्षिभिः पूर्वोक्तलक्षणैः लेख्येन च विभागपत्रेण विभागभावना विभागनिर्णयो ज्ञातव्या तथा योतकैः पृथक्कृतैर्गृहक्षेत्रैश्च पृथक्कृष्यादि

अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम् नदत्तं स्त्रीधनं यस्यै दत्ते त्वर्द्धं प्रकीर्तितम् १५३
विभागनिन्हवे ज्ञातिबंधुसाक्ष्यभिलेखितैः विभागभावना ज्ञेया गृहक्षेत्रैश्च योतकैः १५४

कार्यप्रवर्तनं पृथक् पंचमहायज्ञादिधर्मानुष्ठानं च नारदेन विभागलिंगमुक्तम् विभागधर्मसंदेहे दायादीनां विनिर्णयः ज्ञातिभिर्भा
गलेख्येन पृथक्कार्यप्रवर्तनात् भ्रातॄणामविभक्तानामेको धर्मः प्रवर्तते विभागे सति धर्मोपि भवेत्तेषां पृथक् पृथगिति तथापराण्य
पि विभागलिंगानि तेनैवोक्तानि साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च विभक्ता भ्रातरः कुर्युर्नाविभक्ताः कथंचनेति इति रिक्थविभागप्रकर
णम् १५४

अधुनासीमाविवादनिर्णयउच्यते ग्रामद्वयसंबंधिनः क्षेत्रस्यसीम्नोविवादेतथैकग्रामांतर्वर्तिक्षेत्रमर्यादाविवादेच सामंतादयःस्थलांगा रादिभिः पूर्वकृतैःसीमालक्षणैरुपलक्षितांचिन्हितांनयेयुःनिश्चिनुयुः सीमाक्षेत्रादिमर्यादा साचचतुर्विधा जनपदसीमाग्रामसीमाक्षे त्रसीमागृहसीमाचेति साचयथासंभवंपंचलक्षणा तदुक्तंनारदेन ध्वजिनीमत्सिनीचैवनैधानीभयवर्जिता राजशासननीताचसी मापंचविधास्मृतेति ध्वजिनीवृक्षादिलक्षिता वृक्षादीनांप्रकाशत्वेन ध्वजतुल्यत्वात् मत्सिनीसलिलवती मत्सशब्दस्य आधारजल

सीम्नोविवादेक्षेत्रस्यसामंताःस्थविरादयः गोपाःसीमाकृषाणाश्चसर्वेचवनगोचराः
१५५ नयेयुरेनंसीमानांस्थलांगारतुषद्रुमैः सेतुवल्मीकनिम्नास्थिचैत्याद्यैरुपलक्षितं १५६

लक्षणत्वात् नैधानीनिखाततुषांगारादिमती तेषांनिखनत्वेननिधानतुल्यत्वात् भयवर्जिता अर्थिप्रत्यर्थिपरस्परसंप्रतिप त्तिनिर्मिता राजशासननीताज्ञातृचिन्हाभावेराजेच्छयानिर्मिता एवंभूतायांसीमायांविवादःसंभवति यथाहकात्यायनः आधि क्यन्यूनताचांशेअस्तिनास्तित्वमेवच अभोगभुक्तिःसीमाचषड्विवादस्यहेतवइति तथाहि ममात्रपंचनिवर्तनायाभूमेरधि काभूरस्तीति केनचिदुक्ते पंचनिवर्तनैवनाधिकेत्याधिक्येविवादः पंचनिवर्तनामदीयाभूमिरित्युक्तेनततोन्यूनैवेति

न्यूनतायांपंचनिवर्तनोममांशइत्युक्ते अंशएवनास्तीत्यस्तिनास्तित्वविवादः मदीयाभूः प्रागविद्यमानभोगेवभुज्यतेइत्युक्ते नसंततानिरंतन्ये
वभुक्तिरित्यभोगभुक्तोविवादः इयंमर्यादेयंवेतिसीमाविवादइतिषट्प्रकारएवविवादः संभवति षट्प्रकारेपिभूविवादेश्चुत्यर्थाभ्यांसी
मायाअपिनिर्णीयमानत्वात् सीमानिर्णयप्रकारएतस्यांतर्भावः समंताद्भवाःसामंताः चतसृषुदिक्ष्वनंतरग्रामादयस्तेचप्रतिसीमंव्यव–
स्थिताः ग्रामोग्रामस्यसामंतः क्षेत्रंक्षेत्रस्यकीर्तितम् गृहंगृहस्यनिर्दिष्टंसमंतात्परिरभ्यहीतिकात्यायनवचनात् ग्रामादिशब्देनतत्स्थाः
पुरुषालक्ष्यंते ग्रामःपलायितइति यथा सामंतग्रहणंचतत्संसक्ताद्युपलक्षणार्थं उक्तंचकात्यायनेन संसक्तकास्तुसामंतास्तत्सं
सक्तास्तथोत्तराः संसक्तसक्तसंसक्ताःषट्प्रकाराःप्रकीर्तिताइति स्थविरावृद्धाः आदिग्रहणेनमौलोद्धृतयोर्ग्रहणम् वृद्धादिलक्षणं-
चतेनैवोक्तं निष्पाद्यमानंयैर्दृष्टंतत्कार्यंतद्गुणान्वितम् वृद्धावायदिवावृद्धास्तेतुवृद्धाःप्रकीर्तिताः येतत्रपूर्वेसामंताःपश्चाद्देशांतरंग
ताः तन्मूलत्वात्तुतेमौलाऋषिभिःपरिकीर्तिताः उपश्रवणसंभोगकार्याख्यानोपचिन्हिताः उद्धरंतिपुनर्यस्मादुद्धृतास्तेततःस्मृताइ
ति गोपाः गोचारकाः सीमाकृषाणाः सीमासंनिहितक्षेत्रकर्षकाः सर्वेचवनगोचराः वनेगोचरावनचारिणोव्याधादयः तेचमनुनो-
क्ताः व्याधान्शाकुनिकान्गोपान्कैवर्तान्मूलखातकान् व्यालग्राहानुंच्छवृत्तीनन्यांश्चवनगोचरानिति स्थलमुन्नतोभूप्रदेशः अंगा
रा निर्वाणांगाराः तुषाधान्यत्वचः द्रुमान्यग्रोधादयः सेतुर्जलप्रवाहबंधः चैत्यंपाषाणबंधः आदिशब्देनवेणुवालुकादीनांग्रहणम् ए
तानिचप्रकाशाप्रकाशभेदेनद्विप्रकाराणि तथाचमनुः सीमावृक्षांस्तुकुर्वीतन्यग्रोधाश्वत्थकिंशुकान् शाल्मलीशालतालांश्चक्षीरि-
अंगारोग्नेरुच्छिष्टं॰

णाश्चैवपादपान् गुल्मान्वेणूंश्चविविधान्शमीवल्लीस्थलानिच शरान्कुब्जकगुल्मांश्चयथासीमाननश्यति तडागान्युदपानानिवाप्यःप्र
स्रवणानिच सीमासंधिषुकार्याणिदेवतायतनानिचेति प्रकाशरूपाणि उपच्छन्नानिचान्यानिसीमालिंगानिकारयेत् सीमाज्ञानेनृणां
वीक्ष्यनित्यंलोकेविपर्ययम् अश्मनोस्थीनिगोवालांस्तुषान्भस्मकपालिकाः करीषमिष्टकांगारशर्करावालुकास्तथा यानिचैवंप्रकारा
णिकालाद्भूमिर्नभक्षयेत् तानिसंधिषुसीमायामप्रकाशानिकारयेत् एतैर्लिंगैर्नयेत्सीमांराजाविवदमानयोरितिप्रच्छन्नलिंगानि एतैः
प्रकाशाप्रकाशरूपैर्लिंगैः सामंतादिप्रदर्शितैः सीमांप्रतिविवादज्ञानयोःसीमानिर्णयंकुर्याद्राजा१५५ १५६ यदापुनश्चिन्हानिनसंति

सामंतावासमग्रामाश्चत्वारोष्टौदशापिवा रक्तस्रग्वसनाःसीमांनयेयुःक्षितिधारिणः१५७

विद्यमानानिवालिंगालिंगतयासंदिग्धानितदानिर्णयोपायमाह सामंताःपूर्वोक्तलक्षणाः समग्रामाश्चत्वारोष्टौदशापिवेति एवंसमसंख्याः
प्रत्यासन्नग्रामीणाः रक्तस्रग्विणोरक्तांबरामूर्ध्न्यारोपितक्षितिखंडाः सीमानंनयेयुः दर्शयेयुः सामंतावेतिविकल्पाभिधानंस्मृत्यंतरोक्तसा-
क्ष्यभिप्रायं यथाहमनुः साक्षिप्रत्ययएवस्यात्सीमावादविनिर्णयइति तत्रचसाक्षिणांनिर्णेतृत्वंमुख्यं तदभावेसामंतानां तदु-
क्तं साक्ष्यभावेतुचत्वारोग्रामाःसीमांतवासिनः सीमाविनिर्णयंकुर्युःप्रयताराजसन्निधाविति तदभावेतत्संसक्तादीनांनिर्णेतृत्वं य
थाहकात्यायनः स्वार्थसिद्धौप्रदुष्टेषुसामंतेष्वर्थगौरवात् तत्संसक्तैस्तुकर्तव्यउद्धारोनात्रसंशयः संसक्तेसक्तदोषेतुतत्संसक्ताः

प्रकीर्तिताः कर्तव्यान प्रदुष्टास्तु राज्ञा धर्मं विजानतेति सामंताद्यभावे मौलादयो ग्राह्याः तेषामभावे सामंता मौलवृद्धोद्धृतादयः स्था
वरे षट्प्रकारेपि कार्या नात्र विचारणेति कात्यायनक्रमाभिधानात् एते च सामंतादयः संख्या गुणातिरेकेण भवंति सामंताः साधनं पूर्वं नि
र्दोषाः स्युर्गुणान्विताः द्विगुणास्तूत्तरा ज्ञेयास्ततोन्ये त्रिगुणा मता इति स्मरणात् ते च साक्षिणः सामंतादयश्च स्वैः स्वैः शपथैः शापिताः सं
तः सीमानं नयेयुः शिरोभिस्ते गृहीत्वोर्वीं स्रग्विणो रक्तवाससः सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समंजसमिति मनुस्मरणात् नयेयु
रिति बहुवचनं द्वयोर्निरासार्थं नैकस्य एकश्चेदुन्नयेत्सीमां सोपवासः समुन्नयेत् रक्तमाल्यांबरधरो भूमिमादाय मूर्द्धनीति नारदेनैक-
स्याभ्यनुज्ञानात् योयं नैकः समुन्नयेत्सीमां नरः प्रत्ययवानपि गुरुत्वादस्य कार्यस्य क्रियैषा बहुषु स्थितेत्येकस्य निषेधः स उभयानुमतध
र्मविद्यतिरिक्तविषय इत्यविरोधः स्थलादिचिन्हाभावेपि साक्षिसामंतादीनां सीमाज्ञान उपायविशेषो नारदेनोक्तः निम्नगापहृतो
त्सृष्टनष्टचिन्हासु भूमिषु तत्प्रदेशानुमानाच्च प्रमाणाद्भोगदर्शनादिति निम्नगया नद्या अपहृते नापहरणेनोत्सृष्टानि स्वस्थानात्प्र
च्युतानि नष्टानि वा लिंगानि यासु मर्यादाभूमिषु तत्र तत्प्रदेशानुमानादुत्सृष्टनष्टचिन्हानां प्राचीनप्रदेशानुमानात् ग्रामादारभ्य सहस्र
दंडपरिमितं क्षेत्रमस्य ग्रामस्य पश्चिमे भागे इत्येवंविधात्प्रमाणाद्वा प्रत्यर्थिसमक्षमविप्रतिपन्नाया अस्मार्तकालोपलक्षितभुक्तेर्वा नि
श्चिनुयुः बृहस्पतिना चात्र विशेषो दर्शितः आगमं च प्रमाणं च भोगकालं च नाम च भूभागलक्षणं चैव ये विदुस्तेत्र साक्षिण इति एते
च साक्षिसामंतादयः शपथैः श्राविताः संतः कुलादिसमक्षं राज्ञा प्रष्टव्याः यथाह मनुः ग्रामेयककुलानां तु समक्षं सीम्नि साक्षिणः

प्रष्टव्याः सीम्निलिंगानितयोश्चैवचवादिनोरिति तेचपृष्टाः साक्ष्यादयः एकमत्येनसमस्ताः सीम्निनिर्णयंकुर्युः तैर्निर्णीतांसीमानंतत्प्रद-
र्शितसकललिंगयुक्तांसाक्ष्यादिनामान्वितांचाविस्मरणार्थंपत्रेसमारोपयेत् उक्तंचमनुना तेपृष्टास्तुयथाब्रूयुःसमस्ताःसीम्निनिर्ण
यम् निबध्नीयात्तथासीमांसर्वांस्तांश्चैवनामतइति एतेषांसामंतप्रभृतीनांसीमासंक्रमणादिनादारभ्ययावत्त्रिपक्षंराजदैविकंव्यसनं-
चेन्नोत्पद्यते तदातत्प्रदर्शनात्सीमानिर्णयः अयंचराजदैविकव्यसनावधिःकात्यायनेनोक्तः सीमासंक्रमणेकोशेपादस्पर्शेतथैवच त्रि
पक्षपक्षसप्ताहंदैवराजिकमिष्यतेइति १५७ यदात्वमीषामुक्तसाक्ष्यवचसांत्रिपक्षाभ्यंतरेरोगादिदृश्यते अथवाप्रतिवादिनिर्दि

## अनृतेतुपृथक्दंड्याराज्ञामध्यमसाहसम्

ष्टाभ्यधिकसंख्यागुणसाक्ष्यंतरविरुद्धवचनतातदातेमृषाभाषितयादंडनीयास्तदाह अनृतेमिथ्यावचनेनिमित्तभूतेसतिसर्वे
सामंताः प्रत्येकंमध्यमसाहसेनचत्वारिंशदधिकेनपणपंचशतेनदंडनीयाः सामंतविषयताचास्यसाक्षिमौल्यादीनांस्मृत्यंतरेदं
डांतरविधानादवगम्यते तथाचमनुः यथोक्तेननयंतस्तेपूयंतेसत्यसाक्षिणः विपरीतंनयंतस्तुदाप्याःस्युर्द्विशतंदमभिति-
नारदोपि अथचेदनृतंब्रूयुःसामंताःसीमनिर्णये सर्वेपृथक्पृथक्दंड्याराज्ञामध्यमसाहसमिति सामंतानांमध्यमसाह
संदंडमभिधाय शेषाश्चेदनृतंब्रूयुर्नियुक्ताभूमिकर्मणि प्रत्येकंतुजघन्यास्तेविनेयाःपूर्वसाहसमिति तत्संसक्तादिषुप्रथमंसाह

समुक्तवान् मौलादीनामपितमेवदंडमाह मौलवृद्धादयस्त्वन्ये दंडगत्यापृथक्पृथक् विनेयाः प्रथमेनैवसाहसेनानृतेस्थिताइति आदिशब्देनगोपशाकुनिकव्याधवनगोचराणांग्रहणम् यद्यपिशाकुनिकादीनांपापरतत्वाल्लिंगप्रदर्शनएवोपयोगोनसाक्षात्सीमानिर्णयेतथापिलिंगदर्शनएवमृषाभाषित्वसंभवाद्दंडविधानमुपपद्यतएव अनृतेतुपृथक्दंड्याइत्येतद्दंडविधानमज्ञानविषयम् बहूनांतुगृहीतानांनसर्वेनिर्णयंयदि कुर्युर्भयाद्वालोभाद्वादंड्यास्तूत्तमसाहसमितिज्ञानविषयेसाक्ष्यादीनांकात्यायनेनदंडांतरविधानात् तथासाक्षिवचनभेदेप्ययमेवदंडस्तेनैवोक्तः कीर्तितेयदिभेदःस्याद्दंड्यास्तूत्तमसाहसमिति एवमज्ञानादिनानृतवचने

अभावेज्ञातृचिन्हानांराजासीम्नःप्रवर्तिता १५८

साक्ष्यादीन्दंडयित्वापुनः सीमाविचारः प्रवर्तयितव्यः अज्ञानोक्तौदंडयित्वापुनःसीमांविचारयेदित्युक्त्वा त्यक्त्वादुष्टांस्तुसामंतानन्यान्मौलादिभिःसह संमिश्र्यकारयेत्सीमामेवंधर्मविदोविदुरितिनिर्णयप्रकारस्तेनैवोक्तः यदापुनःसामंतप्रभृतयोज्ञातारश्चिन्हानिचनसंतितदाकथंनिर्णयइत्यतआह ज्ञातृणांसामंतादीनांलिंगानांचवृक्षादीनामभावेराजैवसीम्नः प्रवर्तिता प्रवर्तयिता अंतर्भावितोत्रण्यर्थः ग्रामद्वयमध्यवर्तिनींविवादास्पदीभूतांभुवंसमंप्रविभज्य अस्येयंभूरस्येयमित्युभयोःसमर्प्यतन्मध्येसीमालिंगानिकुर्यात् यदातस्यांभूमावन्यतरस्योपकारातिशयोदृश्यतेतदातस्यैवग्रामस्यसकलाभूःसमर्पणीया यथाहमनुः सीमायामविषह्यायांस्वयंराजै

वधर्मवित् प्रदिशेद्भूमिमेकेषामुपकारादितिस्थितिरिति ५८ असत्यामप्यतद्भूद्वावाशंकायामस्याःस्मृतेर्न्यायमूलतांदर्शयितुमनि
देशमाह आरामः पुष्पफलोपचयहेतुर्भूभागः आयतनंनिवेशनं पलालकूटाद्यर्थविभक्तोभूप्रदेशः ग्रामः प्रसिद्धः ग्रामग्रहणंचनग-
राद्युपलक्षणार्थं निपानंपानीयस्थानं वापीकूपप्रभृतिकं उद्यानंक्रीडावनं वेश्मगृहं एतेष्वारामादिष्वयमेवसामंतसाक्ष्यादिलक्षणो-
विधिर्ज्ञातव्यः तथाप्रवर्षणोद्भूतजलप्रवाहेषु अनयोर्गृहयोर्मध्येनजलौघः प्रवहति अनयोर्वेत्येवंप्रकारेविवादे आदिग्रहणात्प्रासादा
दिष्वपिप्राचीनएवविधिर्वेदितव्यः तथाचकात्यायनः क्षेत्रकूपतटाकानांकेदारारामयोरपि गृहप्रासादावसथनृपदेवगृहेषुचेति ५९

आरामायतनग्रामनिपानोद्यानवेश्मसु एषएवविधिर्ज्ञेयोवर्षांबुप्रवहादिषु १५९

मर्यादायाःप्रभेदेचसीमातिक्रमणेतथा क्षेत्रस्यहरणेदंडाअधमोत्तममध्यमाः १६०

सीमानिर्णयमुक्त्वातत्प्रसंगेनमर्यादाप्रभेदनादौदंडमाह अनेकक्षेत्रमध्येव्यवच्छेदिकासाधारणाभूर्मर्यादा तस्याःप्रकर्षेणभेदनेसीमाति
क्रमणे सीमानमतिलंघ्यकर्षणेक्षेत्रस्यचभयादिप्रदर्शनेनहरणेयथाक्रमेण अधमोत्तममध्यमसाहसादंडावेदितव्याः क्षेत्रग्रहणंचात्रगृ
हारामाद्युपलक्षणार्थं यदापुनः स्वीयभ्रांत्याक्षेत्रादिकमपहरति तदाद्विशतोदमोवेदितव्यः यथाहमनुः गृहंतडागमारामंक्षेत्रंवाभीषया
हरन् शतानिपंचदंड्यःस्यादज्ञानाद्विशतोदमइति अपह्रियमाणक्षेत्रादिभूयस्त्वपर्यालोचनयाकदाचिदुत्तमोदंडःप्रयोक्तव्यः अतएव

ह वधः सर्वस्वहरणंपुरान्निर्वासनांकने नदंगच्छेदइत्युक्तोदंडउत्तमसाहसइति ६० यःपुनःपरक्षेत्रेसेतुकूपादिकंप्रार्थनयार्थदाने
न वालब्ध्वानुज्ञोनिर्मातुमिच्छतितन्निषेधतः क्षेत्रस्वामिनएवदंडइत्याह परकीयांभूमिमपहरन्नाशयन्नपिसेतुर्जलप्रवाहबंधः
क्षेत्रस्वामिनानप्रतिषेध्यः सच्चेदीषत्पीडाकरोबहूपकार कश्चभवति कूपश्चाल्पक्षेत्रव्यापित्वेनाल्पबाधोबहूदकत्वेन कल्याणकारक
श्चातोबहूदकोनैवनिवारणीयः कूपग्रहणंच वापीपुष्करिण्याद्युपलक्षणार्थं यतःपुनरसौसमक्षेत्रवर्तितयाबहुबाधोनद्यादिसमीपक्षे
त्रवर्तितयाअल्पोपकारकस्तदासौनिषेध्यइत्यर्थादुक्तंभवति सेतोश्चद्वैविध्यमुक्तंनारदेन सेतुश्चद्विविधोज्ञेयःखेयोबध्यस्तथैवच तोयप्रव

ननिषेध्योल्पबाधस्तुसेतुःकल्याणकारकः परभूमिंहरन्कूपःस्वल्पक्षेत्रोबहूदकः १६१ स्वामिनेयोनिवेद्यैवक्षेत्रे
सेतुंप्रवर्तयेत् उत्पन्नेस्वामिनोभोगस्तदाभावेमहीपतेः १६२

र्तनात्खेयोबंध्यःस्यात्तन्निवर्तनादिति यदात्वन्यनिर्मितंसेतुं
भेदनादिनानष्टंस्वयंसंस्करोति तदापूर्वस्वामिनंतद्वंश्यंनृपंवापृष्ट्वैवसंस्कुर्यात् यथाहनारदः पूर्वप्रवृत्तमुत्सन्नमपृष्ट्वास्वामिनंतुयःसेतुं
प्रवर्तयेत्कश्चिन्नसतत्फलभाग्भवेत् मृतेतुस्वामिनिपुनस्तद्वंश्येवापिमानवे राजानमामंत्र्यततःकुर्यात्सेतुप्रवर्तनमिति ६१ क्षेत्रस्वामिनं
प्रत्युपदिष्टमिदानींसेतोःप्रवर्तयितारंप्रत्याह क्षेत्रस्वामिनमनभ्युपगम्यतदभावेराजानंवायःपरक्षेत्रेसेतुंप्रवर्तयत्यसौफलभाग्नभवत्य-
पितुतदुत्पन्नेफलेक्षेत्रस्वामिनोभोगस्तदभावेराज्ञः तस्मात्प्रार्थनयाअर्थदानेनवाक्षेत्रस्वामिनंतदभावेराजानंवानुज्ञाप्यैवपरक्षेत्रेसेतुःप्र
वर्तनीयइतितात्पर्यं ६२

क्षेत्रस्वामिनासेतुर्नप्रतिषेध्यइत्युक्तमिदानींतस्यैवप्रसक्तानुप्रसक्त्याकंचिद्विध्यंतरमाह यः पुनः क्षेत्रस्वामिणार्थ्ये अहमिदंक्षेत्रंकृषामीतिअं गीकृत्य पश्चादुत्सृजतिनचान्येनकर्षयति तच्चक्षेत्रंयद्यपिफालाहतंईषद्धलेनविदारितं नसम्यग्बीजवापार्हं तथापितस्याकृष्टस्यफलंयावन्त्रोत्पन्नस्यर्हसामंतादिकल्पितं तावदसौकर्षकोदापनीयः तच्चक्षेत्रंपूर्वकर्षकादाच्छिद्यान्येनकारयेत् इतिसीमाविवादप्रकरणम् १६३ व्यवहारपदानांपरस्परहेतुहेतुमद्भावाभावात् तेषामाद्यमृणादानमित्यादिनापाठक्रमोनविवक्षितइति स्वुत्क्रमेणस्वामिपालविवादोऽभि

फालाहतमपिक्षेत्रंनकुर्याद्योनकारयेत् सप्रदाप्यःकृष्टफलंक्षेत्रमन्येनकारयेत् १६३
माषानष्टौतुमहिषीसस्यघातस्यकारिणी दंडनीयातदर्द्धंतुगौस्तदर्द्धमजाविकम् १६४

धीयते परसस्यविनाशकारिणीमहिषी अष्टौमाषान्दंडनीया गौस्तदर्द्धंचतुरोमाषान् अजामेषाश्चमाषद्वयंदंडनीयाः महिष्यादीनांधन संबंधाभावात्तत्स्वामीपुरुषोलक्ष्यते माषश्चात्रताम्रिकपणविंशतितमोभागः माषोविंशतितमोभागः पणस्यपरिकीर्तितइतिनारदस्मरणात् एतच्चाज्ञानविषयम् ज्ञानपूर्वंतु पणस्यपादौद्वौगांत द्विगुणंमहिषींतथा तथाजाविकवत्सानांपादोदंडःप्रकीर्तितइतिस्मृत्यंतरोक्तंद्रष्टव्यम् यत्पुनर्नारदेनोक्तं माषंगांदापयेद्दंडंद्वौमाषौमहिषींतथा तथाजाविकवत्सानांदंडःस्यादर्द्धमाषकइतितत्पुनःप्ररोहयोग्यमूलावशेषभक्षणविषयं १६५

अपसधातिशयेन कश्चिद्दंडद्वैगुण्यमाह यदिपशवः परक्षेत्रेसस्यंभक्षयित्वा तत्रैवानिवारिताः शेरते तदा यथोक्ताद्दंडाद्द्विगुणोदंडोवे
दितव्यः सवत्सानांपुनर्भक्षयित्वोपविष्टानां यथोक्ताच्चतुर्गुणोदंडोवेदितव्यः वसतांद्विगुणःप्रोक्तः सवत्सानांचतुर्गुणइतिवचनात् क्षेत्रां
तरेपथ्यंतरेवातिदेशमाह विवीतः प्रचुरतृणकाष्ठोरक्ष्यमाणः परिगृहीतोभूप्रदेशः तदुपघातेपीतरक्षेत्रदंडेनसमंदंडमेषांमहि-
ष्यादीनांविद्यात् खरश्चउष्ट्रश्चखरोष्ट्रंतन्महिषीसमम् महिषीयत्रतादृशेनदंडेनदंड्यते तत्रतादृशेनैवदंडेनखरोष्ट्रमपिप्रत्येकंदंडनीयं
सस्योपरोधकत्वेनखरोष्ट्रयोः प्रत्येकंमहिषीतुल्यत्वाद्दंडस्यचापराधानुसारत्वात्खरोष्ट्रमितिसमाहारोनविवक्षितः १६५ परसस्यविना

भक्षयित्वोपविष्टानांयथोक्ताद्द्विगुणोदमः सममेषांविवीतेपिखरोष्ट्रंमहिषीसमम् १६४ यावत्सस्यंविनश्येत्तुताव
त्स्यात्क्षेत्रिणःफलम् गोपस्ताड्यस्तुगोमीतुपूर्वोक्तंदंडमर्हति १६५

शेगोस्वामिनोदंडउक्तः इदानींक्षेत्रस्वामिनेफलमप्यसौ
दापनीयइत्याह सस्यग्रहणंक्षेत्रोपचयोपलक्षणार्थम् यस्मिन्क्षेत्रेयावत्पलालधान्यादिकंगवादिभिर्विनाशितं तावत्क्षेत्रफलमेतावतिक्षे
त्रे एतावद्भवतीतिसामंतैः परिकल्पितंतत्क्षेत्रस्वामिनेगोमीदापनीयः गोपस्तुताडनीयएव नफलंतद्दापनीयः गोपस्यचताडनंपूर्वोक्तध
नदंडसहितमेवपालदोषेणसस्यनाशेद्रष्टव्यम् यानष्टापालदोषेणगोस्तुसस्यानिनाशयेत् नतत्रगोमिनांदंडः पालस्तंदंडमर्हती
तिवचनात् गोमीपुनःस्वापराधेनसस्यनाशेपूर्वोक्तंदंडमेवार्हति नताडनम् फलदानंपुनःसर्वत्रगोस्वामिनएव तत्फलपुष्टमहि-

ष्यादिक्षीरेणोपभोगद्वारेण तत्क्षेत्रफलभागित्वात् पूर्वादिभक्षितावशिष्टंपलालादिकंगोस्वामिनैवगृहीतव्यम् मध्यस्थकल्पितमूल्यदानेनक्री
तप्रायत्वात् अतएवनारदः गोभिस्तुभक्षितंसस्यंयोनरःप्रतियाचते सामंतानुमतंदेयंधान्यंयत्तत्रवापितम् पलालंगोमिनांदेयंधान्यं
वैकर्षकस्यत्विति १६६ क्षेत्रविशेषे अपवादमाह पथिग्रामसमीपवर्तिनिक्षेत्रेग्रामविवीतसमीपवर्तिनिच क्षेत्रे अकामतोगोभिर्भ
क्षितेगोपगोमिनोर्द्वयोरप्यदोषः दोषाभावप्रतिपादनंदंडाभावार्थंविनष्टसस्यमूल्यदानप्रतिषेधार्थंच कामचारे कामतश्चारणेचौरव
त् चौरस्ययादृशोदंडस्तादृशंदंडमर्हति एतच्चानावृतक्षेत्रविषयम् यत्रापरिवृतंधान्यंनिहिंस्युःपशवोयदि नतत्रप्रणयेद्दंडंनृपतिःप

पथिग्रामविवीतांतेक्षेत्रेदोषोनविद्यते अकामतःकामचारेचौरवद्दंडमर्हति १६७ महो
क्षोत्सृष्टपशवःसूतिकागंतुकादयः पालोयेषांचतेमोच्यादेवराजपरिप्लुताः १६८

शुरक्षिणामिति दंडाभावस्यानावृतक्षेत्रविषयत्वेन मनुनोक्तत्वात् आवृतेपुनर्मार्गादिक्षेत्रेपिदोषोस्त्येव वृत्तिकरणंचतेनैवोक्तम्
वृत्तिंचतत्रकुर्वीतयामुष्ट्रोनावलोकयेत् छिद्रंनिवारयेत्सर्वंश्वसूकरमुखानुगमिति १६७ पशुविशेषेपिदंडाभावमाह महांश्चासा
वुक्षाच्च महोक्षोवृषःसेक्ता उत्सृष्टपशवः वृषोत्सर्गादिविधानेनदेवतोद्देशेनत्यक्ताः सूतिकाप्रसूताअनिर्दशाहा आगंतुकः
स्वयूथात्परिभ्रष्टोदेशांतरादागतः एतेमोच्याः परसस्यभक्षिणोपिनदंड्याः येषांपालोविद्यतेतेपिदेवराजपरिप्लुताः देव

राजोपहताः सस्यनाशकारिणोन दंड्याः आदिग्रहणाद्धस्त्यश्वादयोगृह्यंते तेंचोशनसोक्ताः अदंड्याहस्तिनोत्वश्वाः प्रजापालाहितेस्मृताः अदंड्योकाणकुंओचयेशश्वत्कृतलक्षणाः अदंड्यागंतुकीगौश्च सूतिकावाभिसारिणी अदंड्याश्चोत्सवेगावः श्राद्धकालेतथैवचेति अत्रोत्सृष्टपशूनामस्वामिकत्वेनदंड्यत्वासंभवात् दृष्टांतार्थमुपादानम् यथोत्सृष्टपशवोनदंड्याएवंमहोक्षादयइति १६८ गोस्वामिनउक्तमिदानींगोपंप्रत्युपदिश्यते गोस्वामिनाप्रातःकालेयथागणयित्वायथार्पिताःपशवस्तेतथैवसायंकाले गोपोगोस्वामिने पशून्विगणय्यप्रत्यर्पयेत् प्रमादेनस्वापराधेनमृतान्नष्टांश्चपशून् कृतवेतनः कल्पितवेतनोगोपः स्वामिनेदाप्यः वेतन

यथार्पितान्पशून्गोपःसायंप्रत्यर्पयेत्तथा प्रमादमृतनष्टांश्चप्रदाप्यःकृतवेतनः १६९

कल्पनाचनारदेनोक्ता गवांशताद्वत्सतरीधेनुःस्याद्द्विशताद्भृतिः प्रतिसंवत्सरंगोपेसंदोहश्चाष्टमेहनीति प्रमादनाशश्चमनुनास्पष्टीकृतः नष्टंजग्धंचकृमिभिःश्वहतंविषमेमृतम् हीनंपुरुषकारेणप्रदद्यात्पालएवतुइति प्रसह्यचौरैरपहृतान्नदाप्यः-यथाहमनुः विघुष्यतुहृतंचौरैर्नपालोदातुमर्हति यदिदेशेचकालेचस्वामिनःस्वस्यशंसति दैवमृतानांपुनःकर्णादिप्रदर्शनीयम्-कर्णौचर्मचवालांश्चबस्तिंस्नायूनिरोचनाम् पशुस्वामिषुदद्यात्तुमृतेष्वंगानिदर्शयन्निति मनुस्मरणात् १६९ ७

किंच पालदोषेणपशुविनाशे अर्द्धाधिकत्रयोदशपणंदंडं पालोदाप्यः स्वामिनश्चद्रव्यंविनष्टंपशुमूल्यंमध्यस्थकल्पितंदंडपरिमाणार्थंश्लोको न्यत्पूर्वोक्तमेव ७० गोप्रसंगात् गोप्रचारमाह ग्रामेच्छयाग्रामजनेच्छया भूम्यल्पत्वमहत्त्वापेक्षया राजेच्छया वागोप्रचारः कर्तव्यः गवादीनां प्रचारणार्थं कियानपि भूभागोऽकृष्टः परिकल्पनीयइत्यर्थः द्विजस्तृणाद्यंतराभावेगवाग्निदेवतार्थं तृणकाष्ठकुसुमानिसर्वतः स्ववदनिवारितआ हरेत् फलानित्वपरिवृतानि देवगोग्न्यर्थंतृणमेधांसिवीरुद्वनस्पतीनांपुष्पाणिस्ववदाददीत फलानिचापरिवृतानामितिगोतमस्मरणात्

पालदोषविनाशेतुपालदंडोविधीयते अर्द्धत्रयोदशपणःस्वामिनोद्रव्यमेवच १७०
ग्रामेच्छयागोप्रचारोभूमिराजवशेनवा द्विजस्तृणैधपुष्पाणिसर्वतःसर्वदाहरेत् १७१
धनुःशतंपरीणाहोग्रामेक्षेत्रांतरंभवेत् द्वेशतेखर्वटस्यस्यान्नगरस्यचतुःशतम् १७२

एतच्चपरिगृहीतविषयम् अपरिगृहीतेद्विजव्यतिरिक्तस्यापिपरिग्रहादेवस्वत्वसिद्धेः यथातेनैवोक्तं स्वामीरिक्थक्रयसंविभागपरिग्रहाधिग मेष्विति यत्पुनरुक्तं तृणंवायदिवाकाष्ठंपुष्पंवायदिवाफलम् अनापृच्छन्हिगृह्णानोहस्तच्छेदनमर्हतीति तद्द्विजव्यतिरिक्तविषयमनापद्विषयं वा गवादिव्यतिरिक्तविषयंवेति १७१ इदमपरंगवादीनांस्थानासनसौकर्यार्थमुच्यते ग्रामक्षेत्रयोरंतरंधनुःशतपरिमितंपरीणाहःसर्व तोदिक्षु अनुप्तसस्यंकार्यं खर्वटस्यप्रचुरकंटकसंतानस्यग्रामस्यद्वेशतेपरीणाहः नगरस्यबहुजनसंकीर्णस्यधनुषांचतुःशतपरिमितमंत रंकार्यं इतिस्वामिपालविवादप्रकरणं १७२

संप्रत्यस्वामिविक्रयाख्यं व्यवहारपदमुपक्रमते तस्यचलक्षणंनारदेनोक्तं निक्षिप्तंवापरद्रव्यंनष्टंलब्ध्वापहृत्यवा विक्रीयतेसमक्षंयत्स-
ज्ञेयोस्वामिविक्रयइति तत्रकिमित्याह स्वमात्मसंबंधिद्रव्यंअन्यविक्रीतमस्वामिविक्रीतंयदिपश्यतितदालभेत गृह्णीयात् अस्वामि
विक्रयस्यस्वत्वहेतुत्वाभावात् विक्रीतग्रहणंदत्ताहितयोरुपलक्षणार्थं अस्वामिक्रीतत्वेनतुल्यत्वात् अतएवोक्तम् अस्वामिविक्रयंदा
नमाधिंचविनिवर्तयेदिति क्रेतुःपुनरप्रकाशितेगोपितेक्रय्येदोषोभवति तथाहीनाद्रव्यागमोपायहीनाद्रहसिचैकांतेसंभाव्य द्रव्यादपि
हीनमूल्येनाल्पतरेणचमूल्येनक्रयेवेलाहीने वेलयाहीनोवेलाहीनःक्रयोरात्र्यादौकृतस्तत्रचक्रेतातस्करोभवति तस्करदंडभाग्भवतीत्यर्थःय

स्वंलभेतान्यविक्रीतंक्रेतुर्दोषोप्रकाशिते हीनाद्रहोहीनमूल्येवेलाहीनेचतस्करः१७३ नष्टापहृतमासाद्यहर्तारंग्राहयेन्नरं
देशकालातिपत्तौचगृहीत्वास्वयमर्पयेत् १७४

थोक्तम् द्रव्यमस्वामिविक्रीतंप्राप्यस्वामीतदाप्नुयात् प्रकाशक्रयतःशुद्धिःक्रेतुः
स्तेयंरहःक्रयादिति १७३ स्वाम्यभियुक्तेनक्रेत्राकिंकर्तव्यमित्यतआह नष्टमपहृतंवान्यदीयंक्रयादिनाप्राप्यहर्तारंविक्रेतारंनरंग्राहये
त् चौरोद्धरणकादिभिः आत्मविशुद्ध्यर्थंराजदंडप्राप्त्यर्थंच अथाविदितंदेशांतरंगतः कालांतरेवाविपन्नस्तदामूल्यसमाहरणाशक्तेर्वि
क्रेतारमदर्शयित्वैवस्वयमेवतद्धनंनाष्टिकस्यसमर्पयेत् तावतैवासौशुद्धोभवतीतिश्रीशंकराचार्येणव्याख्यातं तदिदानीमनुपपन्नम्
विक्रेतुर्दर्शनाच्छुद्धिरित्यनेनपौनरुक्त्यप्रसंगादतोन्यथाव्याख्यायते नष्टापहृतमितिनाष्टिकंप्रत्ययमुपदेशः नष्टमुपहृतंचात्मीयद्र

व्यमासाद्य क्रेतृहस्तस्थंज्ञात्वा तंहर्तारंक्रेतारंस्थलपालादिकंग्राहयेत् देशकालातिपत्तौदेशकालातिक्रमेस्थलपालाद्यसन्निधानेतद्दिवा
पनकालात्प्राक्पलायनाशंकायांस्वयमेवगृहीत्वातेभ्यःसमर्पयेत् १७४ ग्राहितेहर्त्तरिकिंकर्तव्यमित्यतआह यद्यसौगृहीतःक्रे
तानमयेदमपहृतमन्यसकाशात्क्रीतमितिवक्ति तदातस्यक्रेतुर्विक्रेतुर्दर्शनमात्रेणशुद्धिर्भवति नपुनरसावभियोज्यः किंतुतस्यद
र्शितेनविक्रेत्रासहनाष्टिकस्यविवादः यथाहबृहस्पतिः मूलेसमाहृतेक्रेतानाभियोज्यःकथंचन मूलेनसहवादस्तुनाष्टिकस्यविधी
यतइति तस्मिन्विवादेयद्यस्वामिविक्रयनिश्चयोभवति तदा तस्यनष्टापहृतस्य गवादिद्रव्यस्ययोविक्रयीविक्रेता तस्य सकाशात्स्वा

विक्रेतुर्दर्शनाच्छुद्धिःस्वामीद्रव्यंनृपोदमम् क्रेतामूल्यमवाप्नोतितस्माद्यस्तस्यविक्रयी १७५

मीनाष्टिकःस्वीयंद्रव्यमवाप्नोति नृपश्चापराधानुरूपंदंडंक्रेताचमूल्यमवाप्नोति अथासौदेशांतरगतस्तदायोजनसंख्ययानयनार्थं
कालोदेयः प्रकाशंवाक्रयंकुर्यान्मूलंवापिसमर्पयेत् मूलानयनकालश्चदेयस्तत्राध्वसंख्ययेतिस्मरणात् अथाविज्ञातदेशतया
मूलमाहर्तुंनशक्नोति तदाक्रयंशोधयित्वैवशुद्धोभवति असमाहार्यमूलस्तुक्रयमेवविशोधयेदितिवचनात् यदापुनःसाक्ष्या
दिभिर्दिव्येनवाक्रयंनशोधयतिमूलंचनप्रदर्शयति तदासएवदंडभाग्भवति अनुपस्थापयन्मूलंक्रयंवाप्यविशोधयन् यथा-
भियोगंधनिनेधनंदाप्योदमंचसइतिमनुस्मरणात् १७५ ७ ७ ७ ७

स्वं लभेतान्यविक्रीतमित्युक्तं तल्लिप्सुना किं कर्तव्यमित्यत आह आगमेन रिक्थक्रयादिना उपभोगेन च मदीयमिदं द्रव्यं तच्चैवं न
ष्टमपहृतं वेत्यपि भाव्यं साधनीयं तत्स्वामिना अतोन्यथा तेन स्वामिना अविभाविते पंचबंधो नष्टद्रव्यस्य पंचमोंशो दमो नाष्टिके
न राज्ञे देयः अत्र चायं क्रमः पूर्वस्वामी नष्टमात्मीयं साधयेत् ततः क्रेता चौर्यपरिहारार्थं मूल्यलाभाय च विक्रेतारं आनयेत्
अथानेतुं न शक्नोति तदात्मदोषपरिहाराय क्रयं साधयित्वा द्रव्यं नाष्टिकस्य समर्पयेदिति १७६ तस्करप्रच्छादकं प्रत्याह हृ
तं प्रनष्टं वा चौरादिहस्तस्थं द्रव्यमनेन मदीयं द्रव्यमपहृतमिति नृपस्यानिवेद्यैव दर्पादिना यो गृह्णाति असौ षड्उत्तरान्नवतिपणान् दंडनीयः तस्क

आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा पंचबंधो दमस्तस्य राज्ञे तेनाविभाविते १७६ हृतं प्रनष्टं यो द्रव्यं परहस्तादवाप्नुया
त् अनिवेद्य नृपे दंड्यः स तु षण्णवतिं पणान् १७७ शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतं अर्वाक्संवत्सरात्स्वामी हरेत पर
तो नृपः १७८

रप्रच्छादकत्वेन दुष्टत्वात् ७७ राजपुरुषानीतं प्रत्याह यदा तु शुल्कादिकारिभिः स्थानरक्षिभिर्वा नष्टमपहृतं द्रव्यं राजपा
र्श्वं प्रत्यानीतं तदा संवत्सरादर्वाक्प्राप्तश्चेत् नाष्टिकस्तद्द्रव्यमवाप्नुयात् ऊर्ध्वं पुनः संवत्सराद्राजा गृह्णीयात् स्वपुरुषानीतं च द्रव्यं जनसमूहे
घुष्ट्वोष्य यावत्संवत्सरं राज्ञा रक्षणीयं यथाह गौतमः प्रनष्टस्वामिकमधिगम्य राज्ञे प्रब्रूयुः विख्याप्य संवत्सरं राज्ञा रक्ष्यमिति यत्पुनर्मनुना
विध्यंतरमुक्तं प्रनष्टस्वामिकं द्रव्यं राजा त्र्यब्दं निधापयेत् अर्वाक् त्र्यब्दाद्धरेत्स्वामी परतो नृपतिर्हरेदिति तच्छ्रुतवृत्तसंपन्नब्राह्मणविष

यम् रक्षणनिमित्तषड्भागग्रहणंच तेनैवोक्तम् आददीताथषड्भागंप्रनष्टाधिगतान्नृपः दशमंद्वादशंवापिसतांधर्ममनुस्मरन्निति तृतीयद्वितीयप्रथमसंवत्सरेषुयथाक्रमंषष्ठादयोभागावेदितव्याः प्रपंचितंचैतत्पुरस्तात् १७८ मनूक्तषड्भागादिग्रहणस्यद्रव्यविशेषे अपवादमाह एकशफे अश्वादौप्रनष्टाधिगते तत्स्वामीराज्ञेरक्षणनिमित्तंचतुरः पणान्दद्यात् मानुषेमनुष्यजातीयेद्रव्येपंचपणान् अजाविके पुनः प्रत्येकंपादंपादं महिषोष्ट्रगवांरक्षणनिमित्तंप्रत्येकं द्वौ द्वौपणान्दद्यादिति सर्वत्रानुषज्जते अजाविकमिति समासनिर्देशेपि

पणानेकशफेदद्याच्चतुरःपंचमानुषे माहिषोष्ट्रगवांद्वौद्वौपादंपादमजाविके १७९

पादंपादमितिवीप्साबलात्प्रत्येकंसंबंधोवगम्यते इत्यस्वामिविक्रयप्रकरणम् १७९ अधुनाविहिताविहितमार्गद्वयाश्रयतयादत्तानपाकर्मदत्ताप्रतिदानिकमितिच लब्धाभिधानद्वयंदानाख्यंव्यवहारपदं अभिधीयते तत्स्वरूपंचनारदेनोक्तं दत्वाद्रव्यमसम्यग्यःपुनरादातुमिच्छति दत्ताप्रदानिकंनामव्यवहारपदंहितदिति असम्यगविहितमार्गाश्रयेणद्रव्यं दत्वापुनरादातुमिच्छति यस्मिन्विवादपदे तद्दत्ताप्रदानिकं दत्तस्याप्रदानंपुनर्हरणं यस्मिन्दानाख्येतद्दत्ताप्रदानिकंनामव्यवहारपदं विहितमार्गाश्रयत्वेनतत्प्रातिपक्षभूतंतदेवव्यवहारपदम् दत्तानपाकर्मेत्यर्थादुक्तंभवति दत्तस्यानपाकर्मअपुनरादानं यत्रदानाख्येविवादपदे तद्दत्तानपाकर्म तच्च

द्यादेयादिभेदेनचतुर्विधम् यथाहनारदः अथदेयमदेयंच दत्तंवादत्तमेवच व्यवहारेषुविज्ञेयोदानमार्गश्चतुर्विधइति न त्रदेयमित्यनिषिद्धदानक्रियायोग्यमुच्यते अदेयमस्वतयानिषिद्धतयावादानानर्हं यत्पुनः प्रकृतिस्थेनदत्तमव्यावर्त्तनीयं त द्दत्त मुच्यते अदत्तंतुयत्पुनरत्याहरणीयंतत्कथ्यते तदेतत्संक्षेपतोनिरूपयितुमाह स्वमात्मीयंकुटुंबाविरोधेनकुटुंबानुपरोधेनकुटुंबभर णावशिष्टमितियावत्तद्दद्यात् तद्भरणस्यावश्यकत्वात् तथाचमनुः वृद्धौचमातापितरौसाध्वीभार्यासुतःशिशुः अप्यकार्यशतं कृत्वाभर्तव्यामनुरब्रवीदिति स्वकुटुंबाविरोधेनेत्यनेनादेयमेकविधंदर्शयति स्वदद्यादित्यनेनचास्वभूतानामन्वाहितयाचितकाधि-

स्वकुटुंबाविरोधेनदेयंदारसुतादृते नान्वयेसतिसर्वस्वंयच्चान्यस्मैप्रतिश्रुतम् १८०

साधारणनिक्षेपाणांपंचानामप्यदेयत्वंव्यतिरेकतोदर्शितम् यत्पुनर्नारदेनाष्टविधत्वमुक्तमदेयानां अन्वाहितंयाचितकमाधिःसा धारणंचयत् निक्षेपःपुत्रदारंचसर्वस्वंचान्वयेसति आपत्स्वपिचकष्टासुवर्तमानेनदेहिना अदेयान्याहुराचार्यायच्चान्यस्मैप्रति श्रुतमिति एतददेयत्वमात्राभिप्रायेण नपुनःस्वत्वाभिप्रायेण पुत्रदारसर्वस्वप्रतिश्रुतेषुस्वत्वस्यसद्भावात् अन्वाहितादीनांस्वरूपं प्रागेवप्रपंचितं स्वंदद्यादित्यनेनदारसुतादेरपिस्वत्वाविशेषेणदेयत्वप्रसंगेप्रतिषेधमाह दारसुतादृते दारसुतव्यतिरिक्तंस्वंदद्यान्नदा रसुतमित्यर्थः तथापुत्रपौत्राद्यन्वयेविद्यमानेसर्वंधनंनदद्यात् पुत्रान्नुत्पाद्यसंस्कृत्यवृत्तिंचैषांप्रकल्पयेदितिस्मरणात् तथाहिरण्यादिकमन्यस्मै प्रतिश्रुतमन्यस्मैनदेयम् १८०

एवंदारसुतादिव्यतिरिक्तंदेयमुक्त्वाप्रसंगाददेयधनग्रहणंचप्रतिग्रहीत्राप्रकाशमेवकर्तव्यमित्याह प्रतिग्रहणंप्रतिग्रहः सः प्रकाशः कर्तव्यः विवादनिराकरणार्थं स्थावरस्यचविशेषतःप्रकाशमेवग्रहणंकार्यम् तस्यसुवर्णादिवदात्मनिस्थितस्यदर्शयितुमशक्यत्वात् एवंप्रासंगिकमुक्त्वाप्रकृतमनुसरन्नाह देयंप्रतिश्रुतंचैव यद्यस्मैधर्मार्थंप्रतिश्रुतंतत्तस्मैदेयमेव यद्यसौधर्मात्प्रच्युतोनभवति प्रच्युतेपुनर्दातव्यं प्रतिश्रुत्याप्यधर्मयुक्तायनदद्यादितिगौतमस्मरणात् दत्वानापहरेत्पुनः न्यायमार्गेणयद्दत्तंतत्सप्तविधमपिपुनर्नापहर्तव्यं किंतुतथैवानुमंतव्यम् यत्पुनरन्यायेनदत्तंतददत्तं षोडशप्रकारमपिप्रत्याहर्तव्यमेवेत्यर्थादुक्तंभवति नारदवचनाच्च दत्तंसप्तविधंप्रोक्तमदत्तंषोडशात्मकमितिप्रतिपाद्यदत्तादत्तयोःस्वरूपंविवृतम् पण्यमूल्यंभृतिस्तुष्ट्यास्नेहात्प्रत्युपकारतः स्त्रीशुल्कानुग्रहार्थंच दत्तंदानविदोविदुः अदत्तंतुभयक्रोधशोकवेगरुगन्वितैःतथोत्कोचपरीहासव्यत्यासछलयोगतः बालमूढास्वतंत्रार्तमत्तोन्मत्तापवर्जितम् कर्ताममेदंकर्मेतिप्रतिलाभेच्छयाचयत् अपात्रेपात्रमित्युक्तेकार्येवाधर्मसंयुते यद्दत्तंस्यादविज्ञानाददत्तमितितत्स्मृतमिति अयमर्थःपण्यस्यक्रीतद्रव्यस्ययन्मूल्यंदत्तं भृतिर्वेतनंकृतकर्मणेदत्तम् तुष्ट्याबंदिचारणादिभ्योदत्तं स्नेहाद्दुहितृपुत्रादिभ्योदत्तं प्रत्युपकारतः उपकृतवतेप्रत्युपकाररूपेणदत्तं स्त्रीशुल्कंपरिणयनार्थंकन्याज्ञातिभ्योयद्दत्तं यच्चानुग्रहार्थम

प्रतिग्रहःप्रकाशःस्यात्स्थावरस्यविशेषतः देयंप्रतिश्रुतंचैवदत्वानापहरेत्पुनः १८१

दृष्टार्थंदत्तं तदेतत्सप्तविधमपिदत्तमेवनप्रत्याहरणीयम् भयेनबंदिग्राहादिभ्योदत्तं क्रोधेनपुत्रादिभ्योवैरनिर्यातनायान्यस्मैदत्तं
पुत्रवियोगादिनिमित्तशोकावेशेनदत्तं उत्कोचेनकार्यप्रतिबंधनिरासार्थमधिकृतेभ्योदत्तं परिहासेनोपहासेनदत्तं एकोपिस्वद्रव्यमन्य
स्मैददात्यन्योपिददातीतिदानव्यत्यासः छलयोगतःशतदानमभिसंधाय सहस्रमितिपरिभाष्यददाति बालेनाप्राप्तषोडशवर्षेण मूढेन
लोकवादानभिज्ञेन अस्वतंत्रेणपुत्रदारादिना आर्तेनरोगाभिभूतेन मत्तेनमदनीयमत्तेन उन्मत्तेनवातिकाद्युन्मादग्रस्तेन वा अपवर्जि
तंदत्तं तथायंमदीयंकर्मकरिष्यतीतिप्रतिलाभेच्छयादत्तं अचतुर्वेदायचतुर्वेदोहमित्युक्तवतेदत्तं यज्ञंकरिष्यामीतिधनंलब्ध्वाद्यूतादौ
विनियुंजानायदत्तमित्येवंषोडशप्रकारमपिदत्तमदत्तमित्युच्यते प्रत्याहरणीयत्वात् आर्तदत्तस्यादत्तत्वंधर्मकार्यव्यतिरिक्तविषयम् स्व
स्थेनार्तेनवादत्तंश्राविततंधर्मकारणात् अदत्वातुमृतेदाप्यस्तत्सुतोनात्रसंशयइतिकात्यायनस्मरणात् तथेदमपरंसंक्षिप्तार्थवचनंसर्ववि
वादसाधारणम् योगाधमनविक्रीतंयोगदानप्रतिग्रहम् यस्यवाप्युपधिंपश्येत्तत्सर्वंविनिवर्तयेदिति योगउपाधिः येनागामिनोपाधिवि
शेषेणाधिविक्रयदानप्रतिग्रहाः कृतास्तदुपाधिविरामेक्रियादीन्विनिवर्तयेदित्यस्यार्थः यःपुनःषोडशप्रकारमपि अदत्तंगृह्णाति यश्चादेयं
प्रयच्छति तयोर्दंडोनारदेनोक्तः गृह्णात्यदत्तंयोलोभाद्यश्चादेयंप्रयच्छति अदेयदायकोदंड्यस्तथादत्तप्रतीच्छकइति इतिदत्ताप्र-
दानिकंनामप्रकरणम् १८१ अथक्रीतानुशयःकथ्यते तत्स्वरूपंनारदेनोक्तम् क्रीत्वामूल्येनयःपण्यंक्रेतानबहुमन्यते क्रीतानु-
शयइत्येतद्विवादपदमुच्यतेइति तत्रचयस्मिन्नहनिपण्यंक्रीतंयस्मिन्नेवाह्नितदविकृतंप्रत्यर्पणीयमिति तेनैवोक्तम् क्रीत्वामूल्येनयःप

यद्यदुःक्रीतंमन्यतेक्रयं विक्रेतुःप्रतिदेयंतत्तस्मिन्नेवान्ह्यविक्षतमिति द्वितीयादिदिनेतुप्रत्यर्पणेविशेषस्तेनैवोक्तः द्वितीयेन्हि ददत्क्रेतामूल्यात्
त्रिंशांशमावहेत् द्विगुणंतुतृतीयेन्हिपरतःक्रेतुरेवतदिति परतोनुशयोनकर्तव्यइत्यर्थः एतच्चबीजातिरिक्तोपभोगविनश्वरवस्तुविषयम्
बीजादिक्रयेपुनरन्यएवप्रत्यर्पणविधिरित्याह बीजंव्रीह्यादिबीजं अयोलोहादि वाह्योबलीवर्दादिः रत्नंमुक्ताप्रवालादिकं स्त्रीदासी दोह्यंमा
हिष्यादि पुमान्दासः एषांबीजादीनांयथाक्रमेण दशाहादिकःपरीक्षाकालोविज्ञेयः परीक्ष्यमाणेचबीजादौयद्यसम्यक्त्वबुद्ध्यानुशयोभव
ति तदादशाहाभ्यंतरएवक्रयनिवृत्तिर्नपुनरूर्ध्वमित्युपदेशप्रयोजनं यत्तुमनुवचनम् क्रीत्वाविक्रीयवाकिंचिद्यस्येहानुशयोभवेत्

दशैकपंचसप्ताहमासत्र्यहार्द्धमासिकम् बीजायोवाह्यरत्नस्त्रीदोह्यपुंसांपरीक्षणम् १८२
अग्नौसुवर्णमक्षीणंरजतेद्विपलंशते अष्टौत्रपुणिसीसेचताम्रेपंचदशायसि १८३

सोंतर्दशाहात्तद्द्रव्यं दद्याच्चैवाददीतचेति तदुक्तंलोहादिव्यतिरिक्तोपभोगविनश्वरगृहक्षेत्रयानशयनासनादिविषयम् सर्वंचैतदपरीक्षि
तक्रीतविषयम् यत्पुनःपरीक्ष्यनपुनःप्रत्यर्पणीयमितिसमयंकृत्वाक्रीतंतद्विक्रेत्रेनप्रत्यर्पणीयम् तदुक्तम् क्रेतापण्यंपरीक्षेतप्राक्स्वयं
गुणदोषतः परीक्ष्याभिमतंक्रीतंविक्रेतुर्नभवेत्पुनरितिव्रीह्यादिपरीक्षाप्रसंगेनस्वर्णादेरपिपरीक्षणमाह वन्हौप्रताप्यमानंसुवर्णंन
क्षीयते अतःकटकादिनिर्माणार्थंयावत्स्वर्णकारहस्तेप्रक्षिप्तंतावत्तुलितंप्रत्यर्पणीयम् इतरथाक्षयंदाप्यादंड्याश्च रजतेतु

शतपलेमताप्यमाने पलद्वयंक्षीयेत अष्टौत्रपुणि सीसेचशत इत्यनुवर्तते त्रपुणिसीसेचशतपलेप्रताप्यमानेष्टौपलानिक्षीयंते ता-म्रेपंचदशायसि ताम्रेशतपलेपंचपलानि अयसिदशपलानिक्षीयंते अत्रापिशतइत्येव कांस्यस्यतुत्रपुताम्रयोर्निलात्तदनुसारेण क्षयःकल्प्यः इतोधिकक्षयकारिणःशिल्पिनोदंड्याः १८३ क्वचित्कंबलादौवृद्धिमाह स्थूलेनौर्णसूत्रेण यत्कंबलादिकंक्रियते तस्मिन्श तपलेदशपलावृद्धिर्वेदितव्या एवंकार्पाससूत्रपटादौवेदितव्यम् मध्येअनतिसूक्ष्मनिर्मितेपटादौपंचपलावृद्धिः सूक्ष्मसूत्ररचितेश

शतेदशपलावृद्धिरौर्णकार्पाससौत्रिके मध्येपंचपलावृद्धिःसूक्ष्मेतुत्रिपलामता १८४
कार्मिकेरोमबंधेचत्रिंशद्भागःक्षयोमतः नक्षयोनचवृद्धिश्चकौशेयेवल्कलेषुच १८५

तेत्रिपलावृद्धिर्वेदितव्या एतच्चाप्रक्षालितवासोविषयम् १८४ द्रव्यांतरेविशेषमाह कार्मिकंकर्मणाचित्रेणनिर्मितं यत्रानिष्पन्नेपटे रुचकस्वस्तिकादिकंचसूत्रैःक्रियते तत्कार्मिकमित्युच्यते यत्रप्रावारादौरोमाणिबध्यंतेसरोमबंधः तत्रत्रिंशत्तमोभागःक्षयोवेदितव्यः कौशेयेकोशप्रभवे वल्कलेषुवृक्षत्वङ्निर्मितेषुवसनेषुवृद्धिह्रासौनस्तः किंतुयावद्वसनार्थंकुविंदादिभ्योदत्तंतावदेवप्रत्यादेय-म् १८५

द्रव्यानंत्यात्प्रतिद्रव्यं क्षयवृद्धिप्रतिपादनाशक्तिः सामान्येन ह्रासवृद्धिज्ञानोपायमाह शाणक्षौमादौ द्रव्येनष्टे ह्रासमुपगते द्रव्याणां कुशलाः द्रव्यवृद्धिक्षयाभिज्ञाः देशंकालमुपभोगं तथा नष्टद्रव्यस्य बलाबलं सारासारतां च परीक्ष्य यत्कल्पयंति तदसंशयं शिल्पिनो दाप्याः इति क्रीतानुशयप्रकरणम् १८६ सांप्रतमभ्युपेत्याशुश्रूषाख्यमपरं विवादपदमभिधातुमुपक्रमते तत्स्वरूपं च नारदेनोक्तं अभ्युपेत्य तु शुश्रूषां यस्तां न प्रतिपद्यते अशुश्रूषाभ्युपेत्यैतद्विवादपदमुच्यत इति आज्ञाकरणं शुश्रूषा तामंगीकृत्य पश्चाद्योन संपादयति तद्विवादपदमभ्युपेत्याशुश्रूषाख्यं शुश्रूषकश्च पंचविधः शिष्यांतेवासीभृतकोऽधिकर्मकृद्दास इति तेषामा

देशंकालं च भोगं च ज्ञात्वा नष्टे बलाबलम् द्रव्याणां कुशला ब्रूयुर्यत्तद्दाप्यमसंशयम् १८६

द्याश्चत्वारः कर्मकारा इत्युच्यंते ते च शुभकर्मकारिणः दासाः पुनर्गृहजातादयः पंचदशप्रकाराः गृहद्वाराशुचिस्थानरथ्यावस्करशोधनाद्यशुभकर्मकारिणः तदिदं नारदेन स्पष्टीकृतम् शुश्रूषकः पंचविधः शास्त्रे दृष्टो मनीषिभिः चतुर्विधः कर्मकरस्तेषां दासास्त्रिपंचकाः शिष्यांतेवासिभृतकाश्चतुर्थस्त्वधिकर्मकृत् एते कर्मकरा ज्ञेया दासास्तु गृहजादयः सामान्यमस्वतंत्रत्वमेषामाहुर्मनीषिणः जातिकर्मकृतस्तूक्तो विशेषो वृत्तिरेव च कर्मापि द्विविधं ज्ञेयमशुभं शुभमेव च अशुभं दासकर्मोक्तं शुभं कर्मकृतां स्मृतम् गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम् गुह्यांगस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम् इच्छतः स्वामिनश्चांगैरुपस्थानमथांततः अशुभं कर्म विज्ञे

यंशस्त्रमन्यदतःपरमिति तत्रशिष्योवेदविद्यार्थी अंतेवासीशिल्पशिक्षार्थी मूल्येनयःकर्मकरोतिसभृतकः कर्मकुर्वतामधिष्ठाताधि
कर्मकृत् अशुचिस्थानमुच्छिष्टप्रक्षेपार्थंगर्तादिकम् अवस्करोगृहमार्जितपांस्वादिनिचयस्थानं उज्झनंत्यागः भृतकश्चात्रत्रिविधः
तदुक्तं उत्तमस्त्वायुधीयोत्रमध्यमस्तुकृषीवलः अधमोभारवाहीस्यादित्येवंत्रिविधोभृतइति दासःपुनः गृहजातस्तथाक्रीतोलब्धो
दायादुपागतः अनाकालभृतस्तद्वदाहितःस्वामिनाचयः मोक्षितोमहतश्चर्णाद्युद्धप्राप्तःपणेजितः तवाहमित्युपगतःप्रव्रज्यावसितः
कृतः भक्तदासश्चविज्ञेयस्तथैववडवाहृतः विक्रेताचात्मनःशास्त्रेदासाःपंचविधाःस्मृताः गृहेदास्यांजातोगृहजातः क्रीतोमूल्ये
न लब्धःप्रतिग्रहादिना दायादुपागतःपित्रादिदासः अनाकालभृतोदुर्भिक्षेयोदासत्वायमरणाद्रक्षितः आहितःस्वामिनाधनग्र
हणेनाधितांनीतः ऋणमोचनेनदासत्वमभ्युपगतःऋणदासः युद्धप्राप्तः समरेविजित्यगृहीतः पणेजितः यद्यस्मिन्विवादेपरा
जितोहं तदात्वद्दासोभवामीतिपरिभाष्यजितः तवाहमित्युपगतः तवाहंदासइतिस्वयंसंप्रतिपन्नःप्रव्रज्यावसितः प्रव्रज्यातश्च्यु-
तः कृतः एतावत्कालंत्वद्दासइति अभ्युपगमितः भक्तदासःसर्वकालंभक्तार्थमेवदासत्वमभ्युपगम्ययःप्रविष्टः वडवाहृतःवड
वागृहदासीतयाहृतः तल्लोभेनतासुद्वात्यदासत्वेनप्रविष्टः यआत्मानंविक्रीणीते असावात्मविक्रेतेत्येवंपंचदशप्रकाराः यत्तुम
नुना ध्वजाहृतोभक्तदासोगृहजःक्रीतदत्त्रिमौ पैतृकोदंडदासश्चसप्तैतेदासयोनयइति सप्तविधत्वमुक्तं तत्तेषांदासत्वप्रतिपा
दनपरम् नतुपरिसंख्यार्थं तत्रैषांशिष्यांतेवासिभृतकाधिकर्मकृद्दासानांमध्येशिष्यवृत्तिःप्रागेवप्रतिपादिता आहूतश्चा

प्यधीयीतलब्धंवास्मैनिवेदयेदित्यादिना अधिकर्मकृद्भृतकानांतुवेतनादानप्रकरणेवक्ष्यते योयावत्कुरुतेकर्मतावत्तस्यतुवेतनमित्यादिना
दासांतेवासिनोस्तुधर्मविशेषंवक्तुमाह बलात् बलावष्टंभेनयोदासीकृतः यश्चौरैरपहृत्यविक्रीतः अपिशब्दादाहितोदत्तश्चमुच्यतेय
दिस्वामीनमुंचतितर्हिराज्ञामोचयितव्यः उक्तंचनारदेन चौरापहृतविक्रीतायेचदासीकृताबलात् राज्ञामोचयितव्यास्तेदास्यंतेषुहिनै
ष्यतेइति चौरव्याघ्राद्यवरुद्धस्यस्वामिनःप्राणान्यःप्रददातिरक्षस्त्यसावपिमोचयितव्यः तदिदंसर्वदासानांसाधारणंदास्यनिवृत्ति
कारणं योवैषांस्वामिनंकश्चिन्मोक्षयेत्प्राणसंशयात् दासत्वात्सविमुच्येतपुत्रभागंलभेतचेति नारदस्मरणात् भक्तदासादीनांप्राति–

बलाद्दासीकृतश्चौरैर्विक्रीतश्चापिमुच्यते स्वामिप्राणप्रदोभक्तत्यागात्तन्निष्क्रयादपि १८७

स्विकमपिमोक्षकारणमुच्यते अनाकालभृतभक्तदासोभक्तस्यत्यागाद्दासभावादारभ्यस्वामिद्रव्यंयावदुपभुक्तंतावद्दत्वामुच्येत आ
हितर्णदासौतुतन्निष्क्रयात् यद्गृहीत्वास्वामिनाआहितोयश्चदत्वाधनिनोत्तमर्णान्मोचित स्तस्यनिष्क्रयात्सवृद्धिकस्यधनस्यर्पणान्मु
च्येते नारदेनविशेषोप्युक्तः अनाकालभृतोदास्यान्मुच्यतेगोयुगंददत् संभक्षितंयद्दुर्भिक्षेनतच्छुध्येतकर्मणा भक्तस्योत्क्षे
पणात्सद्योभक्तदासःप्रमुच्यते आहितोपिधनंदत्वास्वामीयद्येनमुद्धरेत् ऋणंतुसोदयंदत्वाऋणीदास्यात्प्रमुच्यतइति तथातवाहमि
त्युपगतयुद्धप्राप्तपणजितकृतकवडवाहृतानांचप्रातिस्विकंमोचनकारणंचतेनैवोक्तम् यथा तवाहमित्युपगतोयुद्धप्राप्तःपणेजितः

प्रतिशीर्षप्रदानेन मुच्येरंस्तुल्यकर्मणा कृतकालाभ्युपगमात्कृतकोपि विमुच्यते निग्रहाद्वडवायास्तु मुच्यते दंडवाहनइति दासेनसहसंभो गनिरोधादित्यर्थः तदेवं गृहजातक्रीतलब्धदायप्राप्तात्मविक्रयिणां स्वामिप्राणप्रदानतत्प्रसादरूपसाधारणकारणव्यतिरेकेण मोक्षो नास्ति विशेषकारणानभिधानात् दासमोक्षश्चानेनक्रमेणकर्तव्यः स्वंदासमिच्छेद्यः कर्तु मदासंप्रीतमानसः स्कंधादादाय तस्यासौ भिंद्यात्कुंभंसहांभसा साक्षताभिः सपुष्पाभि मूर्द्धन्यद्भिरवाकिरेत् अदासइत्यथोक्त्वात्रिः प्राङ्मुखंतमथोत्सृजेदितितेनैवोक्तम् १८७ प्रव्रज्यावसितस्यतु मोक्षोनास्तीत्याह प्रव्रज्यासन्यासस्ततोवसितः प्रच्युतः अनभ्युपगतप्रायश्चित्तश्चेद्राज्ञएवदासोभ

प्रव्रज्यावसितोराज्ञोदास आमरणांतिकम् वर्णानामानुलोम्येन दास्यंनप्रतिलोमतः १८८

वति मरणमेवदासत्वस्यांतोन्यस्मिन्कालेनमोक्षोस्ति वर्णापेक्षयादास्यव्यवस्थामाह ब्राह्मणादीनांवर्णानामानुलोम्येनदास्य म् ब्राह्मणस्यक्षत्रियादयः क्षत्रियस्यवैश्यशूद्रौ वैश्यस्यशूद्रइत्येवमानुलोम्येनदासभावोभवति नप्रातिलोम्येन स्वधर्म त्यागिनः पुनः परिव्राजकस्यप्रातिलोम्येनापि दासत्वमिष्यतएव यथाहनारदः वर्णानांप्रातिलोम्येन दासत्वंनविधीयते- स्वधर्मत्यागिनोन्यत्र दारवद्दासतामतेति १८८

अंतेवासिधर्मानाह  अंतेवासीगुरोर्गृहे कृतकालं वर्षचतुष्टयमायुर्वेदादिशिल्पशिक्षार्थं त्वद्गृहेवसामीतियावदंगीकृतं तावत्कालंवसेत् वसन्नपिवर्षचतुष्टयादर्वागेव लब्धापेक्षितशिल्पविद्यः कथंनिवसेत् गुरुग्रासभोजनः गुरोःसकाशात्प्राप्तंभोजनंयेनस तथोक्तः तत्फलप्रदः तस्यशिल्पस्यफलमाचार्यायप्रददातीति तत्फलप्रदः एवंभूतोवसेत् नारदेनविशेषोप्यत्रदर्शितः स्वशिल्पमिच्छन्नाहर्तुंबांधवानामनुज्ञया आचार्यस्यवसेदंतेकृत्वाकालंसुनिश्चितम् आचार्यःशिक्षयेदेनंस्वगृहेदत्तभोजनम् नचान्यत्कारयेत्कर्मपुत्रवच्चैनमाचरेत् शिक्षयंस्तमसंदुष्टंयआचार्यपरित्यजेत् बलाद्वासयितव्यःस्याद्वधबंधौचसोर्हतिशिक्षितोपिकृ-

कृतशिल्पोपिनिवसेत्कृतकालंगुरोर्गृहे  अंतेवासीगुरुप्राप्तभोजनस्तत्फलप्रदः १८९

राजाकृत्वापुरेस्थानंब्राह्मणान्न्यस्यतत्रतु  त्रैविद्यंवृत्तिमद्ब्रूयात्स्वधर्मःपाल्यतामिति १९०

तंकालमंतेवासीसमाप्नुयात्  तत्रकर्मच्चयत्कुर्यादाचार्यस्यैवतत्फलम् गृहीतशिल्पःसमयेकृत्वाचार्यप्रदक्षिणाम् शिक्षितश्चानुमान्यैनमंतेवासीनिवर्ततइति वधशब्दोत्रताडनार्थः दोषस्याल्पत्वात् इत्यभ्युपेत्याशुश्रूषाख्यंविवादपदम् १८९  संप्रतिसंविद्व्यतिक्रमःकथ्यते तस्यचलक्षणंनारदेनव्यतिरेकमुखेनदर्शितम् पाखंडनैगमादीनांस्थितिःसमयउच्यते समयस्यानपाकर्मतद्विवादपदंस्मृतमितिपारिभाषिकधर्मेणव्यवस्थानंसमयस्तस्यानपाकर्माव्यतिक्रमः परिपालनंतद्व्यतिक्रम्यमाणंविवादपदंभवतीत्यर्थः  तदुपक्रमार्थंकिंचिदाह

राजास्वपुरे दुर्गादौ स्थानं धवलगृहादिकं कृत्वा तत्र ब्राह्मणान्न्यस्य स्थापयित्वा तद्ब्राह्मणव्रातं त्रैविद्यं वेदत्रयसंपन्नं वृत्तिमद्भूहिरण्यादि संपन्नं च कृत्वा स्वधर्मो वर्णाश्रमनिमित्तः श्रुतिस्मृतिविहितो भवद्भिरनुष्ठीयतामिति तान्ब्राह्मणान्ब्रूयात् १९० एवं नियुक्तैस्तैर्यत्कर्म कर्तव्यं तदाह श्रौतस्मार्तधर्मानुपमर्देन समयान्निष्पन्नो यो धर्मो गोप्रचारोदकरक्षणदेवगृहपालनादिरूपः सोपि यत्नेन पालनीयः तथा राज्ञा च निजधर्माविरोधेनैव यः सामयिको धर्मो यावत्पथिकं भोजनं देयमस्मद्ग्रातिमंडलं तुरंगादयो न प्रस्थापनीया इत्येवंरूपः सोपि रक्ष

निजधर्माविरोधेन यस्तु सामयिको भवेत् सोपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः १९१
गणद्रव्यं हरेद्यस्तु संविदं लंघयेच्च यः सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत् १९२

णीयः ९१ एवं समयधर्मः परिपालनीय इत्युक्त्वा तदतिक्रमादौ दंडमाह यः पुनर्गणस्य ग्रामादिजनसमूहस्य संबंधि साधारणं द्रव्यम पहरति संविल्समयस्तां समूहकृतां राजकृतां वा यो लंघयेदतिकामेत्तदीयं सर्वं धनमपहृत्य स्वराष्ट्राद्विप्रवासयेन्निष्कासयेत् अयं च दंडोनुबंधाद्यतिशयेद्रष्टव्यः अनुबंधाल्पत्वेतु यो ग्रामदेशसंघानां कृत्वा सत्येन संविदम् विसंवदेन्नरो लोभात्तं राष्ट्राद्विप्रवासयेत् निगृह्य दापयेदेनं समयव्यभिचारिणम् चतुःसुवर्णषण्निष्कं शतमानं च राजतमिति मनुप्रतिपादितदंडानां निर्वासनचतुः सुवर्णषण्निष्कशतमानानां चतुर्णामन्यतमो जातिशक्त्याद्यपेक्षया कल्पनीयः १९२ ७ ७ ७

इदंवचनैः कर्तव्यमित्याह गणिनांमध्येयेसमूहहितवादनशीलास्तद्वचनमितरैर्गणानामंतर्गतैरनुसरणीयम् अन्यथादंडइत्याह यस्तुग
णिनांमध्येसमूहहितवादिवचनप्रतिबंधकारीसराज्ञाप्रथमसाहसंदंडनीयः १९३ राज्ञाचेत्थंगणिषुवर्तनीयमित्याह समूहकार्यनिवृत्त्यर्थं-
स्वपार्श्वमागतान्गणिनोनिवर्तितात्मीयप्रयोजनान्दानमानसत्कारैःसराजापरितोष्यविसर्जयेत् ९४ समूहदत्तापहारिणंप्रत्याह स

कर्तव्यंवचनंसर्वैःसमूहहितवादिनाम् यस्तत्रविपरीतःस्यात्सदाप्यःप्रथमंदमम् १९३
समूहकार्येआयातान्कृतकार्यान्विसर्जयेत् सदानमानसत्कारैःपूजयित्वामहीपतिः १९४
समूहकार्यप्रहितोयल्लभेततदर्पयेत् एकादशगुणंदाप्योयद्यसौनार्पयेत्स्वयम् १९५
धर्मज्ञाःशुचयोलुब्धाभवेयुःकार्यचिंतकाः कर्तव्यंवचनंतेषांसमूहहितवादिनाम् १९६

मूहकार्यार्थंमहाजनैःप्रेरितोराजपार्श्वेयद्धिरण्यवस्त्रादिकंलभते तदप्रार्थितएवमहाजनेभ्योनिवेदयेत् अन्यथालब्धादेकादशगुणंदंडंदाप
नीयः१९५ एवंप्रकाराश्चकार्यचिंतकाःकार्याइत्याह श्रौतस्मार्तधर्मज्ञाःबाह्याभ्यंतरशौचयुक्ताः अर्थेष्वलुब्धाःकार्यविचारकाः कर्तव्याःते
षांवचनमितरैःकार्यमित्येतदादरार्थंपुनर्वचनम् १९६

इदानीं त्रैविद्यानां प्रतिपादितं धर्मं श्रेण्यादिष्वतिदिशन्नाह एकपण्यशिल्पोपजीविनः श्रेणयः नैगमाः ये वेदस्याप्तप्रणीतत्वेन प्रामाण्यमिच्छंति पाशुपतादयः पाखंडिनो ये वेदस्य प्रामाण्यमेव नेच्छंति नग्नाटसौगतादयः गणो व्रातः आयुधीयादीनामेककर्मोपजीविनामेषां चतुर्विधानामप्ययमेव विधिः योनिजधर्माविरोधेनेत्यादिना प्रतिपादित एतेषां च श्रेण्यादीनां भेदं धर्मव्यवस्थां नृपो रक्षेत् पूर्वोपात्तां वृत्तिं च पालयेत् इति संविद्व्यतिक्रमप्रकरणम् १९७ संप्रति वेतनस्यानपाकर्माख्यं व्यवहारपदं प्रस्तूयते तत्स्वरूपं च नारदेनोक्तं भृत्यानां वेतनस्योक्तो दानादानविधिक्रमः वेतनस्यानपाकर्म तद्विवादपदं स्मृतमिति अस्यार्थः भृत्यानां वेतनस्य वक्ष्यमाणश्लोकैरुक्तो दानादानविधिक्रमो यत्र विवादपदे तद्वेतनस्यानपाकर्मेत्युच्यते

श्रेणिनैगमपाखंडिगणानामप्ययं विधिः भेदं चैषां नृपो रक्षेत्पूर्ववृत्तिं च पालयेत् १९७

गृहीतवेतनः कर्म त्यजन्द्विगुणमावहेत् अगृहीते समं दाप्यो भृत्यै रक्ष्य उपस्करः १९८

वादपदे तद्वेतनस्यानपाकर्मेत्युच्यते तत्र निर्णयमाह गृहीतं वेतनं येनासौ स्वांगीकृतं कर्म त्यजन् अकुर्वन् द्विगुणां भृतिं स्वामिने दद्यात् यदा पुनरनभ्युपगतं कर्म गृहीतवेतन एव त्यजति तदा समं यावद्वेतनमभ्युपगतं तावद्दाप्यो न द्विगुणं यद्यंगीकृतां भृतिं दत्वा बलात्कारयितव्यः कर्माकुर्वन्प्रतिश्रुत्य कार्यो दत्वा भृतिं बलादिति नारदवचनात् भृतिरर्पितेनैवोक्ता भृत्याय वेतनं दद्यात्कर्मस्वामी यथाक्रमम् आदौ मध्येवसाने वा कर्मणो यद्विनिश्चितमिति तैश्च भृत्यैरुपस्कर उपस्करणं लांगलादीनां प्रग्रहयोक्त्रादिकं यथाशक्त्या रक्षणीयमितरथा कृष्यादिनिष्पत्त्यनुत्पत्तेः १९८

भृतिमपरिछिद्य यः कर्मकारयतितंप्रत्याह यस्तुस्वामीवणिक्गोमीक्षेत्रिकोवा अपरिच्छिन्नवेतनमेवभृत्यंक र्मकारयति तस्माद्वाणिज्य पशुसस्यलक्षणात्कर्मणोयल्लब्धंतस्यदशमंभागंभृत्यायमहीक्षिताराज्ञादापनीयः १९९ अनाज्ञप्तकारिणंप्रत्याह यस्तुभृत्यःपण्यविक्रया द्युचितंदेशंकालंच पण्यविक्रयाद्यकुर्वन् दर्पादिनोल्लंघयेत्तस्मिन्नेववादेशेकालेचलाभमन्यथाव्ययाद्यतिशयसाध्यतयाहीनंकरोति तस्मि न्भृतके भृतिदानंप्रतिस्वामिनः छंदः इच्छाभवेद्यावदिच्छतितावद्द्यान्नपुनः सर्वामेवभृतिमित्यर्थः यदापुनर्देशकालाभिज्ञतया अधि

दाप्यस्तुदशमंभागंवाणिज्यपशुसस्यतः अनिश्चित्यभृतिंयस्तुकारयेत्समहीक्षिता १९९
देशंकालंवयोतीयाल्लाभंकुर्याच्चयोन्यथा तत्रस्यात्स्वामिनश्छंदोधिकंदेयंकृतेधिके ।२००
योयावत्कुरुतेकर्मतावत्तस्यतुवेतनम् उभयोरप्यसाध्यंचेत्साध्येकुर्याद्यथाश्रुतम् २०१

कोलाभः कृतस्तदा पूर्वपरिछिन्नायाभृतेरपिकिमपिधनमधिकंस्वामिनाभृत्यायदातव्यम् २०० अनेकभृत्यसाध्यकर्मणिभृतिदानप्रकार माह यदापुनरेकमेवकर्मनियतवेतनमुभाभ्यांक्रियमाणं उभयोरप्यसाध्यंस्यात् व्याघ्राद्यभिभवादुभाभ्यामपिशब्दाद्बहुभिरपियदिनप रिसमापितं तदायोभृत्योयावत्कर्मकरोति तावत्तस्मैतत्कृतकर्मानुसारेण मध्यस्थकल्पितंवेतनंदेयं नपुनः समम् नचावयवशः कर्मणि वेतनस्यापरिभाषितत्वाददानमितिमंतव्यम् साध्येतूभाभ्यांकर्मणिनिवर्तितेयथाश्रुतं यावत्परिभाषितंतावदुभाभ्यांदेयं नपुनः प्रत्येकंकृत्स्नवेत नंनापिकर्मानुरूपंपरिकल्प्यदेयम् २०१

आयुधीयभारवाहकोप्याह नविद्यतेराजदैविकंयस्यभांडस्य तत्तथोक्तम् तद्यद्यपिप्रज्ञाहीनतयावाहकेन नाशितं तदानाशानुसारे-
णासौ तद्भांडंदापनीयः तथाहिनारदः भांडंव्यसनमागच्छेद्यदिवाहकदोषतः दाप्योयत्तत्रनश्येत्तुदैवराजकृताहृतेइति यःपुनर्विवा
हाद्यर्थंमंगलवतिवासरे प्रतिष्ठमानस्यतत्प्रस्थानोपयिकंकर्म प्रागंगीकृत्य तदानींनकरिष्यामीति प्रस्थानविघ्नमाचरति तदासौद्विगुणां
भृतिंदाप्यः अत्यंतोत्कर्षहेतुकर्मनिरोधात् २०२ किंच प्रक्रांते अध्यवसिते प्रस्थाने स्वांगीकृतंकर्मयस्त्यजति असौभृतेःसप्तमंभागं
दाप्यः नन्वत्रैवविषये प्रस्थानविघ्नकृद्द्विद्याद्दिना द्विगुणभृतिदानमुक्तं इदानींसप्तमोभागइतिविरोधः उच्यते भृत्यांतरोपादानावसरा

अराजदैविकंनष्टंभांडंदाप्यस्तुवाहकः प्रस्थानविघ्नकृच्चैवप्रदाप्योद्विगुणांभृतिम् २०२
प्रक्रांतेसप्तमंभागंचतुर्थंपथिसंत्यजन् भृतिमर्द्धपथेसर्वांप्रदाप्यस्त्याजकोपिच २०३

संभवेस्वांगीकृतंकर्मयस्त्यजति तस्यसप्तमोविभागः यस्तुप्रस्थानलग्नसमयएव त्यजति तस्यद्विगुणभृतिदानमित्यविरोधः यःपुनः
पथिप्रक्रांतेगमने वर्तमानेसति कर्मत्यजति सभृतेश्चतुर्थंभागंदाप्यः अर्द्धपथेपुनःसर्वांभृतिंदाप्यः यस्तुत्याजकः कर्मात्यजंतंत्याज-
यति स्वामीपूर्वोक्तप्रदेशेषुसावपिपूर्वोक्तसप्तमभागादिकंभृत्यायदापनीयः एतच्चाव्याधितविषयम् भृत्योनार्तोनकुर्याद्योदर्पात्कर्मय
थोदितम् सदंड्यःकृष्णलान्यष्टौनदेयंतस्यवेतनमिति यदापुनर्व्याध्युपगतंतारितदिवसान्परिगणय्यपूरयतितदालभतएववेतनम्

आर्तस्तुकुर्यात्स्वस्थःसन् यथाभाषितमादितः सुदीर्घस्यापिकालस्यतल्लभेतैववेतनमितिमनुस्मरणात् यस्त्वपगतव्याधिःस्वस्थएववा
लस्यादिना स्वारब्धंकर्माल्पोनंकरोति परेणवानसमापयति तस्मैवेतनंनदेयमिति यथाहमनुः यथोक्तमार्तःस्वस्थोवायस्तत्कर्मनकार
येत् नतस्यवेतनंदेयमल्पोनस्यापिकर्मण इति इतिवेतनादानप्रकरणम् ३ अधुनाद्यूतसमाह्वयाख्यंविवादपदमधिक्रियते त
त्स्वरूपंनारदेनाभिहितम् अक्षबध्रशलाकाद्यैर्देवनंजिह्मकारितम् पणक्रीडावयोभिश्चपदंद्यूतसमाह्वयम् अक्षाःपाशकाः वध्र
काश्चर्मपट्टिकाः शलाकादंतादिमय्योदीर्घचतुरस्राः आद्यग्रहणाच्चतुरंगादिक्रीडासाधनंकरितुरंगरथादिकंगृह्यते तैरप्राणिभिर्यद्देव

गूहेशतिकवृद्धेस्तुसभिकःपंचकंशतम् गृह्णीयाद्धूर्तकितवादितराद्दशकंशतम् २०६

नंक्रीडापणपूर्विकाक्रियते तथावयोभिःकुक्कुटादिभिश्चशब्दान्मल्लमेषमहिषादिभिश्चप्राणिभिर्यापणपूर्विकाक्रीडाक्रियतेतदुभयंयथा
क्रमेणद्यूतसमाह्वयाख्यंविवादपदम् द्यूतंचसमाह्वयंश्चद्यूतसमाह्वयम् तदुक्तंमनुना अप्राणिभिर्यात्क्रियतेतल्लोकेद्यूतमुच्यते
प्राणिभिःक्रियमाणस्तुसविज्ञेयःसमाह्वय इति तत्रद्यूतसमाधिकारिणोवृत्तिमाह परस्परसंप्रतिपत्त्याकितवपरिकल्पितःपणो
ग्लह इत्युच्यते तत्रगूहेतदाश्रयाशतिकाशतपरिमिता तदधिकपरिमाणावावृद्धिर्यस्यासौशतिकवृद्धिकस्तस्माद्धूर्तकितवात्संच
कंशतमात्मवृत्त्यर्थं सभिकोगृह्णीयात् पंचपणा अयोयस्मिन्शते तच्छतंपंचकं तदस्मिन्वृध्या यलाभे इत्यादिनाकन् जितग्लह

स्यविंशतितमंभागंगृह्णीयादित्यर्थः सभाकितवनिवासार्थायस्यासौससभिकः कल्पिताक्षादिनिखिलक्रीडोपकरणस्तदुपचितद्रव्योपजी
वीसभापतिरुच्यते इतरस्मात्पुनरपरिपूर्णशतिकत्वेः कितवाहुशकंशतं जितद्रव्यस्यदशमंभागंगृह्णीयादितियावत् २०४ एवंक्लृ
प्तवृत्तिनासभिकेन किंकर्तव्यमित्याह एवंक्लृप्तवृत्तिर्द्यूतानुकारी सराज्ञाधूर्तकितवेभ्यो रक्षितस्तस्मैराज्ञे यथासंप्रतिपन्नमंशंदद्यात् त
थाजितंद्रव्यमुद्ग्राहयेत् बंधग्रहणेनासेधादिनाच पराजितसकाशादुद्धरेत् उन्द्धृत्यचतद्धनंजेत्रे जयिने सभिकोदद्यात् तथाक्षमी

ससभ्यक्पालितोदद्याद्राज्ञेभागंयथाकृतम् जितमुद्ग्राहयेज्जेत्रे दद्यात्सत्यंवचःक्षमी ५
प्राप्तेनृपतिनाभागेप्रसिद्धेधूर्तमंडले जितंससभिकेस्थानेदापयेदन्यथानतु ६

भूत्वासत्यंवचोविश्वासार्थं द्यूतकारिणांदद्यात् तदुक्तंनारदेन सभिकःकारयेत्द्यूतंदेयंदद्याच्चतत्कृतमिति २०५ यदापुनःसभि
कोदापयितुंनशक्नोतितदाराजादापयेदित्याह प्रसिद्धे अप्रच्छन्ने राजाध्यक्षसमन्विते सभिकसहिते कितवसमाजे सभिकेनच
राज भागेदत्ते राजाधूर्तकितवमविप्रतिपन्नंजितंपणंदापयेत् अन्यथाप्रच्छन्ने सभिकरहिते अदत्तराज भागे द्यूतेजितंप
णंजेत्रेनदापयेत् २०६ ७ ७ ७ ७ ७

जयपराजयविप्रतिपत्तौनिर्णयोपायमाह द्यूतव्यवहाराणांद्रष्टारः सभ्यास्तएवकितवाएवराज्ञानियोक्तव्याः तत्रश्रुताध्ययन-
संपत्त्यादिर्नियमोनास्ति साक्षिणश्चद्यूतेद्यूतकाराएवकार्याः नतत्रस्त्रीबालवृद्धकितवेत्यादिनिषेधोस्ति क्वचित्द्यूतंनिषेद्धुंदं
डमाह कूटैरक्षादिभिरुपधिनाचमतिवंचनहेतुना मणिमंत्रौषधादिना येदीव्यंति तान् श्वपदादिनांकयित्वाराजास्वराष्ट्रान्निर्वा
सयेत् नारदेननिर्वासनेविशेषउक्तः कूटाक्षदेविनःपापान् राजाराष्ट्राद्विवासयेत् कंठेक्षमालामासज्य सह्येषांविनयःस्मृ
तइति यानिचमनुवचनानिद्यूतनिषेधपराणि द्यूतंसमाह्वयंचैवयःकुर्यात्कारयीतवा तान्सर्वान्घातयेद्राजाशूद्रांश्चद्विजलिंगि

द्रष्टारोव्यवहाराणांसाक्षिणश्चतएवहि राज्ञासचिन्हंनिर्वास्याःकूटाक्षोपधिदेविनः २०७
द्यूतमेकमुखंकार्यंतस्करज्ञानकारणात् एषएवविधिर्ज्ञेयःप्राणिद्यूतेसमाह्वये २०८

नइत्यादीनितान्यपिकूटाक्षदेवनविषयतयाराजाध्यक्षसभिकसहितद्यूतविषयतयाचयोज्यानि २०७ किंच यत्पूर्वोक्तंद्यूतंतदेकमुखंए
कंमुखंप्रधानंयस्यद्यूतस्यतत्तथोक्तंकार्यम् राजाध्यक्षाधिष्ठितंराज्ञाकारयितव्यमित्यर्थः तस्करज्ञानकारणात् तस्करज्ञानरूपंप्रयो
जनंपर्यालोच्यप्रायशश्चौर्यार्जितधनाएवकितवाभवंत्यतश्चोरविज्ञानार्थमेकमुखंकार्यम् द्यूतधर्मंसमाह्वयेतिदिशन्नाह ग्लहेश-
तिकवृद्धेरित्यादिनायोद्यूतधर्मउक्तः सएवप्राणिद्यूतेमल्लमेषमहिषादिनिर्वर्त्येसमाह्वयसंज्ञकेज्ञातव्यः इतिद्यूतसमाह्वयाख्यंप्रक
रणं २०८

इदानींवाक्पारुष्यंप्रस्तूयते तल्लक्षणंचोक्तंनारदेन देशजातिकुलादीनामाक्रोशंन्यंगसंयुतम् यद्वचःप्रतिकूलार्थंवाक्पारुष्यंतदुच्यते देशा
दीनामाक्रोशन्यंगत्वं संयुतम् उच्चैर्भाषणमाक्रोशोन्यंगमवद्यं तदुभययुक्तंयत्प्रतिकूलार्थमुद्वेगजननार्थंवाक्यंतद्वाक्पारुष्यंकथ्यते तत्रकल
हप्रियाःखलुगौडाइतिदेशाक्रोशः नितांतंखलुलोलुपाविप्राइतिजात्याक्रोशः क्रूरचरितानन्नुवैश्वामित्राइतिकुलाक्षेपः आदिग्रहणात्त्वविद्या
शिल्पादिनिंदयाविद्वच्छिल्पादिपुरुषाक्षेपोगृह्यते तस्यच दंडतारतम्यार्थंनिष्ठुरादिभेदेनत्रैविध्यमभिधायतल्लक्षणंतेनैवोक्तं निष्ठुराश्लीष
तीव्रत्वात्तदपित्रिविधंस्मृतं गौरवानुक्रमात्तस्य दंडोपिस्यात्क्रमाद्गुरुः साक्षेपंनिष्ठुरंज्ञेयमश्लीलंन्यंगसंयुतम् पतनीयैरुपाक्रोशैस्तीव्रमा

सत्यासत्यान्यथास्तोत्रैर्न्यूनांगेंद्रियरोगिणाम् क्षेपंकरोतिचेद्दंड्यःपणानर्द्धत्रयोदशान् २०९

हुर्मनीषिणइति तत्रधिङ्मूर्खंजाल्ममित्यादिसाक्षेपम् अत्रन्यंगमित्यसभ्यम् अवद्यंभगिन्यादिगमनं तद्युक्तमश्लीलं सुरापोसीत्यादिम
हापातकाद्याक्रोशैर्युक्तंवचस्तीव्रम् तत्रनिष्ठुराक्रोशेसवर्णविषयेदंडमाह न्यूनांगाःकरचरणादिविकलाः न्यूनेंद्रियानेत्रश्रोत्रादिरहि
ताः रोगिणोदुश्चर्मप्रभृतयः तेषांसत्येनासत्येनान्यथास्तोत्रेणचनिंदार्थंयास्तुत्यायोनेत्रयुगलएवांधइत्युच्यते तत्सत्यम् यत्रपुनश्चक्षु
ष्मानेवांधइत्युच्यतेतदसत्यं यत्रविकृताकृतिरेवदर्शनीयस्त्वमसीतिउच्यतेतदन्यथास्तोत्रं एवंविधैःकार्याक्षेपैर्निर्भर्त्सनंकरोत्यसौअ



र्द्धाधिकत्रयोदशपणान्दंडनीयः काणंवाप्यथवाखंजमन्यंवापितथाविधं तथ्येनापिब्रुवन्दाप्योदंडंकार्षापणावरमितियन्मनुवचनंतदपि

दुर्वृत्तवर्णविषयम् यदापुनःपुत्रादयोजामात्रादीन् शपंतितदाशतंदंडनीयाइतितेनैवोक्तम् मातरंपितरंजायांभ्रातरंश्वशुरंगुरुम् आक्षारयन् शतंदा
प्यः पंथानंचाददद्गुरोरिति एतच्चसापराधेषुमात्रादिषुगुरुषुनिरपराधायांचजायायांद्रष्टव्यम् ९ अश्लीलाक्षेपेदंडमाह त्वदीयांभगिनीं
मातरंवा अभिगंतास्मीतिशपंतंराजापंचविंशतिकं पणानांपंचाधिकाविंशतिर्यस्मिन्दंडेसतथोक्तः तंदमंदापयेत् २१० एवंसमानगुणेषुव
र्णिषुदंडमभिधायविषमगुणेषुदंडंप्रतिपादयितुमाह अधर्मेष्वाक्षेपापेक्षयान्यूनवृत्तादिगुणेष्वर्धोदंडः पूर्ववाक्येपंचविंशतेः प्रकृतत्वात्तदपे
क्षयार्द्धः सार्द्धद्वादशपणात्मकोद्रष्टव्यः परभार्यासुपुनरविशेषेणद्विगुणः पंचविंशत्यपेक्षयैव पंचाशत्पणात्मकोवेदितव्यः तथोत्तमेषुचस्वापेक्ष

अभिगंतास्मि भगिनीमातरंवातवेतिह शपंतंदापयेद्राजापंचविंशतिकंदमं २१० अर्द्धोधमेषुद्विगुणःपरस्त्रीषूत्तमेषुच दंडप्र
णयनंकार्यंवर्णजात्युत्तराधरैः २११

याधिकश्रुतवृत्तेषु दंडः पंचाशत्पणात्मकएव वर्णानांमूर्द्धावसिक्तादीनांचपरस्पराक्षेपेदंडकल्प
नामाह वर्णाब्राह्मणादयः जातयोमूर्द्धावसिक्ताद्याः वर्णाश्चजातयश्चवर्णजातयः उत्तराश्च अधराश्चउत्तराधराः वर्णजातयश्चतेउत्तराधरा
श्चवर्णजात्युत्तराधराः तैः वर्णजात्युत्तराधरैः परस्परमाक्षेपेक्रियमाणे दंडस्यप्रणयनं प्रकर्षेणनयनमूहनंवेदितव्यम् तच्चदंडकल्पनमुत्त-
राधरैरितिविशेषोपादानादुत्तराधराभावापेक्षयैवकर्तव्यमित्यवगम्यते यथामूर्द्धावसिक्तंब्राह्मणाद्धीनंक्षत्रियादुत्कृष्टंआक्रुश्यब्राह्मणंक्ष
त्रियाक्षेपनिमित्तात्पंचाशत्पणदंडात्किंचिदधिकं पंचसप्तत्यात्मकंदंडमर्हति क्षत्रियोपितमाक्रुश्यब्राह्मणाक्षेपनिमित्ताच्छतदंडादूनंपंच

सप्ततिमेव दंडमर्हति मूर्द्धावसिक्तोपि तावाक्रुश्य तमेव दंडमर्हति मूर्द्धावसिक्तांबष्ठयोः परस्पराक्षेपे ब्राह्मणक्षत्रिययोः परस्पराक्रोशनिमित्तकौ यथाक्रमेण दंडौ वेदितव्यौ एवमन्यत्राप्यूहनीयम् ११ एवं सर्ववर्णविषये दंडमभिधाय वर्णानामेव प्रातिलोमानुलोमाक्षेपे दंडमाह अपवादा अधिक्षेपाः प्रातिलोम्येनापवादास्तेषु ब्राह्मणाक्रोशकारिणोः क्षत्रियवैश्ययोर्यथाक्रमेण पूर्ववाक्यात् द्विगुणपदोपात्तपंचाशत्पणापेक्षया द्विगुणाः शतपणास्त्रिगुणाः सार्द्धशतपणा दंडा वेदितव्याः शूद्रस्य ब्राह्मणाक्रोशे ताडनं जिह्वाछेदनं वा भवति यथाह मनुः शतं ब्राह्मणमाक्रुश्य क्षत्रियो दंडमर्हति वैश्योप्यर्द्धशतं द्वे वा शूद्रस्तु वधमर्हतीति विट्शूद्रयोरपि क्षत्रियादनंतरैकांतयोस्तुल्यन्यायतया

प्रातिलोम्यापवादेषु द्विगुणत्रिगुणा दमाः वर्णानामानुलोम्येन तस्मादर्द्धार्द्धहानितः २१२

शतमध्यर्द्धशतं च यथाक्रमेण क्षत्रियाक्रोशे वेदितव्यम् शूद्रस्य वैश्याक्रोशे शतं आनुलोम्येन तु वर्णानां क्षत्रियविट्शूद्राणां ब्राह्मणेनाक्रोशे कृते तस्माद्ब्राह्मणाक्रोशनिमित्तात्छतपरिमितात्क्षत्रियदंडात्सति वर्णमर्द्धस्यार्द्धस्य हानिं कृत्वावशिष्टं पंचाशत्पंचविंशति सार्द्धद्वादशपणात्मकं यथाक्रमं ब्राह्मणो दंडनीयः तदुक्तं मनुना पंचाशद्ब्राह्मणो दंड्यः क्षत्रियस्याभिशंसने वैश्यः स्यादर्द्धपंचाशच्छूद्रे द्वादशको दम इति क्षत्रियेण वैश्ये शूद्रे वाक्रुष्टे यथाक्रमं पंचाशत्पंचविंशतिको दमौ वैश्यस्य च शूद्राक्रोशे पंचाशदित्यूहनीयम् ब्राह्मणराजन्यवत्क्षत्रियवैश्ययोरिति गौतमस्मरणात् विट्शूद्रयोरेवमेव स्वजातिं प्रति तत्त्वत इति मनुस्मरणाच्च २१२ ७ ७

पुनर्निष्ठुराक्षेपमधिकृत्याह बाह्वादीनांप्रत्येकविनाशे वाचिकेवाचाप्रतिपादिते तवबाहुंछिनद्मीत्येवंरूपेत्रशत्यः शतपरिमितोदंडोवे-
दितव्यः पादनासादिषु आदिग्रहणात्स्फिगादिषु वाचिके विनाशेतदर्द्धिकः तस्यशतस्यार्द्धं तदर्द्धं तद्यस्यास्त्यसौतदर्द्धिकः पंचाशत्प-
णिकोदंडोवेदितव्यः २१३ किंच यःपुनर्जरादिनाक्षीणशक्तिस्तवबाह्वाद्यंगभंगंकरोमीत्येवंशपत्यसौदशपणान्दंडनीयः यःपुनःस
मर्थःक्षीणशक्तिंपूर्ववदाक्षिपत्यसौपूर्वोक्तशतादिदंडोत्तरकालंतस्याशक्तस्यक्षेमार्थंप्रतिभुवंदापनीयः १४ तीव्राक्रोशेदंडमाह

बाहुग्रीवानेत्रसक्थिविनाशेवाचिकेदमः शत्यस्तदर्द्धिकःपादनासाकर्णकरादिषु १३ अशक्तस्तुवद
न्नेवंदंडनीयःपणान्दश तथाशक्तःप्रतिभुवंदाप्यःक्षेमायतस्यतु १४ पतनीयकृतेक्षेपेदंडोमध्य
मसाहसः उपपातकयुक्तेतुदाप्यःप्रथमसाहसम् १५ त्रैविद्यनृपदेवानांक्षेपउत्तमसाहसः
मध्यमोजातिपूगानांप्रथमोग्रामदेशयोः १६

पातित्यहेतुभिर्ब्रह्महत्यादिभिर्वर्णिनामाक्षेपेमध्यमसाहसोदंडःउ
पपातकसंयुक्तेपुनर्गोघ्नस्त्वमसीत्येवमादिरूपेक्षेपेप्रथमसाहसंदंडनीयः १५ किंच त्रैविद्यावेदत्रयसंपन्नास्तेषांराज्ञांदेवानांच
क्षेपेउत्तमसाहसोदंडः येपुनर्ब्राह्मणमूर्द्धावसिक्तादिजातीनांपूगाःसंघास्तेषांआक्षेपेमध्यमसाहसोदंडः ग्रामदेशयोःप्रत्येकमा
क्षेपेप्रथमसाहसोदंडोवेदितव्यः इतिवाक्पारुष्यंनामविवादप्रकरणम् १६ ७ ७

दंडपारुष्यंनामसंप्रतिप्रस्तूयते तत्स्वरूपंचनारदेनोक्तम् परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः भस्मादिभिश्चोपघा-
तोदंडपारुष्यमुच्यतेइति परगात्रेषुस्थावरजंगमात्मकद्रव्येषु हस्तपादायुधैरादिग्रहणाद्ग्रावादिभिर्योभिद्रोहो हिंसनं दुःखो
त्पादनं तथाभस्मनाआदिग्रहणाद्रजःपंकपुरीषाद्यैश्चयउपघातः संस्पर्शनरूपंमनोदुःखोत्पादनंतदुभयंदंडपारुष्यं दंड्य
तेनेनेतिदंडोहस्तेनयत्पारुष्यंविरुद्धाचरणंजंगमादेर्द्रव्यस्यतद्दंडपारुष्यं तस्यत्ववगूरणादिकरणभेदेनत्रैविध्यमभिधा
य हीनमध्यमोत्तमद्रव्यरूपकर्मत्रैविध्यात् पुनस्त्रैविध्यंतेनैवोक्तम् तस्यापिदृष्टंत्रैविध्यंहीनमध्योत्तमक्रमात् अवगोर-
णनिःसंगपातनक्षतदर्शनैः हीनमध्योत्तमानांतुद्रव्याणांसमतिक्रमात् त्रीण्येवसाहसान्याहुस्तत्रकंटकशोधनइति निः
संगपातनं निःशंकप्रहरणं त्रीण्येवसाहसानि त्रिप्रकाराण्येवसाहसात्कृतानिदंडपारुष्याणीत्यर्थः तथावाग्दंडपारुष्ययोरु-
भयोरपिद्वयोः प्रवृत्तकलहयोर्मध्येयःक्षमतेतस्यनकेवलंदंडाभावः किंतुपूज्यतएव तथापूर्वंकलहेप्रवृत्तस्यदंडगुरुत्वम्
कलहेच बद्धवैरानुसंधातुरेवदंडभाक्त्वं तथाद्वयोरपराधविशेषापरिज्ञानेदंडःसमः तथाश्वपचादिभिरार्याणामपराधेकृतेस
ज्जनाएवदंडदापनेऽधिकारिणस्तेषामशक्यत्वेतान् राजाघातयेदेवनार्थंगृह्णीयादित्येवंपंचप्रकाराविधयस्तेनैवोक्ताः विधिः
पंचविधस्तूक्तएतयोरुभयोरपि पारुष्येसतिसंरंभादुत्पन्नेक्रुद्धयोर्द्वयोः समान्यतेयःक्षमतेदंडभाग्योतिवर्तते पूर्वमाक्षा
रयेद्यस्तुनियतंस्यात्सदोषभाक् पश्चाद्यःसोप्यसत्कारीपूर्वेतुविनयोगुरुः द्वयोरापन्नयोस्तुल्यमनुबध्नातियःपुनः सतयो

दंडमाप्नोतिपूर्वोवायदिवेतरः पारुष्यदोषावृतयोर्युगपत्संप्रवृत्तयोः विशेषश्चेन्नलक्ष्येतविनयः स्यात्समस्तयोः श्वपाकषंडचंडालव्यंगेषुवध
वृत्तिषु हस्तिपव्रात्यदासेषुगुर्वाचार्यांतगेषुच मर्यादातिक्रमेसद्योघातएवानुशासनम् यमेवह्यतिवर्तेरन्नेतेसंतंजननृषु सएवविन
यंकुर्यान्नतद्विनयभाङ्नृपः मलाह्येतेमनुष्याणांधनमेषांमलात्मकम् अतस्तान्घातयेद्राजानार्थदंडेनदंडयेदिति॥१६॥एवंभूतदंडपारु-
ष्यनिर्णयपूर्वकत्वाद्दंडप्रणयनस्यतत्स्वरूपसंदेहेनिर्णयहेतुमाह यदाकश्चिदहमस्यहमनेनहतइतिराज्ञेनिवेदयतितदाचिन्हैर्व
र्णादिस्वरूपगतैर्लिंगैर्युक्त्याकारणप्रयोजनपर्यालोचनात्मिकया आगमेनजनप्रवादेनचशब्दाद्दिव्येनवाकूटचिन्हकृतसंभावनाभया

असाक्षिकहतेचिन्हैर्युक्तिभिश्चागमेनच द्रष्टव्योव्यवहारस्तुकूटचिन्हकृतोभयात् १७भस्मपंकरजस्पर्शेदंडोदशपणःस्मृतः
अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शनेद्विगुणःस्मृतः१८ समेष्वेवंपरस्त्रीषुद्विगुणस्तूत्तमेषुच हीनेष्वर्द्धदमोमोहमदादिभिरदंडनम् १९

त्परीक्षाकार्या १७ एवंनिश्चितेसाधनविशेषेणदंडविशेषमाह भस्मनापंकेनरेणुनावायःपरंस्पर्शयत्यसौदशपणंदंडंदाप्यः अमेध्यमितिअश्रु-
श्लेष्मनखकेशकर्णविट्दूषिकाभुक्तोच्छिष्टादिकंचगृह्यते पार्ष्णिःपादस्यपश्चिमोभागः निष्ठ्यूतंमुखनिःसारितंजलंतैःस्पर्शनेततःपूर्वाद्दश-
पणात् द्विगुणोविंशतिपणोदंडोवेदितव्यः पुरीषादिस्पर्शनेपुनःकात्यायनेनविशेषउक्तः छर्दिमूत्रपुरीषाद्यैरापाद्यःसचतुर्गुणः षड्गुणःका
यमध्येस्यान्मूर्ध्नित्वष्टगुणःस्मृतइति आद्यग्रहणाद्वसाशुक्रासृङ्मज्जानोगृह्यंते एवंभूतःपूर्वोक्तोदंडःसवर्णविषयेद्रष्टव्यः परभार्या

सत्त्वाविशेषेण तथोत्तमेषु स्वापेक्षया अधिकश्च तद्वृत्तेषु पूर्वोक्ताद्दशपणाद्द्विंशतिपणाख्यदंडाद्द्विगुणो दंडो वेदितव्यः हीनेषु स्वापेक्षया न्यूनश्च ता
दिषु पूर्वोक्तस्यार्द्धदमः पंचपणो दशपणश्च वेदितव्यः मोहश्चित्तवैकल्यं मदो मद्यपानजन्यो वस्थाविशेषः आदिग्रहणाद्ग्रहावेशादिकं एतै
र्युक्तेन भस्मादिस्पर्शने कृतेपि दंडो न कर्तव्यः १८ १९ प्रातिलोम्यापराधे दंडमाह ब्राह्मणानां पीडाकरमब्राह्मणस्याक्षत्रियादेर्यदं
गं करचरणादिकं तच्छेत्तव्यम् क्षत्रियवैश्ययोरपि पीडां कुर्वतः शूद्रस्यांगच्छेदनमेव येन केनचिदंगेनाहिंस्याच्छ्रेयांसमंत्यजः छेत्त
व्यं तत्तदेवास्य तन्मनोरनुशासनमिति द्विजातिमात्रस्यापराधे शूद्रस्यांगच्छेदविधानाद्वैश्यस्यापि क्षत्रियापकारिणोयमेव दंडस्तु-

विप्रपीडाकरं छेद्यमंगमब्राह्मणस्य तु उद्गूर्णे प्रथमो दंडः संस्पर्शे तु तदर्द्धिकः २२०

ल्यन्यायत्वात् उद्गूर्णे वधार्थमुद्यते शस्त्रादिके प्रथमसाहसो वेदितव्यः शूद्रस्य पुनरुद्गूर्णेपि हस्तादिच्छेदनमेव पाणिमुद्यम्य दंडं
वा पाणिच्छेदनमर्हतीति मनुस्मरणात् उद्गोरणार्थे शस्त्रादिस्पर्शने तु तदर्द्धिकः प्रथमसाहसादर्द्धं दंडो वेदितव्यः भस्मा
दिसंस्पर्शे पुनः क्षत्रियवैश्ययोः प्रातिलोम्यापवादेषु द्विगुणा त्रिगुणा दम इति वाक्पारुष्यन्यायेन कल्प्यम् शूद्रस्य तत्रापि हस्तच्छेद एव-
अवनिष्ठीवतो दर्पाद्द्वावोष्ठौ छेदयेन्नृपः अवमूत्रयतो मेढ्रमवशर्द्धयतो गुदमिति मनुस्मरणात् २२० ७ ७

एवंप्रातिलोम्यापराधेदंडमभिधायपुनःसजातिमधिकृत्याह  हस्तेपादेवाताडनार्थमुद्गूर्णेयथाक्रमंदशपणोविंशतिपणश्चदंडोवेदितव्यः परस्परवधार्थंशस्त्रेउद्गूर्णेसर्वेषांवर्णिनांमध्यमसाहसोदंडः २१ किंच पादकेशवस्त्रकराणामन्यतमंगृहीत्वायउल्लुंचति झटित्याकर्षयति असौदशपणंदंड्यः पीडाचकर्षश्च अंशुकावेष्टश्च पादाध्यासश्च पीडाकर्षांशुकावेष्टपादाध्यासंतस्मिन्समुच्चितेशतंदंड्यः एतदुक्तंभवति अंशुकेनावेष्ट्यगाढमापीड्याकृष्यच्चयःपादेनघट्टयतितंशतंपणान्दमयेदिति २२ किंच यःपुनःशोणितंयथानदृश्यतेतथा

उद्गूर्णेहस्तपादेतुदशविंशतिकौदमौ  परस्परंतुसर्वेषांशस्त्रेमध्यमसाहसः २१
पादकेशांशुककरोल्लुंचनेषुपणान्दश पीडाकर्षांशुकावेष्टपादाध्यासेशतंदमः २२
शोणितेनविनादुःखंकुर्वन्काष्ठादिभिर्नरः द्वात्रिंशतंपणान्दंड्योद्विगुणंदर्शनेसृजः २३
करपाददतोभंगेछेदनेकर्णनासयोः मध्योदंडोव्रणोद्भेदेमृतकल्पहतेतथा २४

मृदुताडनंकाष्ठलोष्ठादिभिःकरोत्यसौद्वात्रिंशतंपणान्दंड्यः यदापुनर्गाढताडनेनलोहितंदृश्यते तदा द्वात्रिंशतोद्विगुणंचतुःषष्टिपणान्दंडनीयः त्वङ्मांसास्थिविभेदेपुनर्विशेषोमनुना दर्शितः त्वग्भेदकःशतं दंड्योलोहितस्यचदर्शकः मांसभेत्तातुषण्निष्कान्प्रवास्यस्त्वस्थिभेदकइति २३ किंच करपाददंतस्यप्रत्येकंभंगेकर्णनासस्यचप्रत्येकंछेदनेरूढव्रणस्योद्भेदनेमृतकल्पोयथाभवतितथाहतेताडितेमध्यमसाहसोवेदितव्यः अनुबंधादिनाविषयस्यसाम्यमत्रापादनीयम् २४

किंच गमनभोजनभाषणनिरोधेनेत्रस्य आदिग्रहणाज्जिह्वायाश्च प्रतिभेदने कंधरा ग्रीवा बाहुः प्रसिद्धः सक्थि ऊरू स्तेषां प्रत्येकं भंजने मध्यमसाहसो दंडः २५ अपिच यदा पुनर्बहवो मीलिता एकस्यांग भंगादिकं कुर्वंति तदा यस्मिन्यस्मिन् अपराधे यो यो दंड उक्त स्तत्तस्मा द्विगुणो दंडः प्रत्येकं वेदितव्यः अतिक्रूरत्वात्तेषां प्रातिलोम्यानुलोम्यापराधयो रप्येत स्यैव सवर्णविषयेभिहितस्य दंडजातस्य वाक्पारु ष्योक्तक्रमेण ह्रानिं वृद्धिं च कल्पयेत् वाक्पारुष्ये य एवोक्तः प्रातिलोम्यानुलोमतः स एव दंडपारुष्ये दाप्यो राज्ञा यथाक्रममिति स्मरणा

चेष्टाभोजनवाग्रोधे नेत्रादिप्रतिभेदने कंधराबाहुसक्थ्नां च भंगे मध्यमसाहसः २५ एकं घ्नतां बहू नां च यथोक्ताद्द्विगुणो दमः कलहापहृतं देयं दंडश्च द्विगुणस्ततः २६ दुःखमुत्पादयेद्यस्तु स समुत्थाने जं व्ययम् दाप्यो दंडं च यो यस्मिन् कलहे समुदाहृतः २७ अभिघाते तथा छेदे भेदे कुड्यावपातने पणान्दाप्यः पंच दश विंशतिं तद्व्ययं तथा २८

तु कलहे वर्तमाने यद्येनापहृतं तत्तेन प्रत्यर्पणीयं अपहृतद्रव्याद्द्विगुणश्चापहारनिमित्तो दंडो देयः २६ यो यस्य ताडनाद्दुःखमुत्पादयेत्स तस्य व्रणरोपणादौ औषधार्थं पथ्यार्थं च यो व्ययः क्रियते तं दद्यात् समुत्थानं व्रणरोपणं य स्मिन्कलहे यो दंड स्तं च दद्यान्न समुत्थानजव्ययमात्रं २७ परगात्राभिद्रोहे दंडमुक्त्वा नंतरं बहिरंगार्थनाशे दंडमाह मुद्गरादिना कुड्य स्याभिघाते विदारणे द्विधाकरणे च यथाक्रमं पंचपणो दशपणो विंशतिपणश्च दंडो वेदितव्यः अवपातने पुनः कुड्यस्यैतेत्रयो दंडाः समन्विता ग्राह्याः पुनः संपादनार्थं च धनं स्वामिने दद्यात् २८

अपिच परगृहेदुःखजनकंकंटकादिद्रव्यंक्षिपन् षोडशपणानदंड्यः प्राणहरणंपुनर्विषभुजंगादिकंप्रक्षिपन् मध्यमसाहसंदंड्यः २९
पश्वभिद्रोहेदंडमाह क्षुद्राणांपशूनांअजाविहरिणप्रायाणांताडनेदुःखोत्पादने असृक्स्त्रावणेशाखांगच्छेदने शाखाशब्देनचात्रप्राण
संचाररहितंशृंगादिकंलक्ष्यते अंगानिकरचरणप्रभृतीनि शाखाचांगंचशाखांगं तस्यछेदनेद्विपणप्रभृतिर्दंडः द्वौपणौयस्यदंडस्य
सद्विपणः द्विपणःप्रभृतिरादिर्यस्यदंडगणस्यासौद्विपणप्रभृतिः सचदंडगणोद्विपणश्चतुःपणःषट्पणोष्टपणइत्येवंरूपोनपुनर्द्विप

दुःखोत्पादिगृहेद्रव्यंक्षिपन्प्राणहरंतथा षोडशाद्यःपणान्दाप्योद्वितीयोमध्यमंदमम् २९
दुःखेचशोणितोत्पादेशाखांगच्छेदनेतथा दंडःक्षुद्रपशूनांतुद्विपणप्रभृतिक्रमात् २३०
लिंगस्यछेदनेमृत्यौमध्यमोमूल्यमेवच महापशूनामेतेषुस्थानेषुद्विगुणोदमः २३१

णस्त्रिपणश्चतुष्पणःपंचपणइति कथमितिचेदुच्यते अपराधपरत्वात्तावत्प्रथमदंडादुरुतरमुपरितनदंडत्रयमवगम्यते
तत्रचाश्रुतत्रित्वादिसंख्याश्रयणाद्वरंश्रुतद्विसंख्यायाएवाभ्यासाश्रयणेन गुरुत्वसंपादनमितिनिरवद्यम् ३० किंच तेषांक्षु
द्रपशूनांलिंगच्छेदनेमरणेच मध्यमसाहसोदंडः स्वामिनेचमूल्यंदद्यात् महापशूनांपुनर्गोगजवाजिप्रभृतीनामेतेषुस्थानेषु
ताडनलोहितस्त्रावणादिनिमित्तेषुपूर्वोक्ताद्दंडाद्विगुणोदंडोवेदितव्यः २३१

स्थावराभिद्रोहे दंडमाह प्ररोहा अंकुरास्तद्वत्यः शाखाः प्ररोहिण्यः याश्छिन्नाः पुनरुप्ताः प्रतिकांडं प्ररोहं निताः शाखा येषां वटादी-
नां ते प्ररोहिशाखिनः तेषां शाखाछेदने यतो मूलशाखा निर्गच्छति स स्कंधस्तस्यछेदने समूलवृक्षछेदने च यथाक्रमं विंशति पणा-
न् दंडादारभ्य पूर्वस्मादुत्तरोत्तर दंडो द्विगुणः एतदुक्तं भवति विंशतिपणश्चत्वारिंशत्पणोऽशीतिपण इत्येवं त्रयो दंडा यथाक्रमं शाख-
छेदनादिष्वपराधेषु भवंतीति अप्ररोहिशाखिनामप्युपजीव्य द्रुमाणामाम्रादीनां पूर्वोक्तेषु स्थानेषु पूर्वोक्ता एव दंडाः अनुपजीव्या
प्ररोहिशाखिषु पुनर्वृक्षेषु कल्प्यम् ३२ वृक्षविशेषान्प्रत्याह चैत्यादिषु जातानां वृक्षाणां शाखाच्छेदनादिषु पूर्वोक्ता दंडा द्विगुणः वि

प्ररोहिशाखिनां शाखास्कंधसर्वविदारणे उपजीव्य द्रुमाणां च विंशतेर्द्विगुणो दमः ३२ चैत्यश्मशानसीमासु पु-
ण्यस्थाने सुरालये जातद्रुमाणां द्विगुणो दमो वृक्षे षु विश्रुते ३३ गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधां पूर्व-
स्मृतादर्द्धदंडः स्थानेषूक्तेषु कर्तने ३४

श्रुते च पिप्पलपलाशादिके द्विगुणो दंडः ३३ गुल्मादीन्प्रत्याह गुल्मा अनतिदी-
र्घा निबिडलतामालत्यादयः गुच्छा अवल्लीरूपा असरलप्रायाः कुरंटकादयः क्षुपाः करवीरादयः सरलप्रायाः लता दीर्घयायिन्यो
द्राक्षातिमुक्ताप्रभृतयः प्रतानाः कांडप्ररोहरहिताः सरलयायिन्यः सारिवाप्रभृतयः औषध्यः फलपाकावसानाः शालिप्रभृतयः वीरुधः
छिन्ना अपि या विविधं प्ररोहंति गुडूचीप्रभृतयः एतेषां पूर्वोक्तेषु स्थानेषु विकर्तने च्छेदने पूर्वोक्ताद्दंडादर्द्धदंडो वेदितव्यः इति दंडपारुष्यम्॰
३४

संप्रतिसाहसंनामविवादपदंव्याचिख्यासुस्तल्लक्षणंतावदाह सामान्यस्यसाधारणस्ययथेष्टविनियोगानर्हत्वाविशेषेणपरकीयस्यवाद्रव्यस्या
पहरणंसाहसं कुतः प्रसभहरणात् प्रसह्यहरणाद्बलावष्टंभेनहरणादितियावत् एतदुक्तंभवति राजदंडंजनाक्रोशंवोल्लंघ्यराजपु
रुषेतरजनसमक्षंयत्किंचिन्मारणपरदारप्रकर्षणादिकंक्रियतेतत्सर्वंसाहसमिति साहसलक्षणम् अतःसाधारणधनपरधनयोर्ह
रणस्यापिबलावष्टंभेनक्रियमाणत्वात्साहसत्वमिति नारदेनापिसाहसस्यस्वरूपंविवृतम् सहसाक्रियतेकर्मयत्किंचिद्बलदर्पितैः
तत्साहसमितिप्रोक्तंसहोबलमिहोच्यतेइति तदिदंसाहसंचौर्यवाग्दंडपारुष्यस्त्रीसंग्रहणेषुव्यासक्तमपिबलदर्पावष्टंभोपाधितो-

## सामान्यद्रव्यप्रसभहरणात्साहसंस्मृतम्

भिद्यतेइतिदंडातिरेकार्थंपृथगभिधानम् तस्यचदंडवैचित्र्यप्रतिपादनार्थंप्रथमादिभेदेनत्रैविध्यमभिधायतल्लक्षणंतेनैवविवृतम्
तत्पुनस्त्रिविधंज्ञेयंप्रथमंमध्यमंतथा उत्तमंचेतिशास्त्रेषुतस्योक्तंलक्षणंपृथक् फलमूलोदकादीनांक्षेत्रोपकरणस्यच भंगाक्षेपो
पमर्दाद्यैः प्रथमंसाहसंस्मृतम् वासःपश्वन्नपानानांगृहोपकरणस्यच एतेनैवप्रकारेणमध्यमंसाहसंस्मृतम् व्यापादोविषशस्त्रा
द्यैःपरदाराभिमर्शनम् प्राणोपरोधियच्चान्यदुक्तमुत्तमसाहसम् तस्यदंडःक्रियापेक्षः प्रथमस्यशतावरः मध्यमस्यतुशास्त्र

ध्ये द्विष्टः पंचशतावरः उत्तमे साहसे दंडः सहस्रावरइष्यते वधः सर्वस्वहरणं पुरान्निर्वासनांकने तदंगच्छेदइत्युक्तो दंडउत्तम
साहसेइति वधादयश्चापराधतारतम्यादुत्तमसाहसेसमस्ताव्यस्ता वायोज्याः तत्र परद्रव्यापहरणरूपे साहसे दंडमाह त
स्यापहृतद्रव्यस्यमूल्यात् द्विगुणोदंडः यःपुनः साहसंकृत्वा नाहमकार्षमितिनिन्हुते तस्यमूल्याच्चतुर्गुणोदंडोभवति एतस्मादेव
विशेषदंडविधानात्प्रथमसाहसादिसामान्यदंडविधानमपहारव्यतिरिक्तविषयंगम्यते ३५ साहसस्यप्रयोजयितारंप्रत्याह

तन्मूल्याद्विगुणोदंडोनिन्हवेतुचतुर्गुणः ३५ यःसाहसंकारयतिसदाप्योद्विगुणंदमम् यश्चैवमुक्त्वाहंदाताकारये
त्सचतुर्गुणम् ३६ अर्घ्याक्रोशातिक्रमकृद्भ्रातृभार्याप्रहारदः संदिष्टस्याप्रदाताच समुद्रगृहभेदकृत् ३७ सा
मंतकुलिकादीनामपकारस्यकारकः पंचाशत्पणिकोदंड एषामितिविनिश्चयः ३८

यस्तुसाहसंकुर्वित्येवमुक्त्वाकारय
त्यसौ साहसिकदंडात् द्विगुणंदंडंदाप्यः यःपुनरहंतुभ्यंधनंदास्यामित्वंकुर्वित्येवमुक्त्वा साहसंकारयति सचतुर्गुणंदंडंदाप्योनुबंधातिशया
त् ३६ साहसिकविशेषंप्रत्याह अर्घ्यस्यार्घ्यार्हस्याचार्यादेराक्षेपमाज्ञातिक्रमंचयः करोति यश्चभ्रातृभार्यांताडयति तथासंदिष्टस्यप्रति
श्रुतस्यार्थस्याप्रदाता यश्चसमुद्रितंगृहमुद्घाटयति तथास्वगृहक्षेत्रादिसंसक्तगृहक्षेत्रादिस्वामिनांकुलिकानांस्वकुलोद्भवानां आदिग्रहणात्
स्वग्राम्यस्वदेशीयानांच योपकर्ता तेसर्वे पंचाशत्पणपरिमितेन दंडेन दंडनीयाः ३७ ३८ ७ ७

किंच नियोगंविनायः स्वेच्छयाविधवांगच्छति चौरादिभयाकुलैर्विक्रुष्टेयः शक्तोपिनाभिधावति यश्चवृथाक्रोशंकरोति यश्चंडालोब्रा
ह्मणादीन्स्पृशति यश्चशूद्रप्रव्रजितान् दिगंबरादीन्दैवेपित्र्येचकर्मणिभोजयति यश्चायुक्तंमातरंग्रहीष्यामीत्येवंशपथंकरोति त-
था अयोग्यएवशूद्रादिर्योग्यकर्माध्ययनादिकरोति वृषोबलीवर्दः क्षुद्रपशवोजादयस्तेषांपुंस्त्वस्यप्रजननशक्तेर्विनाशकः वृक्षक्षु
द्रपशूनामितिपाठेहिंग्वाद्यौषधप्रयोगेण वृक्षादेः फलप्रसूनानांपातयिता साधारणमपलपति साधारणद्रव्यस्यवंचकः दासीगर्भ-

स्वच्छंदविधवागामीविक्रुष्टेनाभिधावकः अकारणेचविक्रोष्टाचंडालश्चोत्तमान्स्पृशेत् ३९ शूद्रप्रव्रजितानां
चदैवेपित्र्येचभोजकः अयुक्तंशपथंकुर्वन्नयोग्योयोग्यकर्मकृत् ४० वृषक्षुद्रपशूनांचपुंस्त्वस्यप्रतिघातकृ
त् साधारणस्यापलापीदासीगर्भविनाशकृत् ४१ पितापुत्रस्वसृभ्रातृदंपत्याचार्यशिष्यकाः एषामपतितान्यो
न्यत्यागीचशतदंडभाक् ४२ वसानस्त्रीन्पणान्दंड्योनेजकस्तुपरांशुकम् विक्रयावक्रयाधानयाचितेषुपणान्दश
४३

स्यपातयिताच येचपित्रादयोपतिताएवसंतोन्योन्यंत्यजंति तेसर्वेप्रत्येकंपणशतंदंडार्हाभवंति इतिसाहसप्रकरणं ३९ ४० ४१ ४२
साहसप्रसंगान्तत्सदृशापराधेषुनेजकादीनांदंडमाह नेजकोवस्त्रस्यधावकः सयदिनिर्णेजनार्थंसमर्पितानिवासांसि स्वयमाच्छा
दयति तदासौपणत्रयंदंड्यः यःपुनस्तानिविक्रीणीते अवक्रयंवा एतावत्कालमुपभोगार्थंवस्त्रंदीयते मह्यमेतावद्धनंदेयमित्येवं

भाटकेन योददाति आधिलंघानयति स्वसुहृद्भ्योयाचितंवाददात्यसौमत्यपराधेदशपणान्दंडनीयः नानिचवस्त्राणिश्लक्ष्णशाल्म
लीफलकेक्षालनीयानि नपाषाणे नचव्यत्यसनीयानि नचस्वगृहेवासयितव्यानि इतरथादंडः शाल्मलेफलकेश्लक्ष्णेनिज्याद्वासां
सिनेजकः नचवासांसिवासोभिर्निर्हरेन्नचवासयेदितिमनुस्मरणात् यदापुनस्तानिप्रमादान्नाशयति तदानारदेनोक्तंद्रष्टव्यम् मू-
ल्याष्टभागोहीयेतसकृद्धौतस्यवाससः द्विःपादस्त्रिस्तृतीयांशश्चतुर्द्धौतेर्द्धमेवच अर्द्धक्षयात्तुपरतः पादांशापचयःक्रमात्-
यावत्क्षीणदशंजीर्णंजीर्णस्यानियमःक्षयइति अष्टपणक्रीतस्यसकृद्धौतस्यवस्त्रस्यनाशितस्याष्टमभागोनपणंमूल्यंदेयम्

पितापुत्रविरोधेतुसाक्षिणांत्रिपणोदमः अंतरेचतयोर्यःस्यात्तस्याप्यष्टगुणोदमः ४४

द्विर्द्धौतस्यतु पादोनं त्रिर्द्धौतस्यपुनस्तृतीयांशन्यूनम् चतुर्द्धौतस्यार्द्धपणचतुष्टयंदेयम् ततःपरंप्रतिनिर्णेजनमवशिष्टंमूल्यंपणदाद्य
पचयेन देयं यावज्जीर्णं जीर्णस्यपुनर्नाशितस्येच्छातोमूल्यदानकल्पनम् ४३ पितापुत्रयोःकलहेयःसाक्ष्यमंगीकरोति नपुनः
कलहं निवारयति असौपणत्रयंदंड्यः यश्चतयोःसपणविवादे नहानेप्रतिभूर्भवत्यसौचकारात्तयोर्यःकलहंवर्द्धयतिसोपित्रिपणा
दष्टगुणंचतुर्विंशतिपणान्दंडनीयः दंपत्यादिष्वयमेवदंडोनुसरणीयः ४४ ७ ५ ५

तुलातोलनदंडः शासनंपूर्वोक्तं मानंप्रस्थद्रोणादि नाणकंमुद्रादिचिन्हितंद्रम्मनिष्कादि एतेषांयःकूटकृत् देशप्रसिद्धपरिमाणा
दन्यथान्यूनत्वमाधिक्यंवाद्रम्मादेरव्यवहारिकमुद्रात्वंवाताम्राद्रिगर्भत्वंवाकरोति यश्चतैःकूटैर्जानन्नपिव्यवहरतितावुभौप्रत्ये
कमुत्तमसाहसंदंडनीयौ ४५ नाणकपरीक्षिणंप्रत्याह यःपुनर्नाणकपरीक्षीताम्राद्रिगर्भमेवद्रम्मादिकंसम्यगितिब्रूते स
म्यंचंवाकूटकमिति असावुत्तमसाहसंदंड्यः ४६ चिकित्सकंप्रत्याह यःपुनर्भिषङ्मिथ्याआयुर्वेदानभिज्ञएवजीवनार्थीचिकि-

तुलाशासनमानानांकूटकृन्नाणकस्यच एभिश्चव्यवहर्तायःसदाप्योदममुत्तमम् ४५ अकूटंकूट
कंब्रूतेकूटंयश्चाप्यकूटकम् सनाणकपरीक्षीतुदाप्यउत्तमसाहसम् ४६ भिषङ्मिथ्याचरन्दंड्य-
स्तिर्यक्षुप्रथमंदमम् मानुषेमध्यमंराजपुरुषेषूत्तमंदमम् ४७ अबध्यंयश्चबध्नातिबद्धंयश्चप्रमुंचति
अप्राप्तव्यवहारंचसदाप्योदममुत्तमम् ४८

त्सितज्ज्ञोहमितितिर्यङ्मनुष्यराजपुरुषेषुचिकित्सामाचरत्यसौयथा
क्रमेणप्रथममध्यमोत्तमसाहसान्दंडनीयः तत्रापितिर्यगादिषुमूल्यविशेषेणराजप्रत्यासत्तिविशेषेणदंडस्यलघुगुरुभावः
कल्पनीयः ४७ यःपुनर्बंधनानर्हमनपराधिनंराजाज्ञयाविनाबध्नाति यश्चबद्धंव्यवहारार्थमाहूतंअनिर्वृत्तव्यवहारंचोत्सृ
जत्यसौउत्तमसाहसंदाप्यः ४८ ५ ५ ५ ५ ५

यः पुनर्वणिक् व्रीहिकार्पासादेः पण्यस्याष्टममंशं कूटमानेन कूटतुलया अन्यथा वा परिहरति असौ पणानां द्विशतं दंडनीयः अ-
पहृतस्य द्रव्यस्य पुनर्वृद्धौ हानौ च दंडस्यापि वृद्धिहानी कल्प्ये ४९ भेषजमौषधद्रव्यं स्नेहो घृतादिः गंधद्रव्यमुशीरादि आदि-
शब्दाद्धिंगुमरीचादि एतेषु सारं द्रव्यं विक्रयार्थं मिश्रयतः षोडशपणो दंडः २५० किंच नविद्यते बहुमूल्या जातिर्यस्मिन् मृच्चर्मा-
दिके तदजाति तस्मिन् जातिकरणे विक्रयार्थं गंधवर्णरसांतरसंचारणेन बहुमूल्यजातीयसादृश्यसंपादनेन यथा मल्लिकामोदसंचा-

मानेन तुलया वापि योंऽशमष्टमकं हरेत् दंडं स दाप्यो द्विशतं वृद्धौ हानौ च कल्पितम् ४९
भेषजस्नेहलवणगंधधान्यगुडादिषु पण्येषु प्रक्षिपन् हीनं पणान् दाप्यस्तु षोडश १५०
मृच्चर्ममणिसूत्रायः काष्ठवल्कलवाससां अजातौ जातिकरणे विक्रेयाष्टगुणो दमः ५१

रेण मृत्तिकायां स्रुगंधामलकमिति मार्जारचर्मणि वर्णोत्कर्षापादनेन व्याघ्रचर्मेति स्फटिकमणौ वर्णांतरकरणेन पद्मरागइति कार्पासिके सूत्रे
गुणोत्कर्षाधानेन पट्टसूत्रमिति कालायसे वर्णोत्कर्षाधानेन रजतमिति बिल्वकाष्ठे चंदनामोदसंचारणेन चंदनमिति कंकोलेत्वगारव्यं लवंगमि-
तिकार्पासिके वाससि गुणोत्कर्षाधानेन कौशेयमिति विक्रेयस्यापादितसादृश्यमृच्चर्मादेः पण्यस्याष्टगुणो दंडो वेदितव्यः ५१ ७

मुद्गः पिधानं मुद्गेनसहवर्ततइतिसमुद्गं करंडकं परिवर्तनंव्यत्यासः योन्यंदेवमुक्तानां पूर्णंकरंडकंदर्शयित्वाहस्तलाघवेनान्यदेवस्फाटिका
नांपूर्णकरंडकंसमर्पयति यश्चसारभांडंकस्तूरिकादिकंकृत्रिमंकृत्वाविक्रयमाधिंवानयति तस्यदंडकल्पनावक्ष्यमाणावेदितव्या कृत्रि
मकस्तूरिकादेर्मूल्यभूतेपणभिन्नेन्यूनेन्यूनपणइतियावत् यस्मिन्कृत्रिमेविक्रीतेपंचाशत्पणोदंडः पणमूल्येपुनःशतम् द्विपणमूल्ये
द्विशतोदंडइत्येवंमूल्यवृद्धौदंडवृद्धिरून्नेया ५२ ५३ वणिजःप्रत्याह राजनिरूपितार्घस्यन्ह्रासंवृद्धिंवाजानंतोपि वणिजःसंभूयमि

समुद्गपरिवर्तंचसारभांडंचकृत्रिमम् आधानंविक्रयंवापिनयतोदंडकल्पना २५२ भिन्नेपणेतुपंचाशत्पणेतुशतमुच्यते द्विप
णोद्विशतेदंडोमूल्यवृद्धौचवृद्धिमान् ५३ संभूयकुर्वतामर्घंसबाधंकारुशिल्पिनाम् अर्घस्यन्ह्रासंवृद्धिंवाजानतोदमउत्तमः ५४
संभूयवणिजांपण्यमनर्घेणोपरुंधताम् विक्रीणतांवाविहितोदंडउत्तमसाहसः ५५ राजनिस्थाप्यतेयोर्घःप्रत्यहंतेनविक्रयः
क्रयोवानिस्त्रवस्तस्माद्वणिजांलाभकृत्स्मृतः ५६

लित्वाकारूणांरजकादीनां शिल्पिनांचित्रकारादीनां सबाधंपीडाकरमर्घांतरंलाभलोभा
त्कुर्वंतःपणसहस्रंदंडनीयाः ५४ किंच येपुनर्वणिजोमिलित्वादेशांतरादागतंपण्यमनर्घेणहीनमूल्येनप्रार्थयमानाउपरुंधंतिमहार्घेणवाविक्री
णंते तेषामुत्तमसाहसोदंडोविहितोमन्वादिभिः ५५ केनपुनरर्घेणपणितव्यमित्यत आह राजनिसंनिहितेसतियस्तेनार्घःस्थाप्यतेनिरूप्यते
तेनार्घेणप्रतिदिनंक्रयोविक्रयोवाकार्यःनिर्गतःस्त्रवोनिःस्त्रवोविशोषस्तस्माद्राजनिरूपितार्घाद्योनिःस्त्रवःसएववणिजांलाभकारी नपुनःस्वच्छंदपरि

कल्पितान् मनुनान्वार्थकरणेविशेषोदर्शितः पंचरात्रेपंचरात्रेपक्षेमासेतथागते कुर्वीतैषांप्रत्यक्षमर्घसंस्थापनंनृपइति ५८ किंच स्वदेश प्राप्तंपण्यंगृहीत्वायोविक्रीणीते असौपंचकंशतंपणशतेपणपंचकंलाभंगृह्णीयात् परदेशात्प्राप्तेपुनःपण्येशतपणमूल्येदशपणान्लाभंगृह्णी यात् यस्यपण्यस्यग्रहणदिवसएवविक्रयःसंपद्यते यःपुनःकालांतरेविक्रीणीते तस्यकालोत्कर्षवशाल्लाभोत्कर्षःकल्प्यः एवंचयथार्घेनि- रूपितेपणशतेपंचपणोलाभोभवति तथैवार्घोराज्ञास्वदेशपण्यविषयेस्थापनीयः ५७ पारदेश्यपण्यार्घनिरूपणप्रकारमाह देशांत राद्रागतेपण्येदेशांतरागमनप्रत्यागमनभांडग्रहणशुल्कादिस्थानेषुयावानुपयुक्तोर्थस्तावंतमर्थंपरिगण्यपण्यमूल्येनसहमेलयित्वा

स्वदेशपण्येतुशतंवणिग्गृह्णीतपंचकम् दशकंपारदेश्येतुयःसद्यःक्रयविक्रयी ५७
पण्यस्योपरिसंस्थाप्यव्ययंपण्यसमुद्भवम् अर्घोनुग्रहकृत्कार्यःक्रेतुर्विक्रेतुरेवच ५८

यथापणशतेदशपणोलाभःसंपद्यते तथाक्रेतृविक्रेत्रोरनुग्रहकार्यर्घोराज्ञास्थापनीयः ५८ प्रासंगिकंपरिसमाप्याधुनाविक्रीयासंप्र दानंप्रक्रमते तत्स्वरूपंचनारदेनाभिहितम् विक्रीयपण्यंमूल्येनक्रेतुर्यन्नप्रदीयते विक्रीयासंप्रदानंतद्विवादपदमुच्यतेइति तत्र विक्रेयद्रव्यस्यचराचरभेदेनद्वैविध्यमभिधायपुनःषड्विधत्वंतेनैवप्रत्यपादि लोकेस्मिन्द्विविधंपण्यंजंगमंस्थावरंतथा षड्विधस्तस्यतु बुधैर्दानादानविधिक्रमः गणितंतुलितंमेयंक्रिययारूपतःश्रियेति गणितंक्रमुकफलादि तुलितंकनककस्तूरीकुंकुमादि मेयंशाल्यादि

क्रियया वाहदोहादिरूपयोपलक्षितमश्वमहिष्यादि रूपतः पण्यांगनादि श्रियादास्यामरकतपद्मरागादीति एतत्षड्प्रकारकमपि पण्यंवि
क्रीयासंप्रयच्छतोदंडमाह गृहीतंमूल्यंयस्यपण्यस्यविक्रेत्रात द्गृहीतमूल्यंतद्यदिविक्रेता प्रार्थयमानायस्वदेशवणिजेक्रेत्रेनसमर्पयति
तच्चपण्यंयदिक्रयकाले बहुमूल्यंसत्कालांतरेल्पमूल्येनैवलभ्यते तदार्घन्हासकृतोयउदयोवृद्धिः पण्यस्यस्थावरजंगमात्मकस्यतेनसहि
तंपण्यंविक्रेनाक्रेत्रे दापनीयः यदामूल्यन्हासकृतः पण्यस्योदयोनास्ति किंतु क्रयकाले यावदेवयतोमूल्यस्येयत्पण्यमितिप्रतिपन्नंता
वदेवतदातत्पण्यमादायतस्मिन्देशे विक्रीणानस्ययोलाभस्तेनोदयेनसहितं दिकंत्रिकमित्यादि प्रतिपादितवृद्धिरूपेणोदयेनवासहितंक्रेतुर्वा-

गृहीतमूल्यंयः पण्यंक्रेतुर्नैवप्रयच्छति सोदयंतस्यदाप्योसौदिग्लाभंवादिगागते ५९

च्छावशाद्दापनीयः यथाहनारदः अर्घश्चेदवहीयेत सोदयंपण्यमावहेत् स्थानिनामेषनियमोदिग्लाभंदिग्विचारिणामिति यदा
त्वर्घमहत्त्वेन पण्यस्यन्यूनभावस्तदातस्मिन्पण्ये वस्त्रादिकेच यउपभोगस्तदाच्छादनसुखनिवसनादिरूपो विक्रेतुस्तत्सहितंपण्य
मसौदाप्यः यथाहनारदः विक्रीयपण्यंमूल्येनयः क्रेतुर्नप्रयच्छति स्थावरस्यक्षयंदाप्योजंगमस्यक्रियाफलमिति विक्रेतुरुप
भोगः क्षयउच्यते क्रेतृसंबंधित्वेनक्षीयमाणत्वात् नपुनः कुड्यपातभस्मघातादिरूपः तस्यतु उपहन्येतवापण्यंदह्येतापं
न्हियेतवा विक्रेतुरेवसोनर्थोविक्रीयासंप्रयच्छतइत्यत्रोक्तत्वात् यदात्वसौक्रेतादेशांतरात्पण्यग्रहणार्थमागतस्तदातत्पण्यमादा

यद्देशांतरे विक्रीणानस्य यो लाभस्तेन सहितं पण्यं विक्रेता क्रेत्रे दापयितव्यः अयं च क्रीतपण्यसमर्पणानियमोऽनुशयाभावे द्रष्टव्यः स
ति त्वनुशये क्रीत्वा विक्रीय वा किंचिदित्यादिमनूक्तं वेदितव्यम् ५९ किंच यदा पुनर्जातानुशयः क्रेता पण्यं न जिघृक्षति तदा विक्रीत
मपि पण्यमन्यत्र विक्रेयम् यदा पुनर्विक्रेत्रा दीयमानं क्रेता न गृह्णाति तच्च पण्यं राजदैविकेनोपहतं तदा क्रेतुरेवासौ हानिर्भवेत् प
ण्याग्रहणरूपेण क्रेतृदोषेण नाशितत्वात् २६० अपि च यदा पुनः क्रेत्रा प्रार्थ्यमानमपि पण्यं विक्रेता न समर्पयति अजातानुशयो पि तच्च
राजदैविकेनोपहतं भवति तदासौ हानिर्विक्रेतुरेव अतोऽन्यद्दुष्टं पण्यं विनष्टसदृशं क्रेत्रे देयं ६१ किंच यः पुनर्विनैवानुशयमेकस्य हस्ते विक्री

विक्रीतमपि विक्रेयं पूर्वं क्रेतर्यगृह्णति हानिश्चेत्क्रेतृदोषेण क्रेतुरेव हि सा भवेत् २६० राजदैवोपघातेन पण्ये दोषमुपागते
हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः ६१ अन्यहस्ते च विक्रीतं दुष्टं वादुष्टवद्यदि विक्रीणीते दमस्तत्र मूल्यात्तु द्विगुणो भ
वेत् ६२

तं पुनरन्यस्य हस्ते विक्रीणीते सदोषं वा पण्यं प्रच्छादितदोषं विक्रीणीते तदा तत्पण्यमूल्याद्द्विगुणो दमो वेदितव्यः नारदेनाप्यत्र वि
शेषो दर्शितः अन्यहस्ते च विक्रीय योऽन्यस्मै तु प्रयच्छति द्रव्यं तद्द्विगुणो दाप्यो विनयस्तावदेव तु निर्दोषं दर्शयित्वा तु सदोषं यः प्रयच्छति स
मूल्याद्द्विगुणं दाप्यो विनयं तावदेव तु इति सर्वश्चायं विधिर्दत्तमूल्ये पण्ये द्रष्टव्यः अदत्तमूल्ये पुनः पण्ये वाङ्मात्रक्रये क्रेतृविक्रेत्रोर्नियमकारि
णः समयादृते प्रवृत्तो निवृत्तो वा न कश्चिद्दोषः यथाह नारदः दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्तितः अदत्तेऽन्यत्र समयान्न विक्रेतुरविक्रय इति

६२

विक्रयानुशयोभिहितः क्रीतानुशयस्वरूपंतुप्राक्प्रपंचितं अधुनातदुभयसाधारणंधर्ममाह परीक्षितक्रीतपण्यानांक्रयोत्तरकालंक्रयकालपरिमि
णतोर्घहृतावृद्धिमपश्यता क्रेत्रानुशयोनकार्यः विक्रेत्राचमहार्घनिबंधनंपण्यक्षयमपश्यतानानुशयितव्यम् वृद्धिक्षयपरिज्ञानेपुनः क्रेतृ
विक्रेत्रोरनुशयोभवतीतिव्यतिरेकादुक्तंभवति अनुशयकालावधिस्तुनारदेनोक्तः क्रीत्वामूल्येनयत्पण्यंदुष्क्रीतंमन्यतेक्रयी विक्रेतुःप्र
तिदेयंतत्तस्मिन्नेवान्ह्यविक्षतम् द्वितीयेन्हिददत्क्रेतामूल्यात्त्रिंशांशमावहेत् द्विगुणंतुतृतीयेन्हिपरतःक्रेतुरेवतदिति अपरीक्षि
तक्रयविक्रयेपुनः पण्यवैगुण्यनिबंधनानुशयावधिर्दशैकपंचसप्ताहेत्यादिनादर्शितएव तदनयावाचोयुक्त्यावृद्धिक्षयपरिज्ञान

क्षयंवृद्धिंचवणिजापण्यानामविजानता क्रीत्वानानुशयःकार्यःकुर्वन्षड्भागदंडभाक् ६३

स्यानुशयकारणत्वमवगम्यते तथापण्यपरीक्षाविधिबलात्पण्यदोषाणामनुशयकारणत्वं अतः पण्यदोषवृद्धिक्षयकारणान्वितया
भावेनुशयकालाभ्यंतरेपि यद्यनुशयंकरोतितदापण्यषड्भागंदंडनीयः अनुशयकारणसद्भावेप्यनुशयकालातिक्रमेणानुशयंकुर्व
तोयमेवदंडः उपभोगेनाविनश्वरेषुस्थिरार्घेष्वनुशयकालातिक्रमेणानुशयंकुर्वतोमनूक्तोदंडोद्रष्टव्यः परेणतुदशाहस्यनदद्या-
न्नापिदापयेत् आददानोददच्चैवराज्ञादंड्यःशतानिषडिति इतिविक्रीयासंप्रदानंनामप्रकरणम् ६३ ७

संभूयसमुत्थानंनामविवादपदमिदानीमभिधीयते सर्वेवयमिदंकर्ममिलिताःकुर्मइत्येवंरूपासंप्रतिपत्तिःसमवायः तेनयेवन्
णिङ्गदनर्तकप्रभृतयोलाभलिप्सवः प्रातिस्विकंकर्मकुर्वते तेषांलाभालाभावुपचयापचयौ यथाद्रव्यंयेनयावद्धनंपण्यग्रहणार्थं
दत्तंतदनुसारेणावसेयौ यद्वा प्रधानगुणभावपर्यालोचनयास्यभागद्वयमस्यैकोभागइत्येवंरूपयासंविदासमयेनयथासंप्रतिप
न्नौतथावेदितव्यौ ६४ किंच तेषांसंभूयप्रचरतांमध्येपण्यमिदमित्थंनव्यवहर्तव्यमिति प्रतिषिद्धमाचरतायन्नाशितमनादि

समवायेनवणिजांलाभार्थंकर्मकुर्वताम् लाभालाभौयथाद्रव्यंयथावासंविदाकृतौ ६४
प्रतिषिद्धमनादिष्टंप्रमादाद्यच्चनाशितं सतद्दद्याद्विप्लवाच्चरक्षिताद्दशमांशभाक् ६५
अर्घप्रक्षेपणाद्विंशंभागंशुल्कंनृपोहरेत् व्यासिद्धंराजयोग्यंचविक्रीतंराजगामितत् ६६

ष्टमननुज्ञातंवाकुर्वाणेनतथाप्रमादात्प्रज्ञाहीनतयावायेन यन्नाशितंसतत्पण्यंवणिग्भ्योदद्यात् यःपुनस्तेषांमध्येचौरराजादिजनिताद्व्यसनात्प
ण्यंपालयतिसतस्माद्रक्षितात्पण्याद्दशममंशंलभते ६५ इयतःपण्यस्येयन्मूल्यमित्यर्घस्तस्यप्रक्षेपणात् राजतोनिरूपणाद्धेतोरसौ
मूल्याद्विंशतितममंशंशुल्कार्थंगृह्णीयात् यत्पुनर्व्यासिद्धमन्यत्रनविक्रेयमिति राज्ञाप्रतिषिद्धंयद्राजयोग्यंमणिमाणिक्याद्यप्रतिषिद्ध
मपितद्राज्ञेनिवेद्यलाभलोभेनविक्रीतंचेद्राजगामि मूल्यदाननिरपेक्षंतत्सर्वंपण्यंराजापहरेदित्यर्थः ६६ ७

यः पुनर्वणिक् शुल्कंवंचनार्थंपण्यपरिमाणंनिन्हुते शुल्कग्रहणस्थानाच्चापसरति यश्चास्येदमस्येदं वेत्येवंविवादास्पदीभूतंपण्यंक्रीणा
निविक्रीणीतेवा तेसर्वेपण्यादष्टगुणंदंडनीयाः ६७ अपिच शुल्कंहिद्विविधं स्थलजंजलजंच तत्रस्थलजमर्घप्रक्षेपणाद्विंशंभागं
शुल्कंनृपोहरेदित्यत्रोक्तम् जलजंतुमानवेभिहितम् पणंयानंतरेदाप्यंपुरुषोर्द्धपणं तरे पादंपशुश्चयोषिच्चपादार्द्धंरिक्तकःपुमान्
भांडपूर्णानियानानितार्यंदाप्यानिसारतः रिक्तभांडानियत्किंचित्पुमांसश्चापरिच्छदाः गर्भिणीतुद्विमासादिसर्वःप्रव्रजितामुनिः
ब्राह्मणालिंगिनश्चैवनदाप्यास्तारिकंनराइति शुल्कद्वयेप्ययमपरोविशेषः नभिन्नकार्षापणमस्तिशुल्कंनशिल्पवृत्तौनशि

मिथ्यावदन्परीमाणंशुल्कस्थानादपासरन् दाप्यस्त्वष्टगुणंयश्चसव्याजंक्रयविक्रयी ६७
नरिकःस्थलजंशुल्कंगृह्णन्दाप्यःपणान्दश ब्राह्मणप्रातिवेश्यानामेतदेवानिमंत्रणे ६८

शौनदूते नभैक्षवृत्तेनहृतावशेषेनश्रोत्रियेप्रव्रजितेनयज्ञेइति तीर्यतेनेनेतितरिः नावादिः तज्जन्यशुल्केधिकृतस्तरिकः स
यदास्थलोद्भवंशुल्कंगृह्णाति तदादशपणान्दंडनीयः वेशोवेश्म प्रतिवेशइति स्ववेश्माभिमुखंस्ववेश्मपार्श्वस्थंचोच्यते तत्रभवाः
प्रातिवेश्याः ब्राह्मणाश्चतेप्रातिवेश्याश्च ब्राह्मणप्रातिवेश्याः तेषांश्रुतवृत्तसंपूर्णानांश्राद्धादिषुविभवेसत्यनिमंत्रणेएतदेवदश
पणात्मकंदंडनंवेदितव्यम् ६८ ७ ७ ७ ७ ७

देशांतरमृतवणिग्रिक्थंप्रत्याह यदासंभूयकारिणांमध्येयःकश्चिद्देशांतरगतोमृतस्तदातदीयमंशंदायादाः पुत्राद्यपत्यवर्गोबां-
धवोमातृपक्षामातुलाद्याः ज्ञातयोपत्यवर्गव्यतिरिक्ताः सपिंडावाआगताः संभूयव्यवहारिणोयेदेशांतरादागतास्तेवागृह्णीयुः
तैर्विनादायादाद्यभावेराजागृह्णीयात् वाशब्देनचदायादादीनांवैकल्पिकमधिकारंदर्शयति पौर्वापर्यनियमस्तुपत्नीदुहितरइत्या
दिप्रतिपादितएवात्रापिवेदितव्यः शिष्यसब्रह्मचारिब्राह्मणनिषेधोवणिक्प्राप्तिश्चवचनप्रयोजनम् वणिजामपिमध्येयः

देशांतरगतेप्रेतेद्रव्यंदायादबांधवाः ज्ञातयोवाहरेयुस्तदागतास्तैर्विनानृपः ६९

पिंडदानर्णदानादिसमर्थः सगृह्णीयात् सामर्थ्याविशेषेसर्वेवणिजः संसृष्टिनोविभज्यगृह्णीयुः तेषामप्यभावेदशवर्षं-
दायादाद्यागमनंप्रतीक्ष्यानागतेषुस्वयमेवराजागृह्णीयात् तदिदंनारदेनस्पष्टीकृतम् एकस्यचेत्स्यान्मरणंदायादोस्य
तदाप्नुयात् अन्योवासतिदायादेशक्ताश्चेत्सर्वएववते तदभावेतुगुप्तंतत्कारयेद्दशवत्सरान् अस्वामिकमदायादंदशव
र्षस्थितंततः राजातदात्मसात्कुर्यादेवंधर्मोमहीयतइति ६९ ॥ ॥ ॥

किंच जिह्मोवंचकः तंनिर्लाभंनिर्गतलाभमाच्छिद्यत्यजेयुर्बहिःकुर्युः यश्चसंभूयकारिणांमध्येभांडप्रत्यवेक्षणादिकंकर्तुमसमर्थोसावन्येनस्वक
र्मभांडभारवाहनंतदायव्ययपरीक्षणादिकंकारयेत् प्रागुपदिष्टंवणिग्धर्ममृत्विगादिष्वतिदिशति अनेनलाभा लाभौयथाद्रव्यमित्यादिवणि
ग्धर्मकथनेन ऋत्विजांहोत्रादीनांकृषीवलानांनटनर्तकतक्षादीनांचशिल्पकर्मोपजीविनांविधिर्वर्त्तनप्रकार आख्यातः तत्रचऋत्विजांधन-
विभागेविशेषोमनुनादर्शितः सर्वेषामर्धिनोमुख्यास्तदर्द्धेनार्धिनोपरे तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्चपादिनइति अस्यायमर्थः ज्यो
तिष्टोमेन तंशतेनदीक्षयंतीतिवचनेनगवांशत मृत्विगानतिरूपेदक्षिणाकार्येविनियुक्तम् ऋत्विजश्चहोत्रादयःषोडश तत्र कस्यकियानं

जिह्मंत्यजेयुर्निर्लाभमशक्तोन्येनकारयेत् अनेनविधिराख्यातऋत्विक्कर्षककर्मिणां २७०

शइत्यपेक्षायामिदमुच्यते सर्वेषांहोत्रादीनांषोडशर्त्विजांमध्येयेमुख्याश्चत्वारो होत्रध्वर्युब्रह्मोद्गातारः तेगोशतस्यार्द्धिनः सर्वेषांभा
गपूरणोपपत्तिवशादष्टाचत्वारिंशद्रूपार्द्धेनार्द्धभाजः अपरेमैत्रावरुणप्रतिप्रस्थातृब्राह्मणाच्छंसिप्रस्तोतारस्तदर्द्धेननस्यमुख्यां-
शस्यार्द्धेनचतुर्विंशतिरूपेणार्द्धभाजः येपुनस्तृतीयिनःअच्छावाकनेष्टाग्नीध्रप्रतिहर्तारस्तेतृतीयिनोमुख्यांशस्यषोडशगोरूपतृ
तीयांशेन तृतीयांशभाजः येतुपादिनःग्रावस्तुदुन्नेतृपोतृसुब्रह्मण्यास्तेमुख्यभागस्य यश्चतुर्थांशोद्वादशगोरूप स्तद्भाजः
ननुकथमयमंशनियमोघटते नतावदत्रसमयोनापिद्रव्यसमवायोनापिवचनंयद्दृशान्द्रागनियमःस्यादतःसमंस्यादश्रुति-

त्वादितिन्यायेन सर्वेषां समांशभाक्त्वं कर्मानुरूपेण वांशभाक्त्वमितियुक्तम् अत्रोच्यते ज्योतिष्टोमप्रकृतिके द्वादशाहेऽहीनस्तृतीयि
नः पादिन इति सिद्धवदनुवादो न घटते यदि तत्प्रकृतिभूते ज्योतिष्टोमे अर्द्धतृतीयचतुर्थांशभाक्त्वं मैत्रावरुणादीनां न स्यात् द्वितीये दीक्षा
ईप्रभृति समाख्याबलात् प्रागुक्तोंशनियमो च कल्प्यत इति निरवद्यम् इति संभूयसमुत्थानप्रकरणम् ७० इदानीं स्तेयं प्रस्तूयते
तल्लक्षणं च मनुनाभिहितम् स्यात्साहसं त्वन्वयवत्प्रसभं कर्म यत्कृतम् निरन्वयं भवेत्स्तेयं कृत्वापन्हवते च यदिति अन्वयवत् द्रव्यर
क्षि राजाध्यक्षादिसमक्षम् प्रसभं बलावष्टंभेन यत्परधनहरणादिकं क्रियते तत्साहसम् स्तेयं तु तद्विलक्षणम् निरन्वयं द्रव्यस्वा

ग्राहकैर्गृह्यते चौरो लोप्त्रेणाथ पदेन वा पूर्वकर्मापराधी च तथा चाशुद्धवासकः २७१

म्याद्यसमक्षं वंचयित्वा यत्परधनहरणं तदुच्यते यच्च सान्वयमपि कृत्वा न मयेदं कृतमिति भयान्निन्हुते तदपि स्तेयम् नारदेना-
प्युक्तम् उपायैर्विविधैरेषां छलयित्वापकर्षणम् सुप्तमत्तप्रमत्तेभ्यः स्तेयमाहुर्मनीषिण इति तत्र तस्करग्रहणपूर्वकत्वाद्दण्ड
नस्य ग्रहणस्य च ज्ञानपूर्वकत्वात् ज्ञानोपायं तावदाह यश्चौरोयमिति जनैर्विख्याप्यते असौ ग्राहकै राजपुरुषैः स्थानपालप्रभृति-
भिर्गृहीतव्यः लोप्त्रेणापहृतभाजनादिना वा चौर्यचिन्हेन नाशदिवसादारभ्य चौर्यपदानुसरणेन वा ग्राह्यः यश्च पूर्वकर्मापराधी प्रा
क्प्रख्यातचौर्यः अशुद्धेप्य ज्ञातो वासः स्थानं यस्यासौ अशुद्धवासकः सोपि ग्राह्यः ७१ ७ ७

किंच नकेवलंपूर्वोक्ताग्राह्याः किंत्वन्येपिवक्ष्यमाणैर्लिंगैः शंकयाग्राह्याः जातिनिन्हवेननाहंशूद्र इत्येवंरूपेण नामनिन्हवेनना हंलपित्थइत्येवंरूपेण आदिग्रहणात्स्वदेशग्रामकुलाद्यपलापेनचलक्षिताग्राह्याः द्यूतपण्यांगनामद्यपानादिव्यसनेष्वतिप्रस क्तास्तथाकुतस्त्योसित्वमिति चौरग्राहिभिः पृष्टा यदिशुष्कमुखोभिन्नस्वरोवाभवेतितर्ह्यसावपिग्राह्यः बहुवचनात्स्विन्न ललाटादीनांग्रहणम् तथायेनिःकारणंकियदस्यधनंकिंवास्यगृहमिति पृच्छंति वेषांतरधारणेनात्मानंगूहयित्वाये

अन्येपिशंकयाग्राह्याजातिनामादिनिन्हवैः द्यूतस्त्रीपानसक्ताश्चशुष्कभिन्नमुखस्वराः ७२
परद्रव्यगृहाणांचपृच्छकागूढचारिणः निरायाव्ययवंतश्चविनष्टद्रव्यविक्रयाः ७३

चरंति येचायाभावेपिबहुव्ययकारिणः येचविनष्टद्रव्याणांजीर्णवस्त्रभिन्नभाजनादीनामनिर्ज्ञातस्वामिकानांविक्रयकास्तेसर्वेचौ रसंभावनयाग्राह्याः एवंनानाविधचौर्यलिंगान्पुरुषान्गृहीत्वाएतेचौराः किंवासाधवइतिसम्यक्परीक्षेन नपुनर्लिंगदर्शनमात्रेणचौर निर्णयंकुर्यात् अचौरस्यापिलोप्त्रादिलिंगसंबंधसंभवात् यथाहनारदः अन्यहस्तात्परिभ्रष्टमकामादुत्थितंभुवि चौरेणवापरिक्षिप्तं लोप्त्रंयत्नात्परीक्षयेत् तथा असत्याःसत्यसंकाशाःसत्याश्चासत्यसन्निभाः दृश्यंतेविविधाभावास्तस्मादुक्तंपरीक्षणमिति ७२ ७३

एवंचौर्यशंकयागृहीतेनात्माशोधनीयइत्याह यदिचौर्यशंकयागृहीतस्तन्निराकरणार्थमात्मानंनशोधयतितर्हि वक्ष्यमाणधनदापनवधादिदंडभाग्भवेत् अतोमानुषेणतदभावेदिव्येनवाशोधनीयः ननुनाहंचौरइतिमिथ्योत्तरे कथंप्रमाणंसंभवति तस्याभावरूपत्वात् उच्यते दिव्यस्यतावद्भावाभावगोचरत्वरुच्यावान्यतरःकुर्यादित्यत्रप्रतिपादितम् मानुषंपुनर्यद्यपिसाक्ष्याख्यंशुद्धमिथ्योत्तरेनसंभवतितथापिकारणसंसृष्टभावरूपमिथ्याकारणसाधनमुखेनाभावमपिगोचरयत्येव यथानाशापहारकाले अहंदेशांतरस्थइत्यभियुक्तेभाविनेचौर्याभावस्याप्यर्थासिद्धेः शुद्धिर्भवत्येव ७४ चौरदंडमाह यस्तुप्रागुक्तपरीक्षया

गृहीतःशंकयाचौर्येनात्मानंचेद्विशोधयेत् दापयित्वागतंद्रव्यंचौरदंडेनदंडयेत् ७४
चौरंप्रदाप्यापहृतंघातयेद्विविधैर्वधैः सचिन्हंब्राह्मणंकृत्वास्वराष्ट्राद्विप्रवासयेत् ७५

तन्निरपेक्षंवानिश्चितचौर्यस्तंस्वामिनेअपहृतंधनंस्वरूपेणमूल्यकल्पनयावादापयित्वाविविधैर्घातैर्घातयेत् एतच्चोत्तमसाहसदंडप्राप्तियोग्योत्तमद्रव्यविषयम् नपुनःपुष्पवस्त्रादिक्षुद्रमध्यमद्रव्यापहारविषयम् साहसेषुयएवोक्तस्त्रिषुदंडोमनीषिभिः सएवदंडस्तेयेपिद्रव्येषुत्रिष्वनुक्रमादितिनारदवचनेनवधरूपस्योत्तमसाहसस्योत्तमद्रव्यविषयेव्यवस्थापितत्वात् यत्पुनर्दंडमनुवचनम् अन्यायोपात्तवित्तत्वाद्धनमेषांमलात्मकं अतस्तान्घातयेद्राजानार्थदंडेनदंडयेदिति

तदपिमहापराधविषयम् चौरविशेषेपवादमाह ब्राह्मणंपुनश्चौरंमहत्यपराधेपिनघातयेदपितुललाटेंकयित्वास्वदेशान्निष्कासयेत् अं
कनंचश्वपदाकारंकार्यम् तथाचमनुः गुरुतल्पेभगःकार्यः सुरापानेसुराध्वजः स्तेयेचश्वपदंकार्यंब्रह्महण्यशिराःपुमानिति एत
च्चदंडोत्तरकालंप्रायश्चित्तमचिकीर्षतोद्रष्टव्यम् यथाहमनुः प्रायश्चित्तमकुर्वाणाःपूर्वेवर्णायथोदितम् नांक्याराज्ञाललाटेतुदाप्या-
स्तूत्तमसाहसमिति ७५ चौरादर्शनेअपहृतद्रव्यप्राप्त्युपायमाह यदिग्राममध्येमनुष्यादिप्राणिवधोधनापहरणंवाजायतेतदा
ग्रामपतेरेवचौरोपेक्षादोषस्तत्परिहारार्थंसएवचौरंगृहीत्वाराज्ञेर्पयेत् तदशक्तौहृतंधनंधनिनेदद्यात् यदिचौरपदंस्वग्रामान्निर्गतंन

घातितेपहृतेदोषोग्रामभर्तुरनिर्गते विवीतभर्तुस्तुपथिचौरोद्धर्तुरवीतके ७६ स्वसीम्निदद्याद्ग्रामस्तुपदंवायत्रगच्छ
ति पंचग्रामीबहिःक्रोशाद्दशग्राम्यथवापुनः ७७

दर्शयति दर्शितेपुनस्तत्पदंयत्रप्रविशतितद्विषयाधिपतिरेवचौरंधनंवार्पये
त् तथाचनारदः गोचरेयस्यलुप्येततेनचौरःप्रयत्नतः ग्राह्योदाप्योथवाशेषंपदंयदिननिर्गतम् निर्गतेपुनरेतस्मान्नचेदन्यत्रपातितम्
सामंतान्मार्गपालांश्चदिक्पालांश्चैवदापयेदिति विवीतेत्वपहारेविवीतस्वामिनएवदोषः यदात्वध्वन्येवहृतंभवत्यवीतकेवाविवीतादन्यत्र
क्षेत्रेतदाचौरोद्धर्तुर्मार्गपालस्यदिक्पालस्यवादोषः ७८ किंच यदापुनर्ग्रामाद्बहिःसीमापर्यंतेक्षेत्रेमोषादिकंभवतितदातद्ग्रामवासि
नएवदद्युः यदिसीम्नोबहिश्चौरपदंननिर्गतं निर्गतेपुनर्यत्रग्रामादिकेचौरपदंप्रविशतिसएवचौरार्पणंकुर्यात् यदात्वनेकग्राममध्ये-

ध्येक्रोशमात्राद्बहिः प्रदेशे घातितो मुषितो वा चौरपदं च जनसंमर्दादिना भग्नं तदा पंचानां ग्रामाणां समाहारः पंचग्रामी दशग्रामसमाहारो
वा दद्यात् विकल्पवचनं तु यथाप्रत्यासत्त्यपहृतधनप्रत्यर्पणादिकं कुर्यादित्येवमर्थम् यदा त्वन्यतोपहृतं द्रव्यं दापयितुं न शक्नोति तदा
स्वकोशादेव राजा दद्यात् चौरहृतमवजित्य यथास्थानं गमयेत् स्वकोशाद्वा दद्यादिति मनुस्मरणात् मुषितामुषितसंदेहे मानुषेण दि
व्येन वा निर्णयः कार्यः यदि तस्मिन् दाप्यमाने भवेन्मोषे तु संशयः मुषितः शपथं दाप्यो बंधुभिर्वापि साधयेदिति स्कंदमनुस्मरणात् ७७
अपराधविशेषेण दंडविशेषमाह बंदिग्राहादीन्बलावष्टंभेन घातकांश्च नरान् शूलानारोपयेत् अयं च वधप्रकारविशेषोपदेशः अ

बंदिग्राहांस्तथा वाजिकुंजराणां च हारिणः प्रसह्य घातिनश्चैव शूलानारोपयेन्नरान् ७८ उत्क्षेपकग्रंथिभेदौ करसंद
शहीनकौ कार्यौ द्वितीयापराधे करपादैकहीनकौ ७९

न्याागाराग्युधागारदेवतागारभेदकान् हस्त्यश्वरथहर्तॄंश्च हन्यादेवाविचा
रयन्निति मनुस्मरणात् ७८ किंच वस्त्राद्युत्क्षिप्यापहरतीत्युत्क्षेपकः वस्त्रादिबद्धं स्वर्णादिकं विस्रस्योत्कृत्य वा योपहरत्यसौ ग्रंथिभे
दकः तौ यथाक्रमं करेण संदंशसदृशेन तर्जन्यंगुष्ठेन च हीनौ कार्यौ द्वितीयापराधे पुनः करश्च पादश्च करपादं तत्र तदेकं च करपादे-
कं तद्धीनं ययोस्तौ करपादैकहीनकौ कार्यौ उत्क्षेपकग्रंथिभेदकयोरेकमेकं करं पादं च छिंद्यादित्यर्थः एतदप्युत्तमसाहसप्राप्तियो-
ग्यद्रव्यविषयम् तदंगच्छेदइत्युक्तो दंडउत्तमसाहसइति नारदवचनात् तृतीयापराधे तु वध एव तथा च मनुः अंगुलीग्रंथिभेद

स्य छेदयेत्प्रथमेग्रहे द्वितीयेहस्तचरणौतृतीयेवधमर्हतीति ७९ जातिद्रव्यपरिमाणतोमूल्याद्यनुसारतोदंडःकल्पनीयइति जातिद्रव्य
परिमाणपरिग्रहविनियोगवयःशक्तिगुणसंदेशकालादीनांदंडगुरुलघुभावकरणानामानंत्यात्प्रतिद्रव्यंवक्तुमशक्तेःसामान्येनदंड
कल्पनोपायमाह क्षुद्राणांमध्यमानामुत्तमानांचद्रव्याणांहरणेसारतोमूल्याद्यनुसारतोदंडःकल्पनीयः क्षुद्रादिद्रव्यस्वरूपंचनार
देनोक्तम् मृद्भांडासनखट्वास्थिदारुचर्मतृणादियत् शमीधान्यंकृतान्नंचक्षुद्रंद्रव्यमुदाहृतम् वासःकौशेयवर्जंचगोवर्जंपशव
स्तथा हिरण्यवर्जंलोहंचमध्यंव्रीहियवाअपि हिरण्यरत्नकौशेयंस्त्रीपुंगोगजवाजिनः देवब्राह्मणराज्ञांचद्रव्यंविज्ञेयमुत्तमं त्रि

## क्षुद्रमध्यमहाद्रव्यहरणेसारतोदमः

प्रकारेष्वपिद्रव्येष्वौत्सर्गिक प्रथममध्यमोत्तमसाहसरूपोदंडनियमस्तेनैवदर्शितः साहसेषुयएवोक्तस्त्रिषुदंडोमनीषिभिःस
एवदंडस्तेयेपिद्रव्येषुत्रिष्वनुक्रमादिति मृन्मयेषुमणिकमल्लिकादिषु गोवाजिव्यतिरिक्तेषुचमहिषमेषपशुषु ब्राह्मणसंबंधिषु
चधान्यादिषु तरतमभावोस्तीति उच्चावचदंडविशेषाकांक्षायांमूल्याद्यनुसारेणदंडःकल्पनीयः तत्रचदंडकर्मणि दंडकल्पनायां
तद्धेतुभूतदेशकालवयःशक्तिसम्यक्चिंतनीयम् एतच्च जातिद्रव्यपरिमाणपरिग्रहादीनामुपलक्षणं तथाहि अष्टापाद्यंस्ते
यकिल्बिषंशूद्रस्यद्विगुणोत्तराणीतरेषांप्रतिवर्णंविदुषोतिक्रमेदंडभूयस्त्वमिति अयमर्थः किल्बिषशब्देनात्रदंडोलक्ष्यते

यस्मिन्नपहारे योदंडउक्तः सविट्छूद्रकर्तृकेपहारे अष्टगुणआपादनीयः इतरेषांपुनर्विट्क्षत्रब्राह्मणादीनांविदुषांद्विगुणोत्तराणि किल्बिषाणि षोडशद्वात्रिंशच्चतुःषष्टिगुणादंडा आपादनीयाः यस्माद्विट्शूद्रादिकर्तृके पहारेदंडभूयस्त्वम् मनुनाप्ययमेवार्थोदर्शितः अष्टापाद्यंतु शूद्रस्य स्तेयेभवतिकिल्बिषम् षोडशैवतुवैश्यस्य द्वात्रिंशत्क्षत्रियस्यतु ब्राह्मणस्यचतुःषष्टिः पूर्णवापिशतंभवेत् द्विगुणावाचतुःषष्टिस्तद्दोषगुणवेदिनइति तथापरिमाणकृतमपि दंडगुरुत्वंदृश्यते यथाहमनुः धान्यंदशभ्यःकुंभेभ्यो हरतोभ्यधिकेवधः शेषेष्वेकादशगुणंदाप्यस्तस्यचतद्धनमिति विंशतिद्रोणकःकुंभः हर्तृन्हियमाणस्वामिगुणापेक्षयासुभिक्षदु

देशकालवयःशक्तीः संचिंत्यदंडकर्मणि २८०

र्भिक्षकालाद्यपेक्षया ताडनांगच्छेदनवधरूपादंडायोज्याः तथासंख्याविशेषादपिदंडविशेषोरत्नादिषु सुवर्णरजतादीनामुत्तमानांचवाससाम् रत्नानांचैवसर्वेषांशतादभ्यधिकेवधः पंचाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते शेषेष्वेकादशगुणंमूल्याद्दंडंप्रकल्पयेदिति तथाद्रव्यविशेषादपि पुरुषाणांकुलीनानांनारीणांचविशेषतः रत्नानांचैवसर्वेषांहरणेवधमर्हति अकुलीनानांतुदंडांतरं पुरुषंहरतोदंडउक्तउत्तमसाहसः स्त्र्यपराधेतुसर्वस्वंकन्यांतुहरतोवधइति क्षुद्रद्रव्याणांतुमाषान्न्यूनमूल्यानांमूल्यात्पंचगुणोदंडः काष्ठभांडतृणादीनांमृन्मयानांतथैवच वेणुवैणवभांडानांतथास्नाय्वस्थिचर्मणाम् शाकानामार्द्रमूला

नांहरणेफलमूलयोः गोरसेक्षुविकाराणांतथालवणतैलयोः पक्वान्नानांकृतान्नानांमत्स्यानामामिषस्यच सर्वेषांमूल्यभूतानांमूल्यात्पंच
गुणोदमइतिनारदस्मरणात् यःपुनःप्रथमसाहसःक्षुद्रद्रव्येषु शतावरःपंचाशत्पर्यंतोसौमाषमूल्येतदधिकमूल्येवायथायोग्यंव्यवस्था
पनीयः यःपुनर्मानवंक्षुद्रद्रव्यगोचरवचनं तन्मूल्याद्विगुणोदमइति तदल्पप्रयोजनशरावादिविषयम् तथापराधगुरुत्वादपिदंड
गुरुत्वम् संधिंछित्वातुयेचौर्यंरात्रौकुर्वंतितस्कराः तेषांछित्वानृपोहस्तौतीक्ष्णशूलेनिवेशयेत् इत्येवंसर्वेषामानंत्यात्प्रतिद्रव्यंवक्तुमशक्तेः
र्जातिपरिमाणादिभिः कारणैर्दंडगुरुलघुभावः कल्पनीयः पथिकादीनांपुनरल्पापराधेनदंडः यथाहमनुः द्विजोध्वगःक्षीणवृत्ति र्द्वावि

भक्तावकाशाग्न्युदकमंत्रोपकरणव्ययान् दत्वाचौरस्यवाहंतुर्जाननोदमउत्तमः ८१

क्षूद्वेचमूलके आददानःपरक्षेत्रान्नदंडंदातुमर्हति तथा चणकव्रीहिगोधूमयवानांमुद्गमाषयोः अनिषिद्धैर्गृहीतव्योमुष्टिरेकःपथिस्थि
तैः तथैवसप्तमेभक्ते भक्तानिषडनश्नता अश्वस्तनविधानेनहर्तव्यंहीनकर्मणइति २८० अचोरस्यापिचौरोपकारिणोदंडमाह भक्तम
शनं अवकाशोनिवासस्थानं अग्निश्चौरस्यशीतापनोदाद्यर्थः उदकंतृषितस्य मंत्रश्चौर्यप्रकारोपदेशः उपकरणंचौर्यसाधनम् व्ययःअ
पहारार्थंदेशांतरंगच्छतःपाथेयं एतानिचौरस्यहंतुर्वादुष्टत्वंजानन्नपियःप्रयच्छतितस्योत्तमसाहसोदंडः चौरोपेक्षिणामपिदोषः
शक्ताश्चयउपेक्षंतेतेपितद्दोषभागिनइतिनारदस्मरणात् ८१

किंच परगात्रेषुशस्त्रस्यावपातने दासीब्राह्मणगर्भव्यतिरेकेणगर्भस्यपातनेचोत्तमोदंडः दासीगर्भनिपातनेतु दासीगर्भविनाश
कृदित्यादिना शतंदंडोभिहितः ब्राह्मणगर्भेतु हत्यागर्भ मविज्ञातमित्यत्रब्रह्महत्यातिदेशंवक्ष्यति पुरुषस्यस्त्रियाश्चप्रमापणे
शीलवृत्ताद्यपेक्षयोत्तमोवाधमोवादंडोव्यवस्थितोवेदितव्यः ८२ अपिच विशेषेणप्रदुष्टांविप्रदुष्टांभ्रूणघ्नींस्वगर्भपातनींच
याचपुरुषस्यहंत्रीसेतूनांभेत्रीच एतागर्भरहिताःस्त्रीर्गलेशिलांबध्वाअप्सुप्रवेशयेत् यथानप्लवंति ८३ किंच अगर्भिणी

शस्त्रावपातेगर्भस्यपातनेचोत्तमोदमः उत्तमोवाधमोवापिपुरुषस्त्रीप्रमापणे ८२ विप्रदुष्टांस्त्रियंचैव
पुरुषघ्नीमगर्भिणीम् सेतुभेदकरींचाप्सुशिलांबध्वाप्रवेशयेत् ८३ विषाग्निदांपतिगुरुनिजापत्यप्र-
मापणीम् विकर्णकरनासोष्ठींकृत्वागोभिःप्रमापयेत् ८४ अविज्ञातहतस्याशुकलहंसुतबांधवाः प्रष्टव्या
योषितश्चास्यपरपुंसिरताःपृथक् ८५

मित्यनुवर्तते यापरवधार्थमन्नपानादिषुविषंददातिक्षिपति याचदाहार्थंग्रामादि
ष्वग्निं तथायाचनिजपतिगुर्वपत्यानिमारयति तांछिन्नकर्णकरनासोष्ठींकृत्वा अदांतैर्दुष्टबलीवर्दैःप्रवाह्यमारयेत् स्तेयप्रकरणेयदे
तत्साहसिकस्यदंडविधानंतत्प्रासंगिकमितिमंतव्यम् ८४ अविज्ञातकर्तृकेहननेहंतृज्ञानोपायमाह अविज्ञातपुरुषेणघातितस्यसंबंधि
नः सुताः प्रत्यासन्नाश्चबांधवाःकेनास्यकलहोजातइतिकलहमाशुप्रष्टव्याः तथामृतस्यसंबंधिन्योयोषितोयाश्चपरपुंसिरताव्यभिचारि
ण्यस्ताअपिप्रष्टव्याः८५

कथंप्रष्टव्याइत्यत आह किमयंस्त्रीकामोद्रव्यकामोवृत्तिकामोवा तथाकस्यांकिंसंबंधिन्यांवास्त्रियामस्यरतिरासीत् कस्मिन्वाद्रव्येप्री
तिः कुतोवावृत्तिकामः केनवासहदेशांतरंगत इति नानाप्रकारं व्यभिचारिण्योयोषितः पृथक्पृथक्विश्वास्यप्रष्टव्याः तथामरणदेशानि
कटवर्तिनोगोपाटविकाद्यायेजनास्तेपिविश्वासपूर्वकंप्रष्टव्याः एवंनानाप्रकारैः प्रश्नैर्हंतारंनिश्चित्यतदुचितोदंडोविधातव्यः ८६ किं
च क्षेत्रंपक्वफलसस्योपेतं वेश्मगृहं वनमटवीम् क्रीडावनंवा ग्रामं विवीतमुक्तलक्षणं खलंवायेदहंति यश्चराजपत्नीमभिगच्छति तान्स

स्त्रीद्रव्यवृत्तिकामोवाकेनवायंगतःसह मृत्युदेशसमासन्नंपृच्छेद्वापिजनंशनैः ८६ क्षेत्रवेश्मवनग्रामविवीतखलदा
हकाः राजपत्न्यभिगामीचदग्धव्यास्तुकटाग्निना ८७ पुमान्संग्रहणेग्राह्यः केशाकेशिपरस्त्रिया सद्योवाकामजैश्चिन्हैः
प्रतिपत्तौद्वयोस्तथा ८८

र्वान् कटैर्वीरणमयैर्वेष्टयित्वादहेत् क्षेत्रादेर्दाहकानांमारणदंडप्रसंगात् दंडविधानम् इतिस्तेयप्रकर
णम् ८७ स्त्रीसंग्रहणाख्यंविवादपदंव्याख्यायते प्रथमसाहसादिदंडप्राप्त्यर्थंत्रैधातत्स्वयंव्यासेनविवृतम् त्रिविधंतत्समाख्यातं
प्रथमंमध्यमोत्तमम् अदेशकालसंभाषानिर्जनेचपरस्त्रियाः कटाक्षावेक्षणंहास्यंप्रथमंसाहसंस्मृतम् प्रेषणंगंधमाल्यानांधूपभूषण
वाससाम् प्रलोभनंचान्नपानैर्मध्यमंसाहसंस्मृतम् सहासनंविविक्तेतुपरस्परमुपाश्रयः केशाकेशिग्रहश्चैवसम्यक्संग्रहणं-
स्मृतम् स्त्रीपुंसयोर्मिथुनीभावःसंग्रहणम् संग्रहणज्ञानपूर्वकत्वात्तत्कर्तुर्दंडविधानंतस्यतज्ज्ञानोपायंतावदाह संग्रहणे

प्रवृत्तः पुमान् केशाकेश्यादिभिर्लिंगैर्ज्ञात्वा ग्रहीतव्यः परस्परं केशग्रहणपूर्विका क्रीडा केशाकेशि तत्र तेनेदमिति सरूपइति ब
हुव्रीहौ सति इच् कर्मव्यतिहारइति समासांतइच्प्रत्ययः अव्ययत्वाच्चलुप्तत्तृतीयाविभक्तिः ततश्चायमर्थः परभार्यया सह
केशाकेशिक्रीडनेनाभिनवैः कररुहदशनादिकृतव्रणैः रागकृतैर्लिंगैर्द्वयोः संप्रतिपत्त्यावगम्य ज्ञात्वा संग्रहणप्रवृत्तो ग्रहीतव्यः
परस्त्रीग्रहणं नियुक्तावरुन्धादिव्युदासार्थम् ८८ किंच यः पुनः परदारपरिधानग्रंथिप्रदेशकुचप्रावरणजघनमूर्द्ध रुहादि
स्पर्शनं साभिलाषइवाचरति तथा अदेशे निर्जने जनताकीर्णे वांधकाराकुले संलापनं करोति परभार्यया वा सहैकमंचकादौ-

नीवीस्तनप्रावरणसक्थिकेशावमर्शनम् अदेशकालसंभाषं सहैकासनमेवच ८९

रिरंसयेवावतिष्ठते सोपि संग्रहणे प्रवृत्तो ग्राह्यः एतच्चाशंक्यमानदोषपुरुषविषय मितरस्यतु न दोषः यथाह मनुः यस्त्व-
नाक्षारितः पूर्वमभिभाषेत कारणात् नदोषं प्राप्नुयात्किंचिन्नहि तस्य व्यतिक्रमइति यः परस्त्रिया स्पृष्टः क्षमते असावपि ग्रा
ह्यः इति तेनैव चोक्तम् स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत्तया परस्परस्यानुमते सर्वं संग्रहणं स्मृतमिति यश्च मयेयं विदग्धा-
सकृद्रमितेति श्लाघया भुजंगजनसमक्षं रव्यापयत्यसावपि ग्राह्य इति तेनैवोक्तम् दर्पाद्वा यदि वा मोहाच्छ्लाघया वा स्वयं वदे-
त् पूर्वं मयेयं भुक्तेति तच्च संग्रहणं स्मृतमिति ८९

प्रतिषिद्धयोःस्त्रीपुंसयोःपुनः सल्लापादिकरणे दंडमाह प्रतिषिद्धतइतिप्रतिषेधःपतिपित्रादिभिर्येन सह संभाषणादिकं निषिद्धं तत्रप्र
वर्तमानास्त्री शतपणंदंडंदद्यात् पुरुषःपुनरेवंनिषिद्धेप्रवर्तमानोद्विशतंदद्यात् द्वयोस्तुस्त्रीपुंसयोः प्रतिषिद्धेप्रवर्तमानयोःसं
ग्रहणे संभोगे वर्णानुसारेणयोदंडोवक्ष्यते सएवविज्ञेयः एतच्च चारणादिभार्याव्यतिरेकेण नैषचारणदारेषुविधिर्नात्मोपजीवि
षु सज्जयंतिहितेनारीर्निगूढाश्चारयंतिचेतिमनुस्मरणात् १० तदिदानींसंग्रहणेदंडमाह चतुर्णामपिवर्णानांबलात्कारेण-
सजातीयगुप्तपरदाराभिगमने साशीतिपणसहस्रं दंडनीयः यदात्वानुलोम्येनहीनवर्णांस्त्रियमगुप्तामभिगच्छति तदामध्य

स्त्रीनिषेधेशतंदद्याद्द्विशतंतुदमंपुमान् प्रतिषेधेतयोर्दंडोयथासंग्रहणेतथा १०
स्वजातावुत्तमोदंड आनुलोम्येनमध्यमः प्रातिलोम्येवधःपुंसोनार्याःकर्णादिकर्तनं ११

मसाहसंदंडनीयः यदापुनःसवर्णामगुप्तामानुलोम्येनगुप्तांवाव्रजति तदामानवेविशेषउक्तः सहस्रंब्राह्मणोदंड्योगुप्तांविप्रां
बलाद्व्रजन् शतानिपंचदंड्यःस्यादिच्छंत्यासहसंगतः सहस्रंब्राह्मणोदंडंदाप्योगुप्तेतुतेव्रजेत् शूद्रायांक्षत्रियविशोःसह-
स्रंतुभवेद्दमइति एतच्चगुरुसखिभार्याव्यतिरेकेणद्रष्टव्यम् मातापितृष्वसाश्वश्रूमातुलानीपितृष्वसा पितृव्यसखिशिष्य-
स्त्रीभगिनीतत्सखीस्नुषा दुहिताचार्यभार्याचसगोत्राशरणागता राज्ञीप्रव्रजिताधात्रीसाध्वीवर्णोत्तमाचया आसामन्यतमां

गच्छन्गुरुतल्पगउच्यते शिश्नस्योत्कर्तनात्तत्रनान्योदंडोविधीयतइतिनारदस्मरणात् प्रातिलोम्येउत्कृष्टवर्णस्त्रीगमनेक्षत्रि-
यादेःपुरुषस्यवधः एतच्चगुप्तविषयमन्यत्रतुधनदंडः उभावपिहितावेवब्राह्मण्यागुप्तयासह विप्लुतौशूद्रवद्दंड्यौदग्ध-
व्यौवाकटाग्निना ब्राह्मणींयद्यगुप्तांतुसेवेतांवैश्यपार्थिवौ वैश्यंपंचशतंकुर्यात्क्षत्रियंतुसहस्रिणमितिमनुस्मरणात् शूद्रस्य
पुनर्गुप्तासुत्कृष्टवर्णास्त्रियंव्रजतोलिंगच्छेदनसर्वस्वापहारौ गुप्तांतुव्रजतस्तस्यवधसर्वस्वापहारावितितेनैवोक्तं शूद्रोगुप्त-
मगुप्तांवाद्वैजातंवर्णमावसन् अगुप्तमेकांगसर्वस्वाद्गुप्तेसर्वेणहीयतइति नार्याःपुनर्हीनवर्णव्रजंत्याःकर्णयोरादिग्रहणान्नासा

अलंकृतांहरेत्कन्यामुत्तमंत्वन्यथाधमम् दंडंदद्यात्सवर्णासुप्रातिलोम्येवधःस्मृतः ९२

देश्वकर्तनम् आनुलोम्येनवासवर्णांवाव्रजंत्यादंडःकल्प्यः अयंचवधाद्युपदेशोराज्ञएवतस्यैवपालनाधिकारान्नद्विजातिमात्रस्यत-
स्यब्राह्मणःपरीक्षार्थमपिशस्त्रंनाददीतेतिशस्त्रग्रहणनिषेधात् यदातुराज्ञोनिवेदनेकालविलंबनेनकार्यातिपाताशंका तदास्व
यमेवजारादीन्हन्यात् शस्त्रंद्विजातिभिर्ग्राह्यंधर्मोयत्रोपरुध्यते तथा नाततायिवधेदोषोहंतुर्भवतिकश्चन प्रकाशंवाप्रकाशंस
मृत्युस्तंमृत्युमृच्छतीतिशस्त्रग्रहणाभ्यनुज्ञानाच्च तथाक्षत्रियवैश्ययोरन्योन्यस्त्र्यभिगमनेयथाक्रमंसहस्रशतपणात्मकोदंडो
वेदितव्यौ तदाह मनुः वैश्यश्चेत्क्षत्रियांगुप्तांवैश्यांवाक्षत्रियोव्रजेत् योब्राह्मण्यामगुप्तायांतावुभौदंडमर्हतइति ९१ पारदार्यप्रसंगात्क

न्यायामपिदंडमाह विवाहाभिमुखीभूतामलंकृतांसवर्णांकन्यामुपहरन्नुत्तमसाहसंदंडनीयः तदनभिमुखींसवर्णांहरन्प्रथम-
साहसं उत्कृष्टवर्णजांकन्यामपहरतःपुनःक्षत्रियादेर्वधएव दंडविधानाच्चापहर्तृसकाशादाच्छिद्यान्यस्मैदेयेतिगम्यते १२ आनु
लोम्यापहरणेदंडमाह यदिसानुरागांहीनवर्णांकन्यामपहरति तदादोषाभावान्नदंडः अन्यथात्वनिच्छंतीमपहरतः प्रथमसाहसोदंडः
कन्यादूषणेदंडमाह अनुलोमास्वित्यनुवर्तते यद्यकामांकन्यांबलात्कारेणनरवक्षतादिनादूषयति तदातस्यकरश्छेत्तव्यः यदापुन
स्तामेवांगुलिप्रक्षेपेणयोनिक्षतंकुर्वन्दूषयतितदामनूक्तषट्शतसहितोंगुलिच्छेदः अभिषह्येतुयःकन्यांकुर्याद्दर्पेणमानवः तस्याशु

सकामास्वनुलोमासुनदोषस्त्वन्यथाधमः दूषणेतुकरच्छेदउत्तमायांवधस्तथा १३

कर्त्ये अंगुल्यौदंडंचार्हतिषट्शतमिति यदापुनःसानुरागांपूर्ववद्दूषयति तदापिनेनैवविशेषउक्तः सकामांदूषयानस्तुनांगुलिच्छे
दमर्हति द्विशतंतुदमंदाप्यःप्रसंगविनिवृत्तयेइति यदातुकन्यैवकन्यांदूषयति विदग्धावातत्रापिविशेषस्तेनैवोक्तः कन्यैवकन्यांयाकु
र्यात्तस्यास्तुद्विशतोदमः यातुकन्यांप्रकुर्यात्स्त्रीसासद्योमौंड्यमर्हति अंगुल्योरेवच्छेदंखरेणोद्वहनंतथेति कन्यांकुर्यादितिक
न्यांयोनिक्षतवतींकुर्यादित्यर्थः यदापुनरुत्कृष्टजातीयांकन्यामविशेषात्सकामामकामांवाभिगच्छतितदाहीनस्यक्षत्रियादेर्वधए
व उत्तमांसेवमानस्तुयद्वान्योवधमर्हतीतिमनुस्मरणात् यदासवर्णांसकामामभिगच्छति तदागोमिथुनशुल्कंतत्पित्रेदद्यात् ॥

यदीच्छतिपितरितुशुल्कमनिच्छतिदंडरूपेणनदेवराज्ञेदद्यात् सवर्णामकामांतुगच्छतोवधएव यथाहमनुः शुल्कंदद्यात्सेवमानः
समामिच्छेत्पितायदि योकामांदूषयेत्कन्यांससद्योवधमर्हति सकामांदूषयंस्तुल्योनवधंप्राप्नुयान्नरइति ९३ किंच स्त्रीशब्देना
त्रप्रकृतत्वात्कन्यावमृश्यते तस्यांयदिकश्चिद्विद्यमानानेवापस्माारराजयक्ष्मादिदीर्घकुत्सितरोगसंसृष्टमैथुनत्वादिदोषानाविश्ये
यमकन्येतिदूषयत्यसौ शतंदाप्यः मिथ्याभिशंसनेतुपुनरविद्यमानदोषाविष्कारेणदूषणेद्वेशतेदापनीयः गोव्यतिरिक्तपशुगमने
तुशतंदाप्यः यःपुनर्हीनांस्त्रियमंत्यावसायिनीमविशेषात्सकामामकामांचगांवाभिगच्छत्यसौमध्यमसाहसंदंडनीयः ९४ साधा

शतंस्त्रीदूषणेदद्याद्द्वेतुमिथ्याभिशंसने पशून्गच्छन्शतंदाप्योहीनांस्त्रींगांचमध्यमं ९५ अवरुद्धासुदासीषुभुजिष्यासुतथैवच

रणस्त्रीगमनेदंडमाह गच्छन्नित्यनुवर्तते उक्तलक्षणावर्णस्त्रियोदास्यः ताएवस्वामिनाशुश्रूषाहानिव्युदासार्थंगृहएवस्थातव्य
मित्येवंपुरुषांतरेणभोगतोनिरुद्धाः अवरुद्धाःपुरुषनियतपरिग्रहाः भुजिष्याः यदादास्योवरुद्धाभुजिष्यावाभवेयुस्तदातासु
चशब्दाद्वेश्यास्वैरिणीनामपिसाधारणस्त्रीणांभुजिष्याणांचग्रहणम् तासुचसर्वपुरुषसाधारणतयागम्यास्वपिगच्छन्पंचा
शत्पणान्दंडनीयः परपरिगृहीतत्वेनतासांपरदारतुल्यत्वात् एतच्चस्पष्टमुक्तंनारदेन स्वैरिणीब्राह्मणीवेश्यादासी-

निष्कासनीत्वया गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः आसेवतु भुजिष्यासु दोषः स्यात्परदारवत् गम्यास्वपि हि नोपेयाद्यतः
स्ताः सपरिग्रहा इति निष्कासिनीस्वाम्यनवरुद्धा दासी ननु च स्वैरिण्यादीनां साधारणतया गम्यत्वाभिधानमयुक्तम् न हि जातितः
शास्त्रतो वा काश्चन लोके साधारणाः स्त्रिय उपलभ्यंते तथा हि स्वैरिण्यो दास्यश्च तावद्वर्णस्त्रिय एव स्वैरिणी या पतिं हित्वा सवर्णं
कामतः श्रयेत् वर्णानामानुलोम्येन दास्यं न प्रतिलोमत इति मनुस्मरणात् न च वर्णस्त्रीणां पत्यौ जीवति मृते वा पुरुषांतरोपभोगो घ
टते दुःशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः परिचर्यः स्त्रिया साध्व्या सततं देववत्पतिः कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः न

गम्यास्वपि पुमान्दाप्यः पंचाशत्पणिकं दमम् ९५

तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य तु इति निषेधस्मरणात् नापि कन्यावस्थायाः साधारणत्वं पित्रादिपरिरक्षितायाः कन्याया एव दानो
पदेशात् तदभावे पितृत्वविधाया एव स्वयंवरोपदेशात् न च दासीभावात् स्वधर्माधिकारच्युतिः पारतंत्र्यं हि दास्यं न स्वधर्मपरि
त्यागः नापि वेश्या साधारणी वर्णानुलोमजव्यतिरेकेण गम्यजात्यंतरासंभवात् तदंतःपातित्वे च पूर्ववदेवागम्यत्वम् प्रतिलोमजत्वे
तु तासां नितरामगम्यत्वम् अतः पुरुषांतरोपभोगेन तासां निंदितकर्माभ्यासेन पातित्यात् पतितसंसर्गस्य निषिद्धत्वाच्च न संकल्पः पुरु
षोपभोगयोग्यत्वम् सत्यमेवं किंत्वत्र स्वैरिण्याद्युपभोगे पित्रादिरक्षकराजदंडभयादिदृष्टदोषाभावाद्गम्यत्ववाचोयुक्तिः दंडाभा

वरुद्धावरुद्धासु दासीष्विति नियतपुरुषपरिग्रहीणाधितो दंडविधानात्तदुपाधिरहितास्वर्थादवगम्यते स्वैरिण्याद्यानांपुनर्दंडाभावो-
विधानाभावात् कन्यांभजंतीमुत्कृष्टांनकिंचिदपिदापयेदितिलिंगनिदर्शनाच्चावगम्यते प्रायश्चित्तंतुस्वधर्मस्खलननिमित्तंग
म्यानांगंतॄणांचाविशेषाद्भवत्येव यत्पुनर्वेश्यानांजात्यंतरासंभवेनवर्णांतःपातित्वमनुमानादुक्तम् वेश्यावर्णानुलोमाद्यंतःपा
तिन्यो मनुष्यजात्याश्रयत्वात् ब्राह्मणादिवदिति तन्न तत्रकुंडगोलकादिभिरनेकांतिकत्वात् अतोवेश्याख्याकाचिज्जातिरना
दिर्वेश्यायाम्युत्कृष्टजातेःसमानजातेर्वापुरुषादुत्पन्नापुरुषसंभोगवृत्तिर्वेश्येतिब्राह्मण्यादिवल्लोकप्रसिद्धिबलादभ्युपगमनीय

प्रसह्यदास्यभिगमेदंडोदशपणःस्मृतः

नचनिर्मूलेयंप्रसिद्धिः स्मर्यतेहिस्कंदपुराणे पंचचूडानामकाश्चनाप्सरसस्तत्संततिर्वेश्याख्यापंचमीजातिरिति अतआसांनियतपु
रुषपरिणयनविधिविधुरतयासमानोत्कृष्टजातिपुरुषाभिगमनेनादृष्टदोषोनापिदंडस्तासुचानवरुद्धासुगच्छतांपुरुषाणांयद्य
पिनदंडस्तथाप्यदृष्टदोषोस्त्येव स्वदारनियतःसदेतिनियमात् पशुवेश्याभिगमनेप्राजापत्यंविधीयतइतिप्रायश्चित्तस्मरणाच्चे
तिनिरवद्यम् ९५ अवरुद्धासुदासीष्वित्यनेनदासीस्वैरिण्यादिभुजिष्याभिगमेदंडविधानात्तास्वभुजिष्यासु दंडोनास्तीत्यर्थादुक्तं
तदपवादमाह पुरुषसंभोगसंजीविकासु दासीस्वैरिण्यादिषुशुल्कदानविरहेणप्रसह्यबलात्कारेणाभिगच्छतोदशपणोदंडः

भोग्यं

यदि बहवएकामनिच्छंतींबलात्कारेणाभिगच्छंति तर्हिप्रत्येकंचतुर्विंशतिपणपरिमितंदंडंदंडनीयाः यदापुनस्तदिच्छयामैंटीं दत्वापश्चा
दनिच्छंतीमपिबलाद्व्रजंति तदातेषामदोषः यदिव्याध्याद्यभिभवस्तस्यानस्यात् व्याधितासश्रमाव्यग्राराजकर्मपरायणा आमंत्रितात्वे
नागच्छेदर्दंड्यावडवास्मृतेतिनारदवचनात् ९५ यदाशुल्कंगृहीत्वास्वस्यापि नेच्छति तदाशुल्कंद्विगुणंदद्यात् तथाशुल्कंदत्वास्व
यमनिच्छतः स्वस्थस्यपुंसः शुल्कहानिरेव शुल्कंगृहीत्वापण्यस्त्रीनेच्छंतीद्विगुणंवहेत् अनिच्छन्दत्तशुल्कोपिशुल्कहानिमवाप्नु
यादितितेनैवोक्तं तथान्योपिविशेषस्तेनैवदर्शितः अप्रयच्छंस्तथाशुल्कमनुभूयपुमान्स्त्रियम् आक्रमेणवशंगच्छन्घातदंतनखादिभिः

बहूनांयद्यकामोसौचतुर्विंशतिकःपृथक् ९५ गृहीतवेतनांवेश्यांनेच्छंतींद्विगुणंवहेत् अगृहीतेसमंदाप्यःपुमानप्येवमेव
च ९७ अयोनौगच्छतोयोषांपुरुषंवापिमेहतः चतुर्विंशतिकोदंडस्तथाप्रव्रजितागमे ९८ अंत्याभिगमनेत्वंक्यःकबंधेनप्र
वासयेत् शूद्रस्तथांत्यएवस्याद्दंत्यस्यार्यागमेवधः ९९

अयोनौवाभिगच्छेद्योबहुभिर्वापिवासयेत् शुल्कमष्टगुणंदाप्योविनयंतावदे
वतु वेश्याःप्रधानायास्तत्रकामुकास्तद्गृहोपिताः तत्समुत्थेषुकार्येषुनिर्णयंसंशयेविदुरिति ९७ किंच यस्तुस्वयोषांमुखादावभिगच्छति
पुरुषंवाभिमुखोमेहति तथाप्रव्रजितांवागच्छत्यसौचतुर्विंशतिपणान्दंडनीयः ९८ किंच अंत्यान्चांडालीनदूमनेत्रैवर्णिकान्प्रायश्चित्तान
भिमुखान् सहस्रंत्वंत्यजस्त्रियमितिमनुवचनात्पणसहस्रंदंडयित्वाकबंधेनकुत्सितबंधेनभगाकारेणांकयित्वास्वराष्ट्रान्निर्वासयेत् =

प्रायश्चित्ताभिमुखस्यपुनर्दंडनमेव शूद्रःपुनश्चांडाल्यभिगमेत्यएवचांडालएवभवति अंत्यजस्यपुनश्चांडाल्यादेरुत्कृष्टजातिस्त्र्य-
भिगमेवधएव इतिस्त्रीसंग्रहणप्रकरणम् ९९ व्यवहारप्रकरणमध्येस्त्रीपुंसयोगाख्यमप्यपरंविवादपदंमनुनारदाभ्यां
विवृतम् तत्रनारदः विवादादिविधिस्त्रीणां यत्रपुंसांचकीर्त्यते स्त्रीपुंसयोगसंज्ञंतद्विवादपदमुच्यतइति मनुरप्याह अस्वतंत्राः
स्त्रियःकार्याःपुरुषैःस्वैर्दिवानिशम् विषयेषुचसज्जंत्यःसंस्थाप्यात्मनोवशइत्यादि यद्यपिस्त्रीपुंसयोःपरस्परमर्थिप्रत्यर्थित
यानृपसमक्षंव्यवहारोनिषिद्धस्तथापिप्रत्यक्षेणकर्णपरंपरयावाविदितेतयोःपरस्पराभिचारेदंडादिनादंपतीनिजधर्ममार्गेराज्ञा-
स्थापनीयो इतरथादोषभाग्भवतीतिव्यवहारप्रकरणे राजधर्ममध्ये अस्यस्त्रीषुधर्मजातस्योपदेशः एतच्चविवादप्रकरणए
वसप्रपंचंप्रतिपादितमितियोगीश्वरेणनपुनरत्रोक्तम् सांप्रतंप्रकीर्णकाख्यंव्यवहारपदंप्रस्तूयते तल्लक्षणंचकथितं-
नारदेन प्रकीर्णकेपुनर्ज्ञेयाव्यवहारानृपाश्रयाः राज्ञामाज्ञाप्रतीघातस्तत्कर्मकरणंतथा पुरप्रदानसंभेदःप्रकृतीनांतथैवच
पाखंडिनैगमश्रेणीगणधर्मविपर्ययाः पितापुत्रविवादश्चप्रायश्चित्तव्यतिक्रमः प्रतिग्रहविलोपश्चकोपआश्रमिणामपि वर्णसं
करदोषश्चतद्वृत्तिनियमस्तथा नदृष्टंयच्चपूर्वेषुसर्वंतत्स्यात्प्रकीर्णकेइति प्रकीर्णकेविवादपदेयेविवादाराजाज्ञोल्लंघनतदाज्ञा
करणादिविषयास्तेनृपसमवायिनः नृपएवतत्रस्मृत्याचारव्यपेतमार्गेवर्तमानानांप्रतिकूलतामास्थायव्यवहारनिर्णयंकुर्यात्
एवंवदतायोनृपाश्रयोव्यवहारस्तत्प्रकीर्णकमित्यर्थाल्लक्षितंभवति तत्रापराधविशेषेदंडविशेषमाह राजदत्तभूमे

निर्बंधस्यवापरिमाणान्न्यूनत्वमाधिक्यंवाप्रकाशयेद्राजशासनंयोलिखति यश्चपारदारिकंचौरंवागृहीत्वाराज्ञेनार्पयित्वामुंचतितौ तावुभावुत्तमसाहसंदंडनीयौ ३०० प्रसंगान्नृपाश्रयव्यतिरिक्तव्यवहारविषयमपिदंडमाह मूत्रपुरीषादिना अभक्ष्येणभक्ष्यान्नैर्णान्नपानादिमिश्रेणद्रव्यरूपेणवाब्राह्मणं दूषयित्वाखादयित्वोत्तमसाहसंदंडोभवति क्षत्रियंपुनरेवंदूषयित्वामध्यमम् वैश्यं दूषयित्वाप्रथमं शूद्रंदूषयित्वाप्रथमसाहसद्व्यस्यार्द्धं दंडोभवतीतिसंबंधः लशुनाद्यभक्ष्यदूषणेतुदोषतारतम्याद्दंडतारतम्यमूहनी-

ऊनंवाभ्यधिकंवापिलिखेद्योराजशासनं पारदारिकचौरंवामुंचतोदंडउत्तमः ३००
अभक्ष्येणद्विजंदूष्यदंडउत्तमसाहसम् मध्यमंक्षत्रियंवैश्यंप्रथमंशूद्रमर्द्धिकं १
कूटस्वर्णव्यवहारीविमांसस्यचविक्रयी अंगहीनस्तुकर्तव्योदाप्यश्चोत्तमसाहसं २

यम् १ किंच रसवेधाद्यापादितवर्णोत्कर्षैःकूटैःस्वर्णैर्व्यवहारशीलोयःस्वर्णकारादिः यश्चविमांसस्यकुत्सितमांसस्यश्वादिसंबंधस्यविक्रयशीलःसौनिकादिः चशब्दात्कूटराजतादिव्यवहारीच तेसर्वेप्रत्येकंनासाकर्णकरैस्त्रिभिरंगुलैर्हीनाःकार्याःचशब्दात् त्र्यंगच्छेदेनसमुच्चितमुत्तमसाहसंदंडंदाप्याः यत्पुनर्मनुनोक्तम् सर्वकंटकपापिष्ठंहेमकारंतुपार्थिवः प्रवर्तमानमन्यायेछेदयेल्लवशःक्षुरैरिति तद्देवब्राह्मणराजस्वर्णविषयम् २ ७ ५ ६

विषयविशेषेदंडाभावमाह चतुष्पादेर्गोगजादिभिःकृतोयोदोषोमनुष्यमारणादिरसौगवादिस्वामिनोनभवति अपसरेतिप्रकर्षेणोच्चै र्भाषमाणस्य तथालकुटलोष्ठसायकपाषाणोत्क्षेपणेन बाहुनायुग्येनच युगंवहताश्वादिना कृतोयः पूर्वोक्तोदोषः सोपिकाष्ठादीन्यास्य तोनभवत्यपसरेति प्रजल्पतः काष्ठाद्युत्क्षेपणेन हिंसायादोषाभावकथनंदंडाभावप्रतिपादनार्थं प्रायश्चित्तंपुनरबुद्धिकरणपूर्वम स्त्येव काष्ठादिग्रहणंचशक्तितोमरादेरुपलक्षणार्थम् ३ किंच नसिभवारज्जुर्नस्याच्छिन्नाशकटादियुक्तबलीवर्दनस्यारज्जु

चतुष्पादकृतोदोषोनापेहीतिप्रजल्पतः काष्ठलोष्टेषुपाषाणबाहुयुग्यकृतस्तथा ३
छिन्ननस्येनयानेनतथाभग्नयुगादिना पश्चाच्चैवापसरताहिंसनेस्वाम्यदोषभाक् ४

र्यस्मिन् तत् छिन्ननस्यंशकटादितेन तथाभग्नयुगेन आदिग्रहणाद्भग्नाक्षचक्रादिनाच यानेन पश्चात्पृष्ठतोपसरता चशब्दा त्तिर्यगपगच्छता प्रतिमुखंचागच्छताच मनुष्यादिहिंसने स्वामीप्राजकोवादोषभाङ्न भवति अतत्प्रयत्नजनितत्वाद्धिंसनस्य तथाचमनुः छिन्ननस्येभग्नयुगेतिर्यक्प्रतिमुखागते अक्षभंगेचयानस्यचक्रभंगेतथैवच छेदनेचैवयंत्राणांयोक्त्ररश्म्यो स्तथैवच आक्रंदेसत्यपेहीतिनदंडंमनुरब्रवीदिति ४

उपेक्षायांस्वामिनोदंडमाह  अप्रवीणप्राजकप्रेरितैर्दंष्ट्रिभिर्गजादिभिः शृंगिभिर्गवादिभिः वध्यमानंसमर्थोपिस्वामीयद्यमो
क्षयन् उपेक्षते तदा अकुशलप्राजकनियोजननिमित्तंप्रथमंसाहसंदंडंदद्यात् यदातुमारितोहमितिविक्रुष्टेपि नमोक्षयति त
दा द्विगुणम् यदापुनः प्रवीणमेवप्राजकं प्रेरयति तदाप्राजकएवदंड्योनस्वामी यथाहमनुः प्राजकश्चेद्भवेदाप्तः प्राजकोदंड
मर्हतीति प्राजकोयंता आप्तोभियुक्तः प्राणिविशेषाच्चदंडविशेषः कल्पनीयः यथाहमनुः मनुष्यमारणेक्षिप्रंचोरवत्किल्बि

शक्तोप्यमोक्षयन्स्वामीदंष्ट्रिणांशृंगिणांतथा प्रथमंसाहसंदद्याद्विक्रुष्टेद्विगुणंतथा ५
जारंचौरेत्यभिवदन्दाप्यःपंचशतंदमम् उपजीव्यधनंमुंचंस्तदेवाष्टगुणीकृतम् ६

षीभवेत् प्राणभृत्सुमहत्स्वर्द्धंगोगजोष्ट्रहयादिषु क्षुद्राणांतुपशूनांतुहिंसायांद्विशतोदमः पंचाशत्तुभवेद्दंडः शुभेषुमृगपक्षि
षु गर्दभाजाविकानांतुदंडः स्यात्पंचमाषकः माषकस्तुभवेद्दंडःश्वशूकरनिपातनइति ५ किंच स्ववंशकलंकभयाज्जारंपारदा
रिकंचौरनिर्गच्छेत्यभिवदन् पंचशतंपणानांपंचशतानियस्मिन्दमेसतथोक्तस्तंदमंदाप्यः यःपुनर्जारहस्ताद्धनमुपजीव्यउत्को
चरूपेण गृहीत्वाजारंमुंचत्यसौयावद्गृहीतंतावदष्टगुणीकृतंदाप्यः ६ ७ ७ ७

किंच राज्ञोनिष्टस्यानभिमतस्यामित्रस्तोत्रादेः प्रकर्षेणभूयोभूयोवक्तारं तस्यैवराज्ञ आक्रोशकारिणंनिंदाकरणशीलं
तदीयस्यचमंत्रस्यस्वराष्ट्रविवृद्धिहेतोः परराष्ट्रापक्षयकरस्यवाभेत्तारं अमित्रकर्णेषुजपंतं जिव्हामुत्कृत्यस्वराष्ट्रान्निष्का
सयेत् कोशापहरणादौपुनर्वधएव राज्ञः कोशापहर्तॄंश्चप्रतिकूलेषुचवस्थितान् घातयेद्विविधैर्दंडैररीणांचोपकारका
नितिमनुस्मरणात् विविधैः सर्वस्वापहारांगच्छेदवधरूपैरित्यर्थः सर्वस्वापहारेपियद्यस्यजीवनोपकरणंतन्नापहर्तव्यम्

राज्ञोनिष्टप्रवक्तारंतस्यैवाक्रोशकारिणम् तन्मंत्रस्यचभेत्तारंछित्वाजिव्हांप्रवासयेत् ७
मृतांगलग्नविक्रेतुर्गुरोस्ताडयितुस्तथा राजयानासनारोढुर्दंडउत्तमसाहसः ८

चौर्योपकरणंविना यथाहनारदः आयुधान्यायुधीयानांवाद्यादीन्वाद्यजीविनाम् वेश्यास्त्रीणामलंकारान्वाद्यतोद्यादितद्विदाम्
यच्चयस्योपकरणंयेनजीवंतिकारवः सर्वस्वहरणेप्येतन्नराजाहर्तुमर्हतीति ब्राह्मणस्यपुनर्नशारीरोब्राह्मणस्यदंडइतिनिषेधाद्वध-
स्थानेशिरोमुंडनादिकंकर्तव्यम् ब्राह्मणस्यवधोमौंड्यंपुरान्निर्वासनांकने ललाटेचाभिशस्तांकः प्रयाणंगर्दभेनलिखितिमनुस्मरणात् ७
किंच मृतशरीरसंबंधिनोवस्त्रपुष्पादेर्विक्रेतुःगुरोः पित्राचार्यादेस्ताडयितुः तथाराजानुमतिंविना तद्यानंगजाश्वादि आसनंसिंहासनादिआ
रोहतश्चोत्तमसाहसोदंडः ८

किंच यः पुनः क्रोधादिना परस्य नेत्रद्वयं भिनत्ति यश्च ज्योतिःशास्त्रवित् गुर्वादिहिते प्रवृत्त्यतिरिक्तो राज्ञो द्विष्टमनिष्टं संवत्सरांते तव रा-
ज्यच्युतिर्भविष्यतीत्यादिरूपमादेशं करोति तथा यः शूद्रो भोजनार्थं यज्ञोपवीतादिब्राह्मणलिंगानि दर्शयति तेषामष्टशतो दमः अ
ष्टौ पणशतानि यस्मिन्दमे स तथोक्तः श्राद्धभोजनार्थं पुनः शूद्रस्य विप्रवेषधारिणः तप्तशलाकया यज्ञोपवीतवद्वपुष्यालिखेदिति स्मृ-
त्यंतरोक्तं द्रष्टव्यं वृत्त्यर्थं यज्ञोपवीतादिब्राह्मणलिंगधारिणो वध एव द्विजातिलिंगिनः शूद्रान्घातयेदिति स्मरणात् १ रागलोभा-
दिनान्यथा व्यवहारदर्शने दंडमाह दुर्दृष्टान्स्मृत्याचारप्राप्तधर्मोल्लंघनेन रागलोभादिभिरसम्यग्विचारितत्वेनाशंक्यमानान्व्यव

द्विनेत्रभेदिनो राजद्विष्टादेशकृतस्तथा विप्रत्वेन च शूद्रस्य जीवतोऽष्टशतो दमः १ दुर्दृष्टांस्तु पुनर्दृष्ट्वा
व्यवहारान्नृपेण तु सभ्याः सजयिनो दंड्या विवादाद्द्विगुणं दमम् ३१०

हारान्पुनः स्वयं राजा सम्यग्विचार्य निश्चि
तदोषाः पूर्वसभ्याः सजयिनः प्रत्येकं विवादपदे यो दमः पराजितस्य तद्द्विगुणं दाप्याः अप्रासजेतृदंडविधिपरत्वाद्वचनस्य रागाल्लो
भादित्यादिना श्लोकेनापौनरुक्त्यम् यदा पुनः साक्षिदोषेण व्यवहारस्य दुष्टता तदा साक्षिण एव दंड्या न जयी नापि सभ्याः यदा तु रा
जानुमत्या व्यवहारस्य दुर्दृष्टत्वं तदा सर्व एव राजसहिताः सभ्यादयो दंडनीयाः पादो गच्छति कर्तारं पादः साक्षिणमृच्छति पादः सभासदः
सर्वान् पादो राजानमृच्छतीति वचनात् एतच्च प्रत्येकं राजादीनां दोषप्रतिपादनपरं न पुनरेकैकस्यैव पापापूर्वस्य विभागाय यथोक्तं कर्तृस
मवाय फलजननस्वभावत्वादपूर्वस्य ३१०

न्यायतोनिर्णीतव्यवहारस्यमत्यावर्तयितुर्दंडमाह यः पुनर्न्यायमार्गेणपराजितोपि औद्धत्यान्नाहंपराजितोस्मीतिमन्यते तमायांतंकूटलेख्याद्युपन्यासेनपुनर्धर्माधिकरणमतिधिष्ठंतं धर्मेणपुनःपराजयंनीत्वाद्विगुणंदंडंदापयेत् नारदेनाप्युक्तम् तीरितंचानुशिष्टंवायोमन्येतविधर्मतः द्विगुणंदंडमास्थायतत्कार्यंपुनरुद्धरेदिति तीरितंसाक्षिलेख्यादि निर्णीतमनुहृतदंडं अनुशिष्टमुद्धृतदंडं दंडपर्यंतंनीतमितियावत् यत्पुनर्मनुवचनम् तीरितंचानुशिष्टंच यत्रक्वचनविद्यते कृतंतद्धर्मतोज्ञेयंनतन्नानि

यो मन्येताजितोस्मीतिन्यायेनापिपराजितः तमायांतंपुनर्जित्वादापयेद्द्विगुणंदमं ११

वर्तयेदिति तदर्थिप्रत्यर्थिनोरन्यतरवचनाद्व्यवहारस्याधर्मतो वृत्तत्वाशंकायांपुनर्द्विगुणंदंडंप्रतिज्ञापूर्वकंव्यवहारंप्रवर्तयेत् न पुनर्धर्मतोवृत्तत्वानिश्चयेपिराज्ञालोभादिनाप्रवर्तयितव्य इत्येवंपरम् यत्पुनर्नृपांतरेणापिन्यायापेतं कार्यं निवर्तितंतदपिसम्यक्परीक्षणेनधर्म्येपथिस्थापनीयम् न्यायापेतंयदन्येनराज्ञाज्ञानकृतंभवेत् तदप्यन्यायविहितंपुनर्न्यायेनिवेशयेदितिस्मरणात्
११

अन्यायगृहीतदंडधनस्यगतिमाह अन्यायेनयोदंडोराज्ञालोभाद्गृहीतस्तंत्रिंशद्गुणीकृतंवरुणायेदमितिसंकल्प्यब्राह्मणेभ्यःस्व
यंदद्यात् यस्माद्दंडरूपेणायावद्गृहीतमन्यायेनतावत्तस्मैप्रतिदेयमितरथापहारदोषप्रसंगात् अन्यायदंडग्रहणेपूर्वस्वामिनःस्वत्व
विच्छेदाभावाच्चेति ३१२ इतिश्रीपद्मनाभभट्टोपाध्यायात्मजस्यश्रीमत्परमहंसपरिव्राजकाचार्यविज्ञानेश्वरभट्टारकस्यकृ
तौऋजुमिताक्षरायांयाज्ञवल्कीयधर्मशास्त्रविवृतौद्वितीयोध्यायःव्यवहाराख्यःसमाप्तिमियात् अथास्मिन्नध्यायेप्रकरणानुक्रम
णिकाकथ्यते आद्यंव्यवहारमातृकाप्रकरणं १ भुक्तिलक्षणं २ ऋणादानं ३ निक्षेपप्रकरणं ४ साक्षिलक्षणं ५ लेख्यलक्षणम् ६

राज्ञाऽन्यायेनयोदंडोगृहीतोवरुणायतम् निवेद्यदद्याद्विप्रेभ्यःस्वयंत्रिंशद्गुणीकृतं ३१२

दिव्यस्वरूपकथनं ७ दायविभागः ८ सीमाविवादः ९ स्वामिपालविवादः १० अस्वामिविक्रयः ११ दत्ताप्रदानिकं १२ क्रीतानुशयः १३
अभ्युपेत्याशुश्रूषा १४ संविद्व्यतिक्रमः १५ वेतनादानं १६ द्यूतसमाह्वयाख्यं १७ वाक्पारुष्यं १८ दंडपारुष्यं १९ साहसं २० विक्री
यासंप्रदानं २१ संभूयसमुत्थानं २२ स्तेयप्रकरणम् २३ स्त्रीसंग्रहणं २४ प्रकीर्णकम् २५ इतिपंचविंशतिप्रकरणानि २५
उत्तमोपपदस्येयंशिष्यस्यकृतिरात्मनः धर्मशास्त्रस्यविवृतिर्विज्ञानेश्वरयोगिनः १ शके १७८४ दुंदुभिनाम फाल्गु० २ अयंसं०

श्रीगणेशायनमः श्रीसरस्वत्यैनमः श्रीगुरुभ्योनमः अथेदमारभ्यते प्रायश्चित्ताध्याय भाष्यं गृहस्थाश्रमिणांनित्यनैमित्तिकाधर्माउक्ताः अ-
भिषेकादिगुणयुक्तस्यगृहस्थविशेषस्यगुणधर्माश्चप्रदर्शिताः अधुनातदधिकारसंकोचहेतुभूताशौचप्रतिपादनमुखेनतेषामपवादःप्रतिपाद्यते
आशौचशब्देनचकालःस्नानाद्यपनोद्यःपिंडोदकदानादिविधेःअध्ययनादिपर्युदासस्यचनिमित्तभूतःपुरुषगतःकश्चनातिशयःकथ्यते नपुनःक-
र्मानधिकारमात्रं अशुद्धाबांधवाःसर्वेइत्यादावशुद्धत्वाभिधानात् अत्राशुद्धशब्दस्यचवृद्धव्यवहारेणाहिताग्निदीक्षितादावनधिकारिमात्रेप्र-

ऊनद्विवर्षंनिखनेन्नकुर्यादुदकंततः आश्मशानादनुव्रज्यइतरोज्ञातिभिर्मृतः १ य
मसूक्तंतथागाथांजपद्भिर्लौकिकाग्निना सदग्धव्यउपेतश्चेदाहिताग्न्यावृतार्थवत् २

योगाभावात् वृद्धव्यवहारव्युत्पत्तिनिबंधनत्वाच्चशब्दार्थावगतेः किंच यद्याशौचिनांदानादिनिषेधदर्शनात् तदयोग्यत्वमाशौचशब्दाभिधेयंक-
ल्प्यते तर्हिउदकदानादिविधिदर्शनात् तद्योग्यत्वमप्यभिधेयंस्यात् तत्रानेकार्थकल्पनादोषप्रसंगइत्युपेक्षणीयोयंपक्षः तत्राशौचिभिःस-
पिंडाद्यैर्यत्कर्त्तव्यंतत्तावदाह ऊनेअपरिपूर्णेद्विवर्षेयस्यासावूनद्विवर्षस्तंप्रेतंनिखनेत् भूमाववटंकृत्वानिदध्यान्नपुनर्दहेदित्यर्थः नचसकृत्स-
िंचंत्युदकमित्यादिभिःप्रेतोद्देशेनविहितमुदकदानाद्यौर्ध्वदेहिकंकुर्यात् अयंचगंधमाल्यानुलेपनादिभिरलंकृत्यशुचौभूमौश्मशानादन्यत्रा

स्थिनिचयरहितायांबहिर्ग्रामान्निखननीयः यथाहमनुः ऊनद्विवार्षिकंप्रेतंनिदध्युर्बांधवाबहिः अलंकृत्यशुचौभूमावस्थिसंचयनादृते नास्य
कार्योग्निसंस्कारोनास्यकार्योदकक्रिया अरण्येकाष्ठवत्त्यक्त्वाक्षिपेयुस्त्र्यहमेवतु अरण्येकाष्ठवत्त्यक्त्वेत्यस्यायमर्थः यथारण्येकाष्ठंत्यक्त्वोदा-
सीनास्तद्विषयेभवंतितथोनद्विवार्षिकमपिखातायांभूमौपरित्यज्यतद्विषयेश्राद्धादौौर्ध्वदैहिकेषुउदासीनैर्भवितव्यमितिआचारादिप्राप्तश्राद्धाद्य-
भावोनेनदृष्टांतेनसूच्यते सचघृतेनाभ्यज्ययमगाथाःपठद्भिर्निधातव्यः ऊनद्विवार्षिकंप्रेतंघृताक्तंनिखनेद्बहिः यमगाथागायमानोयमसूक्तम-
नुस्मरन्नितियमस्मरणात् ततस्तस्मादूनद्विवार्षिकादितरःपूर्णद्विवर्षोयोमृतोसौश्मशानपर्यंतंजातिभिःसपिंडैःसमानोदकैश्चज्येष्ठपुरःसरैर
नुव्रज्योनुगंतव्योस्मादेववचनात् ऊनद्विवर्षस्यानुगमनमनियतमितिगम्यते अनुगम्यचपरेयिवांसमित्यादियमसूक्तं यमदैवत्यागाथाश्च
जपद्भिर्लौकिकेनासंस्कृतेनाग्निनादग्धव्योयदिजातारणिर्नास्ति तत्सद्भावेतुतन्माथितेनदग्धव्योनलौकिकेन तस्याग्निसंपाद्यकार्यमात्रार्थत्वे
नोत्पत्तेः लौकिकाग्निश्चचांडालाग्न्यादिव्यतिरिक्तोग्राह्यः चांडालाग्निरमेध्याग्निःसूतिकाग्निश्चकर्हिचित् पतिताग्निश्चिताग्निश्चनशिष्ट
ग्रहणोचिताइतिदेवलस्मरणात् लौगाक्षिणाचात्रविशेषउक्तः तूष्णीमेवोदकंकुर्यात्तूष्णींसंस्कारमेवच सर्वेषांकृतचूडानामन्यत्रापीच्छ
याद्वयमिति अयमर्थः चौलकर्मानंतरकालेनियमेनाग्न्युदकदानंकार्यं अन्यत्रापिनामकरणादूर्ध्वंअकृतचूडेपीच्छयाप्रेताभ्युदयकाम
नयाद्वयंअग्न्युदकदानात्मकंतूष्णींकार्यं ननियमेनेतिविकल्पः मनुनाप्यत्रविशेषोदर्शितः नात्रिवर्षस्यकर्तव्याबांधवैरुदकक्रिया जातदंतस्यवा
कुर्यान्नाम्निवापिकृतेसति उदकग्रहणंसाहचर्यादग्निसंस्कारस्याप्युपलक्षणार्थं नात्रिवर्षस्येतिवचनात् कुलधर्मापेक्षयाचूडोत्कर्षेपिवर्षत्र-

याद्दूर्ध्वमग्न्युदकदानादिनियमोवगम्यते लौगाक्षिवचनाद्वर्षत्रयात्प्रागपिकृतचूडस्यतयोर्नियमइतिविवेचनीयं उपेतश्चेद्यद्युपनीतस्तर्हिआहिता-
ग्न्यावृताआहिताग्नेर्दाहप्रक्रिययास्वगृह्यादिप्रसिद्धयालौकिकाग्निनैवदग्धव्यः अर्थवत्प्रयोजनवत् अयमर्थः यद्यस्यक्लृप्तद्वारंकार्यरूपंप्रयोजनंसं-
भवतिभूमिजोषणप्रोक्षणादितदुपादेयं यत्पुनर्लुप्तप्रयोजनंपात्रयोजनादितन्निवर्त्तते तथालौकिकाग्निविधानेनउपनीतस्यअनाहिताग्नेर्गृह्याग्निना
दाहविधानेनचअपहृतप्रयोजनत्वादाहवनीयादेरपिनिवृत्तिरिति अग्न्यंतरविधानंचवृद्धयाज्ञवल्क्येनोक्तं आहिताग्निर्यथान्यायंदग्धव्यस्त्रि
भिरग्निभिः अनाहिताग्निरेकेनलौकिकेनापरोजनइति नचशूद्रेणश्मशानंप्रतिअग्निकाष्ठादिनयनंकार्यं यस्यानयतिशूद्रोग्निंतृणंकाष्ठंहवींषि
च प्रेतत्वंहिसदातस्यसचाधर्मेणलिप्यतइतियमस्मरणात् तथादाहश्चस्नपनाद्यनंतरंकार्यः प्रेतंदहेच्छुभैर्गंधैःस्नापितंस्रग्विभूषितमितिस्मर
णात् प्रचेतसाप्युक्तं स्नानंप्रेतस्यपुत्राद्यैर्वस्त्राद्यैःपूजनंततः नग्नदेहंदहेन्नैवकिंचिद्देयंपरित्यजेदिति किंचिद्देयमितिशववस्त्रैकदेशंश्मशान-
वास्यर्थंदेयंपरित्यजेदित्यर्थः प्रेतनिर्हरणेपिमनुनाविशेषोदर्शितः नविप्रंस्वेषुतिष्ठत्सुमृतंशूद्रेणहारयेत् अस्वर्ग्याह्याहुतिःसास्याच्छूद्रसं
पर्कदूषिता अत्रचस्वेषुतिष्ठत्सुइत्यविवक्षितं अस्वर्ग्यत्वादिदोषश्रवणात् दक्षिणेनमृतंशूद्रंपुरद्वारेणनिर्हरेत् पश्चिमोत्तरपूर्वैस्तुयथासंख्यं
द्विजातयः तथाहारीतोपि नग्रामाभिमुखंप्रेतंहरेयुरिति यदातुप्रोषितमरणेशरीरंनलभ्यतेतदास्थिभिःप्रतिकृतिंकृत्वातेषामप्यलाभेपर्णशरैः
शौनकादिगृह्योक्तमार्गेणप्रतिकृतिंकृत्वासंस्कारःकार्यः आशौचंचात्रदशाहादिकमेव आहिताग्निश्चेत्प्रवसन्म्रियेतपुनःसंस्कारंकृत्वाशववदा
शौचमितिवसिष्ठस्मरणात् अनाहिताग्निस्तुत्रिरात्रं सुपिष्टैर्जलसंमिश्रैर्दग्धव्यश्चतयाग्निना असौस्वर्गायलोकायस्वाहेत्युक्त्वासबांधवैः एवं

पर्णशरं दग्ध्वात्रिरात्रमशुचिर्भवेदिति वचनात् ततश्चायमर्थः नामकरणादर्वाङ् निखननमेव नचोदकदानादि ततऊर्ध्वं यावत्त्रिवर्षं वैकल्पिकमग्न्युदकदानं ततःपरं यावदुपनयनतूष्णीमेवाग्न्युदकदानंनियतं वर्षत्रयात्प्रागपिकृतचूडस्य उपनयनादूर्ध्वं पुनराहिताग्न्यावृताहं कृत्वा सर्वमौर्ध्वदेहिकंकार्यं अयंतुविशेषः उपनीतस्यलौकिकाग्निनादाहःकार्यः अनाहिताग्नेर्गृह्याग्निनादाहोयथासंभवंपात्रयोजनंचकार्यं १ २ संस्कारानंतरंकिंकर्त्तव्यमित्यतआह सप्तमाद्दिवसादर्वाक् दशमदिवसाद्वाज्ञातयःसमानगोत्राःसपिंडाःसमानोदकाश्च अपनःशोशुचदघमित्यनेनमंत्रेणदक्षिणामुखाःअपःअभ्युपयंति अभ्युपगमनेनतत्प्रयोजनभूतोदकदानविशिष्टमभ्युपगमनंलक्ष्यते एवंमाताम-

सप्तमाद्दशमाद्वापिज्ञातयोभ्युपयंत्यपः अपनःशोशुचदघमनेनपितृदिङ्मुखाः ३

हाचार्येष्वनंतरंउदकदानस्यातिदेशदर्शनात् एतच्चायुग्मासुतिथिषुकार्यं प्रथमतृतीयपंचमसप्तमनवमेषूदकक्रियेतिगौतमस्मरणात् एतच्चस्नानानंतरंकार्यं शरीरमग्नौसंयोज्यानवेक्षमाणाआपोभ्युपयंतीतिशातातपस्मरणात् तथाप्रचेतसाप्यत्रविशेषोदर्शितः प्रेतस्यबांधवायथावृद्धमुदकमवतीर्यनोद्धर्षयेयुरुदकांतेप्रसिंचेयुरपसव्ययज्ञोपवीतवाससोदक्षिणाभिमुखाब्राह्मणस्योदङ्मुखाः प्राङ्मुखाश्चराजन्यवैश्ययोरिति स्मृत्यंतरेतुयावंत्याशौचदिनानितावदुदकदानस्यावृत्तिरुक्ता यथाहविष्णुः यावदाशौचंतावत्प्रेतस्योदकंपिंडंचदद्युरिति तथा

प्रचेतसाप्युक्तं दिनेदिनेंजलीन् पूर्णान्प्रदद्यात्प्रेतकारणात् तावद्वृद्धिः प्रकर्त्तव्यायावत्पिंडः समाप्यतइति प्रतिदिनमंजलीनांवृद्धिःकार्या यावद्दशमःपिंडःसमाप्यतइत्यर्थः यद्यप्यनयोर्गुरुलघुकल्पयोरन्यतरानुष्ठानेनापिशास्त्रार्थःसिद्धस्तथापिबहुक्लेशावहत्वेनगुरुतरकल्पेप्र-वृत्त्यनुपपत्तेः प्रेतस्योपकारातिशयोभविष्यतीतिकल्पनीयं अन्यथागुरुतरकल्पाम्नानस्यानर्थक्यप्रसंगात् वसिष्ठेनापिविशेषोभिहितः सव्योत्तराभ्यांपाणिभ्यामुदकक्रियांकुर्वीरन्निति ३ वक्ष्यमाणसकृत्प्रसेकनामगोत्रादिगुणविशिष्टस्योदकदानस्यासमानगोत्रेषुमातामहा

एवंमातामहाचार्यप्रेतानामुदकक्रिया कामोदकंसखिप्रत्तास्वस्रीयश्वशुरर्त्विजां ४

दिष्वतिदेशमाह यथासगोत्रसपिंडानांप्रेतानामुदकंदीयतेतथामातामहानामाचार्याणांच प्रेतानांनित्यमुदकक्रियाकार्या सखामित्रं प्रत्ताःपरिणीतादुहितृभगिन्यादयः स्वस्रीयोभागिनेयः श्वशुरःप्रसिद्धः ऋत्विजोयाजकाः एषांसख्यादीनांप्रेतानांकामोदकंकार्यं कामइच्छा कामेनोदकदानंकामोदकं प्रेताभ्युदयकामनायांसत्यामुदकंदेयमसत्यांनदेयमिति अकरणेप्रत्यवायोनास्तीत्यर्थः ४ ७ ७ ७ ७

उदकदानेगुणविधिमाह तच्चोदकदानमित्थंकर्त्तव्यं सपिंडाःसमानोदकाश्च मौनिनोभूत्वा प्रेतस्यनामगोत्रेउच्चार्य अमुकनामाप्रेतोमुकगोत्रस्तृप्य त्विति सकृदेवोदकं प्रसिंचेयुः त्रिर्वात्रिःप्रत्येकंकुर्युः प्रेतस्तृप्यत्विति प्रचेतःस्मरणात् प्रतिदिनमंजलिवृद्धिस्तु प्रतिपादितैव तथाअयमपिविशेष स्तेनैवोक्तः नदीकूलंततोगत्वाशौचंकृत्वायथार्थवत् वस्त्रंसंशोधयेदादौततःस्नानंसमाचरेत् सचैलस्तुततःस्नात्वाशुचिःप्रयतमानसः पाषा णंततआदायविप्रेदद्याद्दशांजलीन् द्वादशक्षत्रियेदद्याद्वैश्येपंचदशस्मृताः त्रिंशत्शूद्रायदातव्यास्ततःसंप्रविशेद्गृहम् ततस्नानंपुनःकार्यंगृह शौचंचकारयेदिति सपिंडानांमध्येकेषांचिदुदकदानप्रतिषेधमाह ज्ञातित्वेसत्यपिब्रह्मचारिणःसमावर्त्तनपर्यंतं पतिताश्चप्रच्युतद्वि-

सकृत्प्रसिंचंत्युदकंनामगोत्रेणवाग्यताः नब्रह्मचारिणःकुर्युरुदकंपतितास्तथा ५

जातिकर्माधिकाराउदकादिदानंनकुर्युः ब्रह्मचर्योत्तरकालंपूर्वमृतानांसपिंडादीनांउदकदानमाशौचंचकुर्यादेव यथाहमनुः आदिष्टीनोदकं कुर्यादाव्रतस्यसमापनात् समाप्तेतूदकंकृत्वात्रिरात्रमशुचिर्भवेदिति आदिष्टीब्रह्मचार्यस्यपोशानकर्मकुरुदिवामास्वाप्सी रित्यादिव्रतादेशयो- गाद्ब्रह्मचार्युच्यते एतच्चपित्रादिव्यतिरेकेणेतिवक्ष्यति आचार्यपित्रुपाध्यायानित्यत्राचार्यःपुनरेवंमन्यते आदिष्टीतिप्रक्रांतप्रायश्चित्तःकथ्य ते तस्यैवायमुदकदानादिनिषेधः प्रायश्चित्तरूपव्रतसमाप्त्युत्तरकालमुदकदानाशौचविधिरिति तथाक्लीबादीनांचोदकदायित्वंनिषिद्धं क्लीबा द्यानोदकंकुर्युःस्तेनाव्रात्याविधर्मिणः गर्भभर्त्तृद्रुहश्चैवसुराप्यश्चैवयोषितइतिवृद्धमनुस्मरणात् ५ ७ ७ ७

एवमुदकदाने कर्त्तृविशेषप्रतिषेधमुक्त्वा संप्रदानविशेषेणप्रतिषेधमाह नरशिरःकपालादिश्रुतिबाह्यलिंगधारणंपाखंडं तद्येषांतेपाखंडिनः
अनाश्रिताः अधिकारेसत्यप्यकृताश्रमविशेषपरिग्रहाः स्तेनाःसुवर्णाद्युत्तमद्रव्यहारिणः भर्त्तृघ्न्यःपतिघातिन्यः कामगाःकुलटाः आदिग्रहणा
त्स्वगर्भब्राह्मणघातिन्योगृह्यंते सुराप्योयासांयासुराप्रतिषिद्धातत्पानरताः आत्मत्यागिन्यःविषाग्न्युदकोद्बंधनादैरात्मानंयास्त्यजंति एतेपा
खंड्याद्यस्त्रिरात्रंदशरात्रंवेतिवक्ष्यमाणस्याशौचस्योदकदानाद्यौर्ध्वदेहिकस्यचभाजनानभवंति भाजयंतीतिभाजनाः सपिंडादीनामाशौचादि
निमित्तभूतानभवंति अतस्तन्मरणेसपिंडैरुदकदानादिनकार्यमित्येतत्प्रतिपादनपरंवचनं अत्रसुराप्यइत्यादिषुलिंगमविवक्षितम् अनुपादेय

पाखंड्यनाश्रिताःस्तेनाभर्त्तृघ्न्यःकामगादिकाः सुराप्यआत्मत्यागिन्योनाशौचोदकभाजनाः ६

गतत्वात् एतच्चबुद्धिपूर्वविषयं यथाहगौतमः प्रायोनाशकशस्त्राग्निविषोदकोद्बंधनप्रपतनैश्चेच्छतामिति प्रायोमहाप्रस्थानं अनाशकमन
शनं गिरिशिखरादवपातःप्रपतनं अत्रचेच्छतामितिविशेषणोपादानात् प्रमादकृतेदोषोनास्तीत्यवगंतव्यं अथकश्चित्प्रमादेनम्रियेताग्न्युद
कादिभिः तस्याशौचंविधातव्यंकर्त्तव्याचोदकक्रियेतिअंगिरःस्मरणात् तथामृत्युविशेषादपिआशौचादिनिषेधः चांडालादुदकात्सर्पाद्ब्रा-
ह्मणाद्वैद्युतादपि दंष्ट्रिभ्यश्चपशुभ्यश्चमरणंपापकर्मणाम् उदकंपिंडदानंचप्रेतेभ्योयत्प्रदीयते नोपतिष्ठतितत्सर्वमंतरिक्षेविनश्यतीति एत

दर्पाच्छापूर्वमात्महननविषयं गौतमवचनेनेच्छापूर्वकमेवोदकेन हतस्याशौचनिषेधस्योक्तत्वात् अत्रापिचांडालादुदकात्सर्पादिति तत्साहचर्य
दर्शनाद्बुद्धिपूर्वविषयत्वनिश्चयः अतोदर्पादिनाचंडालादीन्हंतुंगतोयस्तैर्मारितस्तस्यायंसर्वतएवात्मानंगोपायेदितिविध्यतिक्रमनिमित्तःपिंडदा-
नादिनिषेधः एवंदुष्टदंष्ट्र्यादिग्रहणार्थमाभिमुख्येनदर्पाद्गच्छतोमरणेयंनिषेधइतिअनुसंधेयं अयंचाशौचप्रतिषेधोदशाहादिकालावच्छिन्न
स्य विप्रगोनृपहतानांअन्वक्षंचात्मघातिनामितिसद्यःशौचस्यवक्ष्यमाणत्वात् तथादाहादिकमप्येषांनकार्यं नाशौचंनोदकंनाश्रुनदाहाद्यंत
कर्मच ब्रह्मदंडहतानांचनकुर्यात्कटधारणमितियमस्मरणात् ब्रह्मदंडहताब्राह्मणदंडहताः प्रेतवहनसाधनंखट्वादिकटशब्देनोच्यते नचा
हिताग्निमग्निभिर्दहंति यज्ञपात्रैश्चेत्येतत्श्रुतिविहिताग्नियज्ञपात्रादिप्रतिपत्तिलोपप्रसंगात् अयंस्मार्त्तोदाहादिनिषेधोविप्रादिहताहिताग्निविष
यनास्कंदतीत्याशंकनीयं यतश्चांडालादिहताहिताग्निसंबंधिनामग्नियज्ञपात्राणांस्मृत्यंतरेप्रतिपत्त्यंतरंविधीयते वैतानंप्रक्षिपेदप्सुआवसथ्यं
चतुष्पथे पात्राणितुदहेदग्नौयजमानेवृथामृतइति तथातच्छरीरस्यापिप्रतिपत्त्यंतरमुक्तं आत्मनस्त्यागिनांनास्तिपतितानांतथाक्रिया तेषाम
पितथागंगातोयेसंस्थापनंहितमितिस्मरणात् तस्मादविशेषेणसर्वेषांदहनादिनिषेधः अतःस्नेहादिनानिषेधातिक्रमेप्रायश्चित्तंकर्त्तव्यं कृत्वा
ग्निमुदकंस्नानंस्पर्शनंवहनंकथां रज्जुच्छेदाश्रुपातंचतप्तकृच्छ्रेणशुध्यतीतिस्मरणात् एतच्चप्रत्येकंबुद्धिपूर्वेवेदितव्यं अबुद्धिपूर्वकरणेतु ए
षामन्यतमंप्रेतंयोवहेनदहेतवा कटोदकक्रियांकृत्वांकृच्छ्रंसांतपनंचरेदितिसंवर्त्तोक्तंद्रष्टव्यं यःपुनस्तच्छवंकेवलंस्पृष्टमश्रुवापातितंयदि पूर्वो
क्तानामकारीचेदेकरात्रमभोजनमितिस्पर्शाश्रुपातयोरुपवासउक्तः असौकृच्छ्रेष्वशक्तस्य तथाबंधनच्छेदनेवामासंभैक्ष्याहारस्त्रिषवणंचेतिसु

मंतुनाभिह्याशित्वमुक्तं तदप्यशक्तस्यैव एवमन्यान्यपितद्विषयाणिस्मृतिवाक्यानिव्यवस्थापनीयानि अयंचदाहादिप्रतिषेधोअनुष्ठानासमर्थजीर्णं
वानप्रस्थादिव्यतिरिक्तविषयः तेषामभ्यनुज्ञादर्शनात् वृद्धःशौचस्मृतेर्लुप्तःप्रत्याख्यातभिषक्क्रियः आत्मानंघातयेद्यस्तुभृग्वग्न्यनशनांबुभिः त
स्यत्रिरात्रमाशौचंद्वितीयेत्वस्थिसंचयः तृतीयेतूदकंकृत्वाचतुर्थेश्राद्धमाचरेदितिस्मरणात् एवंयेनयेनोपाधिनाआत्महननंशास्त्रेणोभ्यनुज्ञायतेत
त्तद्व्यतिरिक्तमार्गेणात्महननेश्राद्धाद्यौर्ध्वदैहिकेषुनिषिद्धेषुकिंपुनस्तेषांकार्यमित्यपेक्षायांवृद्धयाज्ञवल्क्यच्छागलेयाभ्यामुक्तं नारायणबलिःका
र्योलोकगर्हाभयान्नरैः तथातेषांभवेच्छौचंनान्यथेत्यब्रवीद्यमः तस्मात्तेभ्योपिदातव्यमन्नमेवसदक्षिणमिति व्यासेनाप्युक्तं नारायणंसमुद्दि-
श्यशिवंवायत्प्रदीयते तस्यशुद्धिकरंकर्मतद्भवेन्नेतदन्यथेति एवंनारायणबलिःप्रेतस्यशुद्ध्यापादनद्वारेणश्राद्धादिसंप्रदानत्वयोग्यतांजनयतीति
और्ध्वदैहिकमपिसर्वंकार्यमेव अतएवषट्त्रिंशन्मतेपिऔर्ध्वदैहिकस्याभ्यनुज्ञादृश्यते गोब्राह्मणहतानांचपतितानांतथैवच ऊर्ध्वंसंवत्सरात्कुर्या
त्सर्वमेवौर्ध्वदैहिकमित्येवंसंवत्सरादूर्ध्वमेवनारायणबलिंकृत्वौर्ध्वदैहिकंकार्यं नारायणबलिश्चैवंकार्यः कस्यांचिच्छुक्लैकादश्यांविष्णुंवैवस्वतं
यमंचयथावदभ्यर्च्यतत्समीपेमधुघृतप्लुतांस्तिलमिश्रान्दशपिंडान्विष्णुरूपेणप्रेतमनुस्मरन्प्रेतनामगोत्रेउच्चार्यदक्षिणाग्रेषुदर्भेषुदक्षिणाभिमु
खोदत्वागंधादिभिरभ्यर्च्यपिंडप्रवाहणांतंकृत्वानद्यांक्षिपेत् नपत्न्यादिभ्योदद्यात् ततस्तस्यामेवरात्र्यामयुग्मान्ब्राह्मणानामंत्र्योपोषितःश्वोभू
तेमध्याह्नेविष्णवाराधनंकृत्वाएकोद्दिष्टविधिनाब्राह्मणपादप्रक्षालनादितृप्तिप्रश्नांतंकृत्वापिंडपितृयज्ञावृत्तोल्लेखनाद्यवनेजनांतंतूष्णींकृत्वावि-
ष्णवेब्रह्मणेशिवाययमायचपरिवारसहितायचतुरःपिंडान्दत्वानामगोत्रसहितंप्रेतंसंस्मृत्यविष्णोर्नामसंकीर्त्यपंचमंपिंडंदद्यात् ततोविप्राना

चांतान् दक्षिणाभिस्तोषयित्वा तन्मध्ये चैकं गुणवत्तमं प्रेतबुद्ध्या संस्मरन् गोभूहिरण्यादिभिरतिशयेन संतोष्य ततः पवित्रपाणिभिर्विप्रैः प्रेतायति
लादिसहितमुदकं दापयित्वा स्वजनैः सार्द्धं भुंजीत सर्पहते त्वयं विशेषः संवत्सरं यावत्पुराणोक्तविधिना पंचम्यां नागपूजां विधाय पूर्णे संवत्सरे ना
रायणबलिं कृत्वा सौवर्णनागं दद्यात् गां च प्रत्यक्षां ततः सर्वमौर्ध्वदेहिकं कुर्यात् नारायणबलिस्वरूपं च वैष्णवेभिहितं यथा एकादशीं समासा
द्य शुक्लपक्षस्य वै तिथिं विष्णुं समर्चयेद्देवं यमं वैवस्वतं तथा दशपिंडान् घृताभ्यक्तान् दर्भेषु मधुसंयुतान् तिलमिश्रान्प्रदद्याद्वै संयतो दक्षिणामु
खः विष्णुबुद्धौ समासाद्य नद्यंभसि ततः क्षिपेत् नामगोत्रग्रहं तत्र पुष्पैरभ्यर्चनं तथा धूपदीपप्रदानं च भक्ष्यं भोज्यं तथापरं निमंत्रयेत विप्रान्वै
पंच सप्त नवापि वा विद्यातपःसमृद्धान्वै कुलोत्पन्नान्समाहितान् अपरेहनि संप्राप्ते मध्यान्हे समुपोषितः विष्णोरभ्यर्चनं कृत्वा विप्रांस्तानुपवेशये
त् उदङ्मुखान् यथाज्येष्ठं पितृरूपमनुस्मरन् मनो निवेश्य विष्णौ वै सर्वं कुर्यादतंद्रितः आवाहनादि यत्प्रोक्तं देवपूर्वं तदाचरेत् तृप्तानूज्ञात्वा ततो वि
प्रान् तृप्तिं पृष्ट्वा यथाविधि हविष्यव्यंजनेनैव तिलादिसहितेन च पंचपिंडान्प्रदद्याच्च दैवं रूपमनुस्मरन् प्रथमं विष्णवे दद्याद्ब्रह्मणे च शिवाय-
च यमाय सानुचाराय चतुर्थं पिंडमुत्सृजेत् मृतं संकीर्त्य मनसा गोत्रपूर्वमतः परम् विष्णोर्नाम गृहीत्वैवं पंचमं पूर्ववत्क्षिपेत् विप्रानाचम्य विधिवद्दक्षि
णाभिः समर्चयेत् एकं तु तत्तमं विप्रं हिरण्येन समर्चयेत् गवा वस्त्रेण भूम्या च प्रेतं तं मनसा स्मरन् ततस्तिलांभो विप्रास्तु हस्तैर्दर्भसमन्वितैः क्षि
पेयुर्गोत्रपूर्वं तु नामबुद्धौ निवेश्य च हविर्गंधतिलांभस्तु तस्मै दद्युः समाहिताः मित्रभृत्यजनैः सार्द्धं पश्चाद्भुंजीत वाग्यतः एवं विष्णुमते स्थित्वा यो
दद्यादात्मघातिने समुद्धरति तं क्षिप्रं नात्र कार्या विचारणा सर्पदंशनिमित्तं सौवर्णनागदानं प्रतिकृतिरूपेण भविष्यत्पुराणे सुमंतुनाभिहितं सुव

र्णभारनिष्पन्नंनागंकृत्वातथैवगां व्यासायदत्वाविधिवत्पितुरानृण्यमाप्नुयात् ६ एवमुदकदानंसापवादमभिधायानंतरंकिंकार्यमित्यतआह कृ
तमुदकदानंयैस्तान्कृतोदकान्स्नातान्सम्यगुदकादुत्तीर्णान्मृदुशाद्वलेनवोद्गततृणचयावृतेभूभागेसम्यक्स्थितान्पुत्रादीन्कुलवृद्धाःपुरातनैरितिहा
सैर्वक्ष्यमाणैरपवदेयुः शोकनिरसनसमर्थैर्वचोभिर्बोधयेयुः ७ शोकनिरसनसमर्थेतिहासस्वरूपमाह मनुष्यशब्देनजरायुजांडजादिच-
तुर्विधंभूतजातंलक्ष्यते तस्यभावोमानुष्यं तत्रसंसरणधर्मित्वेनकदलीस्तंभवदंतःसाररहितेजलबुद्बुदवदचिरविनश्वरेसंसारेसारस्यास्थिरस्य

कृतोदकान्समुत्तीर्णान्मृदुशाद्वलसंस्थितान् स्नातानपवदेयुस्तानितिहासैःपुरातनैः ७
मानुष्येकदलीस्तंभनिःसारेसारमार्गणम् करोतियःससंमूढोजलबुद्बुदसंनिभे ८ पं
चधासंभृतःकायोयदिपंचत्वमागतः कर्मभिःस्वशरीरोत्थैस्तत्रकापरिदेवना ९

मार्गणमन्वेषणंयःकरोतिससंमूढोऽत्यंतविनष्टचित्तः तस्मात्संसारस्वरूपवेदिभिर्भवद्भिरित्थंनकार्यम् ८ किंच जन्मांतरात्मीयशरीरजनितैःक
र्मबीजैःस्वफलोपभोगार्थंपंचधापृथिव्यादिपंचभूतात्मकतयापंचप्रकारंसंभृतोनिर्मितःकायःसयदिफलोपभोगनिवृत्तौपंचत्वमागतःपुनःपृथिव्यादिरू
पतांप्राप्तस्तत्रभवतांकिमर्थापरिदेवनानिष्प्रयोजनत्वान्नानुशोचनंकर्तव्यं वस्तुस्थितेस्तथात्वात् नहिकेनचिद्वस्तुस्थितिरतिक्रमितुंशक्यते ९ ७२

किंच अपिच नेदमाश्चर्यंमरणंनाम यतःपृथिव्यादीनिमहांत्यपिभूतानिनाशंगच्छंति तथासमुद्राअपि जरामरणविरहिणोअमराअपि प्रल
यसमयेअवसानंगच्छंति कथमिवास्थिरतयाफेनसंनिभोमरणधर्माभूतसंघोविनाशंनयास्यति उचितमेवहिमरणधर्मिणःप्रयाणं अतोनिष्प्र
योजनःशोकसमावेशः १० अनिष्टापादकत्वादप्यनुशोचनंनकार्यमित्याह यस्मादनुशोचद्भिर्बांधवैर्वदननयननिर्गमितंश्लेष्माश्रुवायस्मादव-

गंत्रीवसुमतीनाशासमुदधिर्दैवतानिच फेनप्रख्यःकथंनाशंमर्त्यलोकोनयास्यति १० श्लेष्माश्रु बांधवैर्मुक्तंप्रेतोभुंक्तेय
तोवशः अतोनरोदितव्यंहिक्रियाःकार्याःस्वशक्तितः ११ इतिसंश्रुत्यगच्छेयुर्गृहंबालपुरःसराः विदश्यनिंबप-
त्राणिनियताद्वारिवेश्मनः १२ आचम्याग्न्यादिसलिलंगोमयंगौरसर्षपान् प्रविशेयुःसमालभ्यकृत्वाश्मनिपदंशनैः १३

शोकामोपिप्रेतोभुंक्ते तस्मान्नरोदितव्यं किंतुप्रेतहितेप्सुभिःस्वशक्त्यनुसारेणश्राद्धादिक्रियाःकार्याः ११ एवंकुलवृद्धवचांसिसम्यगाकर्ण्यत्यक्तशोकाः
संतोबालानग्रतःकृत्वागृहंगच्छेयुः गत्वाचवेश्मनोद्वारिस्थित्वानियताःसंयतमनस्काःनिंबपत्राणिविदश्यदशनैःखंडनंकृत्वाखादित्वाचमनंकृत्वा
ग्न्युदकगोमयसर्षपानालभ्य आदिग्रहणाद्दूर्वाप्रवालमग्निर्वृषभोवेतिशंखोक्तौदूर्वांकुरवृषभावपिस्पृष्ट्वाश्मनिचपदंनिधायशनैरस्खलितंवेश्मप्र
विशेयुः १२ १३

अतिदेशमाह यदेतत्पूर्वोक्तंनिंबपत्रदशनादिवेश्मप्रवेशनांतंकर्मतन्नकेवलंज्ञातीनामपितुपरेषामपिधर्मार्थंप्रेतालंकारनिर्हरणादिकंकुर्वतांभव-
ति प्रवेशनादिकमित्यत्रआदिशब्दोमांगलिकत्वात्प्रतिलोमक्रमाभिप्रायः तेषांचधर्मार्थनिर्हरणादौप्रवृत्तानांतत्क्षणाच्छुद्धिमिच्छतांअसपिंडा-
नांस्नानप्राणायामाभ्यामेवशुद्धिः यथापाराशरः अनाथंब्राह्मणंप्रेतंयेवहंतिद्विजातयः पदेपदेयज्ञफलमनुपूर्वंलभंतिते नतेषामशुभंकिंचि
त्पापंवाशुभकर्मणाम् जलावगाहनात्तेषांसद्यःशौचंविधीयतइति स्नेहादिनानिर्हरणेतुमनूक्तोविशेषः असपिंडंद्विजंप्रेतंविप्रोनिर्हृत्यबंधुव
त् विशुध्यतित्रिरात्रेणमातुराप्तांश्चबांधवान् यद्यन्नमत्तितेषांतुदशाहेनैवशुध्यति अनदन्नन्नमन्हैवनचेत्तस्मिन्गृहेवसेदिति अत्रेयंव्यव-

प्रवेशनादिकंकर्मप्रेतसंस्पर्शिनामपि इच्छतांतत्क्षणाच्छुद्धिःपरेषांस्नानसंयमात् १४

स्था यःस्नेहादिनाशवनिर्हरणंकृत्वातदीयमन्नमश्नातितद्गृहेचवसतितस्यदशाहेनैवशुद्धिः यस्तुकेवलंतद्गृहेवसतिनपुनस्तदन्नमश्नातितस्य
त्रिरात्रं यःपुनर्निर्हरणमात्रंकरोतिनतद्गृहेवसतिनचतदन्नमश्नातितस्यैकाहइति एतत्सजातीयविषयं विजातीयविषयेपुनर्यज्जातीयंप्रेतंनिर्हर
तितज्जातिप्रयुक्तमाशौचंकार्यं यथाहगौतमः अवरश्चेद्वर्णःपूर्ववर्णमुपस्पृशेत्पूर्वोवावरंतत्रतच्छवोक्तमाशौचमिति उपस्पर्शनंनिर्हरणं वि-
प्रस्यशूद्रनिर्हरणेमासमाशौचं शूद्रस्यतुविप्रनिर्हरणेदशरात्रमित्येवंशववदाशौचंकार्यमित्यर्थः १४ ७ ७ ७ ७

ब्रह्मचारिणंप्रत्याह आचार्यउक्तलक्षणः माताचपिताचपितरौ उपाध्यायश्चपूर्वोक्तः एतान्निर्हृत्यापिव्रतीब्रह्मचारीव्रत्येवनपुनरस्यव्रतभ्रंशः
कटशब्देनाशौचंलक्ष्यते तत्सहचरितमन्नंसकटान्नंनब्रह्मचारीनाश्नीयात् नचाशौचिभिःसहसंवसेत् एवंवदताआचार्यादिव्यतिरिक्तप्रेतनिर्हर-
णेतुब्रह्मचारिणोव्रतलोपइत्यर्थादुक्तंभवति अतएववसिष्ठेनोक्तं ब्रह्मचारिणःशवकर्मिणोव्रतान्निर्वृत्तिरन्यत्रमातापित्रोरिति १५ आशौचि-
नांनियमविशेषमाह क्रीतमयाचितंलब्धंवाअशनंयेषांतेक्रीतलब्धाशनाः भवेयुरितिशेषः क्रीतलब्धाशननियमात् नदत्ताभेऽनशनमर्थात्सि

आचार्यपित्रुपाध्यायान्निर्हृत्यापिव्रतीव्रती सकटान्नंचनाश्नीयान्नचतैःसहसंवसेत् १५
क्रीतलब्धाशनाभूमौस्वपेयुस्तेपृथक्पृथक् पिंडयज्ञावृतादेयंप्रेतायान्नंदिनत्रयम् १६

द्धंभवति अतएववसिष्ठः गृहान्व्रजित्वाअधःप्रस्तरेत्र्यहमनश्नंतआसीरन्क्रीतोत्पन्नेनवावर्तेरन्निति अधःप्रस्तरआशौचिनांशयनासनार्थस्तृ
णमयःप्रस्तरः तेचसपिंडाभूमावेवपृथक्पृथक्शयीरन् नरवङ्गादौ मनुनाप्यत्रविशेषोदर्शितः अक्षारलवणान्नाःस्युर्निमज्जेयुश्चतेत्र्यहम्
मांसाशनंचनाश्नीयुःशयीरंश्चपृथक्क्षिताविति तथागौतमेनापिविशेषउक्तः अधःशय्याशायिनोब्रह्मचारिणःशवकर्मिणइति तथापिंडपितृ

यज्ञप्रक्रिययाप्राचीनावीतित्वादिरूपयाप्रेतायदिनत्रयंपिंडरूपमन्नंतूष्णींक्षितौदेयं यथाहमरीचिः प्रेतपिंडंबहिर्दद्याद्दर्भमंत्रविवर्जितम् प्रागु
दीच्यांचरुंकृत्वास्नातःप्रयतमानसइति दर्भमंत्रविवर्जितत्वमनुपनीतविषयं असंस्कृतानांभूमौपिंडंदद्यात्संस्कृतानांकुशेष्विति प्रचेतःस्मरणात्
तथाकर्तृनियमश्चगृह्यपरिशिष्टाद्विज्ञेयः असगोत्रःसगोत्रोवायदिस्त्रीयदिवापुमान् प्रथमेहनियोदद्यात्सदशाहंसमापयेदिति तथाद्रव्यनि
यमश्चशुनःपुच्छेनदर्शितः शालिनासक्तुभिर्वापिशाकैर्वाप्यथनिर्वपेत् प्रथमेहनियद्द्रव्यंतदेवस्याद्दशाहिकम् तूष्णींप्रसेकंपुष्पंचधूपंदीप
तथैवचेति पिंडश्चपाषाणेनदेयः भूमौमाल्यंपिंडंपानीयमुपलेवादद्युरितिशंखस्मरणात् नचदद्युरितिबहुवचनेनोदकदानवत्सर्वैःपिंडदानं-
कार्यमित्याशंकनीयं किंतुपुत्रेणैवकार्यं तदभावेप्रत्यासन्नेनसपिंडानामन्यतमेनतदभावेमातृसपिंडादिनाकार्यं पुत्राभावेसपिंडामातृसपिंडाः
शिष्यादद्युस्तदभावेऋत्विगाचार्याविति गौतमस्मरणात् पुत्रबहुत्वेपुनर्ज्येष्ठेनैवकार्यं सर्वैरनुमतिंकृत्वाज्येष्ठेनैवतुयत्कृतं द्रव्येणचाविभक्तेन-
सर्वैरेवकृतंभवेदितिमरीचिस्मरणात् पिंडसंख्यानियमश्च ब्राह्मणस्यदशपिंडाःक्षत्रियस्यद्वादशेत्येवमाशौचदिवससंख्ययाविष्णुनाभिहि
तः यावदाशौचंप्रेतस्योदकंपिंडमेकंचदद्युरिति तथास्मृत्यंतरेपि नवभिर्दिवसैर्दद्यान्नवपिंडान्समाहितः दशमंपिंडमुत्सृज्यरात्रिशेषेशुचिर्भवे-
दिति शंखलिवचनमपरेद्युःक्रियमाणश्राद्धार्थब्राह्मणनिमंत्रणाभिप्रायेण योगीश्वरेणतुपिंडत्रयदानमभिहितं अनयोश्चगुरुलघुकल्पयोरुद-
कदानविषयोक्ताव्यवस्थाविज्ञेया अत्रापरःशातातपीयोविशेषः आशौचस्यतुन्ह्रासेपिपिंडान्दद्याद्दशैवहिति त्रिरात्राशौचिनांपुनःपारस्करेणवि
शेषोदर्शितः प्रथमेदिवसेदेयास्त्रयःपिंडाःसमाहितैः द्वितीयेचतुरोदद्यादस्थिसंचयनंतथा त्रींस्तुदद्यात्तृतीयेह्निवस्त्रादिक्षालयेत्ततइति १६ ६७

किंच जलंक्षीरंचमृन्मयेपात्रद्वयेपृथक्पृथगाकाशेशिक्यादावेकाहंस्थापनीयं अत्रविशेषानुपादानात् प्रथमेहनिकार्यं तथापारस्करवचनात्
प्रेतात्रस्नाहीत्युदकंस्थाप्यंपिबचेदमितिक्षीरं तथास्थिसंचयनंचप्रथमादिदिनेषुकार्यं तथाहसंवर्त्तः प्रथमेन्हितृतीयेवासप्तमेनवमेतथा अस्थि
संचयनंकार्यंदिनेतद्गोत्रजैःसहेति क्वचित्तुद्वितीयेत्वस्थिसंचयइत्युक्तं वैष्णवेतुचतुर्थदिवसेस्थिसंचयनंकुर्यात् तेषांचगंगांभसिप्रक्षेपइति अ
तोन्यतमस्मिन्दिनेस्वगृह्योक्तविधिनास्थिसंचयनंकार्यं अंगिरसाचात्रविशेषोदर्शितः अस्थिसंचयनेयागोदेवानांपरिकीर्त्तितः प्रेतीभूतंतमुद्दिश्य
यःश्राद्धंनकरोतिचेत् देवतानांतुयजनंतंशपंत्यथदेवताः देवताश्चात्रश्मशानवासिन्यः तत्रपूर्वंदग्धाः श्मशानवासिनोदेवाःशवानांपरिकीर्त्तिता-

जलमेकाहमाकाशेस्थाप्यंक्षीरंचमृन्मये वैतानोपासनाःकार्याःक्रियाश्चश्रुतिनोदनात् १७

इतितेनैवोक्तं अतस्तान्देवानचिरमृतंचप्रेतमुद्दिश्यधूपदीपादिभिःपिंडरूपेणचान्नेनतत्रपूजाकार्येत्युक्तंभवति तथावपनंचदशमेहनिकार्यम्
दशमेहनिसंप्राप्तेस्नानंग्रामाद्बहिर्भवेत् तत्रत्याज्यानिवासांसिकेशश्मश्रुनखानिचेतिदेवलस्मरणात् तथास्मृत्यंतरेपि द्वितीयेहनिकर्तव्यंक्षुर
कर्मप्रयत्नतः तृतीयेपंचमेवापिसप्तमेवाप्रदानतइति श्राद्धप्रदानादर्वागनियमइतियावत् वपनंचकेषामित्याकांक्षायामापस्तंबेनोक्तं अनु
भाविनांचपरिवापनमिति अयमर्थः शावदुःखमनुभवंतीत्यनुभाविनः सपिंडास्तेषांचाविशेषेणवपनमुनाल्पवयसामित्यपेक्षायामिदमेवोप

तिष्ठते अनुभाविनां परिवापनमिति अनुपश्चाद्भवंतीत्यनुभाविनोल्पवयसस्तेषां वपनमिति अनुभाविनः पुत्रा इति केचिन्मन्यंते गंगायां भास्कर
क्षेत्रे मातापित्रोर्गुरोर्मृतौ आधानकाले सोमे च वपनं सप्तसु स्मृतमिति नियमदर्शनात् अशुचित्वेन सकलश्रौतस्मार्त्तकर्माधिकारनिवृत्तौ प्रस-
क्तायां केषुचिदभ्यनुज्ञानार्थमाह वितानोग्नीनां विस्तारस्तत्र भवा वैतानाः त्रेताग्निसाध्या अग्निहोत्रदर्शपूर्णमासाद्याः क्रिया उच्यंते प्रतिदिनमु
पास्यत इत्युपासनो गृह्योग्निस्तत्र भवा औपासनाः सायंप्रातर्होमक्रिया उच्यंते तौ वैतानौपासनाः वैदिक्यः क्रियाः कार्याः कथं वैदिकत्वमिति चेत् श्रु
तिचोदनात् तथाहि यावज्जीवमग्निहोत्रं जुहुयादित्यादिश्रुतिभिरग्निहोत्रादीनां चोदनास्पष्टैव तथा अहरहः स्वाहा कुर्यात् अन्नाभावे केनचिदाका
ष्ठादिश्रुत्यौपासनहोमोपि चोद्यते अत्र च श्रौतत्वविशेषणोपादानात्स्मार्त्तक्रियाणां दानादीनामननुष्ठानं गम्यते अत एव वैय्याघ्रपादेनोक्तं स्मार्तक
र्मपरित्यागो राहोरन्यत्र सूतके श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयादिति श्रौतानां च कार्यत्वाभिधानं नित्यनैमित्तिकाभिप्रायेण यथाह पैठी
नसिः नित्यानि विनिवर्त्तेरन् वैतानवर्ज्यं शालाग्नौ चैक इति नित्यानि विनिवर्त्तेरन्नित्यविशेषण आवश्यकानां नित्यनैमित्तिकानां निवृत्तौ प्रसक्तायां
वैतानवर्ज्यमित्यग्नित्रयसाध्यावश्यकानां पर्युदासः शालाग्नौ चैक इति गृह्याग्नौ भवानामप्यावश्यकानां पाक्षिकः पर्युदास उक्तः अतस्तेष्वाशौचं
नास्त्येव काम्यानां पुनः शौचाभावादननुष्ठानं मनुनाप्यनेनैवाभिप्रायेणोक्तं प्रत्यूहेन्नाग्निषु क्रिया इति अग्निषु क्रिया न प्रत्यूहेदिति अनग्निसा
ध्यानां पंचमहायज्ञादीनां निवृत्तिः अत एव संवर्त्तः होमं तत्र प्रकुर्वीत शुष्कान्नेन फलेन वा पंचयज्ञविधानं तु न कुर्यान्मृत्युजन्मनोरिति वैश्वदेव
स्याग्निसाध्यत्वेपि वचनान्निवृत्तिः विप्रो दशाहमासीत वैश्वदेवविवर्जित इति तेनैवोक्तत्वात् सूतके कर्मणां त्यागः संध्यादीनां विधीयते इति य

द्यपिसंध्यायाविनिवृत्तिःश्रूयतेतथाप्यंजलिप्रक्षेपादिकंकुर्यात् सूतकेसावित्र्याचांजलिं प्रक्षिप्य प्रदक्षिणंकृत्वासूर्यंध्यायन्नमस्कुर्यादितिपैठीनसिस्मरणात्
यद्यपिवैतानोपासनाःकार्याइतिसामान्येनोक्तंतथाप्यन्येनकारयितव्यं अन्यएतानिकुर्युरितिपैठीनसिस्मरणात् बृहस्पतिनाप्युक्तं सूतकेमृतकेचैवअ-
शक्तौश्राद्धभोजने प्रवासादिनिमित्तेषुहावयेन्नतुहापयेदिति तथास्मार्त्तत्वेपिपिंडपितृयज्ञश्रवणाकर्माश्वयुज्यादिकश्चनित्यहोमःकार्यएव सूत-
केतुसमुत्पन्नेस्मार्त्तंकर्मकथंभवेत् पिंडयज्ञंचरुंहोममसगोत्रेणकारयेदितिजातूकर्ण्यस्मरणात् यद्यपिसांगेकर्मण्यकर्त्तृत्वंतथापिस्वद्रव्यत्यागा
त्मकंप्रधानंस्वयंकुर्यात् तस्यानन्यनिष्पाद्यत्वात् अतएवोक्तं श्रौतेकर्मणितत्कालंस्नातःशुद्धिमवाप्नुयादिति यत्पुनर्दानंप्रतिग्रहोहोमःस्वाध्या
यश्चनिवर्त्ततइतिहोमप्रतिषेधः सकाम्याभिप्रायोवैश्वदेवाभिप्रायोवाव्यवस्थापनीयः तथासूतकान्नभोजनमपिनकार्यं उभयत्रदशाहानिकुलस्या
न्नंनभुज्यतइतियमस्मरणात् उभयत्रजननमरणयोः दशाहानीत्याशौचकालोपलक्षणं कुलस्यसूतकयुक्तस्यसंबंध्यन्नंअसकुल्यैर्नभोक्त
व्यं सकुल्यानांपुनर्नदोषः सूतकेतुकुलस्यान्नमदोषंमनुरब्रवीदितितेनैवोक्तत्वात् अयंचनिषेधोदातृभोक्त्रोरन्यतरेणजनने मरणेवाज्ञातेस
तिवेदितव्यः उभाभ्याम परिज्ञातेसूतकंनैवदोषकृत् एकेनापिपरिज्ञातेभोक्तुर्दोषमुपावहेदितिषट्त्रिंशन्मतेदर्शनात् तथाविवाहादिषुसू
तकोत्पत्तेःप्राक्ब्राह्मणार्थंपृथक्कृतमन्नंभोक्तव्यमेव विवाहोत्सवयज्ञेषुत्वंतरामृतसूतके पूर्वसंकल्पितार्थेषुनदोषःपरिकीर्त्तितइतिबृहस्प
तिस्मरणात् तथापरोपिविशेषःषट्त्रिंशन्मतेदर्शितः विवाहोत्सवयज्ञेषुत्वंतरामृतसूतके परैरन्नंप्रदातव्यंभोक्तव्यंचद्विजोत्तमैः भुंजाने-
ष्वतुविप्रेषुत्वंतरामृतसूतके अन्यगेहोदकाचांताःसर्वेतेशुचयःस्मृताइति तथाशौचपरिग्रहत्वेपिकेषुचित्द्रव्येषुदोषाभावः यथाहमरीचि

लवणेमधुमांसेचपुष्पमूलफलेषुच शाककाष्ठतृणेष्वप्सुदधिसर्पिःपयःसुच तिलौषधाजिनेचैवपक्वापक्वेस्वयंग्रहः पण्येषुचैवसर्वेषुनाशौचंमृ-
तसूतकेइति पक्वंभक्ष्यजातंमोदकादि अपक्वंतंदुलादि स्वयंग्रहइतिस्वयमेवस्वाम्यनुज्ञातोगृण्हीयादित्यर्थः पक्वापक्वाभ्यनुज्ञानमन्नंसत्रप्रवृत्त
विषयं अन्नसत्रप्रवृत्तानामाममन्नमगर्हितं भुक्त्वापक्वान्नमेतेषांत्रिरात्रंतुपयःपिबेदित्यंगिरःस्मरणात् अत्रपक्वशब्दोभक्ष्यव्यतिरिक्तोदना-
दिविषयः शवसंसर्गनिमित्ताशौचेत्वंगिरसाविशेषउक्तः आशौचंयस्यसंसर्गादापतेद्गृहमेधिनः क्रियास्तस्यनलुप्यंतेगृह्याणांचनतद्भवेदिति
तदाशौचंकेवलंगृहमेधिनएवनपुनस्तद्गृहेभवानांभार्यादीनांतद्द्रव्याणांचभवेदित्यर्थः अनिक्रांताशौचेप्ययमेवार्थःस्मृत्यंतरेदर्शितः अनिक्रांतेदशा
हेतुपश्चाज्जानातिचेद्गृही त्रिरात्रंसूतकंतस्यनतद्द्रव्यस्यकर्हिचिदिति१७ एवमाशौचिनोविधिप्रतिषेधरूपान्धर्मानभिधायाधुनाशौचनिमित्तका

त्रिरात्रंदशरात्रंवाशावमाशौचमिष्यते ऊनद्विवर्षउभयोःसूतकंमातुरेवहि १८

लनियमंचाह शवनिमित्तंशावं सूतकशब्देनचजननवाचिनातन्निमित्तमाशौचंलक्ष्यते एवंचवदताजननमरणयोराशौचनिमित्तत्वमुक्तंभवति
तच्चजननमरणमुत्पन्नंज्ञातमेवनिमित्तं निर्दशंज्ञातिमरणंश्रुत्वापुत्रस्यजन्मचेत्यादिलिंगदर्शनात् तथा विगतंतुविदेशस्थंशृणुयाद्योह्यनिर्दशं यच्छे
षदशरात्रस्यतावदेवाशुचिर्भवेदित्यादिवाक्यारंभसामर्थ्याच्च उत्पत्तिमात्रापेक्षत्वेत्वाशौचस्यदशाहाद्याशौचकालनियमास्तत्तत्प्रभृतिकाएवेतिअ-
निर्दशज्ञातिमरणश्रवणेदशरात्रशेषमेवाशौचमर्यात् सिध्यतीतियच्छेषंदशरात्रस्येत्याद्यनारंभणीयंस्यात् तस्माज्ज्ञातमेवमरणंजननंचनिमित्तं

तत्रोभयनिमित्तमपि आशौचं त्रिरात्रं दशरात्रं चेष्यते मन्वादिभिः अत्राशौचप्रकरणे अहर्ग्रहणं रात्रिग्रहणं वा अहोरात्रोपलक्षणार्थं मन्वादिभिरिष्यत
इति वचनं तदुक्तसपिंडसमानोदकरूपविषयभेदप्रदर्शनार्थं तथाहि दशाहं शावमाशौचं सपिंडेषु विधीयते जननेप्येवमेव स्यान्निपुणां शुद्धिमिच्छ
ताम् जन्मन्येकोदकानां तु त्रिरात्राच्छुद्धिरिष्यते शवस्पृशो विशुध्यंति त्र्यहात्तूदकदायिन इत्येतैर्वाक्यैस्त्रिरात्रदशरात्रयोः समानोदकसपिंडविषयत्वे
न व्यवस्था कृता अतः सपिंडानां सप्तमपुरुषावधिकानां अविशेषेण दशरात्रं समानोदकानां त्रिरात्रमिति यत्पुनः स्मृत्यंतरवचनं चतुर्थे दशरात्रं स्यात्ष
ण्निशाः पुंसि पंचमे षष्ठे चतुरहाच्छुद्धिः सप्तमे त्वहरेव त्विति तद्विगीतत्वान्नादरणीयं यद्यप्यविगीतं तथापि मधुपर्कांगपशुवालंभवत् लोकविद्वि
ष्टत्वान्नानुष्ठेयं अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्नत्विति मनुस्मरणात् न च सप्तमे प्रत्यासन्ने सपिंड एकाहो विप्रकृष्टाष्टमादिषु समानोदकेषु त्र्य
ह इत्युक्तं एवमविशेषेण सपिंडानामाशौचे प्राप्ते क्वचिन्नियमार्थमाह ऊनद्विवर्षे संस्थिते उभयोरेव मातापित्रोर्दशरात्रं आशौचं न सर्वेषां सपिंडानां ते
षां तु वक्ष्यति आदंतजननात्सद्य इति तथा च पैंग्यः गर्भस्थे प्रेते मातुर्दशाहं जाते उभयोः कृते नाम्नि सोदराणां चेति अथवा अयमर्थः ऊनद्विवर्षे सं
स्थिते उभयोर्मातापित्रोरेव अस्पृश्यत्वलक्षणमाशौचं न सपिंडानां तथा स्मृत्यंतरे ऊनद्विवर्षे प्रेते मातापित्रोरेव नेतरेषामिति अस्पृश्यत्वलक्षणम
भिप्रेतं इतरस्य पुनः कर्मण्यनधिकारलक्षणस्य सपिंडेष्वपि आदंतजन्मनः सद्य इत्यादिभिर्विहितत्वात् अत्र दृष्टांतः सूतकं मातुरेव हीति यथा सूत
कं जनननिमित्तमस्पृश्यत्वलक्षणमाशौचं मातुरेव केवलं तथोनद्विवर्षोपरमे मातापित्रोरेवास्पृश्यत्वमिति ऊनद्विवर्षे सपिंडानामस्पृश्यत्वं प्रतिषेध
तान्यत्रास्पृश्यत्वमप्यनुज्ञातं भवति तथा च देवलः स्वाशौचकालाद्विज्ञेयं स्पर्शनं च त्रिभागतः शूद्रविट्क्षत्रविप्राणां यथाशास्त्रं प्रचोदितमिति एत

च्चानुपनीतमरणनिमित्ते अतिक्रांताशौचेचत्रिरात्रादौवेदितव्यं उपनीतविषयेपितेनैवोक्तं दशाहादित्रिभागेनकृतेसंचयनेक्रमात् अंगस्पर्शन
मिच्छंतिवर्णानांतत्त्वदर्शिनः त्रिचतुःपंचदशभिःस्पृश्यावर्णाःक्रमेणतु भोज्यान्नोदशभिर्विप्रःशेषाद्विचिषडुत्तरैरिति द्व्युत्तरैर्दशभिः त्र्युत्तरैर्द्वा-
दशभिः षडुत्तरैःपंचदशभिरितिद्रष्टव्यं १८ जननिमित्तमस्पृश्यत्वलक्षणमाशौचमाह सूतकंजनननिमित्तंअस्पृश्यत्वलक्षणमाशौचं
पित्रोर्मातापित्रोरेव नसर्वेषांसपिंडानां तच्चास्पृश्यत्वंमातुर्ध्रुवंदशाहपर्यंतंस्थिरमित्यर्थः कुतस्तदसृग्दर्शनात् तस्याःसंबंधित्वेनासृजोदर्शनात्
अतएववसिष्ठः नाशौचंविद्यतेपुंसःसंसर्गंचेन्नगच्छति रजस्तत्राशुचिज्ञेयंतच्चपुंसिनविद्यतेइति पितुस्तुध्रुवंनभवति स्नानमात्रेणास्पृश्यत्वंनि

पित्रोस्तुसूतकंमातुस्तदसृग्दर्शनाद्ध्रुवम् तदहर्नप्रदुष्येतपूर्वेषांजन्मकारणात् १९

वर्तते यथाहसंवर्तः जातेपुत्रेपितुःस्नानंसचैलंतुविधीयते माताशुध्येद्दशाहेनस्नानात्तुस्पर्शनंपितुरिति माताशुद्ध्येद्दशाहेनेत्येतत्संव्यवहारयो
ग्यतामात्रं अदृष्टार्थेषुपुनःकर्मसुपैठीनसिनाविशेषउक्तः सूतिकांपुत्रवतींविंशतिरात्रेणकर्माणिकारयेत् मासेनस्त्रीजननीमिति अंगिरसाच
सपिंडानामस्पृश्यत्वाभावःस्पष्टीकृतः सूतकेसूतिकावर्ज्यंसंस्पर्शोननिषिध्यते संस्पर्शेसूतिकायास्तुस्नानमेवविधीयतेइति यस्मिन्दिवसे-
कुमारजननंतदहर्नप्रदुष्येततन्निमित्तदानाद्यधिकारापहारकृन्नभवतीत्यर्थः यस्मात्तस्मिन्नहनिपूर्वेषांपित्रादीनांपुत्ररूपेणजन्मउत्पत्तिः न

स्मात्तदहर्नप्रदुष्येत तथाचवृद्धयाज्ञवल्क्येनोक्तं कुमारजन्मदिवसेविप्रैःकार्यःप्रतिग्रहः हिरण्यभूगवाश्वाजवासःशय्यासनादिषु तत्रसर्वंप्रति
ग्राह्यंकृतान्नंनतुभक्षयेत् भक्षयित्वातुतन्मोहाद्द्विजश्चांद्रायणंचरेदिति व्यासेनाप्यत्रविशेषउक्तः सूतिकावासनिलयाजन्मदानामदेवताः
तासांयागनिमित्तंतुशुद्धिर्जन्मनिकीर्त्तिता प्रथमेदिवसेषष्ठेदशमेचैवसर्वदा त्रिष्वेतेषुनकुर्वीतसूतकंपुत्रजन्मनि मार्कंडेयेनाप्युक्तं रक्षणीया
तथाषष्ठीनिशातत्रविशेषतः रात्रौजागरणंकार्यंजन्मदानांतथाबलिः पुरुषाःशस्त्रहस्ताश्चनृत्यगीतैश्चयोषितः रात्रौजागरणंकुर्युर्दशम्यांचै
वसूतकइति १९ आशौचमध्येपुनर्जननेमरणेवाजातेप्रतिनिमित्तं नैमित्तिकमावर्त्ततइतिन्यायेनपुनर्दशाहाद्याशौचप्राप्तौतदपवादमाह

## अंतराजन्ममरणेशेषाहोभिर्विशुद्ध्यति

वर्णापेक्षयावयोवस्थापेक्षयावायस्ययावानाशौचकालस्तदंतरातत्समस्यततोन्यूनस्यवाशौचस्यनिमित्तभूतेजननेमरणेवाजातेपूर्वाशौचावशिष्टै-
रेवाहोभिर्विशुद्ध्यति नपुनःपश्चादुत्पन्नजननादिनिमित्तंपृथक्पृथगाशौचंकार्यं यदापुनरल्पावृत्तमानाशौचाद्दीर्घकालमाशौचमंतरापततितन-
दानपूर्वशेषेणशुद्धिः यथाहोशनाः स्वल्पाशौचस्यमध्येतुदीर्घाशौचंभवेद्यदि नपूर्वेणविशुद्धिःस्यात्स्वकालेनैवशुद्ध्यतीति यमोप्याह अहोवृद्धि
मदाशौचंपश्चिमेनसमापयेदिति अत्रचांतराजन्ममरणेइतियद्यप्यविशेषेणाभिहितंतथापिनसूतकांतर्वर्त्तिनःशावस्यपूर्वाशौचशेषेणशुद्धिः

यथाहांगिराः सूतके मृतकंचेत्स्यान्मृतके त्वथ सूतकम् तत्राधिकृत्य मृतकंशौचंकुर्यान्नसूतकमिति तथाषट्त्रिंशन्मतेपि शावाशौचे समुत्पन्ने
सूतकंतु यदा भवेत् शावेन शुध्यते सूतिर्न सूतिः शावशोधिनीति तस्मान्नसूतकांतःपातिनः शावस्य पूर्वशेषेण शुद्धिः किंतु शावांतःपातिन एव सूत
कस्य तथा सजातीयांतःपातित्वेपि शावस्य क्वचित्पूर्वशेषेण शुद्धेरपवादः स्मृत्यंतरे दर्शितः मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता पितुः शेषेण
शुद्धिः स्यात् मातुः कुर्यात्तु पक्षिणीमिति अयमर्थः मातरि पूर्वं मृतायां तन्निमित्ताशौचमध्ये यदि पितुरुपरमः स्यात्तदा न पूर्वशेषेण शुद्धिः किंतु
पितुः प्रयाणनिमित्ताशौचकालेनैव शुद्धिः कार्या तथा पितुः प्रयाणनिमित्ताशौचमध्ये मातरि स्वर्यातायामपि न पूर्वशेषमात्राच्छुद्धिः किंतु पूर्वाशौ-
चं समाप्योपरि पक्षिणीं क्षिपेदिति तथाशौचसंनिपातकालविशेषकृतोप्यपवादो गौतमेनोक्तः रात्रिशेषे सति द्वाभ्यां प्रभाते सति तिसृभिरिति अय
मर्थः रात्रिमात्रावशिष्टे पूर्वाशौचे यद्याशौचांतरं संनिपतेत् तर्हि पूर्वाशौचं समाप्यानंतरं द्वाभ्यां रात्रिभ्यां शुद्धिः प्रभाते पुनस्तस्या रात्रेः पश्चिमे या
मे जननाद्याशौचांतरसंनिपाते सति तिसृभी रात्रिभिः शुद्धिः न पुनस्तच्छेषमात्रेण शातातपेनाप्युक्तं रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्य-
हादिति प्रेतक्रिया पुनः सूतकसंनिपातेपि न निवर्त्तत इति तेनैवोक्तं अंतर्दशाहे जननात्पश्चात्स्यान्मरणं यदि प्रेतमुद्दिश्य कर्त्तव्यं पिंडदानं स्वबंधुभिः
प्रारब्धे प्रेतपिंडे तु मध्ये चेज्जननं भवेत् तथैवाशौचपिंडांस्तु शेषान्दद्याद्यथाविधीति तथा शावाशौचयोः संनिपातेपि प्रेतकृत्यं कार्यं तुल्यन्याय
त्वात् तथा जातकर्मादिकमपि पुत्रजन्मनिमित्तमाशौचांतरसंनिपातेपि कार्यमेव यथाह प्रजापतिः आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवे
त् कर्त्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुध्यतीति पूर्णप्रसवकालजननाशौचमभिधायाधुनाऽप्राप्तकालगर्भनिःसरणनिमित्तमाशौचमाह

स्रवतिर्यद्यपिलोकेद्रवद्रव्यकर्तृकेपरिस्पंदेप्रयुज्यतेतथाप्यत्रद्रवाद्रवद्रव्यसाधारणरूपेधःपतनेवर्त्तते कुतोद्रवत्वस्यप्रथममासएवसंभवात्तत्रच-
मासतुल्यानिशाइतिबहुवचनानुपपत्तेः गर्भस्रावेयावंतोगर्भग्रहणमासास्तत्समसंख्याकानिशाःशुद्धेःकारणं एतच्चस्त्रियाएव गर्भस्रावेमास
तुल्यारात्रयःस्त्रीणांस्नानमात्रमेवपुरुषस्येतिवृद्धवसिष्ठस्मरणात् यत्तुनगौतमेनत्र्यहंचेतित्रिरात्रमुक्तं तन्मासत्रयादर्वाग्वेदितव्यम् गर्भस्रुतुल्यां
यथामासमचिरेतूत्तमेत्र्यहः राजन्येतुचतूरात्रंवैश्येपंचाहमेवतु अष्टाहेनतुशूद्रस्यशुद्धिरेषाप्रकीर्त्तितेतिमरीचिस्मरणात् अचिरेमासत्रयादर्वा
क् गर्भस्रावेउत्तमेब्राह्मणजातौत्रिरात्रमित्यर्थः एतच्चषण्मासपर्यंतंद्रष्टव्यम् सप्तमादिषुपुनःपरिपूर्णमेवप्रसवाशौचंकार्यं तत्रपरिपूर्णांगग

## गर्भस्रावेमासतुल्यानिशाःशुद्धेस्तुकारणम् २०

र्भस्यजीवतोनिर्गमदर्शनात् तत्रचलोकेप्रसवशब्दप्रयोगात् षण्मासाभ्यंतरेयावद्गर्भस्रावोभवेद्यदा तदामाससमैस्तासांदिवसैःशुद्धिरिष्यते
अतऊर्ध्वंस्वजात्युक्तंतासामाशौचमिष्यते सद्यःशौचंसपिंडानांगर्भस्यपतनेसतीतिस्मरणात् एतच्चसपिंडानांसद्यःशौचविधानंद्रवभूतगर्भपत
नेवेदितव्यं यत्तुनर्वसिष्ठवचनं ऊनद्विवार्षिकेप्रेतेगर्भस्यपतनेचसपिंडानांत्रिरात्रमितितत्पंचमषष्ठयोःकठिनगर्भपतनविषयं आचतुर्थाद्भ
वेत्स्रावःपातःपंचमषष्ठयोः अतऊर्ध्वंप्रसूतिःस्याद्दशाहंसूतकंभवेत् स्रावेमातुस्त्रिरात्रंस्यात्सपिंडाशौचवर्जनम् पातेमातुर्यथामासंपित्रादी

नादिनत्रयमितिमरीचिस्मरणात् सप्तममासप्रभृतिमृतजनने जातमृते वा सपिंडानां जनननिमित्तं परिपूर्णमाशौचं जातमृते मृतजाते वा सपिंडा-
नां दशाहमितिमरीचिस्मरणात् अतः सूतके चेदोत्थानादाशौचं सूतकवदिति पारस्करवचनाच्च ओत्थानादासूतिकाया उत्थानाद्दशाहमिति यावत् सूत
कवदिति शिशूपरमनिमित्तोदकदानरहितमित्यर्थः बृहन्मनुरपि दशाहाभ्यंतरे बाले प्रमीते तस्य बांधवैः शावाशौचं न कर्त्तव्यं सूत्याशौचं विधीयते इ-
ति तथाच स्मृत्यंतरमपि अंतर्दशाहोपरतस्य सूतकाहोभिरेवाशौचमिति एवमादिवचननिचयपर्यालोचनया सपिंडानां जनननिमित्ताशौचसं-
कोचो नास्तीति गम्यते यत्पुनर्बृहद्विष्णुवचनं जातमृते मृतजाते वा कुलस्य सद्यःशौचमिति तच्छिशूपरमनिमित्तस्याशौचस्य स्नानाच्छुद्धिप्रतिपा
दनपरम् न प्रसवनिमित्तस्य तथाच पारस्करः गर्भे यदि विपत्तिः स्याद्दशाहं सूतकं भवेत् सपिंडानां प्रसवनिमित्तस्य विद्यमानत्वात् जीवन्जाते
यदि म्रियेत सद्य एव विशुद्ध्यतीति प्रेताशौचाभिप्रायम् तथा शंखेनोक्तं प्राङ्नामकरणात्सद्यःशौचमिति यत्पुनः कात्यायनवचनम् अनिर्वृत्ते
दशाहे तु पंचत्वं यदि गच्छति सद्य एव विशुद्धिः स्यान्न प्रेतं नोदकक्रियेति तदपि वैष्णवेन समानार्थं यदा तु न प्रेतं नैव सूतकमिति पाठस्तदा सूतकम-
स्पृश्यत्वं नैव पित्रादीनां भवतीत्यर्थः अथवायमर्थः अंतर्दशाहे यदि शिशूपरमस्तदा न प्रेताशौचं यदि तत्र सपिंडजननं तदा सूतकमपि नैव कार्यं
किंतु पूर्वाशौचेनैव शुद्धिरिति यत्तु बृहन्मनुवचनं जीवन्जातो यदि ततो मृतः सूतक एव तु सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकमिति यच्च
बृहत्प्रचेतोवचनम् मुहूर्त्तं जीवतो बालः पंचत्वं यदि गच्छति मातुः शुद्धिर्दशाहेन सद्यः शुद्धास्तु गोत्रिण इति तत्रेयं व्यवस्था जननानंतरं ना-
भिवर्द्धनात्प्राङ्मृतौ पित्रादीनां जनननिमित्तमाशौचं दिनत्रयं सद्यःशौचं त्वग्निहोत्राद्यर्थं अग्निहोत्रार्थं स्नानोपस्पर्शनात्तत्कालं शौचमिति शं-

खस्मरणात् नाभिवर्धनोत्तरकालंतुशिशुप्रयाणेपिजननमिमित्तंसंपूर्णमाशौचंसपिंडानां यावन्नच्छिद्यतेनालंतावन्नाप्नोतिसूतकं छि-
न्नेनालेततःपश्चात्सूतकंतुविधीयतेइतिजैमिनिस्मरणात् मनुनाप्ययमर्थोदर्शितः रात्रिभिर्मासतुल्याभिर्गर्भस्रावेविशुध्यति रजस्युपर
तेसाध्वीस्नानेनस्त्रीरजस्वलेतिपूर्वभागस्यार्थोदर्शितः उत्तरस्यत्वयमर्थः रजसिनिःसरणादुपरतेनिवृत्तेरजस्वलास्त्रीस्नानेनसाध्वीदैवा-
दिकर्मयोग्याभवति स्पर्शनादिविषयेपुनरनुपरतेपिरजसिचतुर्थेहनिस्नानाच्छुद्धाभवति तदुक्तद्वन्द्वमनुना चतुर्थेहनिसंशुद्धाभवतिव्या
वहारिकीति तथास्मृत्यंतरं शुद्धाभर्तुश्चतुर्थेन्हिस्नानेनस्त्रीरजस्वला दैवेकर्मणिपित्र्येचपंचमेहनिशुध्यतीति पंचमेहनीतिरजोनिवृत्ति
कालोपलक्षणार्थं यदारजोदर्शनादारभ्यपुनःसप्तदशदिनाभ्यंतरेरजोदर्शनंतदाअशुचित्वंनास्त्येव अष्टादशेत्वेकाहाच्छुद्धिः एकोनविंशेद्व्यहा
त् ततउत्तरेषुत्र्यहाच्छुद्धिः यथाहात्रिः रजस्वलायदिस्नातापुनरेवरजस्वला अष्टादशदिनादर्वागशुचित्वंनविद्यते एकोनविंशतेरर्वागेकाहं
स्यात्ततोद्व्यहम् विंशत्प्रभृत्युत्तरेषुत्रिरात्रमशुचिर्भवेदिति यत्तुचतुर्दशदिनादर्वागशुचित्वंनविद्यतइतिस्मृत्यंतरंतत्रस्नानप्रभृतित्वमभिप्रे-
तमतोनविरोधः अयंचाशुचित्वप्रतिषेधोयस्याविंशतिदिनोत्तरकालमेवप्रायशोरजोदर्शनंतद्विषयः यस्याःपुनरारूढयौवनायाःप्रागेवाष्टाद
शदिनात्प्राचुर्येणरजोनिर्गमस्तस्यास्त्रिरात्रमेवाशौचं तयाचयावत्त्रिरात्रंस्नानादिरहितयास्थातव्यं रजस्वलात्रिरात्रमशुचिर्भवति साचनां
जीतनाभ्यंजीतनाप्सुस्नायादधःशयीतनदिवास्वप्यात् नग्रहान्वीक्षेतनाग्निंस्पृशेत्नाश्नीयान्नरज्जुंसृजेत् नचदंतान्धावयेत् नहसेन्नचकिं-
चिदाचरेत् अखर्वेणपात्रेणपिबेदंजलिनावा पात्रेणलोहितायसेनवेतिविज्ञायतइतिवसिष्ठस्मरणात् आंगिरसेपिविशेषः हस्तेश्नीयान्मृन्म

येवाहविर्भुक्क्षितिशायिनी रजस्वलाचतुर्थेन्हिस्नात्वाशुद्धिमवाप्नुयादिति पाराशरेपिविशेषः स्नानेनैमित्तिकेप्राप्तेनारीयदिरजस्वला पात्रां
तरिततोयेनस्नानंकृत्वाव्रतंचरेत् सिक्तगात्राभवेदद्भिःसांगोपांगाकथंचन नवस्त्रपीडनंकुर्यान्नान्यद्वासश्चधारयेदिति उशनसाप्यत्रविशे
षोदर्शितः ज्वराभिभूतायानारीरजसाचपरिप्लुता कथंतस्याभवेच्छौचंशुद्धिःस्यात्केनकर्मणा चतुर्थेहनिसंप्राप्तेस्पृशेदन्यातुतांस्त्रियंसास
चैलावगाह्यापःस्नात्वास्नात्वापुनःस्पृशेत् दशद्वादशकृत्वोवाआचमेच्चपुनःपुनः अंतेचवाससांत्यागस्ततःशुद्धाभवेच्चसा दद्याच्छक्त्या
ततोदानंपुण्याहेनविशुद्ध्यतीति अयंचातुरमात्रेस्नानप्रकारोनुसरणीयः आतुरेस्नानउत्पन्नेदशकृत्वोह्यनातुरः स्नात्वास्नात्वास्पृशेदेनंततः
शुध्येत्सआतुरइतिपाराशरस्मरणात् यदातुरजस्वलायाःसूतिकायावामृतिर्भवतितदायंस्नानप्रकारः सूतिकायामृतायांतुकथंकुर्वंतियाज्ञि
काः कुंभेसलिलमादायपंचगव्यंतथैवच पुण्यर्ग्भिरभिमंत्र्यापोवाचाशुद्धिंलभेत्ततः तेनैवस्नापयित्वातुदाहंकुर्याद्यथाविधि रजस्वला-
यास्तु पंचभिःस्नापयित्वातुगव्यैःप्रेतांरजस्वलाम् वस्त्रांतराहृतांकृत्वादाहयेद्विधिपूर्वकमिति एतच्चरजोदर्शनपुत्रजन्मादियद्युदयोत्तरका
लमुत्पन्नंतदातद्दिवसप्रभृत्याशौचाहोरात्रगणनाकार्या यदातुरजन्यांरजोदर्शनपुत्रजन्मादिजातंतदार्धरात्रात्प्राक्जननाद्युत्पत्तौपूर्वदिवसैक
देशव्यापित्वेपिआशौचस्यतत्पूर्वदिवसप्रभृत्येवगणनाकार्येत्येकःकल्पः रात्रिंत्रेधाविभज्याद्येभागद्वयेजननादौजातेपूर्वदिनंग्राह्यमितिद्वि
तीयः प्रागुदयादित्यपरः यथाहकश्यपः उदितेतुयदासूर्येनारीणांदृश्यतेरजः जननंवाविपत्तिर्वायस्याहस्तस्यशर्वरी अर्द्धरात्रावधिःकालः
सूतकादौविधीयते रात्रिंकुर्यात्त्रिभागांतुद्वौभागौपूर्वएवतु उत्तरांशःप्रभातेनयुज्यतेऋतुसूतके रात्रावेवसमुत्पन्नेमृतेरजसिसूतके पूर्वमेव-

दिनंग्रात्र्यंयावन्नोदयतेरविरिति एतेषांच कल्पानां देशाचारतोव्यवस्थाविज्ञेया इदंचाशौचमाहिताग्नेरुपरमेसंस्कारदिवसप्रभृतिकर्त्तव्यं अ
नाहिताग्नेस्तुमरणदिवसप्रभृतिसंचयनंतूभयोरपिसंस्कारदिवसप्रभृतीतिविवेचनीयम् यथाहांगिराः अनग्निमतउत्क्रांतेःसाग्नेःसंस्का
रकमर्णः शुद्धिःसंचयनंदाहान्मृताहस्तुयथातिथीति साग्नेःसंस्कारकर्मण इतिश्रवणादाहिताग्नौपितरिदेशांतरमृतेतत्पुत्रादीनामासंस्कारात्सं
ध्यादिकर्मलोपोनास्तीत्यनुसंधेयं तथाचपैठीनसिः अनग्निमतउत्क्रांतेराशौचंहिद्विजातिषु दाहादग्निमतोविद्याद्विदेशस्थेमृतेसतीति २०
सपिंडत्वादिनादशाहादिप्राप्तौक्वचिन्मृतुविशेषेणापवादमाह नृपोभिषिक्तःक्षत्रियादिः गोग्रहणंशृंगिदंष्ट्र्यादिनिरश्वासुपलक्षणार्थं विप्रग्र-

हतानांनृपगोविप्रैरन्वक्षंचात्मघातिनाम्

हणमंत्यजोपलक्षणम् एतैर्हतानांसंबधिनोयेसपिंडास्तेषांविषोद्बंधनादिभिःबुद्धिपूर्वमात्मानंयेव्यापादयंतितेआत्मघातिनः आत्मघातिग्रहणं
पारवंड्यनाश्रिता इत्येकयोगोपात्तपतितमात्रोपलक्षणार्थं तत्संबंधिनांचान्वक्षमनुगतमक्षमन्वक्षंसद्यःशौचमित्यर्थः नपुनर्दशाहादिकम्
तथाचगौतमः गोब्राह्मणहतानामन्वक्षंराजक्रोधाच्चायुद्धेप्रायोनाशकशस्त्राग्निविषोदकोद्बंधनप्रपतनैश्चेच्छतामिति क्रोधग्रहणंप्रमादव्या
पादितनिरासार्थं अयुद्धग्रहणंयुद्धहतस्यैकाहमाशौचमस्तीतिज्ञापनार्थं ब्राह्मणार्थेविपन्नानांयोषितांगोग्रहेपिच आहवेपिहतानांचएक

रात्रमशौचकमितिस्मरणात् एतच्च युद्धकालक्षतेनैव कालांतरविपन्नस्य समरमूर्धनि हतस्य पुनः सद्यःशौचं यथाह मनुः उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य च सद्यः संतिष्ठते यज्ञस्तथाशौचमितीति स्थितिरिति ज्ञातस्यैव जननादेरशौचनिमित्तत्वाज्जन्मादिदिनादुत्तरकालेपि ज्ञाते दशाहादिप्राप्तावपवादमाह प्रोषिते देशांतरस्थे यत्र स्थेन प्रथमदिवस एव सपिंडजननादिकं न ज्ञायते तस्मिन् सपिंडे कालस्य दशाहाद्यवच्छिन्नस्य यः शेषोवशिष्टकालः स एव शुद्धिहेतुर्भवति पूर्णे पुनराशौचकाले दशाहादिके प्रेतायोदकं दत्वा शुचिर्भवति उदकदानस्य स्नानपूर्वकत्वात् स्नात्वोदकं दत्वा शुचिर्भवति तदुक्तं मनुना निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च सवासा जलमाप्लुत्य शुद्धो भवति मानव इति पूर्णे दत्वोदकं शुचिरिति प्रे-

प्रोषिते कालशेषः स्यात्पूर्णे दत्वोदकं शुचिः २१

तोदकदानसहचरितस्याशौचकालस्य शुद्धिहेतुत्व विधानात् जन्मन्यतिक्रांताशौचं सपिंडानां नास्तीति गम्यते पितुस्तु निर्दशेपि जनने स्नानमस्त्येव श्रुत्वा पुत्रस्य जन्म चेति वचनात् एतच्च पुत्रग्रहणं जन्मनि सपिंडानामतिक्रांताशौचं नास्तीत्यत्र ज्ञापकम् अन्यथा निर्दशं ज्ञातिमरणं श्रुत्वा जन्म च निर्दशमित्येवावक्ष्यत् तथा च देवलः नाशुद्धिः प्रसवाशौचे व्यतीतेषु दिनेष्वपीति तस्मादुत्पत्तावेवातिक्रांताशौचमिति स्थितिः केचिदन्यथेमं श्लोकं पठंति प्रोषिते कालशेषः स्यादशेषे त्र्यहमेव तु सर्वेषां वत्सरे पूर्णे प्रेते दत्वोदकं शुचिरिति प्रोषिते प्रेते सर्वेषां ब्राह्मणक्षत्रियादीनामवि-

शेषेणकालशेषःशुद्धिहेतुः अशेषेपुनरतिक्रांतेदशाहादौसर्वेषांत्र्यहमेवाशौचंसंवत्सरेपूर्णेयदिप्रोषितप्रयाणमवगतंस्यात्तदासर्वेब्राह्मणादिः
स्नात्वोदकंदत्वाशुचिःस्यात् तथाचमनुः संवत्सरेव्यतीतेतुस्पृष्ट्वैवापोविशुध्यतीति अयंचत्र्यहोदशाहादूर्ध्वमासत्रयादर्वाग्द्रष्टव्यः पूर्वोक्तंस
द्यःशौचंतुनवममासादूर्ध्वमर्वाक्संवत्सरात्द्रष्टव्यम् यत्पुनर्वासिष्ठवचनं ऊर्ध्वंदशाहाच्छ्रुत्वैकरात्रमिति तदूर्ध्वंषण्मासेभ्योयावन्नवमं यद-
पिगौतमवचनं श्रुत्वाचोर्ध्वंदशम्याःपक्षिणीतितन्मासत्रयादूर्ध्वमर्वाक्षण्मासात् तथाचवृद्धवसिष्ठः मासत्रयेत्रिरात्रंस्यात्षण्मासेपक्षिणीतथा
अहस्तुनवमादर्वागूर्ध्वंस्नानेनशुध्यतीति एतच्चमातापितृव्यतिरिक्तविषयम् पितरौचेन्मृतौस्यातांदूरस्थोपिहिपुत्रकः श्रुत्वातद्दिनमारभ्यदशा
हंसूतकीभवेदितिपैठीनसिस्मरणात् तथाचस्मृत्यंतरेपि महागुरुनिपातेतुआर्द्रवस्त्रोपवासिना अतीतेब्देपिकर्तव्यं प्रेतकार्यंयथाविधीति सं
वत्सरादूर्ध्वमपिप्रेतकार्यमाशौचोदकदानादिककार्यं नपुनःस्नानमात्राच्छुद्धिरित्यर्थः पितृपत्न्यामपिमातृव्यतिरिक्तायांस्मृत्यंतरेविशेषोदर्शितः
पितृपत्न्यामपेतायांमातृवर्ज्यंद्विजोत्तमः संवत्सरेव्यतीतेपित्रिरात्रमशुचिर्भवेदिति यस्तुनद्यादिव्यवहितेदेशांतरेमृतस्तत्सपिंडानांदशा
हादूर्ध्वंमासत्रयादर्वागपिसद्यःशौचं देशांतरमृतंश्रुत्वाक्लीबेवैखानसेयतौ मृतेस्नानेनशुध्यंतिगर्भस्रावेचगोत्रिणइति देशांत
रलक्षणंचबृहस्पतिनोक्तं महानद्यंतरंयत्रगिरिर्वाव्यवधायकः वाचोयत्रविभिद्यंतेतद्देशांतरमुच्यते देशांतरंवदंत्येके षष्टियोजन
मायनम् चत्वारिंशद्वदंत्यन्येत्रिंशदन्येतथैवचेति इदंचातिक्रांताशौचमुपनीतोपरमविषयम् नपुनर्वयोवस्थाविशेषाशौचविषयम
पि तथाचोक्तंव्याघ्रपादेन तुल्यंवयसिसर्वेषामतिक्रांतेतथैवच उपनीतेतुविषमंतस्मिन्नेवातिकालजमिति अयमर्थः वयसित्रिवर्षा

दिरूपेयदाशौचमादंतजन्मनः सद्यइत्यादिवाक्यविहितंतत्सर्वेषांब्राह्मणादिवर्णानांतुल्यमविशिष्टं अतिक्रांतेदशाहादिकेत्र्यहादिय
दाशौचंतदपिसर्वेषामविशिष्टं उपनीतेपुनरुपरतेदशद्वादशपंचदशत्रिंशद्दिनानीत्येवंविषमाशौचंब्राह्मणादीनां तस्मिन्नेवोपनीतो
परमएवअतिकालजमतिक्रांताशौचंभवति नवयोवस्थाशौचातिक्रमइति २१ क्षत्रियादिषुदशरात्रस्यसपिंडाशौचस्यापवादमा
ह क्षत्रियवैश्यशूद्राणांसपिंडजननेतदुपरमेचयथाक्रमेणद्वादशपंचदशत्रिंशद्दिनान्याशौचंभवति न्यायवर्त्तिनःपुनःशूद्रस्यपाक
यज्ञद्विजशुश्रूषादिरतस्यतदर्धंतस्यमासस्यार्धंपंचदशरात्रमाशौचं एवंचत्रिरात्रंदशरात्रंवेत्येतद्दशरात्रमाशौचंपारिशेष्यात् ब्रा

क्षत्रस्यद्वादशाहानिविशःपंचदशैवतु त्रिंशद्दिनानिशूद्रस्यतदर्धंन्यायवर्त्तिनः २२

ह्मणविषयेव्यवतिष्ठते स्मृत्यंतरेषुतुक्षत्रियादीनांदशाहादयोप्याशौचकल्पादर्शिताः यथाहपराशरः क्षत्रियस्तुदशाहेनस्वकर्मनि
रतःशुचिः तथैवद्वादशाहेनवैश्यःशुद्धिमवाप्नुयात् तथाचशातातपः एकादशाहाद्राजन्योवैश्योद्वादशभिस्तथा शूद्रोविंशतिरात्रे
णशुध्येतमृतसूतके वसिष्ठस्तु पंचदशरात्रेणराजन्योविंशतिरात्रेणवैश्यइति अंगिरास्त्वाह सर्वेषामेववर्णानांसूतकेमृतकेतथा दशाहाच्छुद्धि
रेतेषामितिशातातपोब्रवीत् इत्येवमनेकोच्चावचाशौचकल्पादर्शिताः तेषांलोकेसमाचाराभावान्नातीवव्यवस्थाप्रदर्शनमुपयोगीतिनात्रव्यव-

स्याप्रदर्श्यते यदापुनर्ब्राह्मणादीनांक्षत्रियादयःसपिंडाभवंतितदाहारीताद्युक्ताशौचकल्पोनुसरणीयः दशाहाच्छुध्यतेविप्रोजन्महानौस्वयोनि
षु षड्भिस्त्रिभिरथैकेनक्षत्रविट्शूद्रयोनिष्विति विष्णुरप्याह क्षत्रियस्यविट्शूद्रेषुसपिंडेषुषड्रात्रत्रिरात्राभ्यां वैश्यस्यशूद्रेसपिंडेषड्रात्रेणशु-
द्धिः हीनवर्णानांतूत्कृष्टेषुसपिंडेषुजातेषुमृतेषुवातदाशौचव्यपगमेशुद्धिरिति बौधायनेनत्वविशेषेणदशाहइत्युक्तं क्षत्रविट्शूद्रजातीया
येस्युर्विप्रस्यबांधवाः तेषामाशौचेविप्रस्यदशाहाच्छुद्धिरिष्यतेइति अनयोश्चपक्षयोरापदनापद्विषयत्वेनव्यवस्था दास्यादीनांतुस्वाम्याशौ
चेनस्पृश्यत्वंकर्मानधिकारस्तुमासावधिरेव तदाहांगिराः दासीदासश्चसर्वोवैयस्यवर्णस्ययोभवेत् तद्वर्णस्यभवेच्छौचंदास्यांमासस्तुसूत

## आदंतजन्मनःसद्यआचूडान्नैशिकीस्मृता त्रिरात्रमाव्रतादेशाद्दशरात्रमतःपरम् २३

कमिति प्रतिलोमानांत्वाशौचाभावएव प्रतिलोमाधर्महीनाइतिस्मरणात् केवलंमृतेप्रसवेचमलापकर्षणार्थंमूत्रपुरीषोत्सर्गवत्शौचंभवत्येव
२२ वयोवस्थाविशेषादपिदशाहाद्याशौचस्यापवादमाह यावताकालेनदंतानामुत्पत्तिस्तस्मिन्काले अतीतस्यबालस्यतत्संबंधिनांसद्यः
शौचं चूडाकरणादर्वाङ्मृतस्यसंबंधिनांनैशिकीनिशायांभवाअहोरात्रव्यापिन्यशुद्धिः व्रतादेशउपनयनंततोर्वाक्चूडायाश्चोर्ध्वमतीतस्यत्र्य
हमशुद्धिः अत्रचादंतजन्मनःसद्यइतियद्यप्यविशेषेणाभिधानंतथाप्यग्निसंस्काराभावेद्रष्टव्यम् अदंतजातेबालेप्रेतेसद्यएवनास्याग्निसंस्का-

शेनोदकक्रियेनिर्वेष्णवेअग्निसंस्काररहितस्यसद्यःशौचविधानात् सतित्वग्निसंस्कारेअहस्त्वदत्तकन्यासुबालेषुचेतिवक्ष्यमाणएकाहः तथाच
यमः अदंतजातेतनयेशिशौगर्भच्युतेतथा सपिंडानांतुसर्वेषामहोरात्रमशौचकमिति नामकरणात्प्राक्सद्यःशौचमेवनियतं प्राङ्नामकरणा
त्सद्यःशौचमितिशंखस्मरणात् चूडाकर्मप्रथमेतृतीयेवावर्षेस्मर्यते चूडाकर्मद्विजातीनांसर्वेषामेवधर्मतः प्रथमेब्देतृतीयेवाकर्त्तव्यंश्रुतिचोद
नादितिस्मरणात् ततश्चदंतजननादूर्ध्वंप्रथमवार्षिकचूडापर्यंतमेकाहः तत्रत्वकृतचूडस्यदंतजननेसत्यपित्रिवर्षंयावदेकाहएव तथाचविष्णुः
दंतजातेप्यकृतचूडेहोरात्रेणशुद्धिरिति ततऊर्ध्वंप्रागुपनयनात्त्र्यहः यत्तुमनुवचनं नृणामकृतचूडानामशुद्धिर्नैशिकीस्मृता निर्वृत्तचूडका
नांतुत्रिरात्राच्छुद्धिरिष्यतइति तस्याप्ययमेवविषयः यत्तूनद्विवर्षमधिकृत्यतेनैवोक्तं अरण्येकाष्ठवत्त्यक्त्वाक्षिपेयुस्त्र्यहमेवलिति यच्चवसि-
ष्ठवचनं ऊनद्विवर्षेप्रेतेगर्भपतनेवासपिंडानांत्रिरात्रमितितत्संवत्सरचूडाभिप्रायेण यत्तुअंगिरोवचनं यद्यप्यकृतचूडोवैजातदंतश्चसंस्थितः
तथापिदाहयित्वैनमाशौचंत्र्यहमाचरेदिति तदूर्ध्वत्रयादूर्ध्वंकुलधर्मापेक्षयाचौलोत्कर्षेवेदितव्यं विप्रेन्यूनत्रिवर्षेतुमृतेशुद्धिस्तुनैशिकीतितेनै
नैवाभिहितत्वात् नचायमेकाहोदंतजननाभावइतिशंकनीयं नहिन्यूनत्रिवर्षस्यदंतानुत्पत्तिःसंभवति तथासत्यपिदंतजननेअकृतचूडस्यै
काहत्वदताविष्णुवचनेनविरोधश्चदुःपरिहरःस्यात् तस्मात्प्राच्यैवव्याख्याज्यायसी यत्तुकश्यपवचनं बालानामदंतजातानांत्रिरात्रेणशु
द्धिरिति तन्मातापितृविषयं निरस्यतुपुमान्शुक्रमुपस्पर्शाद्विशुध्यति बैजिकादभिसंबंधादनुरुंध्यादघंत्र्यहमिति जन्यजनकसंबंधो
पाधिकतयात्रिरात्रस्मरणात् ततश्चायमर्थः प्राङ्नामकरणात्सद्यःशौचंतदूर्ध्वंदंतजननादर्वागग्निसंस्कारक्रियायांएकाहइतरथासद्यःशौ

चं जातदंतस्यच प्रथमवार्षिकाचौलादर्वागेकाहः प्रथमवर्षादूर्ध्वंत्रिवर्षपर्यंतंकृतचूडस्यत्र्यहः इतरस्यत्वेकाहः वर्षत्रयादूर्ध्वमकृतचूडस्या
पित्र्यहं उपनयनादूर्ध्वंसर्वेषांब्राह्मणादीनांदशरात्रादिकमिति २३ इदानींस्त्रीषुचवयोवस्थाविशेषेणापवादमाह अदत्ताअपरिणी
तायाः कन्यास्तासुकृतचूडासुवाग्दानात्प्रागहोरात्रंविशेषेणशुद्धिकारणंसपिंडानां सापिंड्यंचकन्यानांत्रिपुरुषपर्यंतमेव अप्रत्तानांतुस्त्री
णांत्रिपुरुषीविज्ञायतेइतिवसिष्ठस्मरणात् बालेषुचानुत्पन्नदंतेषुअग्निसंस्कारेसत्येकाहोविशोधनं अकृतचूडायांतुकन्यायांसद्यःशौचं
अकृतचूडायांतुकन्यायांसद्यःशौचंविधीयतइतिआपस्तंबस्मरणात् वाग्दानादूर्ध्वंतुसंस्कारात्प्राक्पतिपक्षेपितृपक्षेचत्रिरात्रमेव यथाह-

## अहस्त्वदत्तकन्यासु बालेषुचविशोधनम्

मनुः स्त्रीणामसंस्कृतानांतुत्र्यहाच्छुध्यंतिबांधवाः यथोक्तेनैवकल्पेनशुध्यंतितुसनाभयइति बांधवाःपतिपक्षास्त्रिरात्रेणशुध्यंति सना-
भयस्तुपितृपक्षाःसपिंडाययोक्तेनैवकल्पेननिवृत्तचूडकानामित्यादिनोक्तेनत्रिरात्ररूपेण नपुनर्दशरात्ररूपेण विवाहात्प्राक्तस्यायुक्तत्वात्
अतएवमरीचिः वारिपूर्वंप्रदत्तातुयानैवप्रतिपादिता असंस्कृतातुसाज्ञेयात्रिरात्रमुभयोःस्मृतमिति उभयोःपतिपितृपक्षयोः विवाहादूर्ध्वंतुविष्णु
नाविशेषोदर्शितः संस्कृतासुस्त्रीषुनाशौचंपितृपक्षे तत्प्रसवमरणेचेत्पितृगृहेस्यातांतदैकरात्रंत्रिरात्रंवेति तत्रप्रसवेएकाहः प्रायणेत्रिरात्रमितिव्य

वस्था इदंतुवयोवस्थाशौचंसर्ववर्णसाधारणं क्षत्रस्यद्वादशाहानीतिवद्वर्णविशेषोपादानेनाभिधानात् अतएवमनुना अनुपात्तवर्णविशेषाशौ
चविधेःसाधारण्यप्रतिपादनार्थंचातुर्वर्ण्याधिकारेसत्यपिपुनश्चतुर्णामपिवर्णानांयथावदनुपूर्वशइत्युक्तं तथांगिरसाप्युक्तं अविशेषेणवर्णानाम-
र्वाक्संस्कारकर्मणः त्रिरात्रात्तुभवेच्छुद्धिःकन्यास्वन्हाविधीयतइति व्याघ्रपादवचनं तुल्यंवयसिसर्वेषामितिप्राक्प्रदर्शितम् अतोयथापिंडय
ज्ञावृतादेयमित्यादिपिंडोदकदानविधिःसर्ववर्णसाधारणः यथावासमानोदकाशौचविधिःअंतराजन्ममरणेइतिसंनिपाताशौचविधिश्च यद्वन्नग
र्भस्रावेमासतुल्यानिशाइतिस्रावाशौचविधिःप्रोषितेकालशेषःस्यादशेषेत्र्यहमेवहीतिविदेशस्थाशौचविधिश्च यथावागुर्वाद्याशौचविधिःसर्व

## गुर्वंतेवास्यनूचानमातुलश्रोत्रियेषुच २४

वर्णसाधारणः तथावयोवस्थानिमित्तमप्याशौचंसर्ववर्णसाधारणमेवभवितुमर्हति अतएव क्षत्रेषड्भिःकृतेचौलेवैश्येनवभिरुच्यते ऊर्ध्वंत्रिवर्षा
च्छूद्रेतु द्वादशाहोविधीयते तथा यत्रत्रिरात्रंविप्राणामाशौचंसंप्रदृश्यते तत्रशूद्रे द्वादशाहःषण्णवक्षत्रवैश्ययोरित्यादीनिकृष्यशृंगादिवचनानि
विगीतत्वबुद्ध्यानाद्रियमाणेर्धारेश्वरविश्वरूपमेधातिथिप्रभृतिभिराचार्यैरयमेवसाधारणःपक्षोंगीकृतः अविगीतानिचार्त्तानार्त्तक्षत्रियादिविषय
तयाव्याख्येयानि गुर्वादिष्वतिदेशमाह गुरुरुपाध्यायः अंतेवासीशिष्यः अनूचानोंगानांप्रवक्ता मातुलग्रहणेनात्मबंधवोमातृबंधवःपितृबं

धवश्चयोनिसंबंधाउपलक्ष्यंते तेचपत्नीदुहितरइत्यत्रदर्शिताः श्रोत्रियएकशाखाध्यायी एकांशाखामधीतेश्रोत्रियइतिबौधायनस्मरणात् एषूप
रतेष्वहोरात्रमाशौचं यस्तुमुख्योगुरुःपितातदुपरमेसपिंडत्वाद्दशाहएव यस्तुपितापुत्रानुत्पाद्यसंस्कृत्यवेदानध्याप्यवेदार्थग्राहयित्वावृत्तिंचविदधा
तितस्यमहागुरुत्वात्तदुपरमेद्वादशरात्रंवामहागुरुषुदानाध्ययनेवर्जयेरन् इत्याश्वलायनेनोक्तंद्रष्टव्यं आचार्योपरमेतुत्रिरात्रमेव यथाहमनुः त्रि-
रात्रमाहुराशौचमाचार्येसंस्थितेसति तस्यपुत्रेचपत्न्यांचदिवारात्रमितिस्थितिरिति यदात्वाचार्यादेरंत्येष्टिंकरोतितदादशरात्रमाशौचं गुरोःप्रेतस्य
शिष्यस्तुपितृमेधंसमारभेत् प्रेताहारैःसमंतत्रदशाहेनविशुध्यतीति तेनैवोक्तत्वात् श्रोत्रियस्यतुसमानग्रामीणस्यएतदाशौचं एकाहसब्रह्मचा
रिणिसमानग्रामीणेचश्रोत्रियइत्याश्वलायनस्मरणात् एकाचार्योपनीतःसब्रह्मचारीएतच्चासंनिधानेद्रष्टव्यं संनिहितेतुशिष्यादौत्रिरात्रादि यथा
हमनुः श्रोत्रियेतूपसंपन्नेत्रिरात्रमशुचिर्भवेत् मातुलेपक्षिणींरात्रिंशिष्यर्त्विग्बांधवेषुचेति उपसंपन्नेमैत्रीप्रातिवेश्यत्वादिनासंबधेशीलयुक्ते
वा मातुलग्रहणंमातृष्वस्रादेरुपलक्षणार्थं बांधवाइत्यात्मबंधवोमातृबंधवःपितृबंधवश्चोच्यंते तथाचबृहस्पतिः त्र्यहंमातामहाचार्यश्रोत्रियेष
शुचिर्भवेदिति तथाप्रचेताः मृतेत्वर्त्विजियाज्येचत्रिरात्रेणविशुध्यतीति तथाचवृद्धबृहस्पतिः संस्थितेपक्षिणींरात्रिंदौहित्रेभगिनीसुते सं
स्कृतेतुत्रिरात्रंस्यादितिधर्मोव्यवस्थितः पित्रोरुपरमेस्त्रीणामूढानांतुकथंभवेत् त्रिरात्रेणैवशुद्धिःस्यादित्याहभगवान्यमः श्वशुरयोर्भगि-
न्यांचमातुलान्यांचमातुले पित्रोःस्वसरितद्वच्चपक्षिणींक्षपयेन्निशां तथा मातुलेश्वशुरेमित्रेगुरौगुर्वंगनासुच आशौचंपक्षिणींरात्रिंमृता
मातामहीयदि तथाचगौतमः पक्षिणीमसपिंडेयोनिसंबंधेसहाध्यायिनिचेति योनिसंबंधामातुलमातृष्वस्रीयपितृष्वस्रीयादयः तथाजा-

बालिः एकोदकानांतुत्र्यहोगोत्रजानामहः स्मृतम् मातृबंधौगुरौमित्रेमंडलाधिपतौतथेति विष्णुः असपिंडेस्ववेश्मनिमृतएकरात्रमिति त-
थाद्वंद्वः भगिन्यांसंस्कृतायांतुभ्रातर्यपिचसंस्कृते मित्रेजामातरिप्रेतेदौहित्रेभगिनीसुते शालकेतत्सुतेचैवसद्यःस्नानेनशुध्यति ग्रामेश्वरे
कुलपतौश्रोत्रियेचतपस्विनि शिष्येपंचत्वमापन्नेशुचिर्नक्षत्रदर्शनात् ग्राममध्यगतोयावच्छवस्तिष्ठतिकस्यचित् ग्रामस्यतावदाशौचंनि
र्गतेशुचितामियादित्यादीन्याशौचविशेषप्रतिपादकानिस्मृतिवचनान्यन्वेषणीयानि ग्रंथगौरवभयादत्रनलिख्यंते एषुचैकविषयगुरुल-
घ्वाशौचप्रतिपादकतयापरस्परविरुद्धेषुसंनिधिविदेशस्थापेक्षयाव्यवस्थानुसंधातव्या २४ किंच अहरित्यनुवर्त्तते अनौरसाःक्षेत्रज

## अनौरसेषुपुत्रेषुभार्यास्वन्यगतासुच

दत्तकादयः तेषुजातेषूपरतेषुवाहोरात्रमाशौचं तथास्वभार्यास्वन्यगतास्वन्यंप्रतिलोमव्यतिरिक्तंआश्रितासुअतीतासु अत्राहोरात्रमेव नपु
नःसत्यपिसापिंड्येदशरात्रं प्रतिलोमाश्रितासुचाशौचाभावएव पाखंड्यनाश्रिताइत्यनेनप्रतिषेधात् एतच्चभार्यापुत्रशब्दयोःसंबंधिशब्दत्वा-
त्प्रत्यप्रतियोगिकंभार्यात्वंपुत्रत्वंचतस्यैवेदमाशौचं सपिंडानांत्वाशौचाभावः अतएवप्रजापतिः अन्याश्रितेषुदारेषुपरपत्नीसुतेषुच गोत्रि-
णःस्नानशुद्धाःस्युस्त्रिरात्रेणैवतत्पितेति स्वैरिण्याद्यास्तुयमाश्रितास्तस्यतुत्रिरात्रमेव यथाहविष्णुः अनौरसेषुपुत्रेषुजातेषुचमृतेषुच प

रपूर्वासुभार्यासु प्रसूतासु मृतासु चेति त्रिरात्रमत्र प्रकृतं अनयोश्च त्रिरात्रैकरात्रयोः संनिधिविदेशस्थापेक्षयाव्यवस्था यदातु पितुस्त्रिरात्रं त-
दासपिंडानामेकरात्रं यथाह मरीचिः सूतके मृतकेचैव त्रिरात्रं परपूर्वयोः एकाहस्तु सपिंडानां त्रिरात्रं यत्र वै पितुरिति किंच निवसत्यस्मि
न्निति निवासः स्वदेश उच्यते तस्य योराजा स्वामी विषयाधिपतिः सयस्मिन्नहनि अतीतस्तदहर्मात्रं शुद्धिकारणं रात्रौ चेदतीतस्तदा रात्रिमात्रं
अतएव मनुः प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थित इति ज्योतिषा सहवर्त्तत इति सज्योतिराशौचं अह्नि चेद्यावत्सूर्यदर्शनं रात्रौ चेद्या
वन्नक्षत्रदर्शनमित्यर्थः २५ अनुगमनाशौचमाह ब्राह्मणेन असपिंडेन द्विजो विप्रादिः शूद्रोवा प्रेतो नानुगंतव्यः यदि स्नेहादिनानुग

निवासराजनि प्रेते तदहः शुद्धिकारणम् २५ ब्राह्मणेनानुगंतव्यो न शूद्रो न द्विजः क्वचित् अनुग
म्यांभसि स्नात्वा स्पृष्ट्वाग्निं घृतभुक् शुचिः २६

च्छति तदांभसि तडागादिस्थे स्नात्वाग्निं स्पृष्ट्वा घृतं प्राश्य शुचिर्भवे
त् अस्य च घृतप्राशनस्य भोजनकार्यविधाने प्रमाणाभावान्न भोजनप्रतिषेधः इदं च समानोत्कृष्टजातिविषयम् यथाह मनुः अनुगम्येच्छ
या प्रेतं ज्ञातिमज्ञातिमेव च स्नात्वा सचैलः स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यतीति ज्ञातयो मातृसपिंडाः इतरेषां तु विहितत्वान्न दोषः निकृष्टजा
त्यनुगमने तु स्मृत्यंतरोक्तं द्रष्टव्यं तत्र शूद्रानुगमने प्रेतीभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः अनुगच्छेन्नीयमानं स त्रिरात्रेण शुध्यति त्रि

रात्रेतुतत्तश्चीर्णेनदींगत्वासमुद्रगाम् प्राणायामशतंकृत्वा घृतंप्राश्यविशुध्यतीतिपराशरोक्तं क्षत्रियानुगमनेत्वहोरात्रं मानुषास्थिस्नि
ग्धंस्पृष्ट्वात्रिरात्रमाशौचं अस्निग्धे त्वहोरात्रं शवानुगमनेचैवमितिवसिष्ठोक्तं वैश्यानुगमनेपुनःपक्षिणी तथाक्षत्रियस्यानंतरंवैश्यानुगम-
नेअहोरात्रमेकांतरशूद्रानुगमनंपक्षिणी वैश्यस्यशूद्रानुगमनेएकाहइत्यूहनीयं तथारोदनेपिपारस्करेणोक्तं मृतस्यबांधवैःसार्धंकृत्वातुपरि
देवनं वर्जयेत्तदहोरात्रंदानंश्राद्धादिकर्मचेति तथालंकरणमपिनकार्यम् कृच्छ्रपादोसपिंडस्यप्रेतालंकरणेकृते अज्ञानादुपवासःस्यादशक्तौ
स्नानमिष्यतेइतिशंखेनप्रायश्चित्तस्याम्नातत्वात् २६ सपिंडाशौचेक्वचिदपवादमाह यद्यपिमहीशब्देनकृत्स्नंभूगोलकमभिधीयते न-

महीपतीनांनाशौचंहतानांविद्युतातथा गोब्राह्मणार्थेसंग्रामेयस्यचेच्छतिभूमिपः २७

त्वत्रसकलायाःक्षितेरेकभर्तृकत्वानुपपत्तेःमहीपतीनामितिबहुवचनानुरोधाच्चतदेकदेशभूतानिमंडलानिलक्ष्यंते तत्पालनाधिकृतानांक्षत्रि
यादीनामभिषिक्तानांनाशौचंतैराशौचंनकार्यमित्यर्थः तथाविद्युद्धतानांगोब्राह्मणरक्षणार्थंविपन्नानांचसंबंधिनोयेसपिंडास्तैरप्याशौचंन-
कार्यं यस्यचमंत्रिपुरोहितादेर्भूमिपतयोनन्यसाध्यमंत्राभिचारादिकर्मसिध्यर्थमाशौचाभावमिच्छंतितैरपिनकार्यं अत्रचमहीपतीनांयदसा
धारणत्वेनविहितंप्रजापरिरक्षणं तद्येनदानमानसत्कारव्यवहारदर्शनादिनाविनानसंभवतितत्रैवाशौचाभावोनपुनःपंचमहायज्ञादिष्वपि

तथाचमनुः राज्ञोमहात्मिकेस्थानेसद्यःशौचंविधीयते प्रजानांपरिरक्षार्थमासनंचात्रकारणमिति गौतमेनाप्युक्तं राज्ञांचकार्यविघातार्थमि-
तिराजभृत्यादेरप्याशौचंनभवति तथाहप्रचेताः कारवःशिल्पिनोवैद्यादासीदासास्तथैवच राजानोराजभृत्याश्चसद्यःशौचाःप्रकीर्त्तिताइति
कारवःसूपकारादयः शिल्पिनश्चित्रकारचैलनिर्णेजकादयः अयंचाशौचाभावःकिंविषयइत्यपेक्षायांकर्मनिमित्तैःशब्दैस्तत्तदसाधारणस्यकर्मणोबुद्धि
स्थत्वात्तत्रैवद्रष्टव्यः अतएवविष्णुः नराज्ञांराजकर्मणिनव्रतिनांव्रतेनसत्रिणांसत्रेनकारूणांकारुकर्मणीतिप्रतिनियतविषयमेवाशौचाभावंदर्शय

ऋत्विजांदीक्षितानांचयाज्ञियंकर्मकुर्वताम् सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदांतथा २८
दानेविवाहेयज्ञेचसंग्रामेदेशविप्लवे आपद्यपिहिकष्टायांसद्यःशौचंविधीयते २९

ति शातातपीयेप्युक्तं मूल्यकर्मकराःशूद्रादासीदासस्तथैवच स्नानेशरीरसंस्कारेगृहकर्मण्यदूषिताइति इयंचदासादिशुद्धिरपरिहरणीयतया
प्राप्तस्पर्शविषयेइत्यनुसंधेयम् अतएवस्मृत्यंतरं सद्यःस्पृश्योगर्भदासोभक्तदासस्त्र्यहाच्छुचिः तथा चिकित्सकोयत्कुरुतेतदन्येननशक्यते
तस्माच्चिकित्सकःस्पर्शेशुद्धोभवतिनित्यशइति २७ किंच ऋत्विजोवरणसंभृताःकर्त्तृविशेषाः दीक्षयासंस्कृतादीक्षितास्तेषांयाज्ञियंयज्ञेभवंक-
र्मकुर्वतांसद्यःशौचंविधीयतइतिसर्वत्रानुषंगः दीक्षितस्यवैतानोपासनाःकार्याइत्यनेनसिद्धेप्यधिकारेपुनर्वचनंयाजमानेष्वस्वयंकर्त्तृत्वविधानार्थं
ओ·३ भक्तेनअन्नेनदासः

सद्यःस्नानविध्यर्थंच सत्रिग्रहणेनसंततानुष्ठानतुल्यतयान्नसत्रप्रवृत्तालक्ष्यंते मुख्यानांतुसत्रिणांदीक्षितग्रहणेनैवसिद्धेः व्रतिशब्देनकृच्छ्रचां-
द्रायणादिप्रवृत्ताःस्नातकव्रतप्रायश्चित्तप्रवृत्ताश्चोच्यंते तथाब्रह्मचर्यादिव्रतयोगिनःश्राद्धकर्त्तुर्भोक्तुश्चग्रहणम् तथास्मृत्यंतरे नित्यमन्नप्रद-
स्यापिकृच्छ्रचांद्रायणादिषु निर्वृत्तेकृच्छ्रहोमादौब्राह्मणादिषुभोजने गृहीतनियमस्यापितस्मादन्यस्यकस्यचित् निमंत्रितेषुविप्रेषुप्रारब्धेश्रा-
द्धकर्मणि निमंत्रितस्यविप्रस्यस्वाध्यायाद्विरतस्यच देहेपितृषुतिष्ठत्सुनाशौचंविद्यतेक्वचित् प्रायश्चित्तप्रवृत्तानांदातृब्रह्मविदांतथेति सत्रिणांव्र-
तिनांसत्रेचशुद्धिर्नकर्ममात्रेसंव्यवहारेवा तथाचविष्णुः नव्रतिनांव्रतेनसत्रिणांसत्रेइति ब्रह्मचार्युपकुर्वाणकोनैष्ठिकश्च यस्तुनित्यंदातैवनप्रति-
ग्रहीतासवैखानसोदातृशब्देनोच्यते ब्रह्मविद्यतिः एतेषांचत्रयाणांसर्वत्रशुद्धिःविशेषेप्रमाणाभावात् दानेचपूर्वसंकल्पितद्रव्यस्यनाशौचं पूर्व-
संकल्पितंद्रव्यंदीयमानंनदुष्यतीतिक्रतुस्मरणात् स्मृत्यंतरेचात्रविशेषउक्तः विवाहोत्सवयज्ञादिष्वंतरामृतसूतके शेषमन्नंपरैर्देयंदातॄन्भो-
क्तॄंश्चनस्पृशेदिति यज्ञेवृषोत्सर्गादौ विवाहेचपूर्वसंभृतसंभारे तथाचस्मृत्यंतरं यज्ञेसंभृतसंभारेविवाहेश्राद्धकर्मणीतिसद्यःशौचमत्रप्रकृतम्
विवाहग्रहणपूर्वप्रवृत्तचौलोपनयनादिसंस्कारकर्मोपलक्षणम् यज्ञग्रहणंचपूर्वप्रवृत्तदेवप्रतिष्ठारामाद्युत्सवमात्रोपलक्षण तदेवप्रतिष्ठोत्सर्गवि-
वाहेषुनदेशविभ्रमेनापद्यपिचकष्टायामाशौचमितिविष्णुस्मरणात् संग्रामेयुद्धे संग्रामेसमुपोढेराजानंसंनाहयेदित्याश्वलायनाद्युक्तसंनहन-
विधौप्रास्थानिकशांतिहोमादौचसद्यःशुद्धिः देशस्यविस्फोटादिभिरुपसर्गैराजभयाद्वाविप्लवेतदुपशमनार्थेशांतिकर्मणिसद्यःशौचं विप्लवाभावेपि
क्वचिद्देशविशेषेणपैठीनसिनाशुद्धिरुक्ता विवाहदुर्गयज्ञेषुयात्रायांतीर्थकर्मणि नतत्रसूतकंतद्वत्कर्मयज्ञादिकारयेदिति तथाकष्टायामप्यापदिव्या

ध्यायाभिभवेन मुमूर्षावस्थायां दुरितशमनार्थे दाने तथा संकुचितवृत्तेश्च त्यक्तपरिश्रांतमातापित्रादिबहुकुटुंबस्य तदुद्धरणोपयोगिनि प्रतिग्रहे सद्यःशु-
द्धिः इयं च शुद्धिर्यस्य सद्यःशौचं विना दुःखोपशमो न भवति अश्वस्तनिकस्य तद्विषया यस्त्वेकाहपर्याप्तसंचितधनस्तस्यैकाहः यस्त्र्यहोपयोगिसंच-
यी तस्य त्र्यहः यस्तु चतुरहार्थमापादितद्रव्यः कुंभीधान्यस्तस्य चतुरहः कुसूलधान्यकस्य दशाह इत्येवं यस्य यावत्कालमार्त्यभावस्तस्य तावत्कालमा-
शौचं आपदुपाधिकत्वात् आशौचसंकोचस्य अत एव मनुना कुसूलधान्यको वा स्यात्कुंभीधान्यक एव वा त्र्यहैहिको वापि भवेदश्वस्तनिक एव वेत्यत्र
प्रतिपादितचतुर्विधगृहस्थाभिप्रायेण दशाहं शावमाशौचं सपिंडेषु विधीयते अर्वाक्संचयनादस्थ्नां त्र्यहमेकाहमेव वेति कल्पचतुष्टयं प्रतिपादितं
समानोदकविषयाश्च संकुचिताशौचकल्पाः पक्षिण्येकाहः सद्यःशौचरूपाः स्मृत्यंतरे दृष्टाः वृत्तिसंकोचोपाधितयैर योज्याः अयं चाशौचसंकोचो येनै-
व प्रतिग्रहादिना विनार्तिस्तद्विषयो न सर्वत्रेत्यवगंतव्यम् ननु एकाहाद्ब्राह्मणः शुध्येद्योऽग्निवेदसमन्वितः त्र्यहात्केवलवेदस्तु विहीनो दशभिर्दिनैरि-
त्यादिस्मृत्यंतरवचनपर्यालोचनयाध्ययनज्ञानानुष्ठानयोगिनामेकाहादिना शुद्धिरित्येवं कस्मान्नेष्यते उच्यते दशाहं शावमाशौचं सपिंडेषु विधीयते
इति सामान्यप्राप्तदशाहबाधपुरःसरमेकस्यैकाहाद्ब्राह्मणः शुध्येदिति विधायकं भवति बाधकस्य चानुपपत्तिनिबंधनत्वात् यावत्यबाधितेनुपप-
त्तिप्रशमो न भवति तावद्बाधनीयं अतः कियदनेन बाध्यमित्यपेक्षायामपेक्षितविशेषसमर्पणक्षमस्याग्निवेदसमन्वित इति वाक्यशेषस्य दर्शनादग्निवेद-
विषयेऽग्निहोत्रादिकर्मणि स्वाध्याये च व्यवतिष्ठते न पुनर्दानादावपि एवं चाग्निवेदपदयोः कार्यान्वयित्वं भवति इतरथा येनाग्निवेदवेदसाध्यं कर्म कृतं
तस्यैकाहाच्छुद्धिरिति पुरुषविशेषोपलक्षणत्वमेव स्यात् न चैतद्युक्तं एवं च सति प्रत्यूहेन्नाग्निषु क्रियाः वैतानोपासनाः कार्याः क्रियाश्च श्रुतिनोदिताः

तथाब्राह्मणस्यस्वाध्यायादिनिवृत्त्यर्थंसद्यःशौचमित्येवमादिभिर्मन्वादिवचनैरेकवाक्यताभवति ततोभयत्रदशाहानिकुलस्यान्नंनभुज्यतेइतिदशाह पर्यंतंभोजनादिकंप्रतिषेधयद्भिर्यमादिवचनैरविरोधोपिसिद्ध्यति अतःक्वाचित्कमेवेदमाशौचसंकोचविधानं नपुनःसर्वसंव्यवहारादिगोचरमित्य लमतिप्रपंचेन इदंचस्वाध्यायविषयेसद्यःशौचविधानंबहुवेदस्यब्रह्मोज्झनकृतायामार्त्तौद्रष्टव्यम् इतरस्यतुदानंप्रतिग्रहोहोमःस्वाध्यायश्चनि वर्त्ततेइतिप्रतिषेधएव एवंब्राह्मणादिमध्येयस्ययावत्कालमाशौचमुक्तंसतस्यानंतरंस्नात्वाशुद्ध्येत् नतत्कालातिक्रममात्रात् यथाहमनुः वि- प्रःशुद्ध्यत्यपःस्पृष्ट्वाक्षत्रियोवाहनायुधम् वैश्यःप्रतोदरश्मीन्वायष्टिंशूद्रःकृतक्रियइति अयमर्थः कृतक्रियइतिप्रत्येकमभिसंबध्यते विप्रोतु

उदक्याशुचिभिःस्नायात्संस्पृष्टस्तैरुपस्पृशेत् अब्लिंगानिजपेच्चैवगायत्रींमनसासकृत् ३०

भूताशौचकालःकृतक्रियःकृतस्नानोहस्तेनापःस्पृष्ट्वाशुद्ध्यति स्पृष्ट्वेतिस्पर्शनक्रियैवोच्यते नस्नानमाचमनंवा वाहनादिषुतस्यैवानुषंगात् अथवा कृतक्रियोयावदाशौचंकृतोदकादिक्रियः तदनंतरंविप्रादिरुदकादिस्पृष्ट्वाशुद्ध्येदिति इत्याशौचकालानंतरभाविस्नानप्रतिनिधित्वेनोच्यतइति क्षत्रियादिर्वाहनादिकंस्पृष्ट्वाशुद्ध्येदिति २८ २९ कुलव्यापिनींशुद्धिमभिधायेदानींप्रसंगात्प्रतिपुरुषव्यापिनींशुद्धिमाह उदक्यारजस्वला अ शुचयःशवचांडालपतितसूतिकाद्याःशावाशौचिनश्च एतैःसंस्पृष्टःस्नायात् तैःपुनरुदक्याशुचिसंस्पृष्टादिभिःसंस्पृष्टउपस्पृशेत्आचामेत् आ

चम्याल्लिंगानिआपोहिष्ठेत्येवमादीनित्रीणिमंत्रवाक्यानिजपेत् त्रित्वेवबहुवचनस्यचरितार्थत्वात् तथागायत्रींचसकृन्मनसाजपेत् ननुउदक्या
संस्पृष्टःस्नायादित्येकवचनेननिर्दिष्टस्यकथंतैरितिबहुवचनेपरामर्शः सत्यमेवं किंत्वत्रउदक्यादिसंस्पृष्टव्यतिरिक्तस्नानार्हमात्रस्पर्शेप्याचमन-
विधानार्थंतैरितिबहुवचननिर्देशइत्यविरोधः तेचस्नानार्हाःस्मृत्यंतरेवगंतव्याः यथाहपाराशरः दुःस्वप्नेमैथुनेवांतेविरिक्तेक्षुरकर्मणि चिति
यूपश्मशानास्थ्नांस्पर्शनेस्नानमाचरेदिति तथाचमनुः वांतोविरिक्तःस्नात्वातुघृतप्राशनमाचरेत् आचामेदेवभुक्त्वान्नंस्नानंमैथुनिनःस्मृतमि
ति मैथुनिनःस्नानमृतुकालविषयम् अनृतौतुयदागच्छेच्छौचंमूत्रपुरीषवदितिबृहस्पतिस्मरणात् अनृतावपिकालविशेषेणस्मृत्यंतरेस्नान
मुक्तं अष्टम्यांचचतुर्दश्यांदिवापर्वणिमैथुनम् कृत्वासचैलंस्नात्वाचवारुणीभिश्चमार्जयेदिति तथाचयमः अजीर्णेभ्युदितेवांतेतथाप्यस्तमि
तेरवौ दुःस्वप्नेदुर्जनस्पर्शेस्नानमात्रंविधीयतेइति तथाबृहस्पतिः मैथुनेकटधूमेचसद्यःस्नानंविधीयतेइत्येतदसचैलस्पर्शविषयं सचैलेतु-
चित्यादिस्पर्शेसचैलमेवस्नानं यथाहच्यवनः श्वानंश्वपाकंप्रेतधूमंदेवद्रव्योपजीविनम् ग्रामयाजिनंसोमविक्रयिणंयूपंचितिंचितिकाष्ठंम
द्यंमद्यभांडंसस्नेहंमानुषास्थिशवस्पृष्टंरजस्वलांमहापातकिनंशवंस्पृष्ट्वासचैलमंभोवगाह्योत्तीर्याग्निमुपस्पृश्यगायत्रीमष्टवारंजपेत् घृतं
प्राश्यपुनःस्नात्वात्रिराचामेदिति एतच्चबुद्धिपूर्वविषयं अन्यत्रस्नानमात्रं शवस्पृष्टंदिवाकीर्तिंचितिंयूपंरजस्वलाम् स्पृष्ट्वात्वकामतोविप्रः
स्नानंकृत्वाविशुध्यतीतिबृहस्पतिस्मरणात् एवमन्यत्रापिवक्ष्यमाणेषुविषयसमीकरणमूहनीयम् तथाचकश्यपः उदयास्तमयोस्कंदयित्वाअक्षिस्पंद
नेकर्णाक्रोशनेचित्यारोहणेयूपसंस्पर्शनेचसचैलंस्नानंपुनर्मामइतिजपेत् महाव्याहृतिभिःसप्ताज्याहुतीर्जुहुयादिति तथास्मृत्यंतरे स्पृष्ट्वादेवलकं

चैवसवासाजलमाविशेत् देवार्चनपरोविप्रोवित्तार्थेवत्सरत्रयम् असौदेवलकोनामहव्यकव्येषुगर्हितः तथाब्रह्मांडपुराणे शैवान्पाशुपतान्स्पृष्ट्वालो-
कायतिकनास्तिकान् विकर्मस्थान्द्विजान्शूद्रान्सवासाजलमाविशेदिति तथा अस्वर्ग्याह्याहुतिःसास्याच्छूद्रसंपर्कदूषितेति लिंगाच्चशूद्रस्पर्श-
नेनिषेधः तथांगिराः यस्तुच्छायांश्वपाकस्यब्राह्मणोत्वधिरोहति तत्रस्नानंप्रकुर्वीतघृतंप्राश्यविशुध्यतीति तथाव्याघ्रपादः चांडालंपतितंचैव-
दूरतःपरिवर्जयेत् गोवालव्यजनाद्र्वाक्सवासाजलमाविशेदिति एतदतिसंकटस्थलविषयं अन्यत्रतुबृहस्पतिनोक्तं युगंचद्वियुगंचैवत्रियु-
गंचचतुर्युगम् चांडालसूतिकोदक्यापतितानामधःक्रमादिति तथापैठीनसिः काकोलूकस्पर्शनेसचैलंस्नानमनुदकमूत्रपूरीषकरणेसचैलस्ना-
नंमहाव्याहृतिहोमश्च अनुदकमूत्रपुरीषकरणेइत्येतच्चिरकालमूत्रपुरीषशौचाकरणपरम् तथांगिराः भासवायसमार्जारखरोष्ट्रंचश्वशूकरा-
न् अमेध्यानिचसंस्पृश्यसचैलोजलमाविशेत् मार्जारस्पर्शनिमित्तंस्नानमुच्छिष्टसमयेनुष्ठानसमयेचवेदितव्यम् समाचारात् अन्यदातु
मार्जारश्चैवदर्वीचमारुतश्चसदाशुचिरितिस्नानाभावः श्वस्पर्शेतुस्नानंनाभेरूर्ध्ववेदितव्यं अधस्तात्तुक्षालनमेव नाभेरूर्ध्वंकरौमुक्त्वाशुनायद्यु-
पहन्यते तत्रस्नानमधस्ताच्चेत्प्रक्षाल्याचम्यशुध्यतीति तेनैवोक्तत्वात् तथापक्षिस्पर्शेविशेषोजातूकर्ण्येनोक्तः ऊर्ध्वंनाभेःकरौमुक्त्वायदंगंसंस्पृशेत्
खगः स्नानंतत्रप्रकुर्वीतशेषंप्रक्षाल्यशुध्यतीति अमेध्यस्पर्शेपिविष्णुनाविशेषोदर्शितः नाभेरधस्तात्प्रबाहुषुचकायिकैर्मलैःसुराभिर्मद्यैर्वोप-
हतोमृत्तोयैस्तदंगंप्रक्षाल्याचांतःशुध्येत् अन्यत्रोपहतोमृत्तोयैस्तदंगंप्रक्षाल्यस्नायात् तैरिंद्रियेषूपहतस्तूपोष्यस्नात्वापंचगव्येनदशनच्छदोपहत-
श्चेति एतच्चपरकीयामेध्यस्पर्शविषयम् आत्मीयमलस्पर्शेतुऊर्ध्वमपिनाभेःक्षालनमेव यथाहदेवलः मानुषास्थिवसांविष्ठामार्त्तवंमूत्ररेतसी

मज्जानंशोणितंवापिपरस्ययदिसंस्पृशेत् स्नात्वाप्रमृज्यलेपादीनाचम्यसशुचिर्भवेत् तान्येवस्वानिसंस्पृश्यपूतःस्यात्परिमार्जनादिति तथाशंखः रथ्याक
र्दमतोयेनष्ठीवनाद्येनवातथा नाभेरूर्ध्वंनरःस्पृष्टःसद्यःस्नानेनशुध्यतीति यमेनाप्यत्रविशेषउक्तः सकर्दमंतुवर्षासुप्रविश्यग्रामसंकरम् जंघयोर्मृ
त्तिकास्तिस्रःपादयोर्द्विगुणास्ततइति ग्रामसंकरंग्रामसलिलप्रवाहप्रवेशं सकर्दमंप्रविश्येत्यर्थः मारुतशोषितेतुकर्दमादौनदोषः रथ्याकर्दमतोया
निस्पृष्टान्यंत्यश्ववायसैः मारुतेनैवशुध्यंतिपक्वेष्टकचितानिचेतिप्रागुक्तत्वात् अस्थिनिमनुनाविशेषउक्तः नारंस्पृष्ट्वास्थिसस्नेहंस्नात्वाविप्रोवि
शुध्यति आचम्यैवतुनिःस्नेहंगांस्पृष्ट्वावीक्ष्यवारविमिति इदंद्विजातास्थिविषयं अन्यत्रवसिष्ठोक्तं मानुषास्थिस्निग्धंस्पृष्ट्वात्रिरात्रमाशौचमस्नि
ग्धेत्वहोरात्रम् अमानुषेतुविष्णूक्तं भक्ष्यवर्जंपंचनखशवंतदस्थिचसस्नेहंस्पृष्ट्वास्नातःपूर्ववस्त्रंप्रक्षालितंबिभृयादिति एवमन्येपिस्नानार्हाः-
स्मृत्यंतरतोवबोद्धव्याः एवंस्नानार्हाणांबहुत्वात्तदभिप्रायंतैरितिबहुवचनमविरुद्धं उदक्याशुचिभिःस्नायादित्येतच्चंडालाद्यचेतनव्यवधानस्पर्शे
वेदितव्यं चेतनव्यवधानेतुमानवंदिवाकीर्त्तिमुदक्यांचपतितंसूतिकांतथा शवंतत्स्पृष्टिनंचैवस्पृष्ट्वास्नानेनशुध्यतीति तृतीयस्यत्वाचमनमेव
तमेवतुस्पृशेद्यस्तुस्नानंतस्यविधीयते ऊर्ध्वमाचमनंप्रोक्तंद्रव्याणांप्रोक्षणंतथेतिसंवर्त्तस्मरणात् एतच्चाबुद्धिपूर्वकविषयं मतिपूर्वंतृतीयस्यापि
स्नानमेव यथाहगौतमः पतितचंडालसूतिकोदक्याशवस्पृष्टितत्स्पृष्ट्युपस्पर्शनेसचैलमुदकोपस्पर्शनाच्छुध्येदिति चतुर्थस्यत्वाचमनं उप-
स्पृश्याशुचिस्पृष्टंतृतीयंवापिमानवः हस्तौपादौचतोयेनप्रक्षाल्याचम्यशुध्यतीतिदेवलस्मरणात् अशुचिनापुनरुदक्यादिस्पर्शेदेवलेनविशेषउ
क्तः श्वपाकंपतितंव्यंगमुन्मत्तंशवहारकम् सूतिकांसाविकांनारींरजसाचपरिप्लुताम् श्वकुक्कुटवराहांश्चग्राम्यान्संस्पृश्यमानवः सचैलःसशिरः

स्नातात्तदानीमेवशुध्यति अशुद्धान्स्वयमप्येतानशुद्धस्तुयदिस्पृशेत् विशुध्यत्युपवासेनतथाकृच्छ्रेणवापुनरिति सावित्रिकाप्रसवस्यकारयित्री कृच्छ्रःश्वपाकादिविषयः श्वादिषुतूपवासइतिव्यवस्था ३० अधुनाकालशुद्धौदृष्टांतत्वेनद्रव्यशुद्धिप्रकरणोक्तांस्तथैवात्रप्रकरणेवक्ष्यमाणांश्च शुद्धिहेतूननुक्रामति यथाग्न्यादयोमीसर्वेस्वविषयेशुद्धिहेतवस्तथाकालोपिदशरात्रादिकः शास्त्रगम्यत्वाच्छुद्धिहेतुत्वस्य अग्निस्तावच्छुद्धि-हेतुर्यथाभ्यधायिपुनःपाकान्महीमयमिति कर्मचशुद्धिनिमित्तं यथावक्ष्यति अश्वमेधावभृथस्नानादिति तथामृदपिशुद्धिकारणं यथाकथितम्

कालोग्निःकर्ममृद्वायुर्मनोज्ञानंतपोजलम् पश्चात्तापोनिराहारःसर्वेमीशुद्धिहेतवः ३१

सलिलंभस्ममृद्वापिप्रक्षेप्तव्यंविशुद्धयइति वायुरपिशुद्धिहेतुः यथोदीरितं मारुतेनैवशुध्यंतीति मनोपिवाचःशुद्धिसाधनं यथाम्नायि मनसावा इषितावाग्वदतीत्यादि ज्ञानंचाध्यात्मिकंबुद्धिशुद्धौनिदानं यथाभिधास्यति क्षेत्रज्ञस्येश्वरज्ञानादिति तपश्चकृच्छ्रादि यथावदिष्यति प्राजापत्यं चरेत्कृच्छ्रंसमावागुरुतल्पगइत्यादि तथाजलमपिशरीरादेः यथाजल्पिष्यति वर्ष्मणोजलमिति पश्चात्तापोविशुद्धिजनकः यथागदितम् ख्यापनेनानुतापेनेति निराहारोपिशुध्युपादानम् यथाव्याहरिष्यति त्रिरात्रोपोषितोजप्त्वेत्यादि ३१ ७ ७ ७ ७

किंच अकार्यकारिणांनिषिद्धसेविनांदानमेवसुख्यंशुद्धिकारणं यथाव्याख्यास्यति पात्रेधनंवापर्याप्तंदत्त्वेति नद्याःनिदाघादौअल्पतोयतयाअमेध्योपहतती रायाःकूलंकषवर्षाम्बुप्रवाहःवेगःशुद्धिकृत् शोधनीयस्यद्रव्यस्यमृज्जतोयंचशुद्धिकृद्यथेहभणितं अमेध्याक्तस्यमृत्तोयैःशुद्धिर्गंधापकर्षणादिति संन्यासःप्र व्रज्याद्विजन्मनांमानसोपचारेशुद्धिकृत् तपोवेदाभ्यासोवेदविदांशुद्धिकारणं कृच्छ्रादितुसर्वसाधारणं नवेदविदामेव क्षांतिरूपशमोविदुषांवेदार्थविदां व र्षणो शरीरस्यजलं प्रच्छन्नपापानामविख्यातदोषाणांअघमर्षणादिसूक्तजपः शुद्धिकारणंशुद्धिसाधनं मनःसदसत्संकल्पात्मकम् तस्यासत्संक-

अकार्यकारिणंदानंवेगोनद्याश्चशुद्धिकृत् शोध्यस्यमृच्चतोयंचसंन्यासोवैद्विजन्मनाम् ३२ तपोवेदविदांक्षांतिर्विदुषां वर्ष्मणोजलम् जपःप्रच्छन्नपापानांमनसःसत्यमुच्यते ३३ भूतात्मनस्तपोविद्येबुद्धेर्ज्ञानंविशोधनम् क्षेत्रज्ञस्ये श्वरज्ञानाद्विशुद्धिःपरमामता ३४

ल्पत्यागदशुद्धस्यसत्यंसाधुसंकल्पःशोधकं भूतशब्देनतद्विकारभूतोदेहेंद्रियसंबंधोलक्ष्यते तत्रस्थू लोहंकृशोहंकाणोहंबधिरोहमिति एवंतदभिमानित्वेनयोयमात्मावर्त्तते सभूतात्मा तस्यतपोविद्येशुद्धिनिमित्ते तपःशब्देनानेकजन्मस्वेकस्मिन्नपि- वाजन्मनिजागरस्वप्नसुषुप्त्यवस्थास्वात्मनोयोयमन्वयः शरीरादेश्चव्यतिरेकःसोभिधीयते यथातपसाब्रह्मविजिज्ञासस्वेतिपंचकोशव्यतिरेकप्रति पादनपरेवाक्येविद्याशब्देनचौपनिषदमस्थूलमनण्वह्रस्वमसंगोह्ययमात्मेत्यादित्वंपदार्थनिरूपणविषयवाक्यजन्यज्ञानमुच्यते एताभ्यामस्यशुद्धिः

शरीरादिव्यतिरेकबुद्धेः संशयविपर्ययरूपत्वेनाशुद्धायाः प्रमाणरूपज्ञानं विशोधनं क्षेत्रस्यतपोविद्याविशुद्धस्य त्वंपदार्थभूतस्य तत्त्वमसीत्यादिवाक्यजस्वा-
त्साकाररूपादीश्वरज्ञानात् परमात्मस्तुशुद्धिर्मुक्तिलक्षणा यथाता: शुद्धयः पुरुमपुरुषार्थास्तु हृद्युक्ततराकालस्तुशुद्धिरपीत्येवं प्रशंसार्थभूतास्मादिविशुद्ध्यभिधानं
इत्याशौचप्रकरणम् ३२ ३३ ३४ आपद्यपिचकष्टायांसद्यःशौचंविधीयत इत्यापदिमुख्याशौचकल्पानामनुष्ठानासंभवेनसद्यःशौचाद्यनुक-
ल्पमुक्त्वेदानींतत्प्रसंगादापदिप्रतिग्रहोधिकोविप्रेयाजनाध्यापनेतथेत्याद्युक्तयाजनादिमुख्यवृत्त्यसंभवेनवृत्त्यंतरमाह द्विजोविशेषबहुकुटुंबतयास्ववृत्त्या-
जीवितुमसमर्थः क्षत्रसंबंधिनाकर्मणाशस्त्रग्रहणादिनापदिजीवेत् तेनापिजीवितुमशक्नुवन् वैश्यसंबंधिनाकर्मणावाणिज्यादिनाजीवेत् नत्वशूद्रवृत्त्या

## क्षात्रेणकर्मणाजीवेद्विशांवाप्यापदिद्विजः निस्तीर्यतामथात्मानंपावयित्वान्यसेत्पथा ३५

तथाचमनुः उभाभ्यामप्यजीवंस्तुकथंस्यादितिचेद्भवेत् कृषिगोरक्ष्यमास्थायजीवेद्वैश्यस्यजीविकामिति तथाआपद्यपिनहीनवर्णेनब्राह्मीवृत्तिराश्रयणी
या किंतुब्राह्मणेनक्षात्री क्षत्रियेणवैश्यसंबंधिनी वैश्येनचशौद्रीत्येवंस्वानंतरहीनवृत्तिरेव अजीवंतःस्वधर्मेणानंतरांपापीयसींवृत्तिमातिष्ठेरन् नतुक-
दाचिज्ज्यायसीमितिवसिष्ठस्मरणात् ज्यायसीचब्राह्मीवृत्तिः तथाचस्मृत्यंतरं उत्कृष्टंवापकृष्टंवातयोःकर्मनविद्यते मध्यमेकर्मणीहित्वासर्वसाधारणे
हितेइति शूद्रस्यउत्कृष्टंब्राह्मंकर्मनविद्यते तथाब्राह्मणस्यापकृष्टंशौद्रंकर्म मध्यमेक्षत्रवैश्यकर्मणीपुनरापद्गतसर्ववर्णसाधारणे शूद्रश्चापद्गतोवैश्य

वृत्त्याशिल्पैर्वाजीवेत् शूद्रस्यद्विजशुश्रूषातयाजीवन्वणिग्भवेत् शिल्पैर्वाविविधैर्जीवेत्द्विजातिहितमाचरन्निति प्रागुक्तत्वात् मनुनाचात्रविशेषोदर्शितः
यैश्चकर्मप्रचरितैःशुश्रूष्यंतेद्विजातयः तानिकारुककर्माणिशिल्पानिविविधानिचेति अनेनैवन्यायेनानुलोमोत्पन्नानामपिस्वानंतरावृत्तिरूहनीया एवं
स्वानंतरहीनवर्णवृत्त्याआपदंनिस्तीर्यप्रायश्चित्ताचरणेनात्मानंपावयित्वापथिन्यसेत्स्ववृत्त्यावात्मानंस्थापयेदित्यर्थः यद्वायमर्थः गर्हितवृत्त्यार्जितंधनं
पथिन्यसेदुत्सृजेदिति तथाचमनुः जपहोमैरपैत्येनोयाजनाध्यापनैःकृतम् प्रतिग्रहनिमित्तंतुत्यागेनतपसैवत्विति ३५ वैश्यवृत्त्याजीवतोब्राह्मणस्य

फलोपलक्षौमसोममनुष्यापूपवीरुधः तिलौदनरसक्षारान्दधिक्षीरंघृतंजलम् ३६ शस्त्रासवमधूच्छिष्टमधुलाक्षाय
बर्हिषः मृच्चर्मपुष्पकुतुपकेशतक्रविषक्षितीः ३७ कौशेयनीललवणमांसैकशफसीसकान् शाकार्द्रौषधिपिण्याक
पशुगंधांस्तथैवच ३८

यदपणनीयंतदाह नैवविक्रीणीतेतिप्रत्येकमपिसंबध्यते फलानिकदलीफलादीनिबदरेंगुदव्यतिरिक्तानि यथाह
नारदः स्वयंशीर्णानिपर्णानिफलानांबदरेंगुदे रज्जुःकार्पासिकंसूत्रंतच्चेदविकृतंभवेदिति उपलंमाणिक्याद्यश्ममात्रं क्षौममतसीसूत्रमयंवस्त्रं क्षौम
ग्रहणंतांतवादेरुपलक्षणम् यथाहमनुः सर्वंचतांतवंरक्तंशाणक्षौमाविकानिच अपिचेत्स्युररक्तानिफलमूलेतथौषधीरिति सोमोलताविशेषः
मानुष्यपदेनाविशेषात् स्त्रीपुंनपुंसकानांग्रहणं अपूपंमंडकादिभक्ष्यमात्रम् वीरुधोवेत्रामृतादिलताः तिलाःप्रसिद्धाः ओदनग्रहणंभोज्यमात्रोप

लक्षणम् रसागुडेक्षुरसशर्करादयः तथाचमनुः क्षीरंक्षौमंदधिघृतंतैलंमधुगुडौकुशानिति क्षारायवक्षारादयः दधिक्षीरयोर्ग्रहणंमस्तुपिंडकिला
टकूर्चिकादीनांतद्विकाराणामुपलक्षणम् क्षीरंसविकारमितिगौतमस्मरणात् घृतग्रहणंतैलादिस्नेहमात्रोपलक्षणम् जलंप्रसिद्धं शस्त्रंखड्गादि
आसवग्रहणंमद्यमात्रोपलक्षणम् मधूच्छिष्टंसिक्तकं मधुक्षौद्रं लाक्षाजतु बर्हिषःकुशाः मृत्प्रसिद्धा चर्माजिनं पुष्पंप्रसिद्धम् ऊर्णलोमकृतःकंब
लःकुतपः केशाश्चमर्यादिसंबद्धाः तक्रमुदश्वित् विषंमृग्यादि क्षितिर्भूमिःनित्यंभूमिव्रीहियवाजाव्यश्वर्षभधेन्वनडुहश्चैकइतिस्मृतमनुस्मरणात्
कौशेयंकोशप्रभवंवसनम् नीलंनीलीरसम् लवणग्रहणेनैवबिडसौवर्चलसैंधवसामुद्रसोमककृत्रिमाण्यविशेषेणगृह्यंते मांसंप्रसिद्धं एकशफा

वैश्यवृत्त्यापिजीवन्नोविक्रीणीतकदाचन

हयादयः सीसग्रहणंलोहमात्रोपलक्षणम् शाकंसर्वमविशेषात् ओषधयःफलपाकांताः आद्यौषधयइतिविशेषोपादानात् शणक्षेपुनदोषः पिण्या-
कःप्रसिद्धः पशवआरण्याः आरण्यांश्चपशून्सर्वान्दंष्ट्रिणश्चवयांसिचेतिमनुस्मरणात् गंधाश्चंदनागुरुप्रभृतयः ३६ ३७ ३८ सर्वानितान्वैश्यवृत्त्याजी-
वन्ब्राह्मणःकदाचिदपिनविक्रीणीत क्षत्रियादेस्तुनदोषः अतएवनारदेनवैश्यवृत्त्ताववविक्रेयंब्राह्मणस्यपयोदधीतिब्राह्मणग्रहणंकृतम् ७ ७

प्रतिप्रसवमाह यद्यावश्यकाः पाकयज्ञादिधर्माः स्वसाधनव्रीह्यादिधान्याभावेननिष्पद्यंते तर्हिधान्येनतिलाविक्रयंनेयाः तत्समाद्द्रोणपरिमिताद्द्रोणपरि
मितेनेत्येवंतेनधान्येनसमाः तथामनुः काममुत्पाद्यकृष्यांतुस्वयमेवकृषीवलः विक्रीणीततिलान्शुद्धान्धर्मार्थमचिरस्थितानिति धर्मग्रहणमावश्यक
भेषजाद्युपलक्षणम् अतएवनारदः अशक्तौभेषजस्यार्थेयज्ञहेतोस्तथैवच यद्यवश्यंतुविक्रेयास्तिलाधान्येनतत्समाइति यद्यन्यथाविक्री
णीतेतर्हिदोषः भोजनाभ्यंजनाद्दानाद्यदन्यत्कुरुतेतिलैः कृमिर्भूत्वाश्वविष्ठायांपितृभिःसहमज्जतीतिमनुस्मरणात् सजातीयैःपुनर्विनिमयोभवत्ये
व रसारसैर्निमातव्यानत्वेवलवणंरसैः कृतान्नंचकृतान्नेनतिलाधान्येनतत्समाइति कृतान्नंसिद्धान्नं तच्चकृतान्नेनपरिवर्त्तनीयमितियावत् कृ

धमार्थंविक्रयंनेयास्तिलाधान्येनतत्समाः ३९ लाक्षालवणमांसानिपतनीयानिविक्रये पयोदधिचमद्यंचहीनवर्णकराणितु ४०

तान्नंचाकृतान्नेनेतिपाठेसिद्धमन्नमकृतान्नेनतंदुलादिनापरिवर्त्तनीयमितियावत् ३९ पूर्वोक्तनिषिद्धातिक्रमेदोषमाह लाक्षालवणमांसानिविक्री
यमाणानिसद्यः पतनीयानिद्विजातिकर्महानिकराणि पयःप्रभृतीनितुहीनवर्णकराणिशूद्रतुल्यत्वापादकानि एतद्व्यतिरिक्तापण्यविक्रयेवैश्यतु-
ल्यता यथाहमनुः सद्यःपततिमांसेनलाक्षयालवणेनच त्र्यहेणशूद्रोभवतिब्राह्मणःक्षीरविक्रयात् इतरेषामपण्यानांविक्रयादिहकामतः ब्रा-
ह्मणःसप्तरात्रेणवैश्यभावंनिगच्छति ४० ५ ५ ५ ५ ५ ५

किंच यस्त्वधनः अवसन्नकुटुंबतया आपद्गतोपिक्षत्रवृत्तिंवैश्यवृत्तिंवानप्रविविक्ष्यतिसय तस्ततो हीनतर हीनतमेभ्यः प्रतिगृण्हंस्तदन्नंभुंजानोपिवानैवै नसापापेनलिप्यते यतस्तस्यामापदवस्थायामसत्प्रतिग्रहादावधिकारित्वेनज्वलनार्कसमः यथाज्वलनोर्कश्चहीनसंस्कारेपिनदुष्यति तथायमापद्गतोपि नदुष्यतीत्येतावतातत्साम्यं एवंचवदताआपद्गतस्य परधर्माश्रयणाद्विगुणमपिस्वधर्मानुष्ठानमेवमुख्यमितिदर्शितंभवति तथाचमनुः वरंस्वधर्मोवि गुणोनपारक्यःस्वनुष्ठितः परधर्माश्रयाद्विप्रःसद्यःपततिजातितइति ४१ किंच आपत्तौजीवनानीतिविशेषणात् कृष्यादीनांमध्येअनापदवस्थायांयस्य

आपद्गतःसंप्रगृण्हन् भुंजानोवायतस्ततः नलिप्येतैनसाविप्रोज्वलनार्कसमोहिसः ४१
कृषिःशिल्पंभृतिर्विद्याकुसीदंशकटंगिरिः सेवानूपंनृपोभैक्ष्यमापत्तौजीवनानितु ४२

यावृत्तिःप्रतिषिद्धा तस्यसावृत्तिरनेनाभ्यनुज्ञायते यथापदिवैश्यवृत्तिःस्वयंकृता कृषिर्विप्रक्षत्रिययोरभ्यनुज्ञायते एवंशिल्पादीन्यस्याभ्यनुज्ञायंते शि ल्पंसूपकरणादि भृतिःप्रेष्यत्वं विद्याभृतकाध्यापकत्वाद्या कुसीदंवृध्यर्थंद्रव्यप्रयोगः तत्स्वयंकृतमभ्यनुज्ञायते शकटंभाटकेनधान्यादिवहनद्वारेणजीव नहेतुः गिरिस्तद्गततृणेंधनद्वारेणजीवनम् सेवापरचित्तानुवर्त्तनम् अनूपंप्रचुरतृणवृक्षजलप्रायःप्रदेशः तथानृपयाचनंभैक्ष्यंस्नातकस्यापि एता न्यापत्तौजीवनानि तथाचमनुः विद्याशिल्पंभृतिःसेवागोरक्षाविपणिःकृषिः गिरिर्भैक्ष्यंकुसीदंचदशजीवनहेतवः ४२ ७ ७

यदाकृष्यादीनामपिजीवनहेतूनामसंभवस्तदाकथंजीवनमित्यतआह धान्याभावेनत्रिरात्रंबुभुक्षितोनश्नन्स्थित्वाअब्राह्मणाच्छूद्रात्तदभावेवैश्या
न्नृत्तदभावेक्षत्रियाद्वाहीनकर्मणएकाहपर्याप्तंधान्यमाहरेत् यथाहमनुः तथैवसप्तमेभक्तेभक्तानिषडनश्नता अश्वस्तनविधानेनहर्त्तव्यंहीनक
र्मणइति तथा प्रतिग्रहोत्तरकालंचयदपहृतंतद्धर्मतोयथावृत्तमाख्येयं यदिनाष्टिकेनस्वामिनात्वयेदंकिंममापहृतमित्यभियुज्यते यथाहमनुः

बुभुक्षितस्त्र्यहंस्थित्वाधान्यमब्राह्मणाद्धरेत् प्रतिगृह्यतदाख्येयमभियुक्तेनधर्मतः ४३
तस्यवृत्तंकुलंशीलंश्रुतमध्ययनंतपः ज्ञात्वाराजाकुटुंबंचधर्म्यांवृत्तिंप्रकल्पयेत् ४४

खलात्क्षेत्रादगाराद्वायतोवाप्युपलभ्यते आख्यातव्यंतुतत्तस्मैपृच्छतेयदिपृच्छतीति ४३ इदमपरमापत्प्रसंगाद्राज्ञोविधीयते योशनायापरितोऽवसीदति
तस्यवृत्तमाचारं कुलमाभिजात्यं शीलमात्मगुणंश्रुतंशास्त्रश्रवणं अध्ययनंवेदाध्ययनं तपःकृच्छ्रादिचपरीक्ष्यराजाधर्मादनपेतांवृत्तिंप्रकल्पयेत् अन्यथा
तस्यदोषः तथाचमनुः यस्यराज्ञस्तुविषयेश्रोत्रियःसीदतिक्षुधा तस्यसीदतितद्राष्ट्रंदुर्भिक्षव्याधिपीडितमिति इत्यापद्धर्मप्रकरणम् ४४ ६९

चतुर्णामाश्रमिणांमध्येब्रह्मचारिगृहस्थयोर्धर्माःप्रतिपादिताः सांप्रतमवरप्राप्तान्वानप्रस्थ धर्मान्प्रतिपादयितुमाह वनेप्रकर्षेणनियमेनचातिष्ठ
तिचरतीतिवनप्रस्थःवनप्रस्थएववानप्रस्थः संज्ञायांदैर्घ्यं भाविनींवृत्तिमाश्रित्यवनंप्रतिष्ठासुरितियावत् असौकृतविन्यस्तपत्नीकस्त्वयेयंभर–
णीयेत्येवंकृतेविन्यस्तानिक्षिप्तापत्नीयेनसतथोक्तः यदिसापतिपरिचर्याभिलाषेणस्वयमपिवनंजिगमिषतितदातयानुगतोवासहितः तथाब्रह्म
चारीऊर्ध्वरेताःसाग्निर्वैतानाग्निसहितःतथासोपासनोगृह्याग्निसहितश्चवनंव्रजेत् कृतविन्यस्तपत्नीकइतिवदताकृतगार्हस्थ्योवानप्रस्थोवनवा–
सेधिक्रियतइतिदर्शितम् एतच्चाश्रमसमुच्चयपक्षमंगीकृत्योक्तं इतरथाअविप्लुतब्रह्मचर्योयंयमिच्छेत्तमावसेदित्यकृतगार्हस्थ्योपिवनवासेधि–

कृतविन्यस्तपत्नीकस्तयावानुगतोवनम् वानप्रस्थोब्रह्मचारीसाग्निःसोपासनोव्रजेत् ४५

क्रियतएव अयंचवनप्रवेशोजराजर्जरकलेबरस्यजातपौत्रस्यवा यथाहमनुः गृहस्थस्तुयदापश्येद्वलीपलितमात्मनः अपत्यस्यैववापत्यंतदारण्यं
समाश्रयेदिति अयंचपुत्रेषुपत्नीनिक्षेपोविद्यमानभार्यस्य मृतभार्यस्यापापस्तंबादिभिः वनवासस्मरणात् अतोयत्दाहयित्वाग्निहोत्रेणेतिपु
नराधानविधानंतदपरिपक्वकषायविषयम् साग्निःसोपासन इत्यत्रापियदार्धाधानंकृतंतदाश्रौताग्निभिर्गृह्येणचसहितोवनंव्रजेत् सर्वाधानेतु
श्रौतैरेवकेवलम् यदिकथंचिज्ज्येष्ठभ्रातुरनाहिताग्नित्वादिनाश्रौताग्नयोनाहितास्तर्हिकेवलंसोपासनोव्रजेदित्येवंविवेचनीयं अग्निनयनंचतान्नि

वर्त्यग्निहोत्रादिकर्मसिद्ध्यर्थं अतएवमनुः वैतानिकंचजुहुयादग्निहोत्रंयथाविधि दर्शमस्कंदयन्पर्वपौर्णमासंचशक्तितइति ननुचपुत्रानि
क्षिप्तपत्नीकस्यतर्हिरहिणः कथमग्निहोत्रादिकर्मानुष्ठानंघटते पत्न्यासहयष्टव्यमितिसहाधिकारनियमात् सत्यमेवंकिंतुच पत्नीनिक्षेपविधि
बलादेवतन्नैरपेक्ष्येणाधिकारः कल्प्यते यथाहिरजस्वलायांयस्यव्रत्येहनिपत्न्यनालंभुकास्यात्तामरुध्ययजेतेत्यपरोधविधिबलात्तन्निरपेक्ष
ता यद्यावनंप्रतिष्ठमानमेवपतिंपत्न्यनुमन्यतइतिनविरोधः नचयथाब्रह्मचारिणोविधुरस्यवावनंप्रस्थितस्याग्निहोत्रादिपरिलोपः तथानि-
क्षिप्तपत्नीकस्यापिअग्निहोत्राद्यभावइतिशंकनीयम् अपाक्षिकत्वेनश्रवणात् नचब्रह्मचारिविधुरयोरपिअग्निसाध्यकर्मस्वनधिकारः

अफालकृष्टेनाग्नींश्चपितॄन्देवातिथीनपि भृत्यांश्चतर्पयेत्श्मश्रुजटालोमभृदात्मवान् ४६

पंचममासादूर्ध्वमाहितश्रावणिकाग्नेस्तदधिकारदर्शनात् वानप्रस्थोजटिलश्चीराजिनवासानफालकृष्टमधितिष्ठेत् अकृष्टंमूलफलंसंचिन्वी
तऊर्ध्वरेताः क्षमाशयोदद्यादेवनप्रतिगृण्हीयादूर्ध्वंपंचभ्योमासेभ्यः श्रावणिकेनाग्निमाधायाहिताग्निर्वृक्षमूलिकोदद्यादेवपितृमनुष्येभ्यः सगच्छे
त्स्वर्गमानंत्यमितिवसिष्ठस्मरणात् चीरंवस्त्रखंडोवल्कलंवा नफालकृष्टमधितिष्ठेत्कृष्टक्षेत्रस्योपरिननिवसेत् श्रावणिकेनवैदिकेनमार्गेणनलौ
किकेनेत्यर्थः ४५ साग्निःसोपासनोव्रजेदित्येतदग्निसाध्यश्रौतस्मार्तकर्मानुष्ठानार्थमित्युक्तंतत्रगुणविधिमाह फालग्रहणंकर्षणसाधनोपलक्षणं

अकृष्टक्षेत्रोद्भवेननीवारवेणुश्यामाकादिनाअग्नींस्तर्पयेत् अग्निसाध्यानिकर्माण्यनुतिष्ठेत् चशब्दाद्भिक्षादानमपितेनैवकुर्यात् तथापितॄन् देवानतिथीन् अपिशब्दाद्भूतान्यपितेनैवतर्पयेत् तथाभृत्यान् चशब्दादाश्रमप्राप्तानपि तथाचमनुः यद्भक्ष्यंस्यात्ततोदद्याद्बलिंभिक्षांचशक्तितः अम्मूलफलभिक्षाभिरर्चयेदाश्रमागतानिति एवंपंचमहायज्ञान्कृत्वास्वयमपितच्छेषमेवभुंजीत देवताभ्यश्चतत्हुत्वावन्यंमेध्यतरंहविः शेषमात्मनियुंजीतलवणंचस्वयंकृतमितिमनुस्मरणात् स्वयंकृतमूखरलवणमेवभोजनार्थेयागाद्यर्थेचमुन्यन्ननियमात् ग्राम्याहारपरित्यागोर्थसिद्धः अतएवमनुः संत्यज्यग्राम्यमाहारंसर्वंचैवपरिच्छदमिति ननुचदर्शपूर्णमासादेर्व्रीह्यादिग्राम्यद्रव्यसाध्यत्वात्कथंतत्सरित्या

अन्हो मासस्यषण्णांवातथासंवत्सरस्यवा अर्थस्यसंचयंकुर्यात्कृतमाश्वयुजेत्यजेत् ४७

गः नचवक्तव्यमफालकृष्टेनाग्नींश्चेतिविशेषवचनसामर्थ्याद्व्रीह्यादिबाधइति विशेषविषयिण्यापिस्मृत्याश्रुतिबाधस्यान्याय्यत्वात् अफालकृष्टविधेश्चस्मार्त्ताग्निसाध्यकर्मविषयत्वेनाप्युपपत्तेः सत्यमेवंकिंत्वत्रव्रीह्यादेरप्यफालकृष्टत्वसंभवान्नविरोधः अतएवमनुना वासंतशारदैर्मेध्यैर्मुन्यन्नैःस्वयमाहृतैः पुरोडाशांश्चरूंश्चैवविधिवन्निर्वपेत्पृथगिति नीवारादीनांमुन्यन्नानांस्वयमुत्पन्नानांस्वतोमेध्यत्वेसिद्धेपिपुनर्मेध्यग्रहणंयज्ञार्हव्रीह्यादिप्राप्त्यर्थंकृतं मेधोयज्ञस्तदर्हंमेध्यमिति तथाश्मश्रूणिमुखजानिरोमाणिजटारूपांश्चशिरोरुहान्कक्षादीनिचरोमाणिबिभृयात् रोमग्रहणंनखानामप्युपलक्षणं तथाचमनुः जटाश्चबिभृयान्नित्यंश्मश्रुलोमनखांस्तथेति तथात्मवानात्मोपासनाभिरतःस्यात् ४६ पूर्वोक्तद्रव्यसंचयनियममाह एकस्यान्हः

संबंधिभोजनयजनादिदृष्टादृष्टकर्मणः पर्याप्तस्यार्थस्य संचयं कुर्यात् मासस्य वा षण्णां मासानां वा संवत्सरस्य वा संबंधि कर्मपर्याप्तं संचयं कुर्यात् नाधिकं यद्येवं क्रियमाणेपि कथंचिदतिरिच्यते तर्हि तदतिरिक्तमाश्वयुजे मासि त्यजेत् ४७ किंच दांतो दर्परहितः त्रिषु सवनेषु प्रातर्मध्यंदिनापराण्हेषु स्नानशीलः तथा प्रतिग्रहे पराङ्मुखः चशब्दाद्याजनादिनिवृत्तश्च स्वाध्यायवान् वेदाभ्यासरतः तथा फलमूलभिक्षादिदानशीलः सर्वप्राणिहिताचरणनिरतश्च भवेत् ४८ किंच दंता एवोलूखलं निस्तुषीकरणसाधनं दंतोलूखलं तद्यस्यास्ति स दंतोलूखलिकः काले

दांतस्त्रिषवणस्नायी निवृत्तश्च प्रतिग्रहात् स्वाध्यायवान्दानशीलः सर्वसत्वहिते रतः ४८
दंतोलूखलिकः कालपक्काशी वाश्मकुट्टकः श्रौतं स्मार्त्तं फलस्नेहैः कर्म कुर्यात्तथा क्रियाः ४९

नैव पक्कं कालपक्कं नीवारवेणुश्यामाकादि बदरेंगुदादिफलं च तदशनशीलः कालपक्काशी वाशब्दोग्निपक्काशनो वा स्यात् कालपक्कभुगेव वेति मनूक्ताग्निपक्काशिताभिप्रायः अश्मकुट्टको वा भवेत् अश्मना कुट्टनमवहननं यस्य स तथोक्तः तथा श्रौतं स्मार्त्तं च कर्म दृष्टार्थाश्च भोजनाभ्यंजनादिक्रियाः लकुचमधूकादिमेध्यतरुफलोद्भवैः स्नेहद्रव्यैः कुर्यान्नतु घृतादिकैः तथा च मनुः मेध्यवृक्षोद्भवानद्यात् स्नेहांश्च फलसंभवानिति ४९

पुरुषार्थतयाविहितद्विर्भोजननिवृत्त्यर्थमाह चांद्रायणैर्वक्ष्यमाणलक्षणैः कालंनयेत् कृच्छ्रैर्वाप्राजापत्यादिभिः कालंवर्त्तयेत् यद्वापक्षेपं
चदशादिनात्मकेतीतेश्नीयात् मासेवाहनिगतेवानक्तमश्नीयात् अपिशब्दाच्चतुर्थकालिकत्वादिनापि यथाहमनुः नक्तंवान्नंसमश्नीयाद्दिवावा
हृत्यशक्तितः चतुर्थकालिकोवास्याद्यद्वाप्यष्टमकालिक इति एतेषांकालनियमानांशक्त्यपेक्षयाविकल्पः ५० किंच आहारविहारावसर
वर्ज्यंरात्रौशुचिःप्रयतःस्वप्यात् नोपविशेन्नापितिष्ठेत् दिवास्वप्नस्यपुरुषमात्रार्थतयाप्रतिषिद्धत्वान्नतन्निवृत्तिपरम् तथाभूमावेवस्वप्यात्

चांद्रायणैर्नयेत्कालंकृच्छ्रैर्वावर्त्तयेत्सदा पक्षेगतेवाप्यश्नीयान्मासेवाहनिवागते ५० स्व
प्याद्भूमौशुचीरात्रौदिवासंप्रपदैर्नयेत् स्थानासनविहारैर्वायोगाभ्यासेनवातथा ५१

नचभूमावेव नशय्यांतरितायांमंचकादौवा दिनंतुसंप्रपदैरटनैर्नयेत् स्थानासनरूपैर्वाविहारैः संचारैः कंचित्कालंस्थानंकंचिच्चोपवेशनमि
त्येवंवादिनंनयेत् योगाभ्यासेनवा तथाचमनुः विविधाश्चोपनिषदीरात्मसंसिद्धयेश्रुतीरिति आत्मनःसंसिद्धयेब्रह्मत्वप्राप्तये तथाशब्दा
त्क्षितिपरिलोडनाद्वानयेत् भूमौविपरिवर्त्तेततिष्ठेद्वाप्रपदैर्दिनमितिमनुस्मरणात् प्रपदैःपादाग्रैः ५१ ६९ ६२

किंच त्रिऋतुःसंवत्सरोग्रीष्मोवर्षाहेमंत इतिदर्शनात् ग्रीष्मेचैत्रादिमासचतुष्टयेचतसृषुदिक्षुचत्वारउपरिष्टादादित्यइत्येवंपंचानामग्नीनां मध्येतिष्ठेत् तथावर्षासुश्रावणादिमासचतुष्टयेस्थंडिलेशयः वर्षधाराविनिवारणविरहिणिभूतलेनिवसेत् हेमंतेमार्गशीर्षादिमासचतु ष्टयेक्लिन्नंवासोवसीत एवंविधतपश्चरणेअसमर्थःस्वशक्त्यनुरूपंवातपश्चरेत् यथाशरीरशोषस्तथायतेत तपश्चरंश्चोग्रतरंशोषयेद्देह मात्मनइतिमनुस्मरणात् ५२ किंच यःकश्चित्कंटकादिभिर्विविधमंगानितुदतिव्यथयतिनतस्मैनक्रुध्येत् यश्चंदनादिभिरुपलिंपतितस्मै-

ग्रीष्मेपंचाग्निमध्यस्थोवर्षासुस्थंडिलेशयः आर्द्रवासास्तुहेमंतेशक्त्यावापितपश्चरेत् ५२
यःकंटकैर्वितुदतिचंदनैर्यश्चलिंपति अक्रुद्धोपरितुष्टश्चसमस्तस्यचतस्यच ५३ अ
ग्नीन्वाप्यात्मसात्कृत्वावृक्षावासोमिताशनः वानप्रस्थगृहेष्वेवयात्रार्थंभैक्ष्यमाचरेत् ५४

स्वयतितस्यतुनपरितुष्येत् किंतुतयोरुभयोरपिसमःस्यादुदासीनोभवेत् ५३ अग्निपरिचर्याक्षमंप्रत्याह अग्नीनात्मनिसमारोप्यवृक्षा- वासोवृक्षएवआवासःकुटीयस्यसुतथोक्तः मिताशनःस्वल्पाहारः अपिशब्दात्फलमूलाशनश्चभवेत् यथाहमनुः अग्नीन्स्वात्मनिवैतानान्समा रोप्ययथाविधि अनग्निरनिकेतःस्यान्मुनिर्मूलफलाशनइति मुनिर्मौनव्रतयुक्तः फलमूलासंभवेचयावत्प्राणधारणंभवतितावन्मात्रंभैक्ष्यंवानप्र स्थगृहेष्वाचरेत् ५४

यदातु तदसंभवोव्याध्यभिभवोवा तदा किंकार्यमित्यत आह ग्रामाद्वाभैक्ष्यमाहृत्यवाग्यतोमौनीभूत्वाअष्टौग्रासान्भुंजीत ग्राम्यभैक्ष्यविधा-
नान्मुन्यन्ननियमोर्थलुप्तः यदापुनरष्टभिर्ग्रासैःप्राणधारणंनसंभवतितदाष्टौग्रासाःमुनेर्भैक्ष्यंवानप्रस्थस्य षोडशेतिस्मृत्यंतरोक्तंद्रष्टव्यम्
सकलानुष्ठानसमर्थंप्रत्याह अथवावायुरेवभक्षोयस्यासौवायुभक्षः प्रागुदीचीमैशानींदिशंगच्छेत् आवर्ष्मसंक्षयात् वर्ष्मवपुस्तस्यनिपातपर्यं
तमकुटिलगतिर्गच्छेत् यथाहमनुः अपराजितांवास्थायगच्छेद्दिशमजिह्मगइति महाप्रस्थानेप्यशक्तोभृगुपतनादिकंवाकुर्यात् वानप्रस्थोवी
राध्वानंज्वलनांबुप्रवेशनंभृगुपतनंवानुतिष्ठेदितिस्मरणात् स्नानाचमनादिधर्माब्रह्मचारिप्रकरणाद्यभिहिताश्चाविरोधिनोस्यापिभवंति

ग्रामादाहृत्यवाग्रासानष्टौभुंजीतवाग्यतः वायुभक्षःप्रागुदीचींगच्छेद्वावर्ष्मसंक्षयात् ५५

उत्तरेषांचैतदविरोधीतिगौतमस्मरणात् एवंप्रागुदितैंदवादिदीक्षामहाप्रस्थानपर्यंतास्तनुत्यागांतमनुतिष्ठन्ब्रह्मलोकेपूज्यतांप्राप्नोति यथा
हमनुः आसांमहर्षिचर्याणांत्यक्त्वान्यतमयांतनुम् वीतशोकभयोविप्रोब्रह्मलोकेमहीयतेइति ब्रह्मलोकःस्थानविशेषोनतुनित्यंब्रह्म तत्रलो
कशब्दास्याप्रयोगात् तत्रतुरीयाश्रममंतरेणमुक्त्यनंगीकाराच्च नचयोगाभ्यासेनवापुनरितिब्रह्मोपासनविध्यनुपपत्त्यातद्भावापत्तिःपरि-
शंकनीया सालोक्यादिप्राप्त्यर्थत्वेनापितदुपपत्तेः अतएवश्रुतौत्रयोधर्मस्कंधाइत्युपक्रम्य यज्ञोध्ययनंदानमितिप्रथमः तपएवेतिद्वितीयः

ब्रह्मचार्याचार्यकुलवासीतृतीयः अत्यंतमाचार्यकुलएवमात्मानमवसादयन्निति गार्हस्थ्यवानप्रस्थ्यनैष्ठिकत्वस्वरूपमभिधायसर्वएतेपु
ण्यलोकाभवंतीतित्रयाणामाश्रमिणांपुण्यलोकप्राप्तिमभिधायब्रह्मसंस्थोमृतत्वमेतीतिपारिशेष्यात्परिव्राजकस्यैवब्रह्मसंस्थस्यमुक्तिल
क्षणामृतत्वप्राप्तिरभिहिता यद्यपिश्राद्धकृत्सत्यवादीचगृहस्थोपिविमुच्यतइतिगृहस्थस्यापिमोक्षप्रतिपादनंतद्धयांतरानुभूतपारिव्रज्य-
स्येत्यवगंतव्यम् इतिवानप्रस्थप्रकरणम् ५५ वैखानसधर्माननुक्रम्यक्रमप्राप्तान्परिव्राजकधर्मान्साप्रतंप्रस्तौति यावताकालेनतीव्र

वनाद्गृहाद्वाकृत्वेष्टिंसार्ववेदसदक्षिणाम् प्राजापत्यांतदंतेतानग्नीनारोप्यचात्मनि ५६
अधीतवेदोजपकृत्पुत्रवानन्नदोग्निमान् शक्त्याचयज्ञकृन्मोक्षेमनःकुर्यात्तुनान्यथा ५७

तपःशोषितवपुषोविषयकषायपरिपाकोभवति पुनश्चमदोद्भवाशंकानोद्भाव्यतेतावत्कालंवनवासंकृत्वातत्समनंतरंमोक्षेमनःकुर्यात् वन
गृहशब्दाभ्यांतत्संबंध्याश्रमोलक्ष्यते मोक्षशब्देनचमोक्षैकफलकश्चतुर्याश्रमः अथवागृहाद्गार्हस्थ्यादनंतरंमोक्षेमनःकुर्यात् अनेनचपूर्वो
क्तश्चतुराश्रमसमुच्चयपक्षःपाक्षिकइतिद्योतयति तथाचविकल्पोजाबालश्रुतौश्रूयते ब्रह्मचर्यंपरिसमाप्यगृहीभवेत् गृहीभूत्वावनीभवेत्
वनीभूत्वाप्रव्रजेत् यदिवेतरथाब्रह्मचर्यादेवप्रव्रजेत् गृहाद्वावनाद्वेति तथागार्हस्थ्येतराश्रमबाधश्चगौतमेनदर्शितः एकाश्रम्यंत्वाचार्याः

प्रत्यक्षविधानाद्गार्हस्थ्यस्येति एषांच समुच्चयविकल्पबाधपक्षाणां सर्वेषां श्रुतिमूलत्वादिच्छयाविकल्पः अतोयत्कैश्चित्पंडितमान्यैरुक्तम्
स्मार्त्तत्वान्नैष्ठिकादीनां गार्हस्थ्येन श्रौतबाधः गार्हस्थ्यानधिकृतांधक्लीबादिविषयतावेति तत्स्वाध्यायाध्ययनवैधुर्यनिबंधनमित्युपेक्षणी
यम् किंच यथा विष्णुक्रमणाज्यावेक्षणाद्यक्षमतया पंग्वादीनां श्रौतेष्वनधिकारस्तथा स्मार्त्तेष्वप्युदकुंभाहरणभिक्षाचर्यादिष्वक्षमत्वात्क-
थं पंग्वादिविषयतया नैष्ठिकत्वाद्याश्रमनिर्वाहः अस्मिंश्चाश्रमे ब्राह्मणस्यैवाधिकारः आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद्गृहात् तथा
एष वोभिहितो धर्मो ब्राह्मणस्य चतुर्विध इत्युपक्रमोपसंहाराभ्यां मनुना ब्राह्मणस्याधिकारप्रतिपादनात् ब्राह्मणाः प्रव्रजंतीति श्रुतेश्चाग्रज
न्मन एवाधिकारो न द्विजातिमात्रस्य अन्ये तु त्रैवर्णिकानां प्रकृतत्वात् त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमा इति सूत्रकारवचनाच्च द्विजाति
मात्रस्याधिकारमाहुः यदा च वनाद्गृहाद्वा प्रव्रजति तदा सार्ववेदसदक्षिणां सार्ववेदसी सर्ववेदसंबंधिनी दक्षिणा यस्याः सा तयोक्तानां प्रजापति
देवताकामिष्टिं कृत्वा तदंते तान्वैतानानग्नीनात्मनि श्रुत्युक्तविधानेन समारोप्य चशब्दादुदगयने पौर्णमास्यां पुरश्चरणमादौ कृत्वा शक्तेन कार्ये
नाष्टौ श्राद्धानि निर्वपेत् द्वादश वेति बौधायनाद्युक्तं पुरश्चरणादिकं च कृत्वा तथाधीतवेदो जपपरायणो जातपुत्रो दीनांधकृपणार्पितार्थो यथा
शक्त्यन्नदश्च भूत्वाऽनाहिताग्निर्ज्येष्ठत्वादिना प्रतिबंधाभावे कृताधानो नित्यनैमित्तिकान्यज्ञान्कृत्वा मोक्षे मनः कुर्यात् चतुर्थाश्रमं प्रविशेदन्या
न्यथा अनेनानपाकृतर्णत्रयस्य प्रव्रज्यायामनधिकारं दर्शयति यथाह मनुः ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् अनपाकृत्य मोक्षं
तु सेवमानो व्रजत्यध इति यदा तु ब्रह्मचर्यात्प्रव्रजति तदा न प्रजोत्पादनादिनियमः अकृतदारपरिग्रहस्य तत्रानधिकारात् रागप्रयुक्तत्वाच्च वि

वाहस्य नचत्रऋणत्रयापाकरणविधिरेवदारानाक्षिपतीतिशंकनीयम् विद्याधनार्जननियमवदन्यप्रयुक्तदारसंभवेतस्यानाक्षेपकत्वात् नतु जायमानोब्राह्मणस्त्रिभिर्ऋणवान् जायतेब्रह्मचर्येणऋषिभ्योयज्ञेनदेवेभ्यःप्रजयापितृभ्यइति जातमात्रस्यैवप्रजोत्पादनादीन्यावश्यकानी तिदर्शयति मैवं नहिजातमात्रःअकृतदाराग्निपरिग्रहोयज्ञादिष्वधिक्रियते तस्मादधिकारीजायमानोब्राह्मणादिर्यज्ञादीननुतिष्ठेदितितस्या र्थः अतश्चोपनीतस्यवेदाध्ययनमेवावश्यकम् कृतदाराग्निपरिग्रहस्यप्रजोत्पादनमपीतिनिरवद्यम् ५६ ५७ एवमधिकारिणंनिरूप्य- तद्धर्मानाह सर्वभूतेभ्यःप्रियाप्रियकारिभ्योहितउदासीनोनपुनर्हिताचरणः हिंसानुग्रहयोरनारंभीतिगौतमस्मरणात् शांतोबाह्यांतःकर

सर्वभूतहितःशांतस्त्रिदंडीसकमंडलुः एकारामःपरिव्रज्यभिक्षार्थीग्राममाश्रयेत् ५८

णोपरतःत्रिदंडाअस्यसंतीतित्रिदंडी तेचदंडावैणवाग्रात्याः प्राजापत्येष्ट्यनंतरंत्रीन्वैणवान्दंडान्मूर्धप्रमाणान्दक्षिणेनपाणिनाधारयेत्सव्येनसो दकंकमंडलुमितिस्मृत्यंतरदर्शनात् एकंवादंडंधारयेत् एकदंडीत्रिदंडीवेतिबौधायनस्मरणात् चतुर्थमाश्रमंगच्छेद्ब्रह्मविद्यापरायणः ए- कदंडीत्रिदंडीवासर्वसंगविवर्जितइतिचतुर्विंशतिमतेदर्शनाच्च तथाशिखाधारणमपिवैकल्पिकं मुंडःशिखीवेतिगौतमस्मरणात् मुंडोऽम मोपरिग्रहइतिवसिष्ठस्मरणात् यज्ञोपवीतधारणमपिवैकल्पिकमेव सशिखान्केशान्निकृंत्यविसृज्ययज्ञोपवीतमितिकाठकश्रुतिदर्शना

त् कुटुंबंपुत्रदारांश्चवेदांगानिचसर्वशः केशानूयज्ञोपवीतंचत्यक्त्वागूढश्चरेन्मुनिरितिबाष्कलस्मरणाच्च अथयज्ञोपवीतमप्सुजुहोतिभूः स्वाहेति अथदंडमादत्तेसखेमांगोपायेतिपरिशिष्टदर्शनाच्च यद्यशक्तिस्तदाकंथापियात्प्रा काषायीमुंडस्त्रिदंडीकमंडलुपवित्रपादुका-सनकथामात्रइतिदेवलस्मरणात् शौचाद्यर्थंकमंडलुसहितश्चभवेत् एकारामःप्रव्रजितांतरेणासहायःसंन्यासिनीभिःस्त्रीभिश्च स्त्रीणांचैकइतिबौधायनेनस्त्रीणामपिप्रव्रज्यास्मरणात् तथाचदक्षः एकोभिक्षुर्यथोक्तश्च द्वावेवमिथुनंस्मृतं त्रयोग्रामःसमाख्यातऊर्ध्वंतुनगरायते राजवार्त्तादितेषांतुभिक्षावार्त्तापरस्परम् अपिपैशुन्यमात्सर्यंसन्निकर्षान्नसंशयइति परिव्रज्यपरिपूर्वोव्रजतिस्त्यागेवर्त्तते अतश्चाह

अप्रमत्तश्चरेद्भैक्ष्यंसायान्हेनाभिलक्षितः रहितेभिक्षुकैर्ग्रामेयात्रामात्रमलोलुपः ५९

ममाभिमानंतत्कृतंचलौकिकंकर्मनिचयंवैदिकंचनित्यकाम्यात्मकंसंत्यजेत् तदुक्तंमनुना सुखाभ्युदयिकंचैवनैःश्रेयसिकमेवच प्रवृत्तंचनिवृत्तंच द्विविधंकर्मवैदिकं इहवामुत्रवाकाम्यंप्रवृत्तंकर्मकीर्त्यते निष्कामंज्ञानपूर्वंतुनिवृत्तमुपदिश्यते यथोक्तान्यपिकर्माणिपरिहायद्विजोत्तमः आत्मज्ञानेशमेचस्याद्वेदाभ्यासेचयत्नवानिति अत्रवेदाभ्यासःप्रणवाभ्यासस्तत्रयत्नवान् भिक्षाप्रयोजनार्थंग्राममाश्रयेत्प्रविशेत् नपुनःसुखनिवासार्थं वर्षाकालेतुनदोषःऊर्ध्वंवार्षिकाभ्यांमासाभ्यांनैकस्थानवासीतिशंखस्मरणात् अशक्तोपुनर्मासचतुष्टयपर्यंतमपिस्थातव्यं नचिरमेकत्रवसेदन्यत्रवर्षाकालात् श्रावणादयश्चत्वारोमासावर्षाकालइतिदेवलस्मरणात् एकरात्रंवसेद्ग्रामेनगरेरात्रिपंचकं वर्षाभ्योन्यत्रवर्षासुमासांस्तुचतुरोवसेदितिकाण्व

स्मरणात् ५८ कथंभिक्षाटनंकार्यमित्यतआह अप्रमत्तोवाक्चक्षुरादिचापलरहितोभैक्ष्यंचरेत् वसिष्ठेनात्रविशेषोदर्शितः सप्तागाराण्य
संकल्पितानिचरेद्भैक्षमिति सायान्हेअन्हःपंचमेभागे तथाचमनुः विधूमेसन्नमुसलेव्यंगारेभुक्तवज्जने वृत्तेशरावसंपातेनित्यंभिक्षांयतिश्च
रेदिति तथा एककालंचरेद्भिक्षांप्रसज्येन्नतुविस्तरे भैक्ष्यप्रसक्तोहियतिर्विषयेष्वपिसज्जतीति अनभिलक्षितः ज्योतिर्विज्ञानोपदेशादिना-
अचिन्हितः नचोत्पातनिमित्ताभ्यांननक्षत्रांगविद्यया नानुशासनवादाभ्यांभिक्षांलिप्सेतकर्हिचिदितितेनोक्तत्वादिति यत्तुनर्वसिष्ठवचनं
ब्राह्मणकुलेवायल्लभेततद्भुंजीतसायंप्रातर्मांसवर्ज्यमिति तदशक्तविषयं भिक्षुकैर्भिक्षणशीलैः पाखंड्यादिभिर्वर्जितेग्रामे मनुनाचविशेषउ

यतिपात्राणिमृद्वेणुदार्वलाबुमयानिच सलिलंशुद्धिरेतेषांगोवालैश्चावघर्षणम् ६०

क्तः नतापसैर्ब्राह्मणैर्वावयोभिरपिवाश्वभिः आकीर्णंभिक्षुकैरन्यैरगारमुपसंव्रजेदिति यावताप्राणयात्रावर्त्तनंतावन्मात्रंभैक्ष्यंचरेत् तथा
चसंवर्त्तः अष्टौभिक्षाःसमादायमुनिःसप्तचपंचवा अद्भिःप्रक्षालिताःसर्वास्ततोश्नीयाच्चवाग्यतइति अलोलुपोमिष्टान्नव्यंजनादिष्वप्र
सक्तः ५९ भिक्षाचरणार्थंपात्रमाह मृदादिप्रकृतिकानियतीनांपात्राणिभवेयुः तेषांसलिलंगोवालावघर्षणंचशुद्धिसाधनं इयंचशु-
द्धिर्भिक्षाचरणप्रयोगांगभूतानामेध्याद्युपहतविषया तदुपघातेद्रव्यशुद्धिप्रकरणोक्तादृष्टव्या अतएवमनुना अतैजसानिपात्राणित

स्यस्युर्निर्व्रणानिच तेषामद्भिःस्मृतंशौचंचमसानामिवाध्वरइति चमसदृष्टांतोपादानेन प्रयोगिकीशुद्धिर्दर्शिता पात्रांतराभावेभोजनमपि तत्रैवकार्यम् तद्भैक्ष्यंगृहीत्वैकांतेतेनपात्रेणान्येनवातूष्णींमात्रयाभुंजीतेतिदेवलस्मरणात् ६० एवंभूतस्ययतेरात्मोपासनांगंनियमविषयमाह चक्षुरादींद्रियसमूहंरूपादिविषयेभ्यःसम्यङ्निरुद्ध्यविनिवर्त्त्यरागद्वेषौप्रियाप्रियविषयौप्रहायत्यक्त्वाचशब्दादीर्ष्यादीनपितथाभूतानामपकारेणभयमकुर्वन्शुद्धांतःकरणःसन्नद्वैतसाक्षात्कारेणामृतीभवतिमुक्तोभवति ६१ किंच विषयाभिलाषद्वेषजनितदोषकलुषितस्याशयस्यांतःकरणस्यशुद्धिःकल्मषक्षयःप्राणायामैःकर्त्तव्यः तस्याःशुद्धेरात्माद्वैतसाक्षात्काररूपज्ञानोत्पत्तिनिमित्तत्वात् एवं

संनिरुध्येंद्रियग्रामंरागद्वेषौप्रहायच भयंहित्वाचभूतानाममृतीभवतिद्विजः ६१ कर्त्तव्याशयशुद्धिस्तुभिक्षुकेणविशेषतः ज्ञानोत्पत्तिनिमित्तत्वात्स्वातंत्र्यकरणायच ६२

चसतिविषयासक्तितज्जनितदोषात्मकप्रतिबंधक्षयेसत्यात्मध्यानधारणादौस्वतंत्रोभवति तस्माद्भिक्षुकेणत्वेषाशुद्धिर्विशेषतोनुष्ठेया तस्यमोक्षप्रसाधनत्वात् मोक्षस्यच-शुद्धांतःकरणतामंतरेणदुर्लभत्वात् यथाहमनुः दह्यंतेध्मायमानानांधातूनांहियथामलाः तथेंद्रियाणांदह्यंतेदोषाःप्राणस्यनिग्रहादिति ६२

इंद्रियनिरोधोपायतयासंसारस्वरूपनिरूपणमाह वैराग्यसिद्ध्यर्थंमूत्रपुरीषादिपूर्णनानाविधगर्भवासाअवेक्षणीयाः पर्यालोचनीयाः च शब्दाज्जननोपरमावपि तथानिषिद्धाचरणादिक्रियाजन्यामहारौरवादिनिरयपतनरूपागतयः तथाधयोमनःपीडाः व्याधयश्चज्वराति साराद्याःशारीराःक्लेशाः अविद्यास्मितरागद्वेषाभिनिवेशाःपंच जरावलितपलिताद्यभिभवः रूपविपर्ययः पंगुकुब्जत्वादिनाप्राक्तनस्य रूपस्यान्यथाभावः तथाश्वसूकरखरोरगाद्यनेकजातिषुभवउत्पत्तिः तथाइष्टस्याप्राप्तिः अनिष्टस्यप्राप्तिरित्यादिबहुतरक्लेशावहंसंसार

अवेक्ष्यागर्भवासाश्चकर्मजागतयस्तथा आधयोव्याधयःक्लेशाजरारूपविपर्ययः ६३
भवोजानिसहस्रेषुप्रियाप्रियविपर्ययः ध्यानयोगेनसंपश्येत्सूक्ष्मआत्मात्मनिस्थितः ६४

स्वरूपंपर्यालोच्यतत्परिहारार्थमात्मज्ञानोपायभूतेंद्रियजयेप्रवर्त्तेत एवमवेक्ष्यानंतरंकिंकार्यमित्यतआह योगश्चित्तवृत्तिनिरोधः आ-
त्मैकाग्रताध्यानम् तस्याएवबाह्यविषयस्योपरमः ध्यानयोगेननिदिध्यासनापरपर्यायेण सूक्ष्मशरीरप्राणादिव्यतिरिक्तक्षेत्रज्ञःआत्म
निब्रह्मण्यवस्थितः इत्येवंतत्त्वंपदार्थयोरभेदंसम्यक्पश्येत् अपरोक्षीकुर्यात् अतएवश्रुतोआत्माद्रष्टव्यइतिसाक्षात्काररूपंदर्शनम-
नूद्यतत्साधनत्वेनश्रोतव्योमंतव्योनिदिध्यासितव्यइतिश्रवणमनननिदिध्यासनानिविहितानि ६३ ६४ ७ ७

किंच प्राक्तनश्लोकोक्तात्मोपासनाख्ये धर्मेनाश्रमोदंडकमंडल्वादिधारणं कारणं यस्मादसौक्रियमाणोभवेदेवनातिदुष्करः तस्माद्यदा-
त्मनोपथ्यमुद्वेगकरं परुषभाषणादितत्परेषांनसमाचरेत् अनेनज्ञानोत्पत्तिहेतुभूतांतःकरणशुध्द्यापादनत्वेनांतरंगत्वात् रागद्वेषप्रहाण-
स्यप्रधानत्वेनप्रशंसार्थमाश्रमनिराकरणम् नपुनस्तत्परित्यागाय तस्यापिविहितत्वात् तदुक्तंमनुना भूषितोपिचरेद्धर्मंयत्रतत्राश्रमेव
सन् मनःसर्वेषुभूतेषुनलिंगंधर्मकारणमिति ६५ किंच सत्यंयथार्थप्रियवचनम् अस्तेयंपरद्रव्यानपहारः अक्रोधोपकारिण्यपिक्रोध

नाश्रमःकारणंधर्मेक्रियमाणोभवेद्धिसः अतोयदात्मनोपथ्यंपरेषांनतदाचरेत् ६५
सत्यमस्तेयमक्रोधोन्हीःशौचंधीर्धृतिर्दमः संयतेंद्रियताविद्याधर्मःसर्वउदाहृतः ६६

स्यानुत्पादनम् न्हीर्लज्जा शौचमाहारादिशुद्धिः धीर्हिताहितविवेकः धृतिरिष्टवियोगानिष्टप्राप्तौप्रचलितचित्तस्ययथापूर्वमवस्थापनम्
दमोमदत्यागः संयतेंद्रियता अप्रतिषिद्धेष्वपिविषयेषुअनतिप्रसंगः विद्याआत्मज्ञानम् एतैःसत्यादिभिरनुष्ठितैःसर्वोधर्मोनुष्ठितोभव-
ति अनेनदंडकमंडल्वादिधारणस्यबाह्यलक्षणात्सत्यादीनामात्मगुणानामंतरंगतांद्योतयति ६६ ६७ ६७ ६७

ननुध्यानयोगेनात्मनिस्थितमात्मानंपश्येदित्युक्तंजीवपरमात्मनोर्भेदाभावादित्यतआह यद्यपिजीवपरमात्मनोःपारमार्थिकोभेदोनास्ति
तथाप्यात्मनःसकाशादविद्योपाधिभेदभिन्नतयाजीवात्मानःप्रभवंतिहियस्मात् तस्माद्युज्यतएवजीवपरमात्मनोर्भेदव्यपदेशः तथाहित
प्ताल्लोहपिंडादयोगोलकाद्विस्फुलिंगकास्तेजोवयवानिःसरंति निःसृताश्चस्फुलिंगव्यपदेशंलभंतेतद्वत् अतउपपन्नमात्मनिस्थितोद्रष्टव्य
इति यद्वायमर्थः ननुसुषुप्तिसमये प्रलयेचसकलक्षेत्रज्ञानां ब्रह्मणिप्रलीनत्वात् कस्यायमात्मोपासनाविधिरित्यतआह निःसरंतीत्यादि

निःसरंतियथालोहपिंडात्तप्तात्स्फुलिंगकाः सकाशादात्मनस्तद्वदात्मानःप्रभवंतिहि ६७
नत्रात्माहिस्वयंकिंचित्कर्मकिंचित्स्वभावतः करोतिकिंचिदभ्यासाद्धर्माधर्मोभयात्मकं ६८

यद्यपिसूक्ष्मरूपेण प्रलयवेलायां प्रलीनास्तथाप्यात्मनःसकाशादविद्योपाधिभेदभिन्नतयाजीवात्मानःप्रभवंति पुनःकर्मवशात्स्थूलश
रीराभिमानिनोजायंते तस्मान्नोपासनाविधिविरोधः तैजसस्यपृथग्भावसाम्याल्लोहपिंडदृष्टांतः ६७ ननुचानुपात्तवपुषांक्षेत्रज्ञानांनिष्प
रिस्पंदतयाकर्माभावात्कथंतन्निबंधनोजरायुजांडजादिचतुर्विधदेहपरिग्रहइत्यतआह यद्यपितस्यामवस्थायांपरिस्पंदात्मकक्रियाभाव
स्तथापिधर्माधर्माध्यवसायात्मकंकर्ममानसंभवत्येव तस्यचविशिष्टशरीरग्रहणहेतुत्वमस्त्येव वाचिकैःपक्षिमृगतामानसैरंत्यजाति

तामितिमनुस्मरणात् एवंगृहीतवपुःस्वयमेवान्वयव्यतिरेकनिरपेक्षःस्तन्यपानादिके कृतेतृप्तिर्भवत्यकृतेनभवतीत्येवंरूपोयावन्वय
व्यतिरेकौतत्रनिरपेक्षा प्राग्भवीयानुभवभावितभावनानुभावोद्भूतकार्यावबोधः किंचित्स्तन्यपानादिकंकरोतिकिंचित्स्वभावतोयदृ-
च्छयाप्रयोजनाभिसंधिनिरपेक्षःपिपीलिकादिभक्षणंकरोति किंचिद्भवांतराभ्यासवशाद्धर्माधर्मोभयरूपंकरोति तथाचस्मृत्यंतरम्
प्रतिजन्मयदभ्यस्तंदानमध्ययनंतपः तेनैवाभ्यासयोगेनतदेवाभ्यसतेपुनरिति एवंजीवानांकर्मवैचित्र्यात्कृतंजरायुजादिदेहवैचित्र्यं
युज्यतएव ६८ नन्वेवंसतिब्रह्मणएवकथंचिज्जीवव्यपदेश्यत्वात्तस्यचनित्यत्वादिधर्मत्वात्कथंविष्णुमित्रोजातइतिव्यवहारइत्याशंक्या

निमित्तमक्षरःकर्त्ताबोद्धाब्रह्मगुणीवशी अजःशरीरग्रहणात्सजातइतिकीर्त्यते ६९

ह सत्यमात्मासकलजगत्प्रपंचाविर्भावेऽविद्यासमावेशवशात्समवाय्यसमवायिनिमित्तमित्येवंस्वयमेवत्रिविधमपिकारणंनपुनःका
र्यकोटिनिविष्टः यस्मादक्षरोऽविनश्वरः ननुसत्वादिगुणविकारस्यसुखदुःखमोहात्मकस्यकार्यभूतेजगत्प्रपंचेदर्शनात्तद्गुणवत्याःप्रकृ
तेरेवजगत्कर्तृतोचितानपुनर्निर्गुणस्यब्रह्मणः मैवंमंस्थाः आत्मैवकर्त्तायस्मादसौजीवोपभोग्यसुखदुःखहेतुभूतादृष्टादेर्बोद्धा नत्व
चेतनायाःप्रकृतेर्नामरूपव्याकृतविचित्रभोक्तृवर्गभोगानुकूलभोग्यभोगायतनादियोगिजगत्प्रपंचरचनाघटते तस्मादात्मैवकर्त्ता

तथासएवब्रह्मबृंहकोविस्तारकः नचासौनिर्गुणः यतस्तस्यत्रिगुणशक्तिरविद्याप्रकृतिप्रधानाद्यपरपर्यायाविद्यते अतःस्वतोनिर्गुणत्वेपि श-
क्तिमुखेनसत्वादिगुणयोगीकथ्यते नचैतावताप्रकृतेःकारणता यस्मादात्मैववशीस्वतंत्रोन प्रकृतिर्नामस्वतंत्रारंभकृत्त्वांतरंनाद्दग्विधत्ते प्रमा
णाभावात् नचवचनीयंशक्तिरूपापिसैवकर्तृभूतेति यतःशक्तिमत्कारकंनशक्तिस्तस्मादात्मैवजगतस्त्रिविधमपिकारणं तथाअजउत्पत्ति
रहितः अतस्तस्ययद्यपिसाक्षाज्जननंनोपपद्यतेतथापिशरीरग्रहणमात्रेणजातइत्युच्यते अवस्थांतरयोगितयोत्पत्तेः गृहस्थोजातइतिवत्

सर्गादौसयथाकाशंवायुंज्योतिर्जलंमहीम् सृजत्येकोत्तरगुणांस्तथादत्तेभवन्नपि ७०
आहुत्याप्यायतेसूर्यःसूर्याद्दृष्टिरथौषधिः तदन्नंरसरूपेणशुक्रत्वमधिगच्छति ७१

६९ शरीरग्रहणप्रकार

माह सृष्टिसमयेसपरमात्मायथाकाशादीन् शब्दैकगुणंगगनम् शब्दस्पर्शगुणःपवनः शब्दस्पर्शरूपगुणंतेजः शब्दस्पर्शरूपरसवदुद
कम् शब्दस्पर्शरूपरसगंधगुणाजगतीत्येवमेकोत्तरगुणान्सृजति तथात्माजीवभावमापन्नोभवन्नुत्पद्यमानोपिस्वशरीरस्यारंभकत्वेना
पितानुपादत्तेगृण्हाति ७० कथंशरीरारंभकत्वंपृथिव्यादीनामित्यतआह यजमानैःप्रक्षिप्तयाहुत्यापुरोडाशादिरसेनाप्यायतेसूर्यः सूर्या-
च्चकालवशेनपरिपक्वाज्यादिहविरसाद्दृष्टिर्भवति ततोव्रीह्याद्यौषधिरूपमन्नम् तच्चान्नंसेवितंसत्रसरुधिरादिक्रमेणशुक्रशोणितभावमा
पद्यते ७१ ७

ततः किमित्यत आह ऋतुवेलायां स्त्रीपुंसयोर्योगे शुक्रं च शोणितं च शुक्रशोणिते तस्मिन्परस्परसंयुक्ते विशुद्धे वातपित्तश्लेष्मदुष्टग्रंथिपूयक्षीणमूत्रपुरीषगंधरेतांस्यबीजानीति स्मृत्यंतरोक्तदोषरहिते स्थिता पंचधातून् पृथिव्यादिपंचमहाभूतानि शरीरारंभकतया स्वयं षष्ठश्चिद्धातुरात्मा प्रभुःशरीरारंभकरणेऽदृष्टकर्मयोगितया समर्थो युगपदादत्ते भोगायतनत्वेन स्वीकरोति तथा च शारीरके स्त्रीपुंसयोगे योनौ रजसाभिसंसृष्टं शुक्रं तत्क्षणमेव सह भूतात्मना गुणैश्च सत्वरजस्तमोभिः सह वायुना प्रेर्यमाणं गर्भाशये निष्ठतीति ७२ किंच इंद्रियाणि ज्ञानकर्मेंद्रियाणि वक्ष्यमाणानि

स्त्रीपुंसयोस्तु संयोगे विशुद्धे शुक्रशोणिते पंचधातून्स्वयं षष्ठ आदत्ते युगपत्प्रभुः ७२ इंद्रियाणि मनः प्राणो ज्ञानमायुः सुखं धृतिः धारणा प्रेरणं दुःखमिच्छाहंकार एव च ७३ प्रयत्न आकृतिर्वर्णः स्वरद्वेषौ भवाभवौ तस्यैतदात्मजं सर्वमनादेरादिमिच्छतः ७४

मनश्चोभयसाधारणम् प्राणोपानो व्यान उदानः समान इत्येवं पंचवृत्तिभेदभिन्नः शारीरो वायुः प्राणः ज्ञानमवगमः आयुः कालविशेषावच्छिन्नं जीवनम् सुखं निर्वृतिः धृतिश्चित्तस्थैर्यम् धारणा प्रज्ञामेधा च प्रेरणं ज्ञानकर्मेंद्रियाणामधिनिष्ठातृत्वम् दुःखमुद्वेगः इच्छा स्पृहा अहंकारोऽहंकृतिः प्रयत्नः कृतिः आकृतिराकारः वर्णो गौरिमादिः स्वरः षड्जगांधारादिः द्वेषो वैरम् भवः पुत्रपश्वादिविभवः अभवस्तद्विपर्ययः तस्यानादेरात्मनो नित्यस्यादिमिच्छतः शरीरं जिघृक्षमाणस्य सर्वमेतदिंद्रियादिकमात्मजनितं प्राग्भवीयकर्मबीजजन्यमित्यर्थः ७३ ७४

संयुक्तशुक्रशोणितस्य कायरूपपरिणतौक्रममाह असौचेतनःषष्ठोधातुःधातुविमूर्च्छितःधातुषुपृथिव्यादिषुविमूर्च्छितोलोलीभूतः क्षीर
नीरवदेकीभूतइतियावत् प्रथमेगर्भमासेसंक्लेदभूतोद्रवरूपतांप्राप्तएवावतिष्ठते नकठिनतयापरिणमते द्वितीयेतुमास्यर्बुदमीषत्कठिनमां
सपिंडरूपंभवति अयमभिप्रायः कौष्ठ्यपवनजठरदहनाभ्यांप्रतिदिनमीषदीषच्छोष्यमाणंशुक्रसंपर्कात् द्रवीभूतभूतजातंत्रिंशद्भिर्दिनैः-
काठिन्यमापद्यतइति तथाचसुश्रुते द्वितीयेशीतोष्णानिलैरभिपच्यमानोभूतसंघातोघनोजायतइति तृतीयेतुमास्यंगैरिंद्रियैश्चसंयुक्तो

प्रथमेमासिसंक्लेदभूतोधातुविमूर्च्छितः मास्यर्बुदंद्वितीयेतु तृतीयेंगेंद्रियैर्युतः ७५ आकाशाल्लाघवंसौक्ष्म्यंश-
ब्दंश्रोत्रंबलादिकम् वायोश्चस्पर्शनंचेष्टांव्यूहनंरौक्ष्यमेवच ७६ पित्तात्तुदर्शनंपक्तिमौष्ण्यंरूपंप्रकाशिताम् रसा
त्तुरसनंशैत्यंस्नेहंक्लेदंसमार्दवम् ७७ भूमेर्गंधंतथाघ्राणंगौरवंमूर्त्तिमेवच आत्मागृण्हात्यजःसर्वंतृतीयेस्पंद
तेनतः ७८

भवति ७५ किंच आत्मागृण्हातीतिसर्वत्रसंबध्यते गगनाल्लघिमानंलंघनक्रियोपयोगिनम् सौक्ष्म्यंसूक्ष्मोक्षि
त्वं शब्दंविषयं श्रोत्रंश्रवणेंद्रियम् बलंदार्ढ्यं आदिग्रहणात्सुषिरत्वंविविक्ततांच आकाशाच्छब्दंश्रोत्रंचविविक्ततांसर्वच्छिद्रसमूहं-
श्चेतिगर्भोपनिषद्दर्शनात् पवनात्स्पर्शनेंद्रियम् चेष्टांगमनागमनादिकाम् व्यूहनमंगानांविविधंप्रसारणम् रौक्ष्यंकर्कशत्वं चशब्दा-

त्स्पर्शंच पित्तात्तेजसो दर्शनंचक्षुरिंद्रियम् पक्तिंभुक्तस्यान्नस्यपचनम् औष्ण्यमुष्णस्पर्शत्वमंगानां रूपंश्यामिकादि प्रकाशितांभ्रा
जिष्णुताम् तथासंतापामर्षादिंच शौर्यमिमर्षरौक्ष्यापत्त्यौष्ण्यभ्राजिष्णुतासंतापवर्णरूपेंद्रियाणितैजसानीतिगर्भोपनिषद्दर्शनात् एवं
रसादुदकाद्रसनेंद्रियम् शैत्यमंगानांस्निग्धतां मृदुलत्वं हितंक्लेदमार्द्रताम् तथाभूमेर्गंधंघ्राणेंद्रियं गरिमाणंमूर्त्तिंच सर्वमेतत्सरमा
र्थतोजन्मरहितोप्यात्मातृतीयेमासिगृण्हाति ततश्चतुर्थेमासिस्पंदतेचलति तथाशारीरके तस्माच्चतुर्थेमासिचलनादावभिप्रायंक-
रोति ७६ ७७ ७८ किंच गर्भस्यैकंत्हृदयंगर्भिण्याश्चापरमित्येवंद्विहृदया तस्याःस्त्रियायदभिलषितंतत्दौर्हृदं तस्याप्रदानेनग-

दौर्हृदस्याप्रदानेनगर्भोदोषमवाप्नुयात् वैरूप्यंमरणंवापितस्मात्कार्यंप्रियंस्त्रियाः ७९

र्भोविरूपतांमरणरूपंवादोषंप्राप्नोति तस्मात्तद्दोषपरिहारार्थंचगर्भिण्याःस्त्रियाःयत्प्रियमभिलषितंतत्संपादनीयम् तथाचसुश्रुते द्वि
हृदयांनारींदौर्हृदिनीमाचक्षते तदभिलषितंदद्यात् वीर्यवंतंचिरायुषंपुत्रंजनयतीति तथाचव्यायामादिकमपिगर्भग्रहणप्रभृतितयापरि-
हरणीयं ततःप्रभृतिव्यायामव्यवायातितर्पणदिवास्वप्नरात्रिजागरणशोकभययानारोहणवेगधारणाकुक्कुटासनशोणितमोक्षणानिपरिहरे-
दितितत्रैवाभिधानात् गर्भग्रहणंचश्रमादिभिर्लिंगैरवगंतव्यम् सद्योगृहीतगर्भायाःश्रमोग्लानिःपिपासासक्थिसदनंशुक्रशोणितयोरवबं
धःस्फुरणंचयोनेरित्यादितत्रैवोक्तं ७९

किंच तृतीयेमासिप्रादुर्भूतस्यांगसंघस्यचतुर्थेमासिस्थैर्यंस्थेमाभवति पंचमेलोहितस्योद्भवउत्पत्तिः तथाषष्ठेबलस्यवर्णस्यकररुह
रोम्णांचसंभवः ॰० किंच असौपूर्वोक्तोगर्भःसप्तमेमासिमनसाचेतसाचेतनयाचयुक्तोनाडीभिर्वायुवाहिनीभिःस्नायुभिरस्थिबंधनैः
शिराभिर्वातपित्तश्लेष्मवाहिनीभिश्चसंयुतः तथाष्टमेमासित्वचामांसेनस्मृत्याचयुक्तोभवति ॰१ किंच तस्याष्टममासिकस्यगर्भ
स्यौजःकश्चनगुणविशेषोधात्रीगर्भंचप्रतिपुनःपुनरनितरांचंचलतयाशीघ्रंगच्छति अतोष्टमेमासिजातोगर्भःप्राणैर्वियुज्यते अने

स्थैर्यंचतुर्थेत्वंगानांपंचमेशोणितोद्भवः षष्ठेबलस्यवर्णस्यनखरोम्णांचसंभवः ॰० मनश्चैतन्ययुक्तोसौनाडी
स्नायुशिरायुतः सप्तमेचाष्टमेचैवत्वङ्मांसस्मृतिमानपि ॰१ पुनर्धात्रींपुनर्गर्भमोजस्तस्यप्रधावति अष्टमेमा
स्यतोगर्भोजातःप्राणैर्वियुज्यते॰२ नवमेदशमेवापिप्रबलैःसूतिमारुतैः निःसार्यतेबाणइवयंत्रच्छिद्रेणस-
ज्वरः ॰३

नोजःस्थितिरेवजीवनहेतुरितिदर्शयति ओजःस्वरूपंचस्मृत्यंतरेदर्शितम् हृदितिष्ठतियच्छुद्धमीषदुष्णंसपीतकम्
ओजःशरीरेसंख्यातंतन्नाशान्नाशमृच्छतीति ॰२ किंच एवंकरचरणचक्षुरादिपरिपूर्णांगेंद्रियोनवमेदशमेवापिमासे अपिशब्दात्स
कृसप्तमेष्टमेवाअत्यायासादिदोषवत्प्रबलसूतिहेतुप्रभंजनप्रेरितःस्नाय्वस्थिचर्मादिनिर्मितवपुर्यंत्रस्यछिद्रेणसूक्ष्मसुषिरेणस-

ज्वरोदुःसहदुःखाभिभूयमानोनिःसार्यते धनुर्यंत्रेणसुधन्वप्रेरितोबाणइवातिवेगेननिर्गमसमनंतरंच बाह्यपवनस्पृष्टेनष्टप्राचीन-
स्मृतिर्भवति जातःसवायुनास्पृष्टेनस्मरतिपूर्वजन्ममरणकर्मचशुभाशुभमितिनिरुक्तस्याष्टादशोभिधानात् ॥८३॥ कायस्वरूपंविवृणव
न्नाह तस्यात्मनोयानिजरायुजांडजशरीराणितानिप्रत्येकंषट्प्रकाराणिरक्तादिषड्धातुपरिपाकहेतुभूतषडग्निस्थानयोगित्वेन तथा
त्यन्नरसोजाठराग्निनापच्यमानोरक्ततांप्रतिपद्यते रक्तंचस्वकोशस्थेनाग्निनापच्यमानंमांसत्वम् मांसंचस्वकोशानलपरिपक्वंमेदस्त्वं
मेदोपिस्वकोशवन्हिनापक्वमस्थितां अस्थ्यपिस्वकोशशिखिपरिपक्वंमज्जात्वं मज्जापिस्वकोशपावकपरिपच्यमानश्चरमधातुतया-

तस्यषोढाशरीराणिषट्त्वचोधारयंतिच षडंगानितथास्थ्नांचसहषष्ट्याशतत्रयम् ॥८४॥

परिणमते चरमधातोस्तुपरिणतिर्नास्तीति सएवात्मनःप्रथमःकोशइत्येवंषट्कोशाग्नियोगित्वात्षट्प्रकारत्वंशरीराणाम् अन्नरसरूपस्य
तुप्रथमधातोरनियतत्वान्नतेनप्रकारांतरत्वम् तानिचशरीराणिषट्त्वचोधारयंति रक्तमांसमेदोस्थिमज्जाशुक्राख्याःषड्धातवएवप्रभास्त-
मत्वगिवबाह्याभ्यंतररूपेणास्थिताः त्वगिवाच्छादकत्वात्त्वचस्ताःषट्त्वचोधारयंति तदिदमायुर्वेदप्रसिद्धं तथांगानिचषडेव करयुगंच
रणयुगुलमुत्तमांगंगात्रमिति अस्थ्नांतुषष्टिसहितंशतत्रयमुपरितनषट्श्लोक्यावक्ष्यमाणमवगंतव्यम् ॥८४॥ ६९ ६९

किंच स्थालानिदंतमूलप्रदेशस्थान्यस्थीनि द्वात्रिंशत्तैः सह द्वात्रिंशद्दंताश्चतुःषष्टिर्भवंति नखाःकरचरणरुहा विंशतिः हस्तपादस्थानिश
लाकाकाराण्यस्थीनि मणिबंधस्योपरिवर्त्तीनि अंगुलिमूलस्थानि विंशतिरेव तेषां नखानां शलाकास्थ्नां च स्थानचतुष्टयं द्वौ चरणौ करौ चेत्ये
वमस्थ्नां चतुरुत्तरशतम् ८५ किंच विंशतिरंगुलयस्तासां एकैकस्यास्त्रीणि त्रीणीत्येवमंगुलिसंबंधान्यस्थीनि षष्टिर्भवंति पादयोःपार्श्विमौ

स्थालैः सह चतुःषष्टिर्दंता वै विंशतिर्नखाः पाणिपादशलाकाश्च तेषां स्थानचतुष्टयम् ८५ ष
ष्ट्यंगुलीनां द्वे पार्ष्ण्योर्गुल्फेषु च चतुष्टयम् चत्वार्यरत्निकास्थीनि जंघयोस्तावदेव तु ८६ द्वे
द्वे जानुकपोलोरुफलकांससमुद्भवे अक्षतालूषकश्रोणीफलके च विनिर्दिशेत् ८७

भागौ पार्ष्णी तयोरस्थिनी द्वे

एकैकस्मिन्पादे गुल्फौ द्वावित्येवं चतुर्षु गुल्फेषु चत्वार्यस्थीनि बाह्वोररत्निप्रमाणानि च चत्वार्यस्थीनि जंघयोस्तावदेव चत्वार्येवेत्येवं चतुःसप्ततिः
८६ किंच जंघोरुसंधिर्जानुः कपोलो गल्लः ऊरुः सक्थि तत्फलकं अंसो भुजशिरः अक्षः कर्णनेत्रयोर्मध्ये शंखादधोभागः तालूषकं का
कुदं श्रोणीककुद्मती तत्फलकं तेषामेकैकत्रास्थीनि द्वे द्वे विनिर्दिशेदित्येवं चतुर्दशास्थीनि भवंति ८७ ७ ७ ७

किंच गुदास्थ्येकं पृष्ठे पश्चिमभागे पंचचत्वारिंशदस्थीनि भवंति ग्रीवाकंधरा सा पंचदशास्थी स्यात् वक्षोंसयोः संधिर्जत्रुः प्रतिजत्रुं एकैकं
हनुश्चिबुकं तत्राप्येकमस्थीत्सेवंचतुःषष्टिः ८८ किंच तस्य हनोर्मूले स्थिनी द्वे ललाटं भालं अक्षिचक्षुः गंडः कपोलाक्षयोर्मध्यप्रदेशः तेषां
समाहारो ललाटाक्षिगंडं तत्र प्रत्येकमस्थियुगुलं नासा घनसंज्ञास्थिमती पार्श्वकाः कक्षाधःप्रदेशसंबंधान्यस्थीनि तदाधारभूतानि स्था
लकानि तैः स्थालकैः अर्बुदैश्चास्थिविशषैः सह पार्श्वका द्विसप्ततिः पूर्वोक्तैश्च नवभिः सार्धमेकाशीतिर्भवंति ९० किंच भ्रूकर्णयोर्मध्य-

भगास्थ्येकं तथा पृष्ठे चत्वारिंशच्च पंच च ग्रीवा पंचदशास्थी स्याज्जत्र्वेकैकं तथा हनुः ८८ तन्मूले द्वे ललाटाक्षिगंडे नासा घ
नास्थिका पार्श्वकाः स्थालकैः सार्द्धमर्बुदैश्च द्विसप्ततिः ८९ द्वौ शंखकौ कपालानि चत्वारि शिरसस्तथा उरः सप्तदशा-
स्थीनि पुरुषस्यास्थिसंग्रहः ९० गंधरूपरसस्पर्शशब्दाश्च विषयाः स्मृताः नासिकालोचने जिह्वा त्वक्श्रोत्रं चेंद्रियाणि च ९१

प्रदेशावस्थिविशेषौ शंखकौ शिरसः संबंधीनि चत्वारि कपालानि उरो वक्षस्तत्सप्तदशास्थिकं इत्येवं त्रयोविंशतिः पूर्वोक्तैश्च सह षष्ट्यधिकं
शतत्रयमित्येवं पुरुषस्यास्थिसंग्रहः कथितः ९० सविषयाणि ज्ञानेंद्रियाण्याह एते गंधादयो विषयाः पुरुषस्य बंधनहेतवः विषयशब्दस्य-
षिञ् बंधने इत्यस्य धातोर्व्युत्पन्नत्वात् एतैश्च गंधादिभिर्बोध्यत्वेन व्यवस्थितैः स्वस्वगोचरसंवित्साधनतयानुमेयानि घ्राणादिपंचेंद्रियाणि भवंति ९१

कर्मेंद्रियाणिदर्शयितुमाह हस्तौप्रसिद्धौ पायुर्गुदंउपस्थंरतिसंपाद्यसुखसाधनं जिह्वाप्रसिद्धा पादौच एतानिहस्तादीनिपंचकर्मेंद्रियाणि आदाननिर्हारानंदव्याहारविहारादिकर्मसाधनानिजानीयात् मनोंतःकरणंयुगपत्ज्ञानानुत्पत्तिगम्यं तच्चबुद्धिकर्मेंद्रियसहकारितयो भयात्मकं ९२ प्राणायतनानिदर्शयितुमाह नाभिप्रभृतीनिदशप्राणस्यस्थानानि समाननाम्नःपवनस्यसकलांगचारित्वेपिनाभ्यादिस्थानवि शेषवाचोयुक्तिःप्राचुर्याभिप्राया ९३ प्राणायतनानिप्रपंचयितुमाह वपाप्रसिद्धा वसामांसस्नेहः नाभिःप्रसिद्धा अवहननंफुफुसः प्लीहा

हस्तौपायुरुपस्थंचजिह्वापादौचपंचवै कर्मेंद्रियाणिजानीयान्मनश्चैवोभयात्मकम् ९२ नाभिरोजोगुदंशुक्रंशोणितंशंख कौतथा मूर्धांसकंठहृदयंप्राणस्यायतनानिच ९३ वपावसावहननंनाभिःक्लोमयकृत्प्लीहा क्षुद्रांत्रंवृक्कौबस्तिःपुरीषा धानमेवच ९४ आमाशयोथहृदयंस्थूलांत्रंगुदएवच उदरंचगुदौकोष्ठ्यौविस्तारोयमुदाहृतः ९५

आयुर्वेदप्रसिद्धा तौचमांसपिंडा- कारौस्तःसव्यकुक्षिगतो यकृत्कालिका क्लोममांसपिंडस्तौच दक्षिणकुक्षिगतौ क्षुद्रांत्रंन्हस्वांत्रं वृक्कौहृदयसमीपस्थौमांसपिंडौ बस्तिर्मूत्रा- शयः पुरीषाधानंपुरीषाशयः आमाशयोपक्वान्नस्थानं हृदयंहृत्पुंडरीकं स्थूलांत्रगुदोदराणिप्रसिद्धानि बाह्याद्गुदवलयादंतर्गुदवलयेद्वेतेच गुदौकोष्ठ्यौ कोष्ठेनाभेरधःप्रदेशेभवौ अयंचप्राणायतनस्यविस्तारउक्तः पूर्वश्लोकेतुसंक्षेपः अतएवपूर्वश्लोकोक्तानांकेषांचिदिहपाठः ९४ ९५

पुनः प्राणायतनप्रपंचार्थमाह कनीनिकेअक्षितारे अक्षिनासिकयोःसंधीअक्षिकूटे शाष्कुलीकर्णशष्कुली कर्णपत्रकौकर्णपाल्यौ कर्णौप्रसिद्धौ दंतवेष्टौ दंतपाल्यौ ओष्ठौप्रसिद्धौ ककुंदरेजघनकूपकौ वंक्षणौजघनोरुसंधी वृक्कौपूर्वोक्तौ स्तनौचश्लेष्मसंघातौ उपजिव्हाघंटिका स्फिजौ कटिप्रोथौ बाहूप्रसिद्धौ जंघोरुषुचपिंडिका जंघयोरूर्वोश्चपिंडिकामांसलप्रदेशः गलशुंडिके हनुमूलगल्लयोःसंधी शीर्षंशिरः अवटः

कनीनकेचाक्षिकूटेशष्कुलीकर्णपत्रकौ कर्णौशंखौभ्रुवौदंतवेष्टावोष्ठौककुंदरे ९६ वंक्षणौवृषणौवृक्कौश्लेष्मसंघा तजौस्तनौ उपजिव्हास्फिजौबाहूजंघोरुषुचपिंडिका ९७ तालूदरंबस्तिशीर्षंचिबुकेगलशुंडिके अवटश्चैवमेता निस्थानान्यत्रशरीरके ९८ अक्षिवर्णचतुष्कंचपद्धस्तहृदयानिच नवच्छिद्राणितान्येवप्राणस्यायतनानितु ९९

शरीरेयःकश्चननिम्नोदेशः कंठमूलकक्षादिः अवटुरितिपाठेकृकाटिका तथाक्ष्णोःकनीनिकयोःप्रत्येकंश्वेतंपार्श्वद्वयमितिवर्णचतुष्टयम् यद्वाअक्षिपुटचतुष्टयम् शेषंप्रसिद्धम् एवमेतानिकुत्सितेशरीरेस्थानानि तथाक्षियुगलम् कर्णयुग्मम् नासाविवरद्वयमास्यंपायुरु पस्थमेतानिपूर्वोक्तानिनवच्छिद्राणिचप्राणस्यायतनान्येव ९६ ९७ ९८ ९९ ७ ७ ७ ७

किंच शिरानाभिसंबंधाश्चत्वारिंशत्संख्याः वातपित्तश्लेष्मवाहिन्यः सकलकलेवरव्यापिन्यो नानाशाखिन्यः सत्यः सप्तशतसंख्या भवंति त-
थांगप्रत्यंगसंबंधिबंधनाः स्नायवो नवशतानि धमन्यो नाम नाभेरुद्भूताश्चतुर्विंशतिसंख्याः प्राणादिवायुवाहिन्यः शाखाभेदेन द्विशतं भव-
ति पेश्यः पुनः मांसलाकारा उरुपिंडिकाद्यंगप्रत्यंगसंधिसंबंधिन्यः पंचशतानि भवंति १०० पुनश्चासामेव शरीरादीनां शाखाप्राचुर्येण सं-

शिराः शतानि सप्तैव नव स्नायुशतानि च धमनीनां शते द्वे तु पंच पेशीशतानि च १०० एको
नत्रिंशल्लक्षाणि तथा नव शतानि च षट्पंचाशच्च जानीत शिराधमनिसंज्ञिताः १०१ त्र-
यो लक्षास्तु विज्ञेयाः श्मश्रुकेशाः शरीरिणाम् सप्तोत्तरं मर्मशतं द्वे च संधिशते तथा १०२

ख्यांतरमाह शिराधमन्यो मिलिताः शाखोपशाखाभेदेन एकोनत्रिंशल्लक्षाणि तथा च नवशतानि च षट्पंचाशच्च भवंतीत्येवं हे सामश्रव-
प्रभृतयो मुनयो जानीत १०१ किंच शरीरिणां श्मश्रूणि केशाश्च मिलिताः संतस्त्रयो लक्षा विज्ञेयाः मर्माणि मरणकराणि च स्थानानि तेषां स-
प्तोत्तरं शतं ज्ञेयम् अस्थ्नां तु द्वे संधिशते स्नायुशिरादिसंधयः पुनरनंताः १०२ ७ ७ ७ ७ ७

सकलशरीरस्थशिरादिसंख्यामाह पूर्वोदितशिराकेशादिसहितानांरोम्णांपरमाणवःसूक्ष्मसूक्ष्मतररूपाभागाःस्वेदस्रवणरूपैःसहच
तुःपंचाशत्कोट्यः तथासप्तोत्तरषष्टिर्लक्षाःसार्धाःपंचाशत्सहस्रसहिताःवायवीयैर्विभक्ताःपवनपरमाणुभिःपृथक्कृताविगण्यंते एतच्चशा
स्त्रदृष्ट्याभिहितं चक्षुरादिकरणपथगोचरत्वाभावात् अस्यार्थस्य इममतिगहनमर्थंशिरादिभावसंस्थानरूपंहेमुनयोभवतांमध्येयःकश्चि
द्वेत्तिसोपिमहान्अग्र्योबुद्धिमतां अतोयत्नतोबुद्धिमताबोद्धव्याभावसंस्थितिः १०३ १०४ शारीररसादिपरिमाणमाह सम्यक्परिण

रोम्णांकोट्यस्तुपंचाशच्चतस्रःकोट्यएवच सप्तषष्टिस्तथालक्षाःसार्धाःस्वेदायनैःसह १०३ वायवीयैर्विगण्यंतेविभक्ताः
परमाणवः यद्यप्येकोनुवेत्त्येषांभावानांचैवसंस्थितिम् १०४ रसस्यनवविज्ञेयाजलस्यांजलयोदश सूत्रेवतुपुरीष-
स्यरक्तस्याष्टौप्रकीर्त्तिताः १०५ षट्श्लेष्मापंचपित्तंचचत्वारोमूत्रमेवच वसात्रयोद्वौतुमेदोमज्जैकोर्धंतुमस्तके १०६
श्लेष्मौजसस्तावदेवरेतसस्तावदेवतु इत्येतदस्थिरंवर्ष्मयस्यमोक्षायकल्पसौ १०७

नाहाररसारोरसस्तस्यपरिमाणंनवांजल
यःपार्थिवपरमाणुसंश्लेषनिमित्तस्यजलस्यांजलयोदशविज्ञेयाः पुरीषस्यवर्चस्कस्यसप्तैव रक्तस्यजाठरानलपरिपाकापादितलौहित्यस्यान्न
रसस्याष्टावंजलयःप्रकीर्त्तिताः श्लेष्मणःकफस्यषडंजलयः पित्तस्यतेजसःपंच मूत्रस्योच्चारणस्यचत्वारः वसायामांसस्नेहस्यत्रयः मेदसो

मांसरसस्य द्वावंजली मज्जास्थिगतसुषिरगतस्त्वेकोंजलिः मस्तके पुनरर्धांजलिः श्लेष्मौजसः श्लेष्मसारस्य तथा रेतसश्चरमधातोस्ता
वदेवार्धांजलिरेव एतच्च समधातुपुरुषाभिप्रायेणोक्तं विषमधातोस्तु न नियमः वैलक्षण्याच्छरीराणामस्थायित्वात्तथैव च दोषधातुमलानां
च परिमाणं न विद्यते इत्यायुर्वेदस्मरणात् इतीदृशमस्थिस्नाय्वाद्यारब्धमेतदशुचिनिधानं वर्ष्मास्थिरमिति यस्य बुद्धिः स कृती पंडितो मोक्षा
य समर्थो भवति वैराग्य नित्यानित्यविवेकयोर्मोक्षोपायत्वात् अस्थिमूत्रपुरीषादिप्राचुर्यज्ञानस्य वैराग्यहेतुत्वात् अत एव व्यासः सर्वाशु
चिनिधानस्य कृतघ्नस्य विनाशिनः शरीरकस्यापि कृते मूढाः पापानि कुर्वते यदि नामास्य कायस्य यदंतस्तद्बहिर्भवेत् दंडमादाय लोकोयं शु

द्वासप्ततिसहस्राणि हृदयादभिनिःसृताः हिताहिता नाम नाड्यस्तासां मध्ये शशिप्रभम् १०८
मंडलं तस्य मध्यस्थ आत्मा दीप इवाचलः स ज्ञेयस्तं विदित्वेह पुनराजायते न तु १०९

नः काकांश्च वारयेदिति तस्मादीदृशकुत्सितशरीरस्यात्यंतिकविनिवृत्त्यर्थमात्मोपासने प्रयतितव्यम् १०५ १०६ १०७ उपासनीयस्वरूपमा
ह हृदयप्रदेशादभिनिःसृताः कदंबकुसुमकेसरवत्सर्वतो निर्गता हिताहितकरत्वेन हिताहितसंज्ञा द्वासप्ततिसहस्राणि नाड्यो भवंति अपरा
स्तिस्रो नाड्यस्तासामिडापिंगलाख्ये द्वे नाड्यौ सव्यदक्षिणपार्श्वगते तद्विपर्यस्तेनासाविवरसंबद्धे प्राणापानायतने सुषुम्नाख्या पुनस्तृतीया

दंडवन्मध्येब्रह्मरंध्रंविनिर्गतानांतासांनाडीनांमध्येमंडलंचंद्रप्रभंतस्मिन्नात्मानिर्वातस्यदीपइवाचलःप्रकाशमानआस्ते सएवंभूतोज्ञातव्यः तत्साक्षा त्करणादिहसंसारेनपुनःसंसरति अमृतत्वंप्राप्नोति १०८ १०९ किंच चित्तवृत्तेर्विषया तरतिरस्कारेणात्मनिस्थैर्यंयोगस्तत्प्राप्त्यर्थंबृहदार ण्यकारण्यमादित्याद्यन्मयाप्राप्तंतच्चज्ञातव्यम् तथायन्मयोक्तंयोगशास्त्रंतदपिज्ञातव्यम् ११० कथंपुनरसावात्माध्यातव्यइत्यतआह आ-

ज्ञेयंचारण्यकमहंयदादित्यादवाप्तवान् योगशास्त्रंचमत्प्रोक्तंज्ञेयंयोगमभीप्सता ११० अन
न्यविषयंकृत्वामनोबुद्धिस्मृतींद्रियम् ध्येयआत्मास्थितोयोसौहृदयेदीपवत्प्रभुः १११

त्मव्यतिरिक्तविषयेभ्योमनोबुद्धिस्मृतींद्रियाणिप्रत्याहृत्यआत्मैकविषयाणिकृत्वाआत्माध्येयः योसौप्रभुर्निवातस्थप्रदीपवद्दीप्यमानो निष्प्रकंपोहृदितिष्ठति एतदेवतस्यध्येयत्वम् यच्चित्तवृत्तिनिवृत्तेर्विविधविषयावभासतिरस्कारेणात्मप्रवणतानामशरावसंपुटनिरुद्ध प्रभाप्रतानप्रसरस्येवप्रदीपस्यैकनिष्ठत्वम् १११

यस्यपुनश्चित्तवृत्तिर्निराकारालंबनतयासमाधौनाभिरमतेतेनशब्दब्रह्मोपासनंकार्यमित्याह स्वाध्यायावगतमार्गानतिक्रमेणसामगायं
सामगानम् साम्नोगानात्मकत्वेपिगायमितिविशेषणमगीतमंत्रव्युदासार्थं अविच्युतमस्खलितंसावधानःसामाध्वन्यनुस्यूतात्मैकाग्र
चित्तवृत्तिःपठंस्तदभ्यासवशात्तत्रनिष्णातःशब्दाकारशून्योपासनेनपरंब्रह्माधिगच्छति तदुक्तं शब्दब्रह्मणिनिष्णातःपरंब्रह्माधिगच्छ
तीति ११२ यस्यपुनर्वैदिक्यांगानौचित्तंनाभिरमतेतेनलौकिकगीत्यनुस्यूतात्मोपासनंकार्यमित्याह अपरांतकोल्लोप्यमद्रकमकर्यौवेण

यथाविधानेनपठन्सामगायमविच्युतम् सावधानस्तदभ्यासात्परंब्रह्माधिगच्छति ११२
अपरांतकमुल्लोप्यंमद्रकंमकरीतथा औवेणकंसरोबिंदुमुत्तरंगीतकानिच ११३ ऋग्गा
थापाणिकादक्षविहिताब्रह्मगीतिका गेयमेतत्तदभ्यासकरणान्मोक्षसंज्ञितम् ११४

कानिसरोबिंदुसहितं
चोत्तरमित्येतानिप्रकरणाख्यानिसप्तगीतानि चशब्दादासारितवर्धमानतादिमहागीतानिगृह्यंते ऋग्गाथापाणिकादक्षविहितब्रह्मगीतिकाइत्येतद
परांतकादिगीतजातमध्यारोपितात्मभाववमोक्षसाधनत्वान्मोक्षसंज्ञितंमंतव्यम् तदभ्यासस्यैकाग्र्यतापादनद्वारेणात्मैकतापत्तिकारणत्वात्
११३ ११४

किंच भरतादिमुनिप्रतिपादितवीणावादनतत्त्ववेदी श्रूयतेइतिश्रुतिः द्वाविंशतिविधासप्तस्वरेषु तथाहि षड्जमध्यमपंचमाः प्रत्येकंचतुः
श्रुतयः ऋषभधैवतौ प्रत्येकंत्रिश्रुती गांधारनिषादौ प्रत्येकंद्विश्रुतीइति जातयस्तुषड्जाद्यःसप्तशुद्धाः संकरजातयस्त्वेकादशैत्येवमष्टाद
शविधास्तासुविशारदःप्रवीणः तालइतिगीतपरिमाणंकल्प्यते तत्स्वरूपश्चतदनुविद्ब्रह्मोपासनतयातालादिभंगभयाच्चित्तवृत्तेरात्मै-
काग्रतायाःसुकरत्वादल्पायासेनैवमुक्तिपथंनियच्छतिप्राप्नोति ११५ चित्तविक्षेपाद्यंतरायहतस्यगीतज्ञस्यफलांतरमाह गीतज्ञोय-

वीणावादनतत्त्वज्ञःश्रुतिजातिविशारदः तालज्ञश्चाप्रयासेनमोक्षमार्गंनियच्छति ११५ गी
तज्ञोयदियोगेननाप्नोतिपरमंपदम् रुद्रस्यानुचरोभूत्वातेनैवसहमोदते ११६ अनादि-
रात्माकथितस्तस्यादिस्तुशरीरकम् आत्मनस्तुजगत्सर्वंजगतश्चात्मसंभवः ११७

थाकथंचिद्योगेनपरमंपदंनाप्नोतितर्हिरुद्रस्यसचिवोभूत्वातेनैवसहमोदतेक्रीडति ११६ पूर्वोक्तमुपसंहरति प्रागुक्तरीत्याअनादिरात्मा-
क्षेत्रज्ञस्तस्यचशरीरग्रहणमेवादिरुद्भवःकथितः अजःशरीरग्रहणादित्यत्रपरमात्मनश्चसकाशात्पृथिव्यादिसकलभुवनोद्भवः तदुद्भूता
च्चपृथिव्यादिभूतसंघाताज्जीवनानांस्थूलशरीरतयासंभवश्चकथितः सर्गादौसयथाकाशमित्यादिना ११७ ॥ ॥ ॥

एतदेव प्रश्नपूर्वकं विवृणोति यदेतत्सकलसुरासुरमनुजादिसहितं जगत्तदात्मनः सकाशात्कथमुत्पन्नं आत्मा च तस्मिन् जगति कथं तिर्यङ्नर
सरीसृपादिशरीरभाग्भवतीत्येतस्मिन्नर्थे विमुह्यामः अतो मोहापनुत्त्यर्थमस्माकं विस्तरशो वदस्व ११८ एवं मुनिभिः पृष्टः प्रत्युत्तरमाह इह
जगति यदिदं स्थूलं कलेवरादावनात्मनि आत्माभिमानरूपं मोहजालं तदपास्य तद्व्यतिरिक्तोयः पुरुषोनेककरचरणलोचनः सूर्यवर्चा अनंतरश्मिः

कथमेतद्विमुह्यामः सदेवासुरमानवम् जगदुद्भूतमात्मा च कथं तस्मिन्वदस्व नः ११८ मो
हजालमपास्येह पुरुषो दृश्यते हि यः सहस्रकरपन्नेत्रः सूर्यवर्चाः सहस्रकः ११९ स आ
त्मा चैव यज्ञश्च विश्वरूपः प्रजापतिः विराजः सोन्नरूपेण यज्ञत्वमुपगच्छति १२०

सहस्रकः बहुशिरा दृश्यते
एतच्च तद्गोचरशक्त्याधारतयोच्यते तस्य साक्षात्कारादिसंबंधाभावात् स एवात्मा यज्ञः प्रजापतिश्च यतोसौ विश्वरूपः सर्वात्मकः वैश्व
रूप्यमेव कथमिति चेत् यस्मादसौ विराजः पुरोडाशाद्यन्नरूपेण यज्ञत्वमुपगच्छति यज्ञाच्च वृष्ट्यादिद्वारेण प्रजासृष्टिरित्येवं वैश्वरूप्यं ११९ १२०

एतदेव प्रपंचयति द्रव्यस्य च पुरोडाशादेर्देवतोद्देशेन त्यागाद्यो रसः अदृष्टरूप आत्मनः परिणत्यंतरमुत्तमः सकलजगज्जन्मबीजतयोत्कृष्ट
तमः संभूतः स देवान्संप्रदानकारकभूतान्सम्यक् प्रीणयित्वा यजमानं चाभिलषितफलेन संयोज्य पवनेन प्रेर्यमाणश्चंद्रमंडलं प्रतिनीयते
ततः शशिमंडलाद्रश्मिभिर्भानुमंडलम् सैषा त्रय्येव विद्या तपतीत्यभेदाभिधानात् ऋग्यजुःसाममयं प्रत्युपनीयते ततः स्वमंडलादसौ सू

योद्रव्यदेवतात्यागसंभूतो रस उत्तमः देवान्संतर्प्य स रसो यजमानं फलेन च १२१ संयोज्य वायुना सोमं नीयते रश्मिभिस्त
तः ऋग्यजुःसामविहितं सौरं धामोपनीयते १२२ स्वमंडलादसौ सूर्यः सृजत्यमृतमुत्तमम् यज्जन्म सर्वभूतानामश-
नानशनात्मनाम् १२३ तस्मादन्नात्पुनर्यज्ञः पुनरन्नं पुनः क्रतुः एवमेतदनाद्यंतं चक्रं संपरिवर्त्तते १२४

र्योऽमृतरसं वृष्टि
रूपमुत्तमं यत्सकलभूतानामशनानशनात्मनां चराचराणां जननिमित्तं तत्सृजति तस्माद्वृष्टिसंपादितौषधिमयादन्नजोत्पत्तिहेतोरन्नात्पुनर्यज्ञः य
ज्ञाच्च पूर्वाभिहितभंग्या पुनरन्नं अन्नाच्च पुनः क्रतुरित्येवमेतदखिलं संसारचक्रं प्रवाहरूपेणोत्पत्तिविनाशविरहितं सम्यक् परिवर्त्तत इत्यनेन क्रमे
णात्मनः सकाशादखिलजगदुत्पत्तिः तत्र चात्मनः स्वकर्मानुरूपविग्रहपरिग्रहः १२१ १२२ १२३ १२४ ७ ७ ७

ननुयद्यात्मनः संसरणमनाद्यंतंतर्हिअनिर्मुक्तिप्रसंगइत्यतआह यद्यप्यात्मनोनादित्वात्संभूतिर्नविद्यते अंतरात्मनःशरीरव्यापिनः तथापिपु
रुषःशरीरेणसमवायीभवति भोगायतनेसुखदुःखात्मकंभोग्यजातमुपभुंक्तेइत्येवंभूतेनसंबंधेनसंबंधीभवत्येव सचसमवायःसंबंधो
मोहेच्छाद्वेषजनितकर्मनिर्मितोयोन तुनिसर्गजातः तस्यकार्यत्वेनविनाशोपपत्तेर्नानिर्मुक्तिः १२५ आत्मनोजगज्जन्मेत्युक्तंतत्प्रपंचयितुमाह
योसौसकलजीवात्मकतयाप्रपंचकात्मकतयाचसहस्रात्माबहुरूपस्तथासकलजगद्धेतुतया आदिदेवोमयायुष्माकमुदाहृतः तस्यवदनभुज-

अनादिरात्मासंभूतिर्विद्यतेनांतरात्मनः समवायीतुपुरुषोमोहेच्छाद्वेषकर्मजः १२५ सहस्रात्मामयायोवआदिदेवउदाहृतः
मुखबाहूरुपज्जाःस्युस्तस्यवर्णायथाक्रमम् १२६ पृथिवीपादतस्तस्यशिरसोद्यौरजायत नस्तःप्राणादिशःश्रोत्रात्स्पर्शाद्वायु
मुखाच्छिखी १२७ मनसश्चंद्रमाजातश्चक्षुषश्चदिवाकरः जघनादंतरिक्षंचजगच्चसचराचरम् १२८ यद्येवंसकथं-
ब्रह्मन्पापयोनिषुजायते ईश्वरःसकथंभावैरनिष्टैःसंप्रयुज्यते १२९

सक्थिचरणजातायथाक्रममग्रजन्मादयश्चत्वारोवर्णास्तथातस्य
पादाद्भूमिर्मस्तकात्स्वरसद्म घ्राणात्प्राणाःकर्णात्ककुभः स्पर्शात्पवनोवदनाद्धुतवहः मनसःशशांकः नेत्रात्भानुः जघनाद्गगनंजंगमाजंगमात्म
कंजगच्च १२६ १२७ १२८ अत्रचोदयंति हेब्रह्मन्योगीश्वर यद्यात्मैकजीवादिभावभजतेतर्हिकथमसौपापयोनिषुमृगपक्ष्यादिषुजाय

ते अयमोहरागद्वेषादिदोषदुष्टत्वात्तज्जन्मेत्युच्यते तच्चन यस्मादीश्वरःस्वतंत्रः कथमनिष्टैर्मोहरागादिभावैःसंयुज्यते १२९ किंच त
थेदमप्यत्रदूषणम् मनःप्रभृतिज्ञानोपायैःसहितस्यापितस्यात्मनःपूर्वज्ञानंजन्मांतरानुभूतविषयंकस्मान्नोत्पद्यते तथासर्वप्राणिगतांवे
दनांसुखादिरूपांस्वयंसर्वज्ञोपिसर्वदेहगतोपिकस्मान्नवेत्ति तस्मादात्मैवेश्वरोजीवादिभावंभजतइत्युक्तम् १३० तत्रपूर्वचोद्यस्योत्तरमाह
यद्यपीश्वरःस्वरूपेणसत्यज्ञानानंदलक्षणः तथाप्यविद्यासमावेशवशान्मोहरागादिभावैरभिभूयमानोनानाहीनयोनिजननसाधनंमानसा

करणेनान्वितस्यापिपूर्वज्ञानंकथंचन वेत्तिसर्वगतांकस्मात्सर्वगोपिनवेदनाम् १३० अंत्यपक्षिस्था
वरतांमनोवाक्कायकर्मजैः दोषैःप्रयातिजीवोयंभवयोनिशतेषुच १३१ अनंताश्चयथाभावाःश
रीरेषुशरीरिणाम् रूपाण्यपितथैवेहसर्वयोनिषुदेहिनाम् १३२

दित्रिविधंकर्मनिचयमाचरति तेनचांत्यादि-
हीनयोनितामापद्यते अंत्याश्चंडालादयः पक्षिणःकाकादयः स्थावराःवृक्षादयः तेषांभावोंत्यपक्षिस्थावरतातांयथाक्रमेणमनोवाक्कायार
ब्धकर्मदोषैःजन्मसहस्रेष्वयंजीवःप्राप्नोति १३१ किंच शरीरिणांजीवानांशरीरेषुभावाअभिप्रायविशेषाः सत्वाद्युद्रेकतारतम्याद्यथान-
तास्तथातत्कार्याण्यपिरूपाणिकुब्जवामनत्वादीनिदेहिनांसर्वयोनिषुभवंति १३२ ७ ७ ७ ७

नंनुयज्ञादिकर्मजन्यानिकुष्ठत्वादीनितर्हिकर्मानंतरमेवतेर्भवितव्यमित्याशंक्याह केषांचिज्ज्योतिष्टोमादिकर्मणांविपाकःफलंप्रेत्यदेहांतरेभव
ति केषांचित्कारीर्यादिकर्मणांवृष्ट्यादिफलमिहैवभवति केषांचिच्चित्रादीनांफलंपश्वादिकमिहदेहांतरेवेत्यनियतम् नत्वनंतरमेवकर्मफ
लेनभवितव्यमितिशास्त्रार्थः अत्रचकर्मणांशुभाशुभफलजनकत्वेसत्वादिभावएवप्रयोजकभूतस्तदायत्तत्वात्फलतारतम्यस्य १३३
मनोवाक्कायकर्मजैरंत्यादियोनिनांप्राप्नोतीत्युक्तंतत्प्रपंचयितुमाह परधनानिकथमपहरेयमितिआभिमुख्येनध्यायंस्तथानिष्टानिब्रह्म

विपाकः कर्मणांप्रेत्यकेषांचिदिहजायते इहवामुत्रवैकेषांभावस्तत्रप्रयोजनम् १३३ प
रद्रव्याण्यभिध्यायंस्तथानिष्टानिचिंतयन् वितथाभिनिवेशीचजायतेंत्यासुयोनिषु १३४
पुरुषोनृतवादीचपिशुनःपुरुषस्तथा अनिबद्धप्रलापीचमृगपक्षिषुजायते १३५

हत्यादीनिहिंसात्मकानिकरिष्यामीतिचिंतयन् वितथेअसत्यभूतेवस्तुनिअभिनिवेशःपुनःपुनःसंकल्पःतद्वांश्चचंडालाद्यंत्ययोनिषुजाय
ते १३४ किंच यस्त्वनृतवदनशीलःपुरुषःपिशुनःकर्णेजपःपुरुषः परोद्वेगकरभाषी अनिबद्धप्रलापीप्रकृतासंगतार्थवादीच बुद्धि-
पूर्वाबुद्धिपूर्वहत्यादितारतम्याद्धीनोत्कृष्टेषुमृगपक्षिषुजायते १३५ ७ ७ ७ ७ ७

किंच अदत्तादाननिरतःपरधनापहारप्रसक्तः परदारप्रसक्तश्चाविहितमार्गेण प्राणिनां घातकश्चदोषगुरुलघुभावतारतम्यात्तरुलतापतानादिस्थावरे
षुजायते १३६ सत्वादिगुणपरिपाकमाह आत्मज्ञोविद्याधनाभिमानरहितः शौचवान्बाह्याभ्यंतरशौचयुक्तः दांतउपशमान्वितः तपस्वीकृच्छ्रा
दितपोयुक्तः तथेंद्रियार्थेष्वप्रसक्तः नित्यनैमित्तिकधर्मानुष्ठाननिरतः वेदार्थवेदीचयःससात्विकः सचसत्वोद्रेकतारतम्यवशादुत्कृष्टोत्कृष्टत
रसुरयोनितांप्राप्नोति १३७ किंच असत्कार्येषुतूर्यवादित्रनृत्यादिषभिरतोयस्तथाअधीरोव्यग्रचित्तःआरंभीसदाकार्याकुलोविषयेष्वति

अदत्तादाननिरतःपरदारोपसेवकः हिंसकश्चाविधानेनस्थावरेष्वभिजायते १३६ आत्मज्ञःशौचवान्दांतस्तपस्वीवि
जितेंद्रियः धर्मकृद्वेदविद्यावित्सात्विकोदेवयोनिताम् १३७ असत्कार्यरतोधीरआरंभीविषयीचयः सराजसोम
नुष्येषुमृतोजन्माधिगच्छति १३८ निद्रालुःक्रूरकृल्लुब्धोनास्तिकोयाचकस्तथा प्रमादवान्भिन्नवृत्तोभवेत्तिर्यक्षु
तामसः १३९

प्रसक्तश्चसरजोगुणयुक्तः तद्गुणतारतम्याद्धीनोत्कृष्टमनुष्यजातिषुमरणानंतरमुत्पत्तिंप्राप्नोति १३८ तथा
यःपुनर्निद्राशीलःप्राणिपीडाकरोलोभयुक्तश्च तथानास्तिकोधर्मादेर्निंदकः याचनशीलःप्रमादवान्कार्याकार्यविवेकशून्यःविरुद्धाचार
श्च असौतमोगुणयुक्तस्तत्तारतम्याद्धीनतरपश्वादियोनिषुजायते १३९ ७ ७ ७ ७ ७

पूर्वोक्तमुपसंहरति एवमविद्याविद्धोयमात्मारजस्तमोभ्यांसम्यगाविष्टइहसंसारेपर्यटन्नानाविधदुःखप्रदैर्भावैरभिभूतःपुनःपुनःसं
सारंदेहग्रहणंप्राप्नोति इतीश्वरःसकथंभावैरनिष्टैःसंप्रयुज्यतइतिअस्यचोद्यस्यनावकाशः १४० यदपिकरणैरन्वितस्यापीतिद्वितीयचो
द्यंतस्योत्तरमाह यद्यप्यात्माअंतःकरणादिज्ञानसाधनसंपन्नस्तथापिजन्मांतरानुभूतार्थावबोधेनसमर्थः अविपक्वकरणोरागादिमलाक्रां

रजसातमसाचैवंसमाविष्टोभ्रमन्निह भावैरनिष्टैःसंयुक्तःसंसारंप्रतिपद्यते १४० मलि
नोहियथादर्शोरूपालोकस्यनक्षमः तथाऽविपक्वकरणआत्मज्ञानस्यनक्षमः १४१ क
र्कंधूर्वारौयथापक्वेमधुरःसन्नरसोपिन प्राप्यतेह्यात्मनितथानापक्वकरणेज्ञता १४२

तचित्तोयस्मात् यथादर्पणोमलच्छन्नोरूपज्ञानोत्पादनसमर्थोनभवति १४१ ननुप्रागभावीयज्ञानस्यापिआत्मप्रकाशत्वात्तस्यचस्वतः
सिद्धत्वान्नानुपलंभोयुक्तइत्याशंक्याह अपक्वेकर्कंधूर्वारौतिक्तकर्कटिकायांविद्यमानोपिमधुरोरसःयथानोपलभ्यतेतथात्मन्यपक्वकरणे-
विद्यमानापिज्ञताज्ञातृताप्रागभावीयवस्तुगोचरतानप्राप्यते १४२ ७ ७ ७ ७ ७

वेत्तिसर्वगतांकस्मात्सर्वगोपिनवेदनामितियदुक्तंतत्रोत्तरमाह यःपुनर्देहाभिमानयुक्तःससर्वाश्रयामाध्यात्मिकादिस्वरूपवेदनांस्वकर्मोपार्जि तएवदेहेप्राप्नोति नदेहांतरगतांभोगायतनारंभादृष्टवैलक्षण्यादेव यस्तुयोगीमुक्तोमुक्ताहंकारादिभिःसकलक्षेत्रगतानांसुखदुःखादिसं विदांवेदिताभवति परिपक्वकरणत्वात् १४३ नन्वेकस्मिन्नात्मनिसुरनरादिदेहेषुभेदप्रत्ययोनघटतइत्याशंक्याह यथैकमेवगगनंकूप कुंभाद्युपाधिभेदभिन्नंनानेवानुभूयते यथावाभानुरेकोपिभिन्नेषुजलभाजनेषुकरकमणिकमल्लिकादिषुनानेवानुभूयते तथैकोप्या-

सर्वाश्रयांनिजेदेहेदेहीविंदतिवेदनाम् योगीमुक्तश्चसर्वासांयोगमाप्नोतिवेदनाम् १४३
आकाशमेकंहियथाघटादिषुपृथग्भवेत् तथात्मैकोप्यनेकश्चजलाधारेष्विवांशुमान् १४४
ब्रह्मखानिलतेजांसिजलभूश्चेतिधातवः इमेलोकाएषचात्मातस्माच्चसचराचरम् १४५

त्माअंतःकरणोपाधि भेदेननानात्वमवीयते द्वितीयदृष्टांतोपादानमात्मभेदस्यापारमार्थिकद्योतनार्थं १४४ पंचधातून्स्वयंषष्ठआदत्तेयुगपत्प्रभुरित्याद्युक्तमर्थमु- पसंहरन्नाह ब्रह्मआत्मा खंगगनं अनिलोवायुः तेजोग्निःजलंप्रसिद्धं भूश्चेत्येतेवातादिधातवःशरीरंव्याप्यधारयंतीतिधातवोभिधीयंते तत्र खादयःपंचधातवोलोक्यंतेदृश्यंतइतिलोकाजडायावत् एषचिद्धातुरात्माएतस्माज्जडाजडसमुदायात्स्थावरजंगमात्मकंजगदुत्पद्यते १४५

कथमसावात्माजगत्सृजतीत्याह यथाहिकुलालोमृच्चक्रचीवरजातंकरणजातमुपादायकरकशरावादिकंनानाविधकार्यजातंरचयति यथावा वर्धकिस्तृणमृत्काष्ठैःपरस्परसापेक्षैःएकंगृहाख्यंकार्यंकरोति यथावाहेमकारःकेवलंहेमोपादायहेमानुगतमेवकटकमुकुटकुंडलादिकार्य-मुत्पादयति यथावाकोशकारकःकीटविशेषोनिजलालयारब्धमात्मबंधनंकोशाख्यमारभते तथात्मापिपृथिव्यादीनिसाधनानिपरस्पर-सापेक्षाणि तथाकरणान्यपिश्रोत्रादीन्युपादायअस्मिन्संसारेतास्तानासुरादियोनिषुस्वयमेवात्मानंनिजकर्मबंधबद्धंशरीरितयासृजति

मृद्दंडचक्रसंयोगात्कुंभकारोयथाघटम् करोतितृणमृत्काष्ठैर्गृहंवागृहकारकः १४६ हेममात्रमुपादायरूपंवाहेमकारकः निजलालासमायोगात्कोशंवाकोशकारकः १४७ कारणान्येवमादायतासुतास्विहयोनिषु सृजत्यात्मानमात्माचसंभूयकरणा निच १४८ महाभूतानिसत्यानियथात्मापितथैवहि कोन्यथैकेननेत्रेणदृष्टमन्येनपश्यति १४९ वाचंवाकोविजानातिपुनःसं-श्रुत्यसंश्रुताम्

१४६ १४७ १४८ किंपुनर्वैषयिकज्ञानेंद्रियव्यतिरिक्तात्मसद्भावेप्रमाणमित्याशंक्याह यथाहिपृथिव्यादिमहाभूतानिसत्यानिप्रमाणगम्यत्वात् तथा त्मापिसत्यः अन्यथायदिबुद्धींद्रियव्यतिरिक्तोज्ञाताध्रुवोनस्यात्तर्हिएकेनचक्षुरिंद्रियेणदृष्टंवस्तुअन्येनस्पर्शनेंद्रियेणकोविजानाति यथायमद्राक्षंत-महंस्पृशामीति १४९ तथाकस्यचित्पुरुषस्यवाचंपूर्वंश्रुत्वापुनःश्रूयमाणांवाचंतस्यवागियमितिकःप्रत्यभिजानाति तस्मान्ज्ञानेंद्रियातिरिक्तोज्ञाताध्रुवइतिसि द्धम्

किंच यद्यात्माध्रुवो न स्यात् तर्ह्यनुभूतार्थगोचरा स्मृतिः पूर्वानुभवभावितसंस्कारोद्बोधनिबंधना कस्य भवेत् नह्यनेन दृष्टे वस्तुनि अन्यस्य स्मृतिरुपपद्यते तथा कः स्वप्नज्ञानस्य कारकः नहींद्रियाणामुपरतव्यापाराणां तत्कारकत्वं तथाहमेवाभिजनत्वादिसंपन्न इत्येवंविधोनुसंधानप्रत्ययः कस्य भवति स्थिरात्मव्यतिरिक्तस्य तथा शब्दस्पर्शादिविषयोपभोगसिध्यर्थमुद्योगं मनोवाक्कायैः कः कुर्यात् तस्मादपि बुद्धींद्रियव्यतिरिक्त

अतीतार्थस्मृतिः कस्य को वा स्वप्नस्य कारकः १५० जातिरूपवयोवृत्तविद्यादिभिरहंकृतः शब्दादिविषयोद्योगं कर्मणा मनसा गिरा १५१ स संदिग्धमतिः कर्मफलमस्ति न वेति वा विप्लुतः सिद्धमात्मानमसिद्धोपि हि मन्यते १५२ मम दाराः सुतामात्या अहमेषामिति स्थितिः हिताहितेषु भावेषु विपरीतमतिः सदा १५३

आत्मास्थितः १५० १५१ उपासनाविशेषविध्यर्थं संसारस्वरूपं विवृणवन्नाह योसौ पूर्वोक्त आत्मा विप्लुतो हंकारदूषितः स सकलकर्मसु फलमस्ति न वेति संदिग्धमतिर्भवति तथा-सिद्धोप्यकृतार्थोपि सिद्धमेव कृतार्थमात्मानं मन्यते १५२ किंच तस्य विप्लुतमतेर्मम पुत्रकलत्रमेष्य पुत्रादयो अहमेषामित्यतीव ममताकुलस्थितिर्भवति तथा हिताहितकरे कार्यप्रकरे स विप्लुतमतिर्विपरीतमतिः सदा भवेत् १५३ ७ ७ ७ ७

किंच ज्ञेयंजानातीतिज्ञेयज्ञः तस्मिन्नात्मनि प्रकृतौचात्मनोगुणसाम्यावस्थायांविकारेहंकारादावविशेषवान् विवेकानभिज्ञोभवति तथा
नशनहुताशनांबुप्रवेशाविशेषाशनादिषुविप्लववशात्कृतप्रयत्नोभवेत् एवंनानाप्रकाराकार्यप्रवृत्तोअविनीतात्माअसंयतात्माअसत्कार्याभि
निवेशयुक्तःसन्तत्कृतकर्मजातेनरागद्वेषाभ्यांमोहेनचबध्यते १५४ १५५ शरीरग्रहणद्वारेणकथंपुनरस्यविस्रंभोभवतीत्यतआह वि

ज्ञेयज्ञे प्रकृतौचैवविकारेवाविशेषवान् अनाशकानलापातजलप्रपतनोद्यमी १५४ एवंवृत्तोविनीतात्माविततथाभिनि
वेशवान् कर्मणाद्वेषमोहाभ्यामिच्छयाचैवबध्यते १५५ आचार्योपासनंवेदशास्त्रार्थेषुविवेकिता तत्कर्मणामनुष्ठा
नंसंगःसद्भिर्गिरःश्लक्ष्णाः १५६ स्त्र्यालोकालंभविगमःसर्वभूतात्मदर्शनम् त्यागःपरिग्रहाणांचजीर्णकाषायधारणम्
१५७ विषयेंद्रियसंरोधस्तंद्रालस्यविवर्जनम् शरीरपरिसंख्यानंप्रवृत्तिष्वघदर्शनम् १५८ नीरजस्तमतासत्वशु-
द्धिर्निःस्पृहताशमः एतैरुपायैःसंशुद्धःसत्वयोग्यमृतीभवेत् १५९

द्यार्थमाचार्यसेवा वेदांतार्थेषुपातंजलादियोगशास्त्रार्थेषु
चविवेकित्वम् तत्प्रतिपादितध्यानकर्मणामनुष्ठानम् सत्पुरुषसंगः प्रियहितवचनत्वम् ललनालोकनालंभयोःपरित्यागः सर्वभूतेषा
त्मवद्दर्शनंसमत्वदर्शनम् परिग्रहाणांचपुत्रक्षेत्रकलत्रादीनाचत्यागः जीर्णकाषायधारणम् तथाशब्दस्पर्शादिविषयेषुश्रोत्रादींद्रियाणां

प्रवृत्तिनिरोधस्तंद्रानिद्रानुसारिणी आलस्यमनुत्साहः तयोर्विशेषेणत्यागः शरीरकस्यपरिसंख्यानमस्थिराशुचित्वादिदोषानुसंधानम्
तथासकलगमनादिषुप्रवृत्तिषुसूक्ष्मप्राणिवधादिदोषपरामर्शः तथारजस्तमोविधुरताप्राणायामादिभिर्भावशुद्धिः निःस्पृहताविषयेष्वनभि
लाषः शमोबाह्यांतःकरणसंयमः एतैराचार्योपासनादिभिरुपायैःसम्यक्शुद्धःकेवलसत्वयुक्तोब्रह्मोपासनेनामृतीभवेत्मुक्तोभवति १५६
१५७ १५८ १५९ कथममृतत्वप्राप्तिरित्यतआह आत्माख्यतत्वस्मृतेरात्मनिनिश्चलतयोपस्थानात्सत्वशुद्धियोगात्केवलसत्वगुणयोगात्कर्मबी

तत्वस्मृतेरुपस्थानात्सत्वयोगात्परिक्षयात् कर्मणांसन्निकर्षाच्चसतांयोगःप्रवर्त्तते १६०
शरीरसंक्षयेयस्यमनःसत्वस्थमीश्वरम् अविप्लुतमतिःसम्यग्जातिसंस्मरतामियात् १६१

जानांपरिक्षयात्सत्पुरुषाणांचसंबंधात्आत्मयोगःप्रवर्त्तते १६० किंच यस्यपुनर्योगिनोविप्लुतमतेःशरीरसंक्षयसमयेमनःसत्वयुक्तंसम्य
गेकाग्रतयेश्वरंप्रतिध्याभियते सयद्युपासनाप्रयोगाप्रवीणतयात्मानंनाधिगच्छति तर्हिविशिष्टसंस्कारपाटववशेनजात्यंतरानुभूतकृमि-
कीटादिनानागर्भवासादिसमुद्भूतदुःखस्मरत्वंप्राप्नुयात् तत्स्मरणेनचजातोद्वेगस्तद्विच्छेदकारिणिमोक्षेप्रवर्त्तते १६१ ७ ७

यस्त्वपटुसंस्कारतया पूर्वांजातिंनस्मरति तस्य कागतिरित्यत्राह भरतोनटःसयथारावणादिनानारूपाणि कुर्वाणः सितासितपीतादिभिर्वर्णैरात्मन स्तनुंवर्णयतिरचयतितथैवात्मातत्तत्कर्मफलोपभोगार्थंकुब्जवामनादिनानारूपाणिकर्मनिमित्तानिकलेवराण्यादत्ते १६२ किंच नकेवलंकर्मैव कुब्जवामनत्वादिनिमित्तंकिंतुकालकर्मणी स्वपितृकारणबीजदोषोमातृदोषश्चेतिसर्वमेतत्सहकारिकारणम् एतेनदृष्टादृष्टस्वरूपेणकारण

यथाहिभरतोवर्णैर्वर्णयत्यात्मनस्तनुम् नानारूपाणिकुर्वाणस्तथात्माकर्मजास्तनूः १६२ का लकर्मात्मबीजानांदोषैर्मातुस्तथैवच गर्भस्यवैकृतंदृष्टमंगहीनादिजन्मतः १६३ अहंका- रेणमनसागत्याकर्मफलेनच शरीरेणचनात्मायंमुक्तपूर्वःकथंचन १६४

कलापेन गर्भस्यांगहीनत्वादिविकारोजन्मन आरभ्यानियतकालोदृष्टः १६३ ननुप्राकृतिकप्रलयावसरेमहदाद्यखिलविकारविनाशे कर्मणोनाशात्कथंतन्निबंधनःप्रथमपिंडपरिग्रहइत्याशंक्याह मनोहंकारौप्रसिद्धौ गतिःसंसरणहेतुभूतोदोषराशिः कर्मफलंध- र्माधर्मरूपम् शरीरंलिंगात्मकम् एतैरहंकारादिभिरयमात्माकदाचिदपिनमुच्यते यावन्मोक्षः १६४ ७ ७ ७

ननुप्रतिनियतकर्मणांजीवानांप्रतिनियतकालमेवोपरतिर्युक्तानपुनःसंग्रामादौयुगपदकालेप्राणसंक्षयइत्याशंक्याह यथाहिखलुतैलाक्त्
न्नानेकवर्त्तिजीविनांनानाज्वालानांयुगपत्संस्थितिः तासांचस्थितीनांपटुतरंपोपूयमानपवनाहतिरूपविपत्तिहेतूपनिपातयौगपद्याद्युग
पदुपरतिर्यथाभवति तथैवरथिसारथिवाजिकुंजरादिजीवानांयुद्धारव्योपरतिहेतुयौगपद्यादकालेपिप्राणपरिक्षयोनानुपपन्नः एतदु
क्तंभवति प्रतिनियतकालविपत्तिहेतुभूतादृष्टस्यतद्विरुद्धकार्याकरदृष्टहेतूपनिपातेनप्रतिबंधइति १६५ मोक्षमार्गमाह योसौत्हृदिप्रदीपवत्-

वर्त्याधारस्नेहयोगाद्यथादीपस्यसंस्थितिः विक्रियापिचदृष्टैवमकालेप्राणसंक्षयः १६५ अनं
तारश्मयस्तस्यदीपवद्यःस्थितोहृदि सितासिताःकद्रुनीलाःकपिलानीललोहिताः १६६ ऊर्ध्व
मेकःस्थितस्तेषांयोभित्वासूर्यमंडलम् ब्रह्मलोकमतिक्रम्यतेनयातिपरांगतिम् १६७

स्थितोजीवस्तस्यानंतारश्मयोनाड्यःसुखदुःखहेतुभूताद्वासप्ततिसहस्राणीत्यादिनोक्ताःसितासितकर्बुरादिरूपाःसर्वतःस्थितास्तेषामेकोरश्मि
रूर्ध्वव्यवस्थितः योसौमार्त्तंडमंडलंनिर्भिद्यहिरण्यगर्भनिलयंचातिक्रम्यवर्त्ततेतेनजीवःपरांगतिमपुनरावृत्तिलक्षणांप्राप्नोति १६६
१६७ स्वर्गिमार्गमाह यदस्यात्मनोमुक्तिमार्गभूताद्रश्मेरन्यद्रश्मिशतमूर्ध्वाकारमेवस्थितम् तेनसुरशरीराणितैजसानिसुखैकभोगाधि-

करणानिसधामानिकनकरजतरत्नरचितामरपुरसहितानिप्रपद्यंते १६८ संसरणमार्गमाह येपुनस्तस्याधस्ताद्भ्रमयोमृदुप्रभास्तैरिहफलो पभोगार्थंसंसारेसंसरति अवशःस्वकृतकर्मपरतंत्रः १६९ भूतचैतन्यवादिपक्षंपरिजिहीर्षुराह वेदैःसएषनेतिनेतीत्यात्मेतिअस्थूलमन णवन्हस्वमपाणिपादमित्यादिभिः शास्त्रैश्चमीमांसान्वीक्षिक्यादिभिः विज्ञानैश्चममेदंशरीरमित्यादिदेहव्यतिरिक्तात्मानुभवैः तथाजन्ममरणा

यदस्यान्यद्रश्मिशतमूर्ध्वमेवव्यवस्थितम् तेनदेवशरीराणितैजसानिप्रपद्यते १६८ येनैकरूपाश्चाधस्ताद्रश्मयश्चमृदुप्रभाः इहकर्मोपभोगायतैःसंसरतिसोवशः १६९ वेदैःशास्त्रैःसविज्ञानैर्जन्मनामरणेनच आर्त्यागत्यातथागत्यासत्येनत्वनृतेनच १७० श्रेयसासुखदुःखाभ्यांकर्मभिश्चशुभाशुभैः निमित्तशाकुनज्ञानग्रहसंयोगजैःफलैः १७१ तारानक्षत्रसंचारैर्जागरैःस्वप्नजैरपि आकाशपवनज्योतिर्जलभूतिमिरैस्तथा १७२ मन्वंतरैर्युगप्राप्त्यामंत्रौषधिफलैरपि वित्तात्मानंवेद्यमानंकारणंजगतस्तथा १७३

भ्यांजन्मांतरानुष्ठितधर्माधर्मनियताभ्यांदेहातिरिक्तात्मानुमानंआर्त्याजन्मांतरगतकर्मानुष्ठातृनियतया तथागमनागमनाभ्यांज्ञानेच्छाप्रयत्नाधारनियताभ्यामपिभौतिकदेहातिरिक्तात्मानुमानम् नहिदेहस्यचैतन्यादिसंभवति यतःकारणगुणप्रक्रमेणकार्यद्रव्येवैशेषिकगुणारंभोदृष्टः नचतत्कारणभूतपार्थिवपरमाण्वादिषुचैतन्यादिसमवायःसंभव

ति तदारब्धस्तंभकुंभादिभौतिकेष्वनुपलंभात् नचमदशक्तिवदुदकादिद्रव्यांतरसंयोगजइतिवाच्यम् शक्तेःसाधारणगुणत्वात् अतोभौति
कदेहातिरिक्तचैतन्यादिसमवाय्यंगीकर्तव्यः सत्यानृतेप्रसिद्धे श्रेयोहितप्राप्तिः सुखदुःखेआमुष्मिके तथाशुभकर्मानुष्ठानमशुभकर्मप
रित्यागः एतैश्चज्ञाननियतैःदेहातिरिक्तात्मानुमानम् निमित्तंभूकंपादि शाकुनंज्ञानंपिंगलादिपतत्रिचेष्टालिंगकंज्ञानम् ग्रहाःसूर्यादयः त
त्संयोगजैःफलैः ताराअश्विन्यादिव्यतिरिक्तानिज्योतींषि नक्षत्राण्याश्वयुजप्रभृतीनि एतेषांसंचारैःशुभाशुभफलद्योतनैर्जागरैर्जागरा
वस्थाजन्यैश्चसच्छिद्रादित्यादिदर्शनैः तथास्वप्नजैःखरवाराहयुक्तरथारोहणादिज्ञानैःतथाआकाशाद्यैश्चजीवोपभोगार्थतयासृष्टैस्तथामन्वं

अहंकारःस्मृतिर्मेधाद्वेषोबुद्धिःसुखंधृतिः इंद्रियांतरसंचारइच्छाधारणजीविते १७४ स्वर्गःस्वप्नश्चभावानांप्रेरणंमनसोग
तिः निमेषश्चेतनायत्नआदानंपांचभौतिकम् १७५ यतएतानिदृश्यंतेलिंगानिपरमात्मनः तस्मादस्तिपरोदेहादात्मासर्वगई
श्वरः १७६

तरप्राप्त्यायुगांतरप्राप्त्यादेहेनुपपद्यमानतया तथामंत्रौषधिफलैःप्रेक्षापूर्वकैःक्षुद्रकर्माद्यैःसाक्षात्परंपरयावादेहेनुपपद्य
मानैर्वेद्यमानंहेमुनयोवित्तजानीत १७० १७१ १७२ १७३ किंच अहंकृतिरहंकारः स्मृतिःप्राग्भवीयानुभवभावितसंस्कारोद्बोधनिबंधना
स्तन्यपानादिगोचरा सुखमैहिकम् धृतिर्धैर्यम् इंद्रियांतरेणाहिदृष्टेर्थेइंद्रियांतरस्यसंचारोयमहमद्राक्षंतमहंस्पृशामीत्येवमनुसंधानरूपइं-

द्रियांतरसंचारः अत्रेच्छाप्रयत्नचैतन्यानांस्वरूपेणलिंगत्वम् पूर्वश्लोकेतुगमनसत्यवचनादिहेतुतयाआर्थिकंलिंगत्वमित्यपौनरुक्त्यम् तथाधारणं शरीरस्यजीवितंप्राणधारणम् स्वर्गोनियतदेहांतरोपभोग्यःसुखविशेषः स्वप्नःप्रसिद्धः पूर्वश्लोकेतुस्वप्नस्यशुभफलद्योतनायलिंगत्वम् अत्र स्वरूपेणेत्यपौनरुक्त्यम् भावानामिंद्रियादीनांप्रेरणम् मनसोगतिश्चेतनाधिष्ठानव्याप्ता निमेषःप्रसिद्धः तथापंचभूतानामुपादानम् यस्मा देतानिलिंगानिभूतेष्वनुपपन्नानिसाक्षात्परंपरयावापरमात्मनोद्योतकानिदृश्यंते तस्मादस्तिदेहातिरिक्तआत्मासर्वगईश्वरइतिप्रसिद्धम्

बुद्धींद्रियाणिसार्थानिमनःकर्मेंद्रियाणिच अहंकारश्चबुद्धिश्चपृथिव्यादीनिचैवहि १७७
अव्यक्तमात्माक्षेत्रज्ञःक्षेत्रस्यास्यनिगद्यते ईश्वरःसर्वभूतस्थःसन्नसन्सदसच्चयः १७८

१७४ १७५ १७६ क्षेत्रज्ञस्वरूपमाह बुद्धींद्रियाणिश्रोत्रादीनि सार्थानिशब्दादिविषयसहितानि मनःकर्मेंद्रियाणिवागादीनि तथाहंकारोबुद्धिश्चनिश्चयात्मिका पृथिव्यादीनिपंचभूतानि अव्यक्तंप्रकृतिरित्येतत्क्षेत्रमस्ययोसावीश्वरःसर्वगतःअतएवसन्रूपःप्रमाणांतराग्राह्यत्वात् असन्अस्पष्टप्रतीतिकत्वात् सदसद्रूपोसावात्माक्षेत्रज्ञइतिनिगद्यते १७७ १७८ ॥ ॥ ॥ ॥

बुद्ध्यादेरुत्पत्तिमाह सत्वादिगुणसाम्यमव्यक्तं ततस्त्रिःप्रकाराया॰ सत्वरजस्तमोमय्याबुद्धेरुत्पत्तिः तस्याश्चवैकारिकतैजसोभूतादिरितित्रिविधो
हंकारउत्पद्यते तत्रतामसाद्भूतादिसंज्ञकादहंकारात्तन्मात्राणि आदिग्रहणाद्गगनादीनि तानिचैकोत्तरगुणान्युत्पद्यंते चशब्दाद्वैकारिकतैजसा
भ्यांबुद्धिकर्मेंद्रियाणामुत्पत्तिः १७९ गुणस्वरूपमाह तेषांगगनादिपंचभूतानांएकोत्तरवृद्ध्यापंचशब्दादयोगुणावेदितव्याः एषांचबुद्ध्या-

बुद्धेरुत्पत्तिरव्यक्तात्ततोहंकारसंभवः तन्मात्रादीन्यहंकारादेकोत्तरगुणानिच १७९ शब्दःस्पर्शश्चरूपंचरसोगंध
श्चतद्गुणाः योयस्मान्निःसृतश्चैषांसतस्मिन्नेवलीयते १८० यथात्मानंसृजत्यात्मातथावःकथितोमया विपा-
कात्त्रिःप्रकाराणांकर्मणामीश्वरोपिसन् १८१ सत्वंरजस्तमश्चैवगुणास्तस्यैवकीर्त्तिताः रजस्तमोभ्यामाविष्टश्चक्र
वद्भ्राम्यतेह्यसौ १८२ अनादिरादिमांश्चैवसएवपुरुषःपरः लिंगेंद्रियग्राह्यरूपःसविकारउदाहृतः १८३

दिविकाराणांमध्येयो
यस्मात्प्रकृत्यादेरुत्पन्नःसतस्मिन्नेवसूक्ष्मरूपेणप्रलयसमयेप्रलीयते १८० प्रकरणार्थमुपसंहरन्नाह मानसादित्रिप्रकारकर्मणांविपाकादीश्वरो-
पिसन्नात्मायथात्मानंसृजतितथायुष्माकंकथितः सत्वादयश्चगुणास्तस्यैवाविद्याविशिष्टस्यकीर्त्तिताः तथासएवरजस्तमोभ्यामाविष्टश्चक्रव
दिहसंसारेभ्राम्यतीत्यपिकथितम् सएवानादिःपरमपुरुषःशरीरग्रहणेनादिमान्कुब्जवामनादिविकारसहितः यथास्थूलाकारतयापरिण-

तोलिंगैरिंद्रियैश्चग्राह्यस्वरूपउदाहृतः १८१ १८२ १८३ स्वर्गिमार्गमाह अजवीथ्यमरमार्गः तस्यागस्त्यस्यचयदंतरमसौपितृयानस्ते-
नाग्निहोत्रिणःस्वर्गकामाःस्वर्गंप्राप्नुवंति १८४ किंच येदानादिस्मार्त्तकर्मपराःसम्यक् दंभरहिताः तथाष्टाभिरात्मगणैर्दयाक्षांतिरनसूया
शौचमनायासोमंगलमकार्पण्यमस्पृहेतिगौतमादिप्रतिपादितैर्युक्ताः तथाचयेचसत्यवचननिरतास्तेपितेनैवपितृयानेनैवसुरसदनमाप्नुवं-

पितृयानोजवीथ्याश्चयदगस्त्यस्यचांतरम् तेनाग्निहोत्रिणोयांतिस्वर्गकामादिवंप्रति
१८४ येचदानपराःसम्यगष्टाभिश्चगुणैर्युताः तेपितेनैवमार्गेणसत्यव्रतपरायणाः १८५
तत्राष्टाशीतिसाहस्रामुनयोगृहमेधिनः पुनरावर्त्तिनोबीजभूताधर्मप्रवर्त्तकाः १८६

ति १८५ ननुनैमित्तिकादिप्रतिसंचरेखिलाध्यापकप्रलयादविदितवेदास्तस्योपरितनाजनाःकथमग्निहोत्रादिकंकर्मकरिष्यंति कथंतरांचाकृ
तकर्माणःस्वर्गमार्गमधिरोक्ष्यंतीत्यतआह तत्रपितृयानेष्टाशीतिसहस्रसंख्यामुनयोगृहस्थाश्रमिणःपुनरावृत्तिधर्माणः सर्गादौवेदस्योप
देशाकतयाधर्मतरुप्रादुर्भावेबीजभूताःसंतोग्निहोत्रादिधर्मप्रवर्त्तकाः अतोनप्रागुदितदोषसमासंगः १८६ ७ ५ ७

किंच सप्तर्षयःप्रसिद्धाः नागवीथीऐरावतपथः तदंतरालेतावंतएवअष्टाशीतिसहस्रसंख्यामुनयः सर्वारंभविवर्जिताः केवलज्ञाननि-
ष्ठाः तपोब्रह्मचर्ययुक्ताः तथासंगत्यागिनोदेवलोकंसमाश्रिताः आभूतसंप्लवंप्राकृतप्रलयपर्यंतमवतिष्ठंते तत्रचस्थिताःस्मृत्यादावाध्या-
त्मिकधर्माणांप्रवर्त्तकाः १८७ १८८ कथंभूतास्तेमुनयइत्यतआह यतोद्विविधादपिमुनिसमूहाच्चत्वारोवेदाःपुराणांगविद्योपनिषदश्चनि
त्यभूताएवाध्येतृपरंपरायाताःप्रवृत्तास्तथाश्लोकाइतिहासात्मकाः सूत्राणिचशब्दानुशासनमीमांसागोचराणि भाष्याणिचसूत्रव्याख्या

सप्तर्षिनागवीथ्यंतर्देवलोकंसमाश्रिताः तावंतएवमुनयःसर्वारंभविवर्जिताः १८७ तपसाब्रह्मचर्येणसंगत्यागे
नमेधया तत्रगत्वावतिष्ठंतेयावदाभूतसंप्लवम् १८८ यतोवेदाःपुराणानिविद्योपनिषदस्तथा श्लोकाःसूत्राणि
भाष्याणियच्चकिंचनवाङ्मयम् १८९ वेदानुवचनंयज्ञोब्रह्मचर्यंतपोदमः श्रद्धोपवासःस्वातंत्र्यमात्मनोज्ञानहेतवः
१९०

रूपाणियदन्यदायुर्विद्यादिकंवाङ्मयंतदपियत्सकाशात्प्रवृत्तंतथाविधास्तेमुनयोधर्मप्रवर्त्तकाः १८९ एवंसतिवेदस्यनानित्यतादोषप्रसंगः ततःकि
मित्यतआह वेदस्यनित्यत्वेसतितत्प्रामाण्यबलाद्वेदानुवचनादयःसत्वशुद्ध्यापादनद्वारेणात्मज्ञानस्यहेतवइत्युपपन्नंभवति १९० ५ ५

किंच यस्मान्नित्यतया प्रमाणभूतो वेदस्तस्मादसावुक्तमार्गेण सकलाश्रमिभिर्नानाप्रकारं जिज्ञासितव्यः तमेव प्रकारं दर्शयति द्विजातिभिर्द्रष्टव्यः अपरोक्षीकर्त्तव्यः तत्रोपायं दर्शयति श्रोतव्योऽथ मंतव्य इति प्रथमतो वेदांतश्रवणेन निर्णेतव्यः तदनंतरं मंतव्यः युक्तिभिर्विचारयितव्यः ततोऽसौ ध्यानेनापरोक्षीभवति ये द्विजातयोऽतिशयश्रद्धायुक्ताः संतो निर्जनप्रदेशमाश्रिताः एवमुक्तेन मार्गेण एनमात्मानं सत्यं परमार्थभूतमुपासते ते आत्मानं विंदंति लभंते प्राप्नुवंति १९१ १९२ प्राप्तिमार्गं देवयानमाह तेविदितात्मानः क्रमादग्न्याद्यभिमानीदेवतास्थानेषु मुक्तिमार्गभूतेषु विश्रामस्यतैः

सत्याश्रमैर्विजिज्ञास्यः समस्तैरेवमेव तु द्रष्टव्यस्त्वथ मंतव्यः श्रोतव्यश्च द्विजातिभिः १९१ य एनमेवं विंदंति ये चारण्यकमाश्रिताः उपासते द्विजाः सत्यं श्रद्धया परया युताः १९२ क्रमात्ते संभवंत्यर्चिरहः शुक्लं तथोत्तरम् अयनं देवलोकं च सवितारं सवैद्युतम् १९३ ततस्तान्पुरुषोऽभ्येत्य मानसो ब्रह्मलौकिकान् करोति पुनरावृत्तिस्तेषामिह न विद्यते १९४

प्रस्थापिताः परमपदं प्राप्नुवंति अर्चिर्वह्निः अहर्दिनं शुक्लपक्षः तथोत्तरायणं सूर्यसद्म सविता सूर्यः वैद्युतं च तेजः तान् एवं क्रमादर्चिरादिस्थानगतान्मानसः पुरुषो ब्रह्मलोकभाजः करोति तेषामिह संसारे पुनरावृत्तिर्न विद्यते किंतु प्राकृतप्रतिसंचरावसरे त्यक्तलिंगशरीराः परमात्मन्येकीभवंति १९३।१९४

पूर्वोक्तपितृयानमाह येपुनर्विहितैर्यज्ञदानतपोभिःस्वर्गफलभोक्तारस्तेक्रमाद्धूमादिचंद्रपर्यंतपदार्थाभिमानिनीर्देवताःप्राप्यपुनरेववायुवृष्टिजल भूमीःप्राप्यव्रीह्याद्यन्नरूपेणशुक्रत्वमवाप्यसंसारिणोयोनिंव्रजंति एतन्मार्गद्वयमप्रमत्तोयोनविजानातिमार्गद्वयोपायभूतधर्मानुष्ठानंनकरोति



यज्ञेनतपसादानैर्येहिस्वर्गजितोनराः धूमंनिशांकृष्णपक्षंदक्षिणायनमेवच १९५ पितृलोकंचंद्रमसंवायुंवृष्टिंजलंम हीम् क्रमात्तेसंभवंतीहपुनरेवव्रजंतिच १९६ एतद्योनविजानातिमार्गद्वितयमात्मवान् दंदशूकःपतंगोवाभवेत् कीटोथवाकृमिः १९७ ऊरुस्थोत्तानचरणःसव्येन्यस्योत्तरकरम् उत्तानंकिंचिदुन्नाम्यमुखंविष्टभ्यचोरसा १९८ निमीलिताक्षःसत्वस्थोदंतैर्दंतानसंस्पृशन् तालुस्थाचलजिह्वश्चसंवृतास्यःसुनिश्चलः १९९ संनिरुध्येंद्रियग्रामंना-तिनीचोच्छ्रितासनः द्विगुणंत्रिगुणंवापिप्राणायाममुपक्रमेत् २०० ततोध्येयःस्थितोयोसौहृदयेदीपवत्प्रभुः धार येत्तत्रचात्मानंधारणांधारयन्बुधः २०१

असौदंदशूकोभुजंगः पतंगःशलभः कृमिःकीटोवाभवेत् १९५ १९६ १९७ उपासनप्रका रमाह ऊरुस्थावुत्तानौचरणौयस्यसतथोक्तः बद्धपद्मासनः तथोत्तानेसव्यकरेदक्षिणमुत्तानंन्यस्यमुखंचकिंचिदुन्नाम्योरसाचविष्टभ्यस्तंभयित्वा तथानिमीलिताक्षःसत्वस्थःकामक्रोधादिरहितोदंतैर्दंतानसंस्पर्शयन् तथातालुनिस्थिताअचलाजिह्वायस्यसतथोक्तः तथासंवृतास्यःपिहितान

नः स्तनिश्चलोनिष्प्रकंपः तथासम्यगिंद्रियसमूहंविषयेभ्यः प्रत्याहृत्यनातिनीचासनोनात्युच्छ्रितासनोयथाचित्तविक्षेपोनभवतितथोपविष्टःस
न्द्विगुणंत्रिगुणंवाप्राणायामाभ्यासमुपक्रमेत् ततोवशीकृतपवनेनयोगिनायोसौहृदयदीपवदप्रकंपःप्रभुःस्थितोसौध्यातव्यः तत्रचहृदिआत्मा
नंमनोगोचरतयाधारयेत् तथाधारणांचधारयेत् धारणास्वरूपंचजान्वग्रभ्रमणेनच्छोटिकादानकालोमात्रातामिः पंचदशमात्राभिरधमः प्राणा
यामः त्रिंशद्भिर्मध्यमः पंचचत्वारिंशद्भिरुत्तमः एवंप्राणायामत्रयात्मिकैकाधारणातास्तिस्त्रोयोगशब्दवाच्यास्ताश्चधारयेत् यथोक्तमन्यत्र सं-

अंतर्धानंस्मृतिःकांतिर्दृष्टिःश्रोत्रज्ञतातथा निजंशरीरमुत्सृज्यपरकायप्रवेशनम् २०२ अर्थानां छंदतःसृष्टिर्योगसिद्धि
र्हिलक्षणम् सिद्धेयोगेत्यजन्देहममृतत्वायकल्पते २०३

त्रम्यच्छोटिकांदद्यात्कराग्रंजानुमंडले मात्राभिःपंचदशभिःप्राणायामो
धमःस्मृतः मध्यमोद्विगुणःश्रेष्ठस्त्रिगुणोधारणातथा त्रिभिस्त्रिभिःस्मृतैकैकाताभिर्योगस्तथैवचेति १९८ १९९ २०० २०१ धारणात्मकयोगा
भ्यासेप्रयोजनमाह अणिमप्राप्त्यापरैरदृश्यत्वमंतर्धानं स्मृतिरतींद्रियेष्वर्थेषुमन्वादेरिवस्मरणम् कांतिःकमनीयता दृष्टिरतीतानागतेष्वप्य
र्थेषु तथाश्रोत्रज्ञताअतिदवीयसिदेशेभिव्यज्यमानतयाश्रोत्रपथमनासेदुषामपिशब्दानाज्ञातृता निजशरीरत्यागेनपरशरीरप्रवेशनम् स्व
वांच्छावशेनार्थानांकारणनिरपेक्षतयासृष्टिरित्येतद्योगस्यसिद्धेर्लक्षणंलिंगं नचैतावदेवप्रयोजनंकिंतुसिद्धेयोगेत्यजन्देहममृतत्वायकल्प
तेब्रह्मत्वप्राप्तयेचभवति२०२ २०३

यज्ञदानाद्यसंभवे सत्त्वशुद्ध्युपायांतरमाह अथवात्यक्तकामी अनिषिद्धकर्मा अन्यतमं वेदमभ्यसन् एकांतशीलो ऽयाचितमिताशनापादिते सत्त्व
शुद्धिरात्मोपासनेन परां मुक्तिलक्षणां सिद्धिं प्राप्नोति २०४ किंच सत्प्रतिग्रहादिन्यायेनोपार्जितधनः अतिथिपूजातत्परः नित्यनैमित्तिकश्रा
द्धानुष्ठाननिरतः सत्यवादनशीलः सन्नात्मतत्त्वध्याननिरतः गृहस्थोपि हि यस्मान्मुक्तिमवाप्नोति तस्मान्न केवलमैहिकपारिव्रज्यपरिग्रह एव
मुक्तिसाधनम् इत्यध्यात्मप्रकरणम् २०५ वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषत इत्यत्र प्रतिपाद्यतया प्रतिज्ञातषड्विधधर्ममध्ये प्रपंचप्रकारं

अथवाप्यभ्यसन्वेदं न्यस्तकर्मा वने वसन् अयाचिताशी मितभुक् परां सिद्धिमवाप्नुयात् २०४ न्यायागतधनस्तत्त्वज्ञा
ननिष्ठोतिथिप्रियः श्राद्धकृत्सत्यवादी च गृहस्थोपि हि मुच्यते २०५ महापातकजान्घोरान्नरकान्प्राप्य दारुणान् क
र्मक्षयात्प्रजायंते महापातकिनस्त्विह २०६

धर्ममभिधायाधुनावशिष्टं नैमित्तिकं धर्मजातं प्रायश्चित्तपदाभिलप्यं प्रारिप्सुः प्रथमतस्त
त्प्ररोचनार्थमधिकारिविशेषणप्रदर्शनार्थं चार्थवादरूपं कर्मविपाकं तावदाह ब्रह्महत्यादिपंचकस्य महापातकसंज्ञा ब्रह्महा मद्यप इत्यत्र वक्ष्य
ते तद्योगिनो महापातकिनस्ते महापातकजनितांस्तामिस्रादिनरकान्स्वजनितदुष्कृतानुरूपान् घोराननितीव्रवेदनापादकत्वेनातिभयंकरान्दारुणा
न्दुःखैकभोगनिलयान् प्राप्य कर्मक्षयात् कर्मजन्यनरकदुःखोपभोगक्षयादनंतरं कर्मशेषात्पुनरिह संसारे दुःखबहुलश्वसृगालादितिर्यग्यो

निषुप्रकर्षेणभूयोभूयोजायंते महापातकिग्रहणमितरेषामप्युपपातकादीनामुपलक्षणम् तेषांचतिर्यगादियोनिप्राप्तेर्वक्ष्यमाणत्वात् २०६
महापातकिनांसंसारप्राप्तिमुक्त्वातद्विशेषकथनायाह मृगाहरिणादयः श्वसूकरोष्ट्राःप्रसिद्धाः तेषांयोनिंब्रह्महास्वकर्मशेषेणप्राप्नोति खरो
गर्दभः पुल्कसःप्रतिलोमनिषादेनशूद्र्यांजातः वैदेहकेनांबष्ठ्यांजातोवेनस्तेषांयोनीःसुरापःप्राप्नोति कृमयःसजातीयसंभोगनिरपेक्षा
मांसविष्ठागोमयादिजन्याः ततःकिंचित्स्थूलतराःपक्षास्थिरहिताःपिपीलिकादयःकीटाः पतंगःशलभः तेषांयोनिंब्राह्मणस्वर्णहारीप्रा-

मृगश्वसूकरोष्ट्राणांब्रह्महायोनिमृच्छति खरपुल्कसवेनानांसुरापोनात्रसंशयः २०७
कृमिकीटपतंगत्वंस्वर्णहारीसमाप्नुयात् तृणगुल्मलतात्वंचक्रमशोगुरुतल्पगः २०८

प्नुयात् तृणंकाशादिः गुल्मलतेप्रागुक्ते तज्जातीयतांक्रमेणगुरुतल्पगःप्राप्नोति एतच्चाकामकृतविषयम् कामकारेत्वन्यास्वपिदुःखबहुलयोनि
षुसंसरति यथाहमनुः श्वसूकरखरोष्ट्राणांगोजाविमृगपक्षिणाम् चंडालपुल्कसानांचब्रह्महायोनिमृच्छति कृमिकीटपतंगानांविड्भुजां
चैवपक्षिणाम् हिंस्राणांचैवसत्वानांसुरापोब्राह्मणोव्रजेत् लूताहिसरठानांचतिरश्चांचांबुचारिणाम् हिंस्राणांचपिशाचानांस्तेनोविप्रःस
हस्रशः लूतोर्णनाभः सरठःकृकलासः तृणगुल्मलतानांचक्रव्यादांदंष्ट्रिणामपि क्रूरकर्मकृतांचैवशतशोगुरुतल्पगइति २०७ २०८ ६ ७

एवंतिर्यक्त्वादुत्तीर्णानांमानुष्येलक्षणानिभवंतीत्याह एवंरौरवादिनरकेषुश्वसूकरखरादियोनिषुचदारुणंदुःखमनुभूयानंतरंदुरितशेषेणजननस्र
मयएवक्षयरोगादिलक्षणयुक्ताःप्रचरेषुमानुषशरीरेषुसंसरंति ब्रह्महाक्षयरोगीराजयक्ष्मीभवेत् निषिद्धसुरापानःस्वभावतःकृष्णदशनः
ब्राह्मणहेम्नांहर्त्ताकुत्सितनखित्वं गुरुदारगामीदुश्चर्मत्वंकुष्ठितां एतेषांब्रह्महादीनांमध्येयेनपतितेनयःपुरुषःसंवसतिसतल्लिंगोभिजाय
ते किंच अन्नस्यापहर्त्ताआमयावीअजीर्णान्निः वागपहारकोननुज्ञातोध्यायीपुस्तकापहारीत्चमूकोवागिंद्रियविकलोभवेत् धान्यमिश्रोति

ब्रह्महाक्षयरोगीस्यात्सुरापःश्यावदंतकः हेमहारीतुकुनखीदुश्चर्मागुरुतल्पगः २०९
योयेनसंवसत्येषांसतल्लिंगोभिजायते अन्नहर्त्तामयावीस्यान्मूकोवागपहारकः २१०
धान्यमिश्रोतिरिक्तांगःपिशुनःपूतिनासिकः तैलहृत्तैलपायीस्यात्पूतिवक्त्रस्तुसूचकः २११

रिक्तांगःषडंगुल्यादिः पिशुनोविद्यमानपरदोषप्रख्यापनशीलोदुर्गंधनासिकः तैलस्यहर्त्तातैलपायीकीटविशेषोभवति सूचकस्तद्दोषसंकीर्त्तनो
दुर्गंधिवदनोजायते एतच्चतिर्यक्त्वप्राप्त्युत्तरकालंमानुषशरीरप्राप्तौद्रष्टव्यम् यद्वातद्वापरद्रव्यमपहृत्यबलान्नरः अवश्यंयातितिर्यक्त्वंजग्ध्वा
न्यैर्वाहुतंहविरितिमनुस्मरणात् २०९ २१० २११ ७ ७ ७ ७ ७ ७

किंच यःपरदारानपहरति ब्रह्मस्वंचस्वर्णव्यतिरिक्तमपहरति असावरण्येनिर्जलेदेशेब्रह्मराक्षसोभूतविशेषोजायते २१२ किंच हीनजा-
तौहेमकाराख्यायांपक्षिजातौपररत्नाद्यपहारकोजायते तथाचमनुः मणिमुक्ताप्रवालानिहृत्वालोभेनमानवः विविधानिचरत्नानिजायतेहे-
मकर्तृष्विति पत्रात्मकंशाकंहृत्वामयूरः शुभान्गंधानपहृत्यछुच्छुंदरीराजदुहितारव्यामूषिकाजायते २१३ किंच धान्यहारीआखुः या

परस्ययोषितंहृत्वाब्रह्मस्वमपहृत्यच अरण्येनिर्जलेदेशेभवतिब्रह्मराक्षसः २१२ हीनजातौप्रजायेतपररत्नापहा
रकः पत्रशाकंशिखीहृत्वागंधान्छुच्छुंदरीशुभान् २१३ मूषकोधान्यहारीस्याद्यानमुष्ट्रःकपिःफलम् जलंप्लवः
पयःकाकोगृहकारीह्युपस्करम् २१४ मधुदंशःफलंगृध्रोगांगोधाग्निंबकस्तथा श्वित्रीवस्त्रंश्वारसंतुचिरीलवणहा
रकः २१५

नंहृत्वोष्ट्रः फलंवानरः जलंप्लवः शकटविलाख्यःपक्षी क्षीरंध्वांक्षः गृहोपस्करंमुसलादिहृत्वागृहकारीचटकाख्यः
कीटविशेषः मधुहृत्वादंशाख्यःकीटः पलंमांसंतत्हृत्वागृध्राख्यःपक्षी गांहृत्वागोधाख्यःप्राणिविशेषः अग्निंहृत्वाबलाकाख्यःपक्षी
वस्त्रंहृत्वाश्वित्री इक्ष्वादिरसंहृत्वासारमेयः लवणहारीचिर्याख्यःउच्चैःस्वरःकीटः २१४ २१५ ६७ ६७ ६७

एवंप्रदर्शनार्थंकिंचिदुक्त्वाप्रतिद्रव्यंपृश्नकोदेनवक्तुमशक्तेरेकोपाधिनाकर्मविपाकंदर्शयितुमाह द्रव्यस्यापह्रियमाणस्ययादृशाः प्रकारास्ता दृशाएवप्राणिजातयःस्तेयकर्मण्यपहर्त्तारोभवंति यथाकांस्यहारीहंसइति अथवायत्फलसाधनंद्रव्यमपहरतितत्साधनविकलोयथापंगु तामश्वहारकइति शंखेनक्वचिद्विशेषोदर्शितः ब्रह्महाकुष्ठी तैजसापहारीमंडली देवब्राह्मणाक्रोशकः खलतिः गरदाग्निदावुन्मत्तौ गुरु प्रतिहंतापस्मारी गोघ्नश्चांधः धर्मपत्नींमुक्त्वान्यत्रप्रवृत्तःशब्दवेधीप्राणिविशेषः कुंडाशीभगभक्षोदेवब्राह्मस्वहरःपांडुरोगी न्यासापहारी चकाणः स्त्रीपण्योपजीवीषंढः कौमारदारत्यागीदुर्भगः मृष्टैकाशीवातगुल्मी अभक्ष्यभक्षकोगंडमाली ब्राह्मणगामीनिर्बीजी क्रूरक

प्रदर्शनार्थमेतत्तुमयोक्तंस्तेयकर्मणि द्रव्यप्रकाराहियथातथैवप्राणिजातयः २१६

र्माभ्रमनः वस्त्रापहारीपतंगः शय्यापहारीक्षपणकः शंखशुक्त्यपहारीकपाली दीपापहारीकौशिकः मित्रध्रुक्क्षयी मातापित्रोराक्रोशःखं डकारइति गौतमोपिकंचिद्विशेषमाह अनृतवाग्गुल्वलःमुहुर्मुहुःसंलग्नवाक् जलोदरोदारत्यागी कूटसाक्षीश्लीपदी उच्छिन्नजंघाच रणः विवाहविघ्नकर्त्ताच्छिन्नोष्ठः अवगूरणीच्छिन्नहस्तः मातृघ्नोंधः स्नुषागामीवातवृषणः चतुःपथेविण्मूत्रविसर्जनेमूत्रकृच्छ्री क न्यादूषकःषंढः ईर्ष्यालुर्मशकः पित्रोर्विवदमानोपस्मारी न्यासापहारीअनपत्यः रत्नापहारीअत्यंतदरिद्रः विद्याविक्रयीपुरुषमृगः वेदवि

क्रयाद्वीपी बहुयाजकोजलप्लवः अयाज्ययाजकोवराहः अनिमंत्रितभोजीवायसः मृष्टैकभोजीवानरः यतस्ततोश्नन्मार्जारिः कक्षवनदहना
त्खद्योतः दारकाचार्योमुखविगंधिः पर्युषितभोजीकृमिः अदत्तादायीबलीवर्दः मत्सरीभ्रमरः अग्न्युत्सादीमंडलकुष्ठी शूद्राचार्यश्श्वपा-
कः गोहर्त्तासर्पः स्नेहापहारीक्षयी अन्नापहारीअजीर्णी ज्ञानापहारीमूकः चंडालीपुल्कसीगमनेअजगरः प्रव्रजितागमनेमरुपिशाचः
शूद्रीगमनेदीर्घकीटः सवर्णाभिगामीदरिद्रः जलहारीमत्स्यः क्षीरहारीबलाकः वार्धुषिकोंगहीनः अविक्रेयविक्रयीगृध्रः राजमहिषीगा
मीनपुंसकः राजाक्रोशकोगर्दभः गोगामीमंडूकः अनाध्यायाध्ययनेसृगालः परद्रव्यापहारीपरप्रेष्यः मत्स्यवधेगर्भवासी इत्येतेनूर्ध्व
गमनाइति स्त्रियोप्येतेषुनिमित्तेषु पूर्वोक्तास्वजातिषुस्त्रीत्वमनुभवंति यथाहमनुः स्त्रियोप्येतेनकल्पेनहत्वादोषमवाप्नुयुः एतेषामे
वजंतूनांभार्यात्वमुपयांतिताइति एतच्चक्षत्रियत्वादिलक्षणकथनंप्रायश्चित्तोन्मुखीभूतब्रह्महाद्युद्वेगजननार्थं नपुनःक्षयित्वादिलक्ष
णयुक्तानांद्वादशवार्षिकादिव्रतप्राप्त्यर्थंसंसर्गनिवृत्त्यर्थंच तथाहि पापक्षयार्थंप्रायश्चित्तम् नचप्रारब्धफलपापापूर्वविनाशेकिंचन
प्रयोजनमस्ति नहिकार्मुकनिर्मुक्तोबाणोलक्ष्यवेधेवेगुस्तद्व्यापारस्यवासत्तांपुनरपेक्षते नचतदारब्धफलनाशार्थोपूर्वनाशोन्वेषणी
यः नहिनिमित्तकारणीभूतचक्रचीवरादिविनाशेनतदारब्धकरकादिविनाशः नचनैसर्गिकंकौनख्यादिकंप्रत्यानेतुंशक्यते किंच नरकतिर्य
ग्योन्यादिजन्यदुःखपरंपरामनुभूयतस्यहिकौनख्यादिकोविकारश्चरमंफलम् तेनचोत्पन्नमात्रेणस्वकारणापूर्वनाशोजन्यते मंथनजनिताशुश्रु
क्षणिनेवारणिक्षयस्तस्मान्नपापविनाशार्थंव्रतपरिचर्या नापिसंव्यवहारार्थं नहिशिष्टाःकुनख्यादिभिःसहसंबंधंपरिहरंति प्राचीननया

त्वापनाशेनसंव्यवहारार्थत्वस्यापिसिद्धेर्नार्थोव्रतचर्यया यत्तुवसिष्ठेनोक्तं कुनखीश्यावदंतश्चकृच्छ्रं द्वादशरात्रंचरेदिति तत्क्षामवत्यादिवन्नैमित्तिकमात्रंनपुनःपापक्षयार्थंसंव्यवहार्यसिद्ध्यर्थंचेतिमंतव्यम् २१६ किंच यथाकर्मस्वकृतदुष्कृतानतिक्रमेण तदनुरूपंनरकादिफलंतिर्यक्त्वं च प्राप्य कालक्रमेणक्षीणे कर्मणि दुष्टलक्षणादरिद्राश्चपुरुषेषुनिकृष्टाजायंते २१७ किंच ततोदुर्लक्षणमनुष्यजन्मानंतरंनिष्कल्मषीभूतानरकाद्युपभोगद्वारेणक्षीणपापाःप्राग्भवीयंसुकृतशेषेणमहाकुलेभोगसंपन्नाःविद्याधनधान्यसंपन्नाजायंते २१८ एवंप्रायश्चित्तेषुप्ररो-

यथाकर्मफलंप्राप्यःतिर्यक्त्वंकालपर्ययात् जायंतेलक्षणभ्रष्टादरिद्राःपुरुषाधमाः २१७ ततोनिष्कल्मषीभूताःकुले महतिभोगिनः जायंतेविद्ययोपेताधनधान्यसमन्विताः २१८ विहितस्याननुष्ठानान्निंदितस्यचसेवनात् अनिग्रहाच्चेंद्रियाणांनरःपतनमृच्छति २१९ तस्मात्तेनेहकर्त्तव्यंप्रायश्चित्तंविशुद्धये एवमस्यांतरात्माचलोकश्चैवप्रसीदति २२०

चनार्थंकर्मविपाकमभिधायाधुनातस्यैवाधिकारिणंनिरूपयितुमाह विहितमितियदावश्यकंसंध्योपासनाग्निहोत्रादिकंनित्यं अशुचिस्पर्शादौनैमित्तिकत्वेनचोदितंस्नानादिकंचतदुभयमुच्यते तस्याकरणात् निंदितस्यनिषिद्धस्यसुरापानादेःकरणात् इंद्रियाणामनिग्रहाच्चनरःपतनमृच्छति प्राप्नोति प्रत्यवायीभवतीतियावत् नन्विंद्रियार्थेषुसर्वेषुनप्रसज्येतकामतइतींद्रियप्रसक्तेरपिनिषिद्धत्वान्निंदितग्रहणेनैवगतार्थत्वा-

त्किमर्थमनिग्रहाच्चेंद्रियाणामिति पृथगुपादानम् अत्रोच्यते इंद्रियप्रसक्तिनिषेधस्यनैकांततः प्रतिषेधस्यनैकरूपतास्नातकव्रतमध्ये पाठात्तत्रच
व्रतानीमानिधारयेदिति व्रतशब्दाधिकारान्नञ् श्रवणाच्चेंद्रियप्रसक्तिप्रतिषेधकः संकल्पोविधीयतेसचोभयरूपइति पृथगुपादानम् ननुवि
हिताकरणात्प्रत्यवैतिकुतोवसितम् नतावदग्निहोत्रादिचोदनापुरुषप्रवर्त्तनात्मिकानुष्ठानस्यप्रत्यवायहेतुतामाक्षिपति विषयानुष्ठानस्य
पुरुषार्थत्वावगतिमात्रपर्यवसायिनी हिसातावन्मात्रेण प्रवृत्त्युपपत्तेर्नपुनरकरणस्य प्रत्यवायहेतुत्वमपिवक्तिक्षीणशक्तित्वादनुपपत्तेः किं
चयद्यप्यनुपपत्त्युपशमेपिप्रवृत्तिसिद्ध्यर्थमर्थांतरंकल्प्यते तर्हिनिषिध्यमानप्रत्यवायपरिहारार्थतयैवतद्वर्जनस्यपुरुषार्थत्वसिद्धावपि
फलांतरंकल्प्येत नचैतत्कस्यचिदपिसंमतम् ननुयथानिषिद्धेष्वर्थवादावगतप्रत्यवायपरिहारार्थतयैवपुरुषार्थत्वम् तथाविहितेष्वर्थ
वादागताकरणजन्यप्रत्यवायपरिहारार्थताकस्मान्नेयात् मैवं नहिसर्वत्राग्निहोत्रादिषुतादृग्विधार्थवादाःसंति नचविहितस्याननुष्ठानान्न
रःपतनमृच्छतीतियंस्मृतिरेववाक्यशेषस्थानीयेतिचतुरस्रम् नहिवाक्यांतरप्रमितेकार्येवाक्यांतरेणार्थवादःसंभवति भवतुवाक-
थंचिदेकवाक्यतयार्थवादस्तथापिनाभावरूपंविहिताकरणंकार्यंनिरंजनयितुंक्षमते ननुज्वरेचैवातिसारेचलंघनंपरमौषधमित्या-
युर्वेदवचनाद्भोजनाभावरूपंलंघनंज्वरशांतिंजनयतीतियथावगम्यते तथात्रापिभवतु मैवं यतोनात्रापिलंघनाज्ज्वरशांतिः किंतर्हि
ज्वरनाशप्रतिबंधकभोजनाभावेसतिजठरानलपरिपाकजनिताद्धातुसाम्यादिमंतव्यम् तस्माद्विहितस्याननुष्ठानान्नरःपतनमृच्छती-
तिकथमस्याःस्मृतेर्गतिरितिवाच्यम् उच्यते अग्निहोत्रादिविषयाधिकारासिद्धिरूपप्रत्यवायाभिप्रायेणेतिनदोषः ननुवांताश्युल्कासु

खः प्रेतोविप्रोभवतिविच्युतः अमेध्यकुणपाशीतुक्षत्रियः कटपूतनः मैत्राक्षज्योतिकः प्रेतोवैश्योभवतिपूयभुक् चैलाशकस्तुभवतिशूद्रोध
र्मात्स्वकाच्च्युतइत्येतानिविहिताकरणप्रत्यवायपराणिमनुवचनानिकथंघटंते उच्यते यथावांतमश्नतउल्कयावादह्यमानमुखस्यदुःखंन-
थास्यापिविहितमकुर्वतःपुरुषस्यपुरुषार्थासिद्धेरित्यकरणनिंदनमनुष्ठानप्ररोचनार्थमित्यविरोधः यद्वाप्राग्भवीयनिषिद्धाचरणाक्षिप्तवि
हितानुष्ठानविरोधिरागालस्यादिजन्यंवांताश्युल्कामुखप्रेतत्वादिरूपमितिनक्वचिदभावस्यकारणतेतिमंतव्यम् ननुपुंश्चलीवानररखरदृ
ष्टमिथ्याभिशस्तादौविहिताकरणादिनिमित्तानामन्यतमस्याप्यभावात्कथंप्रत्यवायिता कथंचतदभावेप्रायश्चित्तविधानम् उच्यते अस्मा
देवपापक्षयार्थंप्रायश्चित्तंविधानाज्जन्मांतराचरितनिषिद्धसेवादिजन्यंपापापूर्वमाक्षिप्तंमिथ्याभिशापादिकंतन्निमित्तप्रायश्चित्तापनोद्य
मनोनानुष्ठितमितिकल्प्यते पुरुषप्रयत्ननिरपेक्षणेकार्यरूपपापोत्पत्त्यनुपपत्तेः नचपुंश्चल्यादिगतप्रयत्नेनपुरुषांतरेणपापोत्पत्तिः कर्तृ
समवायित्वनियमाद्धर्माधर्मयोस्तस्माद्युक्तैवप्रायश्चित्तेनिमित्तत्रयपरिगणना तथाचमनुः अकुर्वन्विहितंकर्मनिंदितंचसमाचरन्
प्रसक्तश्चेंद्रियार्थेषुप्रायश्चित्तीयतेनरइतिनरग्रहणंप्रतिलोमजातानामपिप्रायश्चित्ताधिकारप्राप्त्यर्थं तेषामप्यहिंसादिसाधारणधर्म-
व्यतिक्रमसंभवात् यस्मादेवंनिषिद्धाचरणादिनाप्रत्यवैति तस्मात्तेनकृतनिषिद्धसेवादिनापुरुषेणप्रायश्चित्तंकर्त्तव्यमिहलोकेपरत्रच-
विशुद्ध्यर्थं प्रायश्चित्तशब्दश्चायंपापक्षयार्थेनैमित्तिकेकर्मविशेषेरूढः एवंप्रायश्चित्तेकृतेअस्यांतरात्माशुद्धतयाप्रसीदति लोकश्चायं
संव्यवहर्त्तुंप्रसीदति एवंचवदतानेनतद्दर्शितम् नैमित्तिकोयंप्रायश्चित्ताधिकारः तत्रचार्थवादगतदुरितक्षयेपिजातेष्टिन्यायेनसाध्यत

यास्वीक्रियते नचदुरितपरिजिहासुनानुष्ठीयनइत्येनावता काम्याधिकाराशंकाकार्या यस्माच्चरितव्यमतो नित्यंप्रायश्चित्तंविशुद्धये निंद्यैर्हि
लक्षणैर्युक्ताजायंतेनिष्कृतैर्नराइत्यकरणे दोषश्रवणेनावश्यकत्वावगमात् २१९ २२० प्रायश्चित्ताकरणेदोषमाह पापेषुशास्त्रार्थव्य-
तिक्रमजनितेषुप्रसक्ताःपुरुषाअपश्चात्तापिनोमयादुष्कृतंकृतमित्येवमुद्वेगरहिताःप्रायश्चित्तमकुर्वाणाःदुःसहान्नरकानाप्नुवंति २२१

प्रायश्चित्तमकुर्वाणाःपापेषुनिरतानराः अपश्चात्तापिनःकष्टान्नरकान्यांतिदारुणान् २२१ तामिस्रंलोहशंकुंचम
हानिरयशाल्मली रौरवंकुड्मलंपूतिमृत्तिकंकालसूत्रकम् २२२ संघातंलोहितोदंचसविषंसंप्रपातनम् महानरक
काकोलंसंजीवनमहापथम् २२३ अवीचिमंधतामिस्रंकुंभीपाकंतथैवच असिपत्रवनंचैवतापनंचैकविंशकम् २२४
महापातकजैर्घोरैरुपपातकजैस्तथा अन्वितायांत्यचरितप्रायश्चित्तानराधमाः २२५

नरकस्वरूपंविवृण्वन्नाह तामिस्रप्रभृतीन्संप्रतापनपर्यंतानेकविंशतिनरकानन्वर्थसंज्ञान्द्योतितावांतरभेदान्महापातकोपपातकजनितमयंक
रदुरितैरन्विताअनाचरितप्रायश्चित्ताःपुरुषाधमाःप्राप्नुवंति उपात्तदुरितनाशार्थंप्रायश्चित्तमित्युक्तम् २२२ २२३ २२४ २२५ ७९

तत्रविशेषमाह प्रायश्चित्तैर्वक्ष्यमाणैरज्ञानाद्यदेनःपापंकृतंतदपैतिनिगच्छति नकामतःकृतम् किंतुतत्रप्रायश्चित्तविधायकवचनबलादिह-
लोकेव्यवहार्योजायते अत्रचप्रायश्चित्तैरपैत्येनोयदज्ञानकृतमित्युपक्रमात्तत्प्रतियोगितयाज्ञानतइतिवक्तव्येयत्कामतइत्युक्तंतत्ज्ञान
कामयोस्तुल्यत्वप्रदर्शनार्थम् तथाहि विहितंयदकामानांकामात्तद्द्विगुणंभवेत् तथाअबुद्धिपूर्वक्रियायामर्धंप्रायश्चित्तम् तथाम्लेच्छे
नाधिगताशूद्रात्त्वज्ञानात्तुकथंचन कृच्छ्रत्रयंप्रकुर्वीतज्ञानात्तुद्विगुणंभवेदित्यादिभिर्वचनैर्ज्ञानकामयोस्तुल्यप्रायश्चित्तदर्शनात्तुल्यफ-
लत्वेव किंच स्वतंत्रप्रवृत्तिविषयज्ञानकामनाभ्यांनियता तयोरन्यतरापायेपितस्याअसंभवादतःकामतइत्युक्तेज्ञानाज्ञानतइत्युक्तेका

प्रायश्चित्तैरपैत्येनोयदज्ञानकृतंभवेत् कामतोव्यवहार्यस्तुवचनादिहजायते २२६

मःप्राप्तोत्यविनाभावात् नचचौरादिभिर्बलात्प्रवर्त्तमानस्यसत्यपिविषयज्ञानेकामनाभावान्नविनाभावइतिवाच्यम् यतोत्रविद्यमानस्या
पिज्ञानस्यप्रवृत्तिहेतुत्वाभावेनसत्त्वमन्वम् यत्तु शुष्केपिपतितोभ्रांत्याकर्दमपतनंतत्रापिवास्तवज्ञानाभावात्तद्विषयकामनायाश्चाभाव
एव एवमज्ञानकामनयोरप्यव्यभिचारएव ननुप्रायश्चित्तैरपैत्येनइतिनयुक्तम् फलविनाश्यत्वात्कर्मणाम् मैवम् यथापापोत्पत्तिःशास्त्र
गम्यात्तथातत्परिक्षयोपीतिनात्रप्रमाणांतरंक्रमते अतएवगौतमेन पूर्वोत्तरपक्षभंग्याअयमर्थोदर्शितः तत्रप्रायश्चित्तंकुर्यान्नकुर्यादिति

मीमांसने नकुर्यादित्येके नहिकर्मक्षीयते इति कुर्यादित्यपरे पुनःस्तोमेनेष्ट्वापुनःसवनमायांतीतिविज्ञायते व्रात्यःस्तोमेनेष्ट्वाब्रह्मचर्यंचरे
दुपनयनत इतिसर्वंपाप्मानंतरतिभ्रूणहत्यायोश्वमेधेनयजत इतिपुनःसवनमायांतीतिसवनसंपाद्यज्योतिष्टोमादिद्विजातिकर्मणियोग्यो
भवतीत्यर्थः नचेदमर्थवादमात्रमधिकारविशेषणाकांक्षायांरात्रिसत्रन्यायेनार्थवादिकफलस्यैवकल्पनायान्याय्यत्वादतोयुक्तंप्रायश्चि
त्तैरपैत्येनइति ननुकामकृते प्रायश्चित्ताभावात्कथंव्यवहार्यत्वंतदभावश्चानभिसंधिकृतेपराधेप्रायश्चित्तमितिवसिष्ठवचनादियंविशु
द्धिरुदिता प्रमाप्यकामतोद्विजं कामतो ब्राह्मणवधेनिष्कृतिर्नविधीयते इतिमनुवचनाच्चावगम्यते नैतत् यःकामतोमहापापंनरःकुर्यात्कृ
थंचन नतस्यनिष्कृतिर्दृष्टाभृग्वग्निपतनादृते इति तथा विदितंयदकामानांकामात्तद्विगुणंभवेदितिच कामकृतेपिप्रायश्चित्तदर्श-
नात् यत्तुवसिष्ठवचनम् तस्याप्यकामकृतेपराधेप्रायश्चित्तंशुद्धिकरमित्यभिप्रायोनपुनःकामकृतेपिप्रायश्चित्ताभावइति यत्तुम-
नुवचनमियम् विशुद्धिरुदितेत्यादितदपीयमितिसर्वनामपरामृष्टद्वादशवार्षिकव्रतचर्यायाएवकामतोब्राह्मणवधेनिष्कृतिर्नविधीयतेइ
ति अनेनप्रतिषेधोनपुनःप्रायश्चित्तमात्रस्य मरणांतिकादेःप्रायश्चित्तस्यदर्शितत्वात् ननुयदिकामकृतेपिप्रायश्चित्तमस्तितर्हिपापक्ष
योपिकस्मान्नस्यादविशेषाद्यदिपापक्षयोपिनास्तितर्हिव्यवहार्यतापिकथंभवति उच्यते उभयप्रायश्चित्ताविशेषेपिफलविशेषःशास्त्रा
तोवगम्यते अज्ञानकृतेतुसर्वत्रपापक्षयः यत्रतुब्रह्महासुरापोगुरुतल्पगमातृपितृयोनिसंबंधागस्तेननास्तिकनिंदितकर्माभ्यासीपति-
तात्याग्यपतितत्यागिनःपतिताःपातकसंयोजकाश्चेतिगौतमोक्तमहापातकादौव्यवहार्यत्वंनिषिद्धम् तस्मिन्पतनीयेकर्मणिकामतः

कृतेव्यवहार्यत्वमात्रंनपापक्षयइति नचपापक्षयाभावेव्यवहार्यत्वमनुपपन्नम् द्वेहिपापस्यशक्तीनरकोत्पादिकाव्यवहारनिरोधिकाचेति
तत्रेतरशक्त्यविनाशेपिव्यवहारनिरोधिकायाःशक्तेर्विनाशोनानुपपन्नस्तस्मात्पापानपगमेपिव्यवहार्यत्वंनानुपपन्नम् यत्तुमनुवचनम्
अकामतःकृतेपापेप्रायश्चित्तंविदुर्बुधाः कामकारकृतेप्याहुरेकेश्रुतिनिदर्शनादितितदपिकामकृतेपिप्रायश्चित्तशास्त्रस्यर्थेनपुनःपापक्षय
प्रतिपादनपरम् अपतनीयेपुनःकामकृतेपिप्रायश्चित्तेनपापक्षयोभवत्येव अकामतःकृतंपापंवेदाभ्यासेनशुध्यति कामतस्तुकृतं
मोहात्प्रायश्चित्तैःपृथग्विधैरितिमनुस्मरणात् पतनीयेपिकर्मणिकामकृतेमरणांतिकप्रायश्चित्तेषुकल्मषक्षयोभवत्येवफलांतराभा-

ब्रह्महामद्यपस्तेनस्तथैवगुरुतल्पगः एतेमहापातकिनोयश्चतैःसहसंवसेत् २२७

वात् नान्यस्मिन्लोकेप्रत्यापत्तिर्विद्यतेकल्मषंतुनिर्हण्यतइतिआपस्तंबस्मरणात् २२६ निषिद्धाचरणादेकेप्रायश्चित्तेनिमित्तमित्यु-
क्तंतत्प्रपंचयितुमाह हंतिरयंप्राणवियोगकरणव्यापारेरूढः यद्व्यापारसमनंतरंकालांतरेवाकारणांतरनिरपेक्षःप्राणवियोगोभवतिस
ब्राह्मणंहतवानितिब्रह्महा मद्यपोनिषिद्धसुरायाःपायी स्तेनोब्राह्मणस्यसुवर्णहर्ता ब्राह्मणसुवर्णापहरणमहापातकमित्यापस्तंबस्म
रणात् गुरुतल्पगोगुरुभार्यागामी तल्पशब्देनशयनवाचिनासाहचर्याद्भार्यालक्ष्यते एतेब्रह्महादयोमहापातकिनः पातयंतीतिपातका

निब्रह्महत्यादीनि महच्छब्देनतेषांगुरुत्वंख्याप्यते तद्योगिनोमहापातकिनइतिलाघवार्थंसंज्ञाकरणम् यश्चतैर्ब्रह्महादिभिःप्रत्येकंसह-
संवसति एभिस्तुसंवसेद्योवैवत्सरंसोपितत्समइति वक्ष्यमाणन्यायेनसोपिमहापातकी तथाशब्दःप्रकारवचनः अनुग्राहकप्रयोजका
दिकर्तृसंग्रहार्थः अनुग्राहकश्चयःपलायमानममित्रंउपरुंधन्परेभ्यश्चहंतारंपरिरक्ष्यहंतुर्द्विदिमानमुपजनयन्नुपकरोतिसउच्यते अतए
वमनुनाग्राहकस्यहिंसाफलसंबंधोदर्शितः बहूनामेककार्याणांसर्वेषांशस्त्रधारिणाम् यद्येकोघातयेत्तत्रसर्वेतेघातकाःस्मृताइति तथा
प्रयोजकादीनामप्यापस्तंबेनफलसंबंधउक्तः प्रयोजितानुमंताकर्त्ताचेतिस्वर्गनरकफलेषुकर्मसुभागिनोयोभूयआरभतेतस्मिन्फलविशे
षइति तत्राप्रवृत्तस्यप्रवर्त्तकःप्रयोजकः सचत्रिःप्रकारः आज्ञापयिताभ्यर्थयमानउपदेष्टेति तत्राज्ञापयितानामस्वयमुच्चःसन्नीचंभृत्या
दिकंयःप्रेषयतिमदीयममित्रंजहीतिसउच्यते अभ्यर्थयमानस्तुयःस्वयमसमर्थःसन्प्रार्थनादिनामच्छत्रुंव्यापादयेत्युच्चंप्रवर्त्तयतिसो
भिधीयते अनयोश्चस्वार्थसिध्यर्थमेवप्रयोक्तृत्वम् उपदेष्टापुनस्त्वंशत्रुमित्थंव्यापादयेति मर्मोद्घाटनाद्युपदेशपुरःसरंप्रेरयन्कथ्यते त-
त्रचप्रयोज्यगतमेवफलमितितेषांभेदः अनुमंतातुप्रवृत्तस्यप्रवर्त्तकः सचद्विप्रकारः कश्चित्स्वार्थसिध्यर्थमनुजानातिकश्चित्परार्थमि
ति नन्वनुमननस्यकथंहिंसाहेतुत्वम् नतावत्प्राणवियोगोत्पादनेनतस्यसाक्षात्कर्तृव्यापारजन्यत्वान्नापिप्रयोजकस्येवसाक्षात्कर्तृप्रवृत्युत्पा
दनद्वारेणप्रवृत्तस्यप्रवर्त्तकत्वात् नचसाधुत्वयाध्यवसितमितिप्रवृत्तमेवानुमन्यतइतिशंकनीयम् तादृशमननस्यहिंसांप्रत्यहेतुत्वाद्यार्थत्वा
च्च उच्यते यत्रहिराजादिपारतंत्र्यात्स्वयंमनसाप्रवृत्तोपिप्र वृत्तिविच्छेदभयादागामिदंडभयाद्वाशिथिलप्रयत्नोराजाद्यनुमतिमपेक्षते

तत्रानुमतिर्हेतुः प्रवृत्तिमुपोद्बलयतीतिहिंसाफलंप्रतिहेतुतांप्रतिपद्यते तथान्योपिभर्त्सनताडनधनापहारादिनापरान्क्षोपयतिसोपिमरणहे
तुभूतमन्यूत्पादनद्वारेणहिंसाहेतुर्भवत्यतएवविष्णुनोक्तं आक्रुष्टस्ताडितोवापिधनैर्वाविप्रयोजितः यमुद्दिश्यत्यजेत्प्राणांस्तमाहुर्ब्रह्मघात-
कमिति तथाज्ञातिमित्रकलत्रार्थंसुहृत्क्षेत्रार्थमेवच यमुद्दिश्यत्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकमिति नचकृतेष्वपाक्रोशनादिषुकस्यचि-
न्मन्यूत्पत्त्यदर्शनादकारणतेतिशंकनीयम् पुरुषस्वभाववैचित्र्यात् अल्पतरेणापिनिमित्तेनजातमन्यवोभवंतितेष्वव्यभिचारइतिनाकार
णता एतेषांचानुग्राहकप्रयोजकादीनांप्रत्यासत्तिव्यवधानापेक्षयापारगतगुरुलाघवापेक्षयाचफलगुरुलाघवात् प्रायश्चित्तगुरुलाघव
बोद्धव्यम् योभूयआरभतेतस्मिन्फलविशेषइतिवचनात् तथात्यनुग्राहकस्यतावत्स्वयमेवहिंसायांप्रवृत्तेनस्वतंत्रकर्तृकत्वेसत्यपिसा
क्षात्प्राणवियोगफलकखड्गप्रहारादिव्यापारयोगित्वाभावेनसाक्षात्कर्तृवद्भूयोहिंसारंभकत्वाभावादल्पफलत्वमल्पप्रायश्चित्तंच प्रयोज
कस्यतुस्वतंत्रकर्तृप्रवृत्तिजनकत्वेनव्यवहितत्वात्ततोल्पफलत्वम् प्रयोजकानामध्येपरार्थप्रवृत्तत्वेनोपदेष्टुरल्पफलत्वम् ननुप्रयोजक-
हस्तस्थानीयत्वात्प्रयोजकस्यनफलसंबंधोयुक्तः यदिपरप्रयुक्त्याप्रवर्तमानस्यापिफलसंबंधः तर्हिस्थपतितडागेखनितृप्रभृतीनामपिमू
ल्येनप्रवर्त्तमानानांस्वर्गादिफलप्रसंगः उच्यते शास्त्रफलंप्रयोक्तरीतिन्यायेनाधिकारिकर्तृगतफलजननादेवकूपतडागदेवनिर्माणादयः
नचस्थपतितडागकर्त्रादयोदेवकूपतडागकरणादिष्वधिकारिणोस्वर्गकामित्वात् अत्रपुनःपरप्रयुक्त्याप्रवर्त्तमानानामप्यहिंसायामधिका
रित्वाद्भवत्येवतद्व्यतिक्रमनिबंधनोदोषः अनुमतस्तुप्रयोजकादल्पत्वंप्रयोजकव्यापाराद्बहिरंगत्वाल्लघुत्वाच्चानुमननस्य निमित्तकर्तुःपु

नराक्रोशकादेः प्रवृत्तिहेतुभूतमन्युजनकत्वेनव्यवहितत्वान्मारणानुसंधानं विना प्रवृत्तत्वाच्चानुमंतुः सकाशादप्यल्पफलत्वम् ननुयदिव्यव
हितस्यापिकारणत्वं तर्हिमातापित्रोरपिहंतृपुरुषोत्पादनद्वारेण हननकर्तृत्वप्रसंगः उच्यते नहिपूर्वभावित्वमात्रेणकारणत्वम् कारणकार
णतयापितथाभावित्वोपपत्तेः यत्खलुस्वरूपातिरिक्तकार्योत्पत्त्यनुगुणव्यापारयोगिभवति तद्धिकारणम् यदिरथंतरासामयस्यमंत्रप-
ठनात्सोमरसप्रवृत्तितदेषस्यैवप्रथमाहुतित्वंसोमःस्यादैंद्रवायवाग्राहानुगृण्हीयादितिरथंतरसामतेयक्रतौरैंद्रवायवाग्रतायांनहितत्रसो
मयागः स्वरूपेणकारणव्यभिचारान्नचपित्रोस्तादृग्विधकारणलक्षणयोगित्वमितिनातिप्रसंगः अननैवन्यायेनधर्माभिसंधिनानिर्मि
तकूपवाप्यादौप्रमादपतितब्राह्मणादिमरणेखानयितुर्दोषाभावः नहिकूपोनेनखानितः अतोहमात्मानंव्यापादयामीत्येवंकूपखनननि
मित्तव्यापादनम् अतःकूपकर्तुरपिकारणकारणत्वमेव नपुनर्हिंसाहेतुत्वमितिमातापितृतुल्यतैव यथाक्वचित्सत्यापिहिंसानिमित्तयो-
गित्वेपरोपकारार्थप्रवृत्तौवचनाद्दोषाभावः यथाहसंवर्तः बंधनेगोश्चिकित्सार्थेगूढगर्भविमोचने यत्नेकृतेविपत्तिश्चेत्प्रायश्चित्तंनविद्यते
औषधंस्नेहमाहारंददद्गोब्राह्मणादिषु दीयमानेविपत्तिःस्यान्नसपापेनलिप्यते दाहच्छेदशिराभेदप्रयत्नैरुपकुर्वताम् प्राणसंत्राणसि
द्ध्यर्थंप्रायश्चित्तंनविद्यतेइति एतच्चादाननिदाननिपुणाभिषग्विषयम् इतरस्यतुभिषङ्मिथ्याचरन्दाप्यइत्यत्रदोषोदर्शितः यत्तुमन्युनिमि-
त्ताक्रोशनादिकमकुर्वतोपिनामगृहीत्वोन्मादादिनात्मानंव्यापादयतितत्रापिनदोषः अकारणंतुयःकश्चिद्द्विजःप्राणान्परित्यजेत् तस्यैवतत्र
दोषःस्यान्नतुयंपरिकीर्तयेदितिस्मरणात् यथायत्राप्याक्रोशकादिजनितमन्युनात्मानंखड्गादिनाप्रहृत्यमरणादर्वागाक्रोशनादिकर्त्राधन-

दानादिना संतोषितो यदि जनसमक्षमुच्चैः श्रावयति नात्राक्रोशकस्यापराध इति तत्रापि वचनान्न दोषः यथाह विष्णुः उद्दिश्य कुपितो हत्वा तोषितः श्रावयेत्पुनः तस्मिन्मृते न दोषोस्ति द्वयोरुच्छ्रावणे कृते इति एतेषां च प्रयोजकादीनां दोषगुरुलघुभावपर्यालोचनया प्रायश्चित्तविशेषं वक्ष्यामः २२७ ब्रह्महत्यासमान्याह गुरूणामाधिक्येनाधिक्षेपः अनृताभिशंसनम् गुरोरनृताभिशंसनमिति महापातकसमानीति गो

गुरूणामध्यधिक्षेपो वेदनिंदा सुहृद्वधः ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनम् २२८

नमस्मरणात् एतच्च लोकाविदितदोषाभिशंसनविषयम् दोषं बुध्वा न पूर्वं परेषां समाख्याता स्यात्सं व्यवहारे चैवैनं परिहरेदित्यापस्तंबस्मरणात् नास्तिक्याभिनिवेशेन वेदकुत्सनम् सुहृन्मित्रं तस्याब्राह्मणस्यापि वधः अधीतस्य वेदस्य सच्छास्त्रविनोदेनालस्यादिना वा नाशनं विस्मरणम् एतानि प्रत्येकं ब्रह्महत्यासमानि यत्पुनः स्वाध्यायाग्निसुतत्याग इति अधीतत्यागस्योपपातकमध्ये परिगणनं तत्कथंचित्कुटुंबभरणाकुलतया सच्छास्त्रश्रवणाव्यग्रतया वा विस्मरणे द्रष्टव्यम् २२८ ७ ७ ७ ७

सुरापानसमान्याह निषिद्धं लशुनादिकं तस्यमतिपूर्वभक्षणम् अतएवमनुः छात्राकंविड्वराहंचलशुनंग्रामकुक्कुटम् पलांडुंगृंजनंचैवमत्या-
जग्ध्यापतेन्नरइति अमतिपूर्वेतुप्रायश्चित्तांतरम् अमत्यैतानिषड्जग्ध्वा कृच्छ्रंसांतपनंचरेत् यतिचांद्रायणंवापिशेषेषूपवसेदहरितितेनैवो
क्तत्वात् जैह्म्यंकौटिल्यं अन्याभिसंधानेनान्यवादित्वमन्यकर्तृत्वंच अत्रचजैह्म्यमितियद्यपिसामान्येनोक्तंतथापिप्रायश्चित्तस्यगुरुत्वान्निमि
त्तस्यापिगुरुविषयम् जैह्म्यमितिगौरवमवगम्यते अस्तिचनैमित्तिकपर्यालोचनायानिमित्तस्यविशेषावगतिः यथायस्योभावग्नीअनुगतौ

निषिद्धभक्षणंजैह्म्यमुत्कर्षेचवचोनृतम् रजस्वलामुखास्वादःसुरापानसमानितु २२९
अश्वरत्नमनुष्यस्त्रीभूधेनुहरणंतथा निक्षेपस्यचसर्वंहिसुवर्णस्तेयसंमितम् २३०

स्यातामभिनिम्लोचेद्वापुनराधेयंतत्रप्रायश्चित्तिरित्यत्रोभावित्यस्यनिमित्तविशेषणत्वेनहविरुभयत्ववदविवक्षितत्वेप्यग्निद्वयनिष्पादकपु
नराधेयरूपेनैमित्तिकविधिबलादग्निद्वयानुगतिरेवनिमित्तमितिकल्प्यते तथात्रापीतियुक्तंनिमित्तगौरवकल्पनम् तथासमुत्कर्षनिमित्तंरा
जकुलादावचतुर्वेदएवचतुर्वेदोहमित्यनृतभाषणं रजस्वलायामकामवशेनवक्त्रासवसेवनमेतानिसुरापानसमानि २२९ सुवर्णस्तेयसमा-
न्याह अश्वादीनांब्राह्मणसंबंधिनांनिक्षेपस्यचसुवर्णव्यतिरिक्तस्यापहरणमेतत्सर्वंसुवर्णस्तेयसमंवेदितव्यम् २३० ॥ ॥

गुरुतल्पसमान्याह सखामित्रंतस्यभार्या कुमार्युत्तमजातीयाकन्यका तासुसकामास्वनुलोमासुनदोषस्त्वन्यथाधर्मः दूषणेतुकरच्छेदउ
त्तमायांवधस्तथेतितत्रैवदंडविशेषप्रतिपादनात् प्रायश्चित्तगुरुत्वंयुक्तं स्वयोनिर्भगिनी अंत्यजाचांडाली सगोत्रासमानगोत्रा सुतस्त्रीस्नु
षा एतासांगमनंप्रत्येकंगुरुतल्पसमम् एतच्चरेतःसेकादूर्ध्वंवेदितव्यम् अर्वाङ्निवृत्तौतुनगुरुतल्पेनसमत्वम् किंत्वल्पमेवप्रायश्चित्तम्
रेतःसेकःस्वयोनिषुकुमारीष्वंत्यजासुच सख्युःपुत्रस्यचस्त्रीषुगुरुतल्पसमंविदुरित्यादिमानवेरेतःसेकइतिविशेषणोपादानात् सगोत्रा

सखिभार्याकुमारीषुस्वयोनिष्वंत्यजासुच सगोत्रासुसुतस्त्रीषुगुरुतल्पसमंस्मृतं २३१

ग्रहणेनैवसिद्धेपुनःसुतस्त्रीग्रहणंप्रायश्चित्तगौरवप्रतिपादनार्थम् ब्रह्महत्यादिसमत्ववचनंगुर्वधिक्षेपादेस्तन्निमित्तप्रायश्चित्तोपदेशार्थ
म् ननुवेदनिंदादौदोषस्यलघुत्वाद्गुरुतरंब्रह्महत्यादिप्रायश्चित्तंनयुज्यते नैवम् गुरुप्रायश्चित्तोपदेशबलादेवदोषगुरुत्वमवगम्यते नच
ब्रह्महत्यादिप्रायश्चित्तातिदेशार्थमेवेदंवचनंभवति किंतुदोषगौरवमात्रप्रतिपादनपरमित्याशंकनीयम् यतस्तावन्मात्रप्रतिपादनपरत्वे
ब्रह्महत्यासममिदंगुरुतल्पसममित्यादिभेदेनसमत्वाभिधानंनोपपद्यते नच्चप्रायश्चित्तंसमशब्देनोपदिश्यमानंब्रह्महत्यादिप्रायश्चित्तेभ्यः

किंचिन्न्यूनमेवोपदिश्यते लोकराजसमोमंत्रीत्यादिवाक्येषु समशब्दस्य किंचिद्धीने प्रयोगदर्शनात् महतःपातकस्येतरस्यच तुल्यत्वस्यायुक्त-
त्वात् एवंचसतियाज्ञवल्क्येनब्रह्महत्यासमत्वेनोक्तानामपिब्रह्मजिह्मवेदनिंदासुहृद्वधानामनुनायत्सुरापानसाम्यम् ब्रह्मोज्झनावेदनिं-
दाकौटसाक्ष्यंसुहृद्वधः गर्हितान्नाद्ययोर्जग्धिःसुरापानसमानिषडित्युक्तं तत्प्रायश्चित्तविकल्पार्थं एवमन्येष्वपिवचनेषु विरोधःपरिहर्त्तव्यः
यत्तुवसिष्ठेन गुरोरलीकनिर्बंधे कृच्छ्रंद्वादशरात्रंचरित्वासचैलस्नातोगुरुप्रसादात् पूतोभवतीतिलघुप्रायश्चित्तमित्युक्तम् तदमतिपूर्वेस-
कृदनुष्ठानेवेदितव्यम् २३१ गुरुतल्पातिदेशमाह पितृष्वस्रादयःप्रसिद्धास्ताःगच्छन्गुरुतल्पगस्तस्यलिंगंछित्वाराज्ञावधःकर्त्तव्योदंडा

पितुःस्वसारंमातुश्चमातुलानींस्नुषामपि मातुःसपत्नींभगिनीमाचार्यतनयांतथा २३२
आचार्यपत्नींस्वसुतांगच्छंस्तुगुरुतल्पगः लिंगंछित्वावधस्तत्रसकामायाःस्त्रियाअपि २३३

र्थः प्रायश्चित्तंतदेव चशब्दाद्राज्ञीप्रव्रजितादीनांग्रहणम् यथाहनारदः मातापितृष्वसाश्वश्रूमातुलानीपितृष्वसा पितृव्यसखिशिष्य-
स्त्रीभगिनीतत्सखीस्नुषा दुहिताचार्यभार्याचसगोत्राशरणागता राज्ञीप्रव्रजिताधात्रीसाध्वीवर्णोत्तमाचया आसामन्यतमांगच्छन्
गुरुतल्पगउच्यते शिश्नस्योत्कर्त्तनात्तत्रनान्योदंडोविधीयतेइति राज्ञीराज्यस्यकर्त्तुर्भार्यानक्षत्रियैव तद्गमनेप्रायश्चित्तांतरोपदेशात्

धात्रीमातृव्यतिरिक्तास्तन्यदानादिनापोषयित्री साध्वीव्रतचारिणी वर्णोत्तमाब्राह्मणी अत्रचमातृग्रहणंदृष्टांतार्थं अयंचलिंगच्छेदवधात्मको दंडोब्राह्मणव्यतिरिक्तस्य नजातुब्राह्मणंहन्यात्सर्वपापेष्ववस्थितमितितस्यवधनिषेधात् वधस्यैवप्रायश्चित्तरूपत्वात् अस्यचविषयंगुरुतल्पप्रायश्चित्तप्रकरणेप्रपंचयिष्यामः अत्रस्नुषाभगिन्योः पूर्वश्लोकेनगुरुतल्पसमीकृतयोःपुनर्ग्रहणंप्रायश्चित्तविकल्पार्थं यदापुनरेताःस्त्रियःसकामाःसत्यएतानेवपुरुषान्वशीकृत्योपभुंजंतेतदातासामपिपुरुषवद्वधएवदंडःप्रायश्चित्तंच एतानिगुर्वधिक्षेपादितनयागमनपर्यंतानिमहापातकातिदेशविषयाणिसद्यःपतनहेतुत्वात् पातकान्युच्यंते यथाहयमः मातृष्वसामातृसखीदुहिताचपितृष्वसा मातुलानीस्व

गोवधोव्रात्यतास्तेयमृणानांचानपाक्रिया अनाहिताग्नितापण्यविक्रयःपरिवेदनम् २३४

साश्वश्रूगत्वासद्यःपतेन्नरइति गौतमेन पुनरन्येषामपिपातकत्वमुक्तम् मातृपितृयोनिसंबंधांगस्तेननास्तिकनिंदितकर्माभ्यासिपतितात्यागिनःपतितनाःपातकसंयोजकाश्चेति तेषांचमहापातकोपपातकस्यमध्येपाठान्महापातकान्न्यूनत्वमुपपातकाच्चगुरुत्वमवगम्यते तदुक्तं महापातकतुल्यानिपापान्युक्तानियानितु तानिपातकसंज्ञानितन्न्यूनमुपपातकमिति तथाचांगिराः पातकेषुसहस्रस्यान्महत्सुद्विगुणंतथा उपपापेतुरीयंस्यान्नरकंवर्षसंख्यया २३२ २३३ एवंमहापातकानिसत्समानिचपातकानिपरिगणय्योपपातकानिपरिगणयितुमाह गोवधोगो

पिंडव्यापादनम् कालेनुपनीतत्वं व्रात्यता ब्राह्मणसुवर्णतत्समव्यतिरिक्तपरद्रव्यापहरणं स्तेयम् गृहीतस्यसुवर्णादेरप्रदानंऋणानामपाकर्
णं तथादेवर्षिपितृणांसंबंधिऋणस्यानपाकरणंच सत्यधिकारेनाहिताग्नित्वम् ननुज्योतिष्टोमादिकामश्रुतयः स्वांगभूताग्निनिष्पत्त्यर्थ-
माधानं प्रयुंजतइतिमीमांसकप्रसिद्धिरतश्च यस्याग्निभिः प्रयोजनंतस्यतदुपायभूताधानेप्रवृत्तिर्व्रीह्यर्थिनइवधनार्जनेयस्यपुनरग्नि
भिः प्रयोजनंनास्तितस्याप्रवृत्तिरितिकथमनाहिताग्नितादोषः उच्यते अस्मादेवाधानस्यावश्यकत्ववचनान्नित्यश्रुतयोपिसाधिकारश्चा

भृताद्ध्ययनादानंभृतकाध्यापनंतथा पारदार्यंपारिवित्त्यंवार्धुष्यंलवणक्रिया २३५ स्त्री
शूद्रविट्क्षत्रवधोनिंदितार्थोपजीवनम् नास्तिक्यंव्रतलोपश्चसुतानांचैवविक्रयः २३६

विशेषादाधानस्यप्रयोजकाइतिस्मृ
तिकाराणामभिप्रायोलक्ष्यतइत्यदोषः तथाअपण्यस्यलवणादेर्विक्रयः सहोदरस्यज्येष्ठस्यतिष्ठतः कनीयसोभ्रातुर्दाराग्निसंयोगः परिवेदनं
२३४ पणपूर्वाध्यापकाद्ध्ययनग्रहणंपणपूर्वाध्यापनं परदारसेवनंगुरुतल्पसमव्यतिरेकेण पारिवित्त्यंकनीयसिकृतविवाहेज्येष्ठस्यविवाह-
राहित्यं वार्धुष्यंप्रतिषिद्धवृद्ध्युपजीवनम् लवणस्योत्पादनं २३५ स्त्रियोवधः ब्राह्मण्याअप्यात्रेय्याव्यतिरेकेण शूद्रवधः अदीक्षितविट्क्षत्रि
यवधः निंदितार्थोपजीवनमराजस्यापिनार्थोपजीवनं नास्तिक्यंनास्तिपरलोकइत्याद्यभिनिवेशः व्रतलोपोब्रह्मचारिणः स्त्रीप्रसंगः सुतानामपत्याना
विक्रयः २३६

धान्यंव्रीह्यादि कुप्यमसारंत्रपुसीसादि पशवोगवादयः तेषामपहरणम् गोवधोव्रात्यतास्तेयमित्यनेनस्तेयग्रहणेनैवसिद्धेपुनर्धान्यकुप्यादिस्तेयग्रहणंनित्यार्थमतोधान्यादिव्यतिरिक्तद्रव्यस्तेयेनावश्यमेतदेवप्रायश्चित्तमपितुततोन्यूनमपिभवत्येवमेतेनबांधवत्यागग्रहणेनैवसिद्धेपुनःपित्रादित्यागग्रहणंव्याख्यातम् अयाज्यानांजातिकर्मदुष्टानांशूद्रव्रात्यादीनांयाजनम् पितृमातृसुतानामपतितानांत्यागोगृहान्निष्काशनम् तडागारामस्यचोद्यानोपवनादेर्विक्रयः २३७ कन्यायादूषणमंगुल्यादिनायोनिविदारणनतुभोगः तस्यसख्विभार्या

धान्यकुप्यपशुस्तेयमयाज्यानांचयाजनम् पितृमातृसुतत्यागस्तडागारामविक्रयः २३७
कन्यासंदूषणंचैवपरिविंदकयाजनम् कन्याप्रदानंतस्यैवकौटिल्यंव्रतलोपनम् २३८

कुमारीष्वितिगुरुतल्पसमत्वस्योक्तत्वात् परिविंदकयाजनंतस्यचकन्याप्रदानम् कौटिल्यंगुरोरन्यत्र गुरुविषयस्यतुकौटिल्यस्यसुरापानसमत्वमुक्तम् पुनर्व्रतलोपग्रहणमशिष्टप्रतिषिद्धेष्वपिश्रीहरिचरणकमलप्रेक्षणात्प्राकुतांबूलादिकनभक्षयामीत्येवंरूपेषुप्राप्त्यर्थंनतुस्नातकव्रतप्राप्त्यर्थम् तत्रस्नातकव्रतलोपेप्रायश्चित्तंचाभोजनमितिमनुनालघुप्रायश्चित्तत्वप्रतिपादितत्वात् २३८ ६७

तथात्मार्थंचपाकलक्षणक्रियारंभः अघंसकेवलंभुंक्तेयःपचत्यात्मकारणादितितस्यैव प्रतिषिद्धत्वात् क्रियामात्रविषयेतुप्रतिषेधक
त्पनयागोरवंस्यात् मद्यपायाःस्त्रियाःजायायानिषेवणमुपभोगः स्वाध्यायत्यागोव्याख्यातः अग्नीनांश्रौतस्मार्त्तानांत्यागः सुतत्यागः
संस्काराद्यकरणम् बांधवानांपितृव्यमातुलादीनात्यागःसतिविभवेअपरिरक्षणम् २३९ पानकादिदृष्टप्रयोजनसित्यर्थमार्द्रद्रुमच्छे
दोनत्वाहवनीयपरिरक्षणार्थमपि स्त्रियोहिंसयाओषधेनचपरिवर्त्तनंस्त्रीहिंसौषधजीवनम् तत्रस्त्रीजीवनंनामभार्यांपण्यभावेनप्र

आत्मनोर्थेक्रियारंभोमद्यपस्त्रीनिषेवणम् स्वाध्यायाग्निसुतत्यागोबांधवत्यागएवच २३९ इंधनार्थंद्रुमच्छेदःस्त्री
हिंसौषधजीवनम् हिंस्रयंत्रविधानंचव्यसनान्यात्मविक्रयः २४० शूद्रप्रेष्यंहीनसख्यंहीनयोनिनिषेवणम् तथैवा-
नाश्रमेवासःपरान्नपरिपुष्टता २४१

योज्यतल्लब्धोपजीवनम् स्त्रीधनेनोपजीवनंवा हिंसयाजीवनंप्राणिवधेनजीवनम् औषधजीवनंवशीकर
णादिना हिंस्रयंत्रस्यतिलेक्षुपीडाकरस्यप्रवर्त्तनं व्यसनानिमृगयादीन्यष्टादश आत्मविक्रयोद्रव्यग्रहणेनपरदास्यकरणं २४० शूद्रसेवनं हीने
षुमैत्रीकरणं अनूढसवर्णदारस्यकेवलंहीनवर्णदारोपसेवनं साधारणस्त्रीसंभोगश्च अगृहीताश्रमत्वंसत्यधिकारे परपाकरतित्वम् २४१

असच्छास्त्रस्य चार्वाकादिग्रंथस्यावगमः सर्वाकरेषु सुवर्णाद्युत्पत्तिस्थानेषु राजाज्ञयाधिकारित्वम् भार्याया विक्रयः चशब्दान्मन्त्रसाद्यु
क्ताभिचारामति पूर्वत्वस्रुनादिभक्षणादेर्ग्रहणम् एषां गोवधादीनां प्रत्येकमुपपातकसंज्ञा वेदितव्या मनुना पुनरन्यान्यपि निमित्तानि-
जातिभ्रंशकरसंकरीकरणापात्रीकरणमलिनीकरणसंज्ञानि परिगणितानि ब्राह्मणस्य रुजः कृत्वा घ्रातिरघ्रेयमद्ययोः जैह्म्यं पुंसि च
मैथुन्यं जातिभ्रंशकरं स्मृतम् खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा संकरीकरणं ज्ञेयं मीनाहिमहिषस्य च निंदितेभ्यो धनादानं वा
णिज्यं शूद्रसेवनम् अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम् कृमिकीटवयोहत्या मद्यानुगतभोजनम् फलैधकुसुमस्तेयमधैर्यं च

असच्छास्त्राधिगमनमाकरेष्वधिकारिता भार्याया विक्रयश्चैषामेकैकमुपपातकं २४२

मलावहमिति अतोन्यनिमित्तजातं प्रकीर्णकं कथ्यते बृहद्विष्णुना च समस्तानि प्रायश्चित्तनिमित्तान्युत्तरोत्तरं लघीयांसि पृथक्संज्ञाभेदभिन्ना-
निदर्शितानि ब्रह्महत्यासुरापानं ब्राह्मणसुवर्णापहरणं गुरुदारगमनमिति महापातकानि तत्संयोगश्च मातृगमनं दुहितृगमनं स्नुषागमनमित्य
तिपातकानि यागस्थक्षत्रियवधो वैश्यस्य च रजस्वलायाश्चांतर्वत्न्याश्चात्रिगोत्रायाश्चाविज्ञातस्य गर्भस्य शरणागतस्य च घातनं ब्रह्महत्यास
मानि कौटसाक्ष्यं सुहृद्वध इत्येतौ सुरापानसमौ ब्राह्मणस्य भूमिहरणं सुवर्णस्तेयसमम् पितृव्यमातामहमातुलनृपपत्न्यभिगमनं गुरु-

दारगमनसमानम् पितृष्वसृमातृष्वसृगमनं श्रोत्रियर्त्विग्गुरूपाध्यायमित्रपत्न्यभिगमनं च स्वसुः सख्याः सगोत्रायाउत्तमवर्णायारजस्वलायाः
शरणागतायाः प्रव्रजितायानिक्षिप्तायाश्च गमनमित्येतान्यनुपातकानि अनृतवचनं समुत्कर्षे राजगामि च पैशुन्यं गुरोश्चालीकनिर्बंधो वेदनिं-
दा अधीतस्य त्यागोग्निपितृमातृसुतदाराणां च अभोज्यानां भक्षणं परस्वापहरणं परदारानुगमनमयाज्यानां च व्रात्यता भृतकाध्यापनं भृत-
काध्ययनादानं सर्वाकरेष्वधिकारो महायंत्रप्रवर्त्तनं द्रुमगुल्मवल्लीलतौषधीनां हिंसयाजीवनमभिचारमूलकर्मसु च प्रवृत्तिरात्मार्थक्रियारं-
भो अनाहिताग्निता देवर्षिपितृणामृणस्यानपाक्रिया असच्छास्त्राधिगमनं नास्तिकता कुशीलवता मद्यपस्त्रीनिषेवणमित्युपपातकानि
ब्राह्मणस्य रुजः करणमघ्रेयमद्ययोर्घ्रातिर्जैह्म्यं पशुषु पुंसि च मैथुनाचरणमित्येतानि जातिभ्रंशकराणि ग्राम्यारण्यपशूनां हिंसनं संक
रीकरणं निंदितेभ्यो धनादानं वाणिज्यं कुसीदजीवनमसत्यभाषणं शूद्रसेवनमित्यपात्रीकरणानि पक्षिणां जलचराणां च घातनं कृमि
कीटघातनं मद्यानुगतभोजनं मलावहानि यदनुक्तं तत्प्रकीर्णकमिति कात्यायनेन तु महापातकसमानां विष्णुनानुपपातकत्वेनोक्तानां पा
तकसंज्ञा दर्शिता महापापं चातिपापं तथा पातकमेव च प्रासंगिकं चोपपापमित्येषां पंचको गणइति ननु पातकादीनां कथं पातकत्वं पतनहे
तुत्वाभावात् यदि तेषामपि पतनहेतुत्वं तर्हि मातृपितृयोनिसंबंधांग इत्यादिपरिगणनमनर्थकम् तत्रैवमुच्यते यद्यपि महापातकतत्समेष्वि
व सद्यः पातित्यहेतुत्वं नास्ति तथाप्यभ्यासापेक्षया पातित्यहेतुत्वमविरुद्धम् निंदितकर्माभ्यासीति गौतमवचनादिति मैवं अभ्यासस्यानिरू
प्यमाणत्वात् द्विः शतकृत्वो वेति तत्राविशेषेण गौः क्रियमाणे यो पि द्विर्दिवा स्वपिति यः शतकृत्वो वा गोवधं करोति तयोरविशेषेण पातित्यं स्यात्

अत्रोच्यते अत्रार्थवादे प्रत्यवायविशेषः श्रूयते प्रायश्चित्तबहुत्वं वा तस्मिन्निंदितकर्मणि यावत्यभ्यस्यमाने महापातकतुल्यत्वं भवति तावानभ्यासः पातित्यहेतुः दिवास्वप्नादौ तु सहस्रकृत्वोभ्यस्यमानेन महापातकतुल्यत्वं भवतीति न तत्र पातित्यमतो युक्तमुपपातकादेरभ्यासापेक्षया पतनहेतुत्वम् २४२ एवं संव्यवहारार्थं संज्ञाभेदसहितं प्रायश्चित्तनिमित्तपरिगणनं कृत्वा नैमित्तिकानि प्रदर्शयितुमाह शिरसः कपालमस्यास्तीति शिरःकपाली तथा ध्वजवान् कृत्वा शवशिरोध्वजमिति मनुस्मरणात् अन्यच्छिरःकपालं दंडाग्रसमारोपितध्वजशब्दवाच्यं गृण्हीयात्

शिरःकपाली ध्वजवान् भिक्षाशी कर्म वेदयन् ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात् २४३

तच्च कपालं स्वव्यापादितब्राह्मणशिरःसंबंधि ग्राह्यं ब्राह्मणो ब्राह्मणं घातयित्वा तस्यैव शिरःकपालमादाय तीर्थान्यनुसंचरेदिति शातातपस्मरणात् तदलाभेन्यस्य ब्राह्मणस्यैव ग्राह्यं एतदुभयं पाणिनैव ग्राह्यं खट्वांगकपालपाणिरिति गौतमस्मरणात् खट्वांगशब्देन दंडरोपितशिरःकपालात्मको ध्वजो गृह्यते तेन पुनः खट्वैकदेशः तेन महोक्षः खट्वांगं परश्वधारित्यादिव्यवहारेषु तत्रैव प्रसिद्धेः एतच्च कपालधारणं चिन्हार्थं न पुनर्भोजनार्थं भिक्षार्थं वा मृन्मयकपालपाणिर्भिक्षार्थं ग्रामं प्रविशेदिति गौतमस्मरणात् तथा च वनवासिना तेन भवितव्यम् ब्रह्महा द्वादश

ब्दानि कुटिं कृत्वा वने वसेदिति मनुस्मरणात् ग्रामसमीपादौ वा कृतवा[illegible]पनो वा निवसेद्ग्रामांते गोव्रजे पि वा आश्रमे वृक्षमूले वा सर्वभूतहितेर
त इति तेनैवोक्तत्वात् कृतवापनो वेति विकल्पाभिधानाज्जटी वेति लक्ष्यते अत एव संवर्त्तः ब्रह्महा द्वादशाब्दानि बालवासा जटी ध्वजीति त
था भिक्षाशनशीलश्च भवेत् भिक्षा च लोहितकेन मृन्मयखंडशरावकेण ग्राह्या लोहितकेन खंडशरावेण ग्रामं भिक्षायै प्रविशेदिति आप
स्तंबस्मरणात् सप्तागाराण्येवात्र मृष्टं लभ्यते अत्र नेत्येव समंकल्पितानि भिक्षार्थं प्रविशेत्स प्तागाराण्यसंकल्पितानि चरेद्भैक्ष्यमिति
वसिष्ठस्मरणात् तथा सायंकाल एव सा ग्राह्या एककालाहार इति तेनैवोक्तत्वात् तच्च भैक्ष्यं ब्राह्मणादिवर्णेष्वेव कार्यम् चातुर्वर्ण्ये चरेद्भैक्ष्यं-
खट्वांगी संयतात्मवानिति संवर्तस्मरणात् तथा ब्रह्महास्मीति स्वकर्माख्यापयन् द्वारि स्थितो भिक्षां चरेत् वेश्मनो द्वारि तिष्ठामि भिक्षार्थी ब्रह्मघा
तक इति पराशरस्मरणात् अयं च भैक्षाशित्वनियमो वन्यैर्जीवनाशक्तौ द्रष्टव्यः भिक्षायै प्रविशेद्ग्रामं वन्यैर्यदि न जीवतीति संवर्त्तस्मरणात्
तथा ब्रह्मचर्यादियुक्तेन च तेन भवितव्यम् खट्वांगपाणिर्द्वादश वत्सरान् ब्रह्मचारी भिक्षायै ग्रामं प्रविशेत्कर्माचक्षाणः पथोपक्रमेत्संदर्शना
दार्यस्य स्थानासनाभ्यां विहरन् सवने षूदकोपस्पर्शी शुद्ध्येदिति गौतमस्मरणात् ब्रह्मचारिग्रहणं च वर्जयेन्मधुमांसं गंध माल्य दिवास्व
प्नांजनाभ्यंजनोपानत् छत्र काम क्रोध लोभ मोह हर्ष नृत्य गीत परिवादन भूयानिति ब्रह्मचारिप्रकरणोक्ताविरुद्धधर्मप्राप्त्यर्थं अत एव शंख
स्थानवीरासनी मौनी मौंजी दंडकमंडलुः भिक्षाचर्याग्निकार्यं च कूश्मांडीभिः सदा जप इति तस्य भवेदिति शेषः अत्र च सवने षूदकस्पर्शीति
स्नानविधानात् तदंगभूतमंत्रादिप्राप्तिरवगम्यते तथा शुचिना कर्म कर्त्तव्यमित्यस्य सर्वकर्मसाधारणत्वात् व्रतचर्यांगभूतशौचसंपत्त्य

र्थस्नानवत्संध्योपासनमपिकार्यं तस्यापिशौचापादनद्वारेणसर्वकर्मशेषत्वात् तथाचदक्षः संध्याहीनोऽशुचिर्नित्यमनर्हःसर्वकर्मसु यत्किंचि
त्कुरुतेकर्मनतस्यफलभाग्भवेदिति नचद्विजातिकर्मभ्योहानिःपतनमितिवचनात्संध्योपासनायाश्चद्विजातिकर्मत्वादप्राप्तिरितिशंकनीयम्
यस्मात्पतितस्यैवव्रतचर्योपदेशात्तदंगस्यतथैवसंध्योपासनादिप्राप्तिरतोद्विजातीनामध्ययनमौज्यादानंब्राह्मणस्याधिकारप्रवचनयाजन
प्रतिग्रहाइत्यादीनामेवद्विजातिकर्मणांव्रतचर्यानंगभूतानांहानिर्नसर्वेषांतावन्मात्रबाधेनहानिवचनस्यचरितार्थत्वात् इयंचमनुयाज्ञवल्क्य
गौतमादिप्रतिपादिताद्वादशवर्षव्रतचर्याएकैवनपुनर्भिन्ना परस्परसापेक्षत्वादविरोधाच्च तथाहि भिक्षाशीकर्मवेदयन्नित्युक्तेकिंभिक्षा-
पात्रंकेषांवागृहेषुकतिषुवेत्याकांक्षाजायतेतेव तत्रलोहितकेनखंडशरावेणेत्यापस्तंबवचनैःपरिपूरणमविरुद्धम् अतःसर्वैरेककल्पोप
देशात्कैश्चिदुक्तम् मनुगौतमाद्युक्तेतिकर्तव्यतायाःपरस्परसापेक्षत्वेपिविकल्पइतितदनिरूप्यैवोक्तमितिमंतव्यम् एवंद्वादशवर्षाणिव्रतच
र्यामावर्त्यब्रह्महाशुद्धिमाप्नुयात् इयंचकामकृतब्रह्मवधविषया इयंविशुद्धिरुदिताप्रमाप्याकामतोद्विजम् कामतोब्राह्मणवधेनिष्कृति
र्नविधीयतेइतिमनुस्मरणात् अत्रेदंचिंतनीयम् किंतत्र द्वित्रिब्राह्मणवधेप्रायश्चित्तस्यतत्रत्वंमुत्त्काआवृत्तिरिति तत्रकेचिन्मन्यंते ब्रह्महाद्वा
दशाब्दानीत्यत्रब्रह्मशब्दस्यैकस्मिन्द्वयोर्बहुषुसाधारणत्वादेकस्मिन्ब्राह्मणवधेयत्प्रायश्चित्ततदेवद्वितीयेतृतीयेपि तत्रैकब्राह्मणवधनि
मित्तेकप्रायश्चित्तानुष्ठानेसतीदंकृतमिदंनेतिनशक्यतेवक्तुंदेशकालकर्तॄणांप्रयोगानुबंधभूतानामभेदेनागृह्यमाणविशेषत्वात्तत्रानुष्ठानेनै
वपापक्षयलक्षणकार्यनिष्पत्तिर्युक्ता तथातंत्रानुष्ठितैःप्रयाजादिभिराग्नेयादिषुतंत्रेणैवानेकोपकारलक्षणकार्याणांनिष्पत्तिः नचैवंवा

च्यम् द्वित्रिब्राह्मणवधेपापस्यगुरुत्वादेनांसिगुरूणिगुरूणि लघूनि लघूनीतिगौतमवचनादावृत्तिमेवप्रायश्चित्तानुष्ठानंयुक्तं विलक्षणका
र्ययोस्तंत्रेणनिष्पत्तेरनुपपत्तेरिति यतोनैवंवचनमावृत्तिविधायकंकिंतूपविष्टानांगुरुलघुपापानांव्यवस्थितिप्रतिपादनपरम् नचद्विती
यब्राह्मणवधेपापस्यगुरुत्वंप्रमाणाभावात् यच्चमनुदेवलाभ्यामुक्तं विधेःप्राथमिकादस्माद्द्वितीयेद्विगुणंभवेत् तृतीयेत्रिगुणंप्रोक्तंच
तुर्थेनास्तिनिष्कृतिरिति तदपिप्रतिनिमित्तंनैमित्तिकमावर्त्ततइतिन्यायेनद्वित्रिब्राह्मणवधगोचरनैमित्तिकशास्त्रावृत्त्यनुवादेनचतुर्थे
तदभावविधिपरम् नपुनर्द्वितीयब्रह्मवधेप्रायश्चित्तानुष्ठानद्वैगुण्यविधिपरमिति वाक्यभेदप्रसंगात् तस्माद्द्वित्रिब्राह्मणवधेपिसकृ
देवद्वादशवर्षाद्यनुष्ठानंयुक्तं यथाग्नयेकामवतेपुरोडाशमष्टाकपालंनिर्वपेदित्यादिगृहदाहादिनिमित्तेषुचोदितानांकामवत्यादीनांयुग
पदनेकेष्वपिगृहदाहादिनिमित्तेषुसकृदेवानुष्ठानम् अत्रोच्यते नहिवचनविरोधेन्यायःप्रभवति वचनंचविधेःप्राथमिकादित्यादिक-
द्वित्रिब्राह्मणवधेप्रायश्चित्तानुष्ठानावृत्तिविधिपरम् एवंसतिन्यायलभ्यंतंत्रानुष्ठानबाधितावृत्तिविशेषकरंस्यात् इतरथाशास्त्रतःप्राप्त्य
नुवादकत्वेनानर्थकंस्यात् नचवाक्यभेदः चतुर्थादिब्रह्मवधपर्युदासेनेतरत्रावृत्तप्रायश्चित्तविधानेनैकार्थत्वात् किंचचतुर्थेनास्तिनि-
ष्कृतिरितिलिंगदर्शनाद्धन्यमानब्राह्मणसंख्योत्कर्षेदोषगौरवंगम्यते तथाचदेवलादिवचनाच्च यत्स्यादनभिसंधायपापकर्मसकृत्कृत
म् तस्येयंनिष्कृतिर्दृष्टाधर्मवद्भिर्मनीषिभिरिति नचविलक्षणयोर्गुरुलघुदोषयोःक्षयस्तंत्रेणनिष्पाद्यते अतएवंविधेषुदोषगुरुत्वेनका-
र्यवैलक्षण्यादपिप्रतिनिमित्तंनैमित्तिकस्यावृत्तिर्युक्ता क्षामवत्यादिषुपुनःकार्यस्यावैलक्षण्याद्युक्तस्तंत्रभावइत्यलंप्रपंचेन यच्चेदंच

तुर्येनास्तिनिष्कृतिरितितदपिमहापातकविषयम् पापस्यातिगुरुत्वेन प्रायश्चित्ताभावप्रतिपादनपरत्वात् अतः शूद्रान्नसेवनादौ बहुशोऽप्य
भ्यस्तेन तदनुगुणं प्रायश्चित्तावृत्तिः कल्पनीया नपुनः प्रायश्चित्ताभावः अतएवोक्तं मनुना पूर्ववानस्यनस्त्वातुशूद्रहत्याव्रतंचरेदिति इदंच
द्वादशवार्षिकंव्रतंसाक्षाद्धंतुरेवब्रह्महेतितस्यैवाभिधानात् अनुग्राहकप्रयोजकादेस्तु तत्र दोषानुसारेण प्रायश्चित्ततारतम्यं कल्पनीयम्
तत्रानुग्राहको यत्प्रायश्चित्तभाजंपुरुषमनुगृण्हातिसतत्प्रायश्चित्तंपादोनंकुर्यात् अतस्तस्य द्वादशवार्षिकेनववार्षिकम् प्रयोजकस्त्व-
र्द्धेनंषड्वार्षिकंकुर्यात् अनुमंतापुनःसार्धपादंसार्द्धचतुर्वार्षिकं निमित्तीत्वकपादंत्रिवार्षिकम् अतएवसुमंतुः तिरस्कृतोयदाविप्रो-
हत्वात्मानंमृतोयदि निर्गुणः साहसात्क्रोधाद्गृहक्षेत्रादिकारणात् त्रैवार्षिकंव्रतंकुर्यात्प्रतिलोमांसरस्वतीम् गच्छेद्वापिविशुद्ध्यर्थंत
त्पापस्येतिनिश्चितम् अत्यर्थंनिर्गुणोविप्रोह्यत्यर्थंनिर्गुणोपरि क्रोधाद्वैम्रियतेयस्तुनिर्निमित्तंतुभर्त्सितः वत्सरंत्रितयंकुर्यान्नरः
कृच्छ्रविशुद्धयेइति यदापुनर्निमित्तात्यंतगुणवदुपरिआत्मघातीचात्यंतनिर्गुणस्तदैकवर्षमेवब्रह्महत्याव्रतंकुर्यात् केशश्मश्रुनखादीनांकृत्वा
तुवपनंवने ब्रह्मचर्यंचरन्विप्रोवर्षेणैकेनशुद्ध्यतीतितेनैवोक्तत्वात् अनयैवदिशानुग्राहकप्रयोजकादीनांयेनुग्राहकप्रयोजकादयस्तेषामपिप्रा
यश्चित्तकरणंकल्पनीयम् प्रयोजयितानुमंताकर्त्ताचेतिस्वर्गनरकफलेषुकर्मसुभागिनोयोभूयआरभतेतस्मिन्फलविशेषइत्यापस्तंबीयं
वचनंमूलम् तथाप्रोत्साहकादीनामपिदंडप्रायश्चित्तेकल्प्ये यथाहपैठीनसिः हंतामंतोपदेष्टाचतथासंप्रतिपादकः प्रोत्साहकःसहा
यश्चनतत्रमार्गानुदेशकः आश्रयःशस्त्रदाताचभक्तदाताविकर्मिणाम् उपेक्षकःशक्तिमांश्चेदोषवक्तानुमोदकः अकार्यकारिणस्तेषांप्रा

यश्चित्तं प्रकल्पयेत् यथाशक्त्यनुरूपं च दंडं चैषां प्रकल्पयेदिति तथा बालवृद्धादीनां साक्षात्कर्तृत्वेप्यर्धमेव अशीतिर्यस्य वर्षाणि बालो वा
प्यून षोडशः प्रायश्चित्तार्धमर्हति स्त्रियो रोगिण एव चेत्यंगिरः स्मरणात् तथार्वाग्द्वादशवर्षादशीतेरूर्ध्वमेव वा अर्धमेव भवेत्पुंसां तुरीयं
तत्र योषितामिति तथानुपनीतस्यापि बालकस्य पादमात्रमेव प्रायश्चित्तं स्त्रीणामर्धं प्रदातव्यं वृद्धानां रोगिणां तथा पादो बालेषु दात-
व्यः सर्वपापेष्वयं विधिरिति विष्णुस्मरणात् अतश्च यच्छंखेन ऊनैकादशवर्षस्य पंचवर्षात्परस्य च प्रायश्चित्तं चरेद्भ्राता पिता वान्यः सु
हृज्जन इति प्रतिपाद्योक्तम् अतो बालतरस्यास्य नापराधो न पातकम् राजदंडो न तस्यास्ति प्रायश्चित्तं न विद्यते इति तदपि संपूर्णप्रायश्चि
त्ताभावप्रतिपादनपरं न पुनः सर्वात्मना तदभावप्रतिपादनपरम् आश्रमविशेषनिरपेक्षेण श्रूयमाणेषु ब्राह्मणो न हंतव्यस्तस्माद्ब्राह्मणरा
जन्यौ वैश्यश्च न सुरां पिबेदित्येवमादिष्वनपेक्षितवयोविशेषस्यैव चाधिकारादतस्तदीयमपि प्रायश्चित्तं पित्रादिभिरेवाचरणीयम् पुत्रानु
त्पाद्य संस्कृत्य वेदमध्याप्य वृत्तिं विदध्यादिति तस्यैव पुत्रहिताचरणे अधिकृतत्वात् यत्र पुनः कस्मिंश्चित् ब्रह्मवधे प्रयोजकभावमापन्नस्या
न्यस्मिन्साक्षात्कर्तृत्वे गुरुलघुप्रायश्चित्तसन्निपातस्तत्र द्वादशवार्षिकादिगुरुप्रायश्चित्तांतःपातिनः प्रयोजकसंबंधिलघुप्रायश्चित्तस्य प्र
संगात्कार्यसिद्धिः न चैवं सत्यविशेषाल्लघुकल्पेन महतोपि सिद्धिः स्यादित्याशंकनीयम् अतो ल्घ्वंतःपातितयानुष्ठाने विशेषानवगमात्प्र
संगात्कार्यसिद्धिरवगम्यते न च लघ्वंतःपाती महाकल्प इति कुतः प्रसंगाशंका न च चैत्रवधजनितकल्मषक्षयार्थमनुष्ठितेन कथं विष्णु
मित्रवधोत्पाद्यपापनिवृत्तिरिति वाच्यम् चैत्राद्युद्देशस्यातंत्रत्वात् अतो यथा काम्यनियोगनिष्पत्त्यर्थं स्वर्गार्थं चानुष्ठितेराग्नेयादिभिर्नित्य

नियोगनिष्पत्तिस्तद्वद्वद्धुप्रायश्चित्तस्यापि कार्यसिद्धिः यत्पुनर्मध्यमांगिरोवचनं गवां सहस्रं विधिवत्पात्रेभ्यः प्रतिपादयेत् ब्रह्महा विप्र-
मुच्येत सर्वपापेभ्य एव चेति तत्सवनस्थगुणवद्ब्राह्मणविषयम् एतच्च द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेदिति एतद्वाक्यविहितं तत्तु द्वि-
गुणद्वादशवार्षिकव्रतचर्याशक्तस्य वेदितव्यम् प्रायश्चित्तस्यातिगुरुत्वात् न त्वनावृत्तद्वादशवार्षिकविषयम् तत्र हि द्वादशदिनान्येकै-
कप्राजापत्यमिति गणनायां प्राजापत्यानां षष्ट्यधिकशतत्रयं भवति यद्यपि प्राजापत्यस्यांते त्र्यहमुपवासोधिकस्तथाप्यत्र वनवासज-
टाधारणवन्याहारत्वादिरूपतपोविशेषयुक्तत्वादुपवासाभावेप्येकैकस्य द्वादशाहस्य प्राजापत्यतुल्यत्वम् ततश्च प्राजापत्यक्रियाशक्तौ धे-
नुं दद्याद्विचक्षणः गवामभावे दातव्यं तन्मूल्यं वा न संशय इत्यनेन न्यायेन प्रतिप्राजापत्यमेकैकस्यां धेन्वां दीयमानायां धेनूनामपि षष्ट्यधिकं
शतत्रयं भवति न पुनः सहस्रमतो यथोक्त एव विषयो युक्तः यदपि शंखवचनम् पूर्ववदमतिपूर्वं चतुर्षु वर्णेषु विप्रं प्रमाप्य द्वादशवत्सरान्षट्
त्रीन्सार्धसंवत्सरं च व्रतान्यादिशेत्तेषामंते गोसहस्रं तदर्धं तस्यार्द्धं तदर्द्धं दद्यात्सर्वेषां वर्णानामानुपूर्व्येणेति द्वादशवार्षिकगोसहस्रयोः समु-
च्चयपरम् तदाचार्यादिहननविषयं द्रष्टव्यम् तस्यातिगुरुत्वात् तथा च दक्षः सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे आचार्ये शतसाहस्रं-
सोदर्ये दत्तमक्षयमिति प्रतिपाद्योक्तत्वात् समं द्विगुणसाहस्रमानंत्यं च यथाक्रमम् दाने फलविशेषः स्याद्धिंसायां तद्वदेव हीति तथापस्तं-
बेन द्वादशवार्षिकमुक्त्वोक्तमस्मिन्नेव विषये गुरुं हत्वा श्रोत्रियं वा एतदेव व्रतमुत्तमादुच्छ्वासाच्चरेदिति तत्र यावज्जीवमावर्त्यमाने व्रते यदा
त्रैगुण्यं चातुर्गुण्यं वा संभाव्यते तदा तत्रासमर्थस्य बहुधनस्यायं दानतपसोः समुच्चयो द्रष्टव्यः द्वादशवार्षिकव्यतिरिक्तानां तु समं तु पराश

राद्युक्तानां प्रायश्चित्तानामुत्तरत्र व्यवस्थां वक्ष्यामः ननु च द्वादशवार्षिकादिकल्पानां व्यवस्था कुतो वसिता न तावत् द्वादशवार्षिकादिविधायकवाक्यैरिति युक्तं तत्राप्रतीतेः न च वाच्यं प्रमाणावगतगुरुलघुकल्पानां बाधो मा प्रसाङ्क्षीदिति व्यवस्था कल्प्यत इति विकल्पसमुच्चयाङ्गाङ्गीभावानामन्यतमाश्रयणेनापि बाधस्य सुपरिहरत्वात् अत्रोच्यते न तावत् द्वादशवार्षिकसुमन्तुदर्शितानां विषमकल्पानां विकल्पो वकल्प्यते विकल्पाश्रयणे गुरुकल्पानामनुष्ठानासंभवेनानर्थक्यप्रसंगात् न च षोडशिग्रहणवद्विषमयोरपि विकल्पोपपत्तिरिति वाच्यम् यतस्तत्रापि सति संभवे ग्रहणमेवेति युक्तं कल्पयितुम् यद्वा षोडशिग्रहणानुगृहीतेनातिरात्रेणाक्षिप्रं स्वर्गादिसिद्धिरतिशयितस्य वा स्वर्गस्येति क

ब्राह्मणस्य परित्राणाद्गवां द्वादशकस्य च तथाश्वमेधावभृथस्नानाद्वा शुद्धिमाप्नुयात् २४४

ल्पनीयम् इतरथा ग्रहणविधेरानर्थक्यप्रसंगात् नापि समुच्चयः उपदेशातिदेशप्राप्तिमंतरेण समुच्चयो न संभवति उपदेशावगतैरपेक्ष्यस्य बाधप्रसंगात् न चाङ्गाङ्गीभावः श्रुत्यादिभावविनियोक्तृणामभावात् अतः परस्परोपमर्दपरिहारार्थं विषयव्यवस्था कल्पनैवोचिता सा च जातिशक्तिगुणाद्यपेक्षया कल्पनीया जातिशक्तिगुणापेक्षं सकृद्बुद्धिकृतं तथा अनुबंधादि विज्ञाय प्रायश्चित्तं प्रकल्पयेदिति देवलस्मरणात् २४३ पूर्वोक्तस्य ब्रह्महत्यादिप्रायश्चित्तस्य नैमित्तिकं समाप्त्यवधिमाह यश्चौरव्याघ्रादिभिर्व्यापाद्यमानस्य ब्राह्मणस्यैकस्याप्यात्मप्रा

णानंतरेकृत्वाप्राणत्राणंकरोति गवांद्वादशकस्यासावसंपूर्णेद्वादशवार्षिकेशुद्ध्येत् यद्यपिप्राणत्राणेप्रवृत्तस्तदकृत्वैवम्रियतेतथापिशुद्ध्यत्ये
व अतएवमनुना ब्राह्मणार्थेगवार्थेवासद्यःप्राणान्परित्यजेत् मुच्यतेब्रह्महत्यायागोप्तागोर्ब्राह्मणस्यचेति ब्राह्मणरक्षणंतदर्थमरणंचपृ
थुगुपात्तं तथापरकीयाश्वमेधस्यावभृथाख्यकर्मांगभूतस्नानसमयेस्वयमपिस्नात्वाब्रह्महत्यायाःशुद्धिमाप्नुयात् स्नानंचस्वकल्मषवि
ख्याप्यकुर्यात् तथाचमनुः शिष्ट्वावाभूमिदेवानांनरदेवसमागमे स्वमेनोवभृथेस्नात्वाहयमेधीविमुच्यतइति भूमिदेवाब्राह्मणाऋत्वि
जस्तेषांनरदेवेनराज्ञायजमानेनसमवायेस्वीयमेनःशिष्ट्वाविख्याप्याश्वमेधावभृथेस्नात्वाशुद्ध्येत् यदितैरनुज्ञातोभवति अश्वमेधाव
भृथंगत्वातत्रानुज्ञातःस्नातःसद्यःपूतोभवतीतिशंखस्मरणात् अश्वमेधावभृथग्रहणमग्निष्टुन्मध्यानापचदशरात्रादिक्रत्वंतराणामग्नि
ष्टुत्समाप्तिकानांवासर्वमेधादीनामुपलक्षणम् अश्वमेधावभृथेवान्ययज्ञेप्यग्निष्टुदंतश्चेदितिगौतमस्मरणात् अयंचप्रक्रांतद्वादश
वार्षिकस्यकथंचित्ब्राह्मणत्राणादिकंकुर्वतोव्रतसमाप्त्यवधिरुच्यते यथासारस्वतेसत्रे प्लाक्षप्रस्रवणं प्राणोत्थानमृषभैकशतानां
वागवांसहस्रस्याभावेसर्वस्वजान्यांगृहपतिमरणेवेति नपुनःस्वतंत्रप्रायश्चित्तांतरं तथाचशंखः द्वादशेवर्षेशुद्धिंप्राप्नोत्यंतरावा
ब्राह्मणंमोचयित्वागवांवाद्वादशानांपरित्राणात्सद्यएवाश्वमेधावभृथस्नानाद्वापूतोभवति अतएवमनुना कृतवापोवनेनिवसेदिति
द्वादशवार्षिकस्यगुणविधिंप्रक्रम्यब्राह्मणार्थेगवार्थेवासद्यःप्राणान्परित्यजेत् मुच्यतेब्रह्महत्यायागोप्तागोर्ब्राह्मणस्यचेत्यादिनामध्येब्राह्म
णत्राणादिकमभिधाय एवंदृढव्रतोनित्यंब्रह्मचारीसमाहितः समाप्तेद्वादशेवर्षेब्रह्महत्यांव्यपोहतीतिद्वादशवार्षिकमेवोपसंहृतम् ननुब्र

ह्महत्यायाः शुद्धिमाप्नुयादिति ब्राह्मणत्राणादीनां द्वादशवार्षिकेण सहैकफलत्वावगम्यत्वात्स्वातंत्र्यमेवयुक्तं नपुनरंगत्वम् किंच प्रधानवि
रोधित्वादपिनांगत्वम् प्रधानानुग्राहकं त्वंगं भवति नच प्रारब्धद्वादशवार्षिकस्येदं विधानम् येन तत्कार्यविधानं गम्यते यथासत्रायावगूर्य
विश्वजितायजेतेति सत्रप्रयोगप्रवृत्तस्य तत्परिसमापनाक्षमस्य विश्वजिद्विधानमतोपि स्वातंत्र्यमेवयुक्तम् यथाग्निप्रवेशलक्ष्यभावादी
नां नचतेषामपि द्वादशवार्षिकोपक्रमोपसंहारमध्ये पठितत्वेन तदंगत्वमितिशंकनीयम् यतः सत्यपि मध्यपाठे निर्ज्ञातप्रयोजकत्वे प्रयोज
नाकांक्षाविरहान्न परस्परमंगांगित्वं युक्तं यथा सामिधेनीप्रकरणमध्यवर्त्तीनामग्निविदानामग्निसमिंधनप्रकाशनत्वेन सामिधेनीभिः सहै
ककार्यार्णां न सामिधेन्यंगत्वं नचैकांततोभिप्रवेशनादीनां द्वादशवार्षिकमध्ये पाठः वसिष्ठगौतमादिभिरेषां द्वादशवार्षिकप्रक्रमात् प्रागे
वपठितत्वात् इदमेव स्वातंत्र्यं प्रकटयितुं मनुना लक्ष्यंशस्त्रभृतां वास्यात्प्रास्येदात्मानमग्नौवेति प्रतिवाक्यं वाशब्दः पठितः तथा प्रतिप्राय
श्चित्तमेवमेवोपसंहृतम् अतोन्यतममास्थाय विधिविप्रः समाहितः ब्रह्महत्याकृतं पापं व्यपोहत्यात्मवित्तयेति अतोग्निप्रवेशादीनां स्वा
तंत्र्यमेवयुक्तम् अतश्च ब्राह्मणत्राणादेरप्येकफलत्वान्नांगत्वमिति उच्यते परिहृतमेतदंतरा ब्राह्मणं मोचयित्वेत्यादिना शंखवचने-
नांगत्वावगमात् अतस्यैव सतः प्रधानद्वारेण फलसंबंधः नच प्रधानविरोधः यतो ब्राह्मणत्राणावधिकस्यैव व्रतानुष्ठानस्य फलसाधन
त्वं विधीयते इति न विरोधः २४४ किंच दीर्घेण बहुकालव्यापिना तीव्रेण दुःसहेनामयेन कुष्ठादिव्याधिना ग्रस्तं पीडितम् ब्राह्मणं गां वा
तथाविधाम् पथि दृष्ट्वा निरातंकं नीरुजं कृत्वा ब्रह्महा शुचिर्भवति ननु ब्राह्मणस्य परित्राणादित्यत्र यदुक्तं ब्राह्मणरक्षणं तदेव किमर्थं

पुनरुच्यते ब्राह्मणंगामथापिवेति सत्यमेवं किंत्वात्मप्राणपरित्यागेनाधस्तनवाक्ये ब्राह्मणरक्षणमुक्तमधुनापुनरौषधदानादिनेतिवि-
शेषः अमुनैवाभिप्रायेणोक्तंमनुना विप्रस्यतन्निमित्तेवाप्राणलाभेविमुच्यतेइति २४५ किंच विप्रस्यापहृतसर्वस्वतयावसीदतः सं-
बंधिद्रव्यंभूहिरण्यादिकंचौरैर्हृतंसाकल्येनानीयरक्षणंयःकरोतिसविशुध्यति आनयनेप्रवृत्तःस्वयंचौरैर्घातितोवातन्निमित्तंब्राह्मण

दीर्घतीव्रामयग्रस्तंब्राह्मणंगामथापिवा दृष्ट्वापथिनिरातंकंकृत्वावाब्रह्महाशुचिः २४५
आनीयविप्रसर्वस्वंहृतंघातितएववा तन्निमित्तंक्षतःशस्त्रैर्जीवन्नपिविशुध्यति २४६

सर्वस्वानयनार्थंतत्रयुध्यमानःशस्त्रैःक्षतोमृतकल्पोजीवन्नपिविशुध्यति शस्त्रैरितिबहुवचनंक्षतबहुत्वप्राप्त्यर्थं अतएवमनुना त्र्य-
वरंप्रतिरोद्धावासर्वस्वमवजित्यवेतित्र्यवरग्रहणंकृतम् एतस्यश्लोकद्वयोक्तकल्पपंचकस्यब्राह्मणरक्षणरूपकत्वेनांतरावाब्राह्मणं
मोचयित्वेत्यनेनशंखवचनेनक्रोडीकृतत्वात्द्वादशवार्षिकसमाप्त्यवधित्वेनाविनियोगान्नस्वातंत्र्यम् २४६ ७ ७

प्रायश्चित्तांतरमाह लोमभ्यः स्वाहेत्येवमादिभिर्मंत्रैर्लोमप्रभृति मज्जांतां तनुं जुहुयादिति शब्दः करणत्वनिर्देशार्थः एवंशब्दः प्रकारसूचनार्थः हिशब्दः स्मृत्यंतरप्रसिद्धत्वगादीनां प्रभृतिशब्देनाक्षिप्यमाणानां द्योतनार्थः ततो लोमादीनि होमद्रव्याणि चतुर्थ्या निर्दिश्यंते स्वाहाकारांतापठितानैर्मंत्रैर्जुहुयात् तेच हूयमानद्रव्याणां लोमत्वग्लोहितमांसमेदःस्नाय्वस्थिमज्जानामष्टसंख्यत्वादष्टौ मंत्राभवंति तथाचवसिष्ठः अग्निमुपसमाधाय जुहुयाद्धोमानि मृत्योर्जुहोमि लोमभिर्मृत्युंवाशय इति प्रथमां १ त्वचंमृत्योर्जुहोमि त्वचा मृत्युंवाशय इति द्वितीयाम् २ लोहितं मृत्योर्जुहोमि

लोमभ्यः स्वाहेत्येवंहि लोमप्रभृतिर्वैतनुम् मज्जांतां जुहुयाद्वापि मंत्रैरेभिर्यथाक्रमम् २४७

लोहितेन मृत्युंवाशय इति तृतीयाम् ३ मांसानि मृत्योर्जुहोमि मांसैर्मृत्युंवाशय इति चतुर्थीम् ४ मेदो मृत्योर्जुहोमि मेदसा मृत्युंवाशय इति पंचमीम् ५ स्नायूनि मृत्योर्जुहोमि स्नायुभिर्मृत्युंवाशय इति षष्ठीम् ६ अस्थीनि मृत्योर्जुहोमि अस्थिभिर्मृत्युंवाशय इति सप्तमीम् ७ मज्जांमृत्योर्जुहोमि मज्जाभिर्मृत्युंवाशय इत्यष्टमीम् ८ अत्रच लोमप्रभृति तनुं जुहुयादिति लोमादीनां होमद्रव्यत्वावगमाल्लोमभ्यः स्वाहेति सत्यपिचतुर्थीनिर्देशे लोमादीनां न देवतात्वं कल्प्यते द्रव्यप्रकाशकत्वेनैव मंत्राणां होमसाधनत्वोपपत्तेः किंतु लोमभिर्मृत्युंवाशय इत्यादिवसिष्ठमंत्रपर्यालो

ओळ ३ मूर्णं

चनयामृत्योरेव हविःसंबंधावगमाद्देवतात्वंकल्पने अतश्चलोमादीनिरामर्थ्यात्त्वधिनिनावदायमृत्यूद्देशेनाष्टौ होमान्कृत्वांनेतनुंप्रक्षिपेत् अतो
यत्कैश्चिदुक्तमनादिष्टद्रव्यत्वादाज्यहविष्कोहोमइतितदनिरूप्यैवोक्तमित्युपेक्षणीयम् जुहुयादित्यनेनाग्नोसिद्धेऽत्र्ण हाग्निमुपसमाधायेतिपुन
रग्निग्रहणंलौकिकाग्निप्राप्त्यर्थम् युक्तंचैतत् पतिताग्नीनांप्रतिपत्तिविधानात् आहिताग्निस्तुयोविप्रोमहापातकप्राग्भवेत् प्रायश्चित्तैर्नशुध्ये
ततदग्नीनांतुकागतिः वैतानंप्रक्षिपेत्तोयेशालाग्निंशमयेद्बुध इत्युशनसःस्मरणात् तथामहापातकसंयुक्तोदैवात्स्यादग्निमान्यदि पुत्रादिः
पालयेदग्नीन् युक्तश्चादोषसंक्षयात् प्रायश्चित्तंनकुर्याद्यःकुर्वन्वाम्रियतेयदि गृह्यंनिर्वापयेत्श्रौतमप्स्वस्येत्सपरिच्छदमितिकात्यायनस्मर
णात् तनुप्रक्षेपश्चोत्थायोत्थायत्रिरधोमुखेनकर्तव्यः यथाहमनुः प्रास्येदात्मानमग्नौवासमिद्धेत्रिरवाक्शिराइति गौतमेनाप्यत्रविशेषोद
र्शितः प्रायश्चित्तमग्नौसक्तिर्ब्रह्मघ्नस्त्रिरवस्थातस्येति अवस्थातस्यअनशनकर्शितकलेवरस्येत्यर्थः तथाचकाठकीश्रुतिः अनशनेनकर्शि
तोग्निमारोहेदिति इदंचमरणांतकप्रायश्चित्तंकामकारविषयम् यथाहमध्यमांगिराः प्राणांतिकंचयत्प्रोक्तंप्रायश्चित्तंमनीषिभिः तत्काम
कारविषयंविज्ञेयंनात्रसंशयः तथा यःकामतोमहापापंनरःकुर्यात्कथंचन नतस्यशुद्धिर्निर्दिष्टाभृग्वग्निपतनादृतेइति एतच्चप्रायश्चित्तंस्व
तन्त्रमेव नब्राह्मणत्राणादिवत्द्वादशवार्षिकांतर्भूतमित्युक्तंप्राक् २४७ किंच अथवासंग्रामेयुद्धभूमावुभयदलप्रेरितशरसंपातस्थाने
लक्ष्यभूतोमृतःशुद्धिंप्राप्नुयात् गाढमर्मप्रहारजनिततीव्रवेदनोमृतकल्पोमूर्च्छितोजीवन्नपिविशुध्यति लक्ष्यभावश्चप्रायश्चित्त्यहमित्ये-
वंविदुषाधनुर्विद्याविदांसंग्रामेस्वेच्छयाकर्त्तव्योनतुराज्ञाबलात्कारयितव्यः यथाहमनुः लक्ष्यंशस्त्रभृतांवास्याद्विदुषामिच्छयात्मन इति

इदंचमरणांतिकत्वात् साक्षात्कर्तुःक्षत्रियस्यकामकारविषयम् अपिशब्दादश्वमेधादिनापिशुद्ध्यति यथाहमनुः यजेतवाश्वमेधेनस्वर्जिता
गोसवेनच अभिजिद्विश्वजिद्भ्यांवात्रिवृताग्निष्टुतापिवेति अश्वमेधानुष्ठानंसार्वभौमक्षत्रियस्यैव यजेतवाश्वमेधेनक्षत्रियस्तुमहीपतिरिति
पराशरस्मरणात् नासार्वभौमोयजेतेत्यसार्वभौमस्यप्रतिषेधदर्शनाच्च इदंचाश्वमेधानुष्ठानंसार्वभौमस्यकामकारकृतेमरणांतिकस्थाने
द्रष्टव्यम् महापातककर्त्तारश्चत्वारोमतिपूर्वकम् अग्निंप्रविश्यशुध्यंतिस्थितावामहतिक्रताविति यमेनमरणफलाग्निप्रवेशतुल्यतयामहा

संग्रामेवाहतोलक्ष्यभूतःशुद्धिमवाप्नुयात् मृतकल्पःप्रहारार्त्तोजीवन्नपिविशुद्ध्यति २४८

क्रतोरश्वमेधस्यनिर्दिष्टत्वात्स्वर्जितादयस्त्रैवर्णिकस्याहिताग्नेरिष्टप्रथमयज्ञस्यद्वादशवार्षिकेणसहविकल्प्यंते नचस्वर्जिताद्यर्थमाधानंप्र-
थमयज्ञानुष्ठानंवाकार्यम् पतितस्यद्विजातिकर्मस्वनधिकारात् नचसंध्योपासनवदविरोधइतियुक्तम् आधानादेरुत्तरक्रतुशेषत्वाभावात् ते
चदक्षिणान्यूनाधिक्याश्रयणेनद्वादशवार्षिकषड्वार्षिकाद्यर्हेषुसाक्षाद्ब्रह्मवधादिषुव्यवस्थापनीयाः २४८ छ छ छ छ

किंच अरण्येनिर्जनप्रदेशोनियतोनियताहारोजपेद्वानियताहारइतिमनुस्मरणात् त्रिवारंमंत्रब्राह्मणात्मकंवेदंजपित्वाशुध्यति संहिता ग्रहणंपदक्रमव्युदासार्थं यद्वामिताशनोभूत्वाप्लाक्षात्प्रस्रवणादारभ्यपश्चिमोदधेःप्रतिस्रोतःस्रोतःस्रोतःप्रतिसरस्वतीमित्वागत्वाविशुध्यति अशनंचहविष्येणकार्यं हविष्यभुग्वानुचरेत्प्रतिस्रोतःसरस्वतीमितिमनुस्मरणात् अयंचवेदजपोविदुषोहंतुर्निर्धनस्याल्पतरगुणवतोनिर्गुणव्यापादनेप्रमादकृतेद्रष्टव्यः सरस्वतीगमनंतुतादृशएवविषयेविद्याविरहिणोद्रष्टव्यं निमित्तस्य तिरस्कृतोयदाविप्रोनिर्गुणोम्रियतेयदीत्यादिसुमंतुवचनस्य-

अरण्येनियतोजप्त्वात्रिर्वैवेदस्यसंहिताम् शुध्येत्वामिताशीत्वाप्रतिस्रोतःसरस्वतीम् २४९

दर्शितत्वात् यत्पुनर्मनुवचनम् जपित्वान्यतमंवेदंयोजनानांशतंव्रजेदिति तदप्यरण्येनियतोजप्त्वेत्येतस्यैवविषये अध्यानंशक्तस्यैवद्रष्टव्यम् २४९ किंच नविद्ययाकेवलयेत्याद्युक्तलक्षणेपात्रेगोभूहिरण्यादिकंजीवनायपर्याप्तंसमर्थंधनंदत्वाशुद्धिमवाप्नुयात् तद्धनंयःप्रतिगृण्हातितस्य वैश्वानरदैवत्येष्टिःशुद्ध्यर्थंकर्त्तव्या एतच्चाहिताग्निविषयम् अनाहिताग्नेस्तुतद्दैवत्यश्चरुर्भवति यएवाहिताग्नेर्धर्मःसएवौपासनिकस्येतिगृत्यकारवचनात् वाशब्दात्सर्वस्वंसपरिच्छदंवागृहंदद्यात् यथाहमनुः सर्वस्वंवावेदविदेब्राह्मणायोपपादयेत् धनंवाजीवनायालं-

गृहंवासपरिच्छदामिति इदंचपात्रेधनदानंनिर्गुणस्यधनवतो हंतुर्निर्गुणव्यापादनेद्रष्टव्यम् तत्रैवविषयेअविद्यमानान्वयस्यसर्वस्वदानंसा न्वयस्यतस्यसोपस्करगृहदानमितिव्यवस्था यदपिपराशरेणोक्तं चातुर्विद्योपपन्नस्तुविधिवद्ब्रह्मघातके समुद्रसेतुगमनंप्रायश्चित्तंवि- निर्दिशेत् सेतुबंधपथेभिक्षांचातुर्वर्ण्यात्समाहरेत् वर्जयित्वाविकर्मस्थान् छत्रोपानद्विवर्जितः अहंदुष्कृतकर्मावैमहापातककारकः गृहद्वा रेषुतिष्ठामिभिक्षार्थीब्रह्मघातकः गोकुलेषुचगोष्ठेषुग्रामेषुनगरेषुच तपोवनेषुतीर्थेषुनदीप्रस्रवणेषुच एतेषुख्यापयन्नेनःपुण्यंगत्वा तुसागरम् ब्रह्महाविप्रमुच्येतस्नात्वातस्मिन्महोदधौ ततःपूतोगृहंप्राप्यकृत्वाब्राह्मणभोजनम् दत्वावस्त्रंपवित्राणिपूतात्माप्रविशेद्गृहं

पात्रेधनंवापर्याप्तंदत्वाशुद्धिमवाप्नुयात् अदातुश्चापिशक्त्यर्थमिष्टिर्वैश्वानरीतथा २५०

गवांवापिशतंदत्वाचातुर्विद्यायदक्षिणाम् एवंशुद्धिमवाप्नोतिचातुर्विद्यानुमोदितइति तदपिपात्रेधनंवापर्याप्तमित्यनेनसमानविषयम् य- च्चसुमंतुवचनम् ब्रह्महासंवत्सरंकृच्छ्रंचरेदधःशायीत्रिषवणीकर्मवेदकोभैक्षाहारोदिव्यनदीपुलिनसंगमाश्रमगोष्ठपर्वतप्रस्रवणतपोव नविहारीस्यात्स्थानवीरासनीसंवत्सरेपूर्णेहिरण्यमणिगोधान्यतिलभूमिसर्पींषिब्राह्मणेभ्योददत्पूतोभवति तदपिहंतुर्मूर्खस्यधनवतोज्ञा तिमात्रव्यापादनेद्रष्टव्यम् यत्तुनर्वसिष्ठवचनम् द्वादशरात्रमब्भक्षोद्वादशरात्रमुपवसेदिति तन्मनसाध्यवसितब्रह्मघ्नस्यस्वतएवोपरतजि

घांसस्यवेदितव्यम् यत्तुनः षंढंतुब्राह्मणंहत्वाशूद्रहत्याव्रतंचरेत् चांद्रायणंवाकुर्वीतपराकद्वयमेवचेतिषट्त्रिंशन्मतवचनम् तदप्रत्यानेयपुंस्त्व
स्यसप्रत्ययवधेद्रष्टव्यम् अत्रैवविषयेअप्रत्ययवधेबृहस्पतिराह अरुणायाःसरस्वत्याःसंगमेलोकविश्रुते शुद्ध्येत्त्रिषवणस्नायीत्रिरात्रोपो
षितोद्विजइति॰ एवमन्यान्यपिस्मृतिवचनान्यन्विष्यविषमाणांव्यवस्थाविज्ञेया समानांतुविकल्पः एतानिचद्वादशवार्षिकादिधनदानपर्यंतानि
ब्राह्मणस्यैव क्षत्रियादेस्तुद्विगुणादिकं यथाहांगिराः पर्षद्याब्राह्मणानांतुसाराज्ञांद्विगुणामता वैश्यानांत्रिगुणाप्रोक्तापर्षद्वच्चव्रतंस्मृतमिति
एवंचब्राह्मणानांयेनहंतृहन्यमानगतगुणविशेषेणयःप्रायश्चित्तविशेषोव्यवस्थितः सएवतद्गुणविशिष्टेक्षत्रियादौहंतरिद्विगुणस्त्रिगुणोवेदि
तव्यः अनयैवदिशाक्षत्रियवैश्यादावपिहीनेनोत्कृष्टवधेदोषगौरवात्प्रायश्चित्तस्यापिद्वैगुण्यादिकल्पनीयम् दोषगौरवंचदंडगौरवादवगम्यते
यथोक्तं प्रतिलोमापवादेषुद्विगुणस्त्रिगुणोदमः वर्णानामानुलोम्येचतस्मादर्धार्धहानितइति यत्तुचतुर्विंशतिमतवचनम् प्रायश्चित्तंयदाम्ना
तंब्राह्मणस्यमहर्षिभिः पादोनंक्षत्रियःकुर्यादर्धंवैश्यःसमाचरेत् शूद्रःसमाचरेत्पादमशेषेष्वपिपापेष्विति तत्प्रतिलोमानुष्ठितचतुर्विध
साहसव्यतिरिक्तविषयम् तथामूर्द्धावसिक्तादीनामप्यनुलोमोत्पन्नानांदंडवत्प्रायश्चित्तमूहनीयम् दर्शितंदंडतारतम्यम् दंडप्रणयनंकार्यं
वर्णजात्युत्तराधरैरिति ततश्चमूर्द्धावसिक्तस्यब्राह्मणवधेब्राह्मणादतिरिक्तंक्षत्रियान्न्यूनमध्यर्द्धंद्वादशवार्षिकंभवति अनयैवदिशाप्रति
लोमोत्पन्नानामपिप्रायश्चित्तगौरवमूहनीयम् तथाआश्रमिणामप्यंगिरसाविशेषोदर्शितः गृहस्थोक्तानिपापानिकुर्वत्याश्रमिणोयदि शौचवच्छोध
नंकुर्युरर्वाग्ब्रह्मनिदर्शनादिति शौचवदित्येतच्छौचंगृहस्थानांद्विगुणंब्रह्मचारिणां त्रिगुणंतुवनस्थानांयतीनांतुचतुर्गुणमितिवचनाद्यथाब्रह्मचा

यदीनां शौचं द्विगुणादिक्रमेण वर्धते तथा शोधनं प्रायश्चित्तमपि भवतीत्यर्थः ब्रह्मचारिणस्तु प्रायश्चित्तं द्विगुण्यं षोडशवर्षादूर्ध्वमेव अर्वाक्तु पुनर्बा
लो वाप्यून षोडशः प्रायश्चित्तार्धमर्हति इति षोडशवर्षादर्वाचीनस्यार्द्धप्रायश्चित्ताभिधानात् नच द्वादशवार्षिके चतुर्गुणे क्रियमाणे मध्ये विपत्ति
शंकया समाप्त्यनुपपत्तेः प्रवृत्तिरेव नोपपद्यत इति शंकनीयम् यतः प्रक्रांत प्रायश्चित्तस्य मध्ये विपत्तावपि पापक्षयो भवत्येव यथाह हारीतः प्रा
यश्चित्ते व्यवसिते कर्त्ता यदि विपद्यते पूतस्तदहरेवासाविहलोके परत्र चेति व्यासोप्याह धर्मार्थं यतमानस्तु न चेच्छक्नोति मानवः प्राप्तो भव

यागस्थ क्षत्रविड् घाती चरेद्ब्रह्महणि व्रतम् गर्भहा च यथा वर्णं तथात्रेयीनिषूदकः २५१

ति तत्पुण्यमत्र नैवास्ति संशय इति २५० अधुना निमित्तांतरेषु ब्रह्महत्या प्रायश्चित्तस्यातिदेशमाह दीक्षणीयाद्युदवसानीयापर्यंते सोमयाग
प्रयोगे वर्त्तमानौ क्षत्रियवैश्यौ यो व्यापादयति असौ ब्रह्महणि पुरुषे यद्व्रतमुपदिष्टं द्वादशवार्षिकादि तच्चरेत् यद्यपि यागशब्दः सामान्यवचन-
स्तथाप्यत्र सोमयागमभिधत्ते सवनगतौ च राजन्य वैश्याविति वासिष्ठे सवनत्रयसंपाद्यस्य सोमयागस्यैव निर्दिष्टत्वात् अत्र च गुरुलघुभूता
नां द्वादशवार्षिकादि ब्रह्महत्याव्रतानां जातिशक्तिगुणाद्यपेक्षया प्राग्वद्व्यवस्था वेदितव्या एवं गर्भवधादिष्वपि मरणांतिकं तु नातिदिश्यते ब्रा

ग्रहणात् अतःकामतोयागस्थक्षत्रियादिवधेव्रतस्यैवद्वैगुण्यं नचव्रतंसंपूर्णमेवकर्त्तव्यम् पूर्वयोर्वर्णयोर्वेदाध्यायिनंहत्वेतिप्रक्रम्यापस्तंबेनद्वा
दशवार्षिकाभिधानात् गर्भंचविज्ञातस्कसंभूतंहत्वायथावर्णयद्वर्णपुरुषवधेयत्प्रायश्चित्तमुक्तंतद्वर्णगर्भवधेतच्चरेत् एतच्चानुपजातस्त्रीपुंनपुं-
सकव्यंजनगर्भविषयम् हत्वागर्भमविज्ञातमितिमानवेविशेषदर्शनात् अत्रचयद्यपिब्राह्मणगर्भस्यब्राह्मणत्वादेवतद्वधनिमित्तव्रतप्राप्तिस्त
थापिस्त्रीत्वस्यापिसंभवात्स्त्रीशूद्रविट्क्षत्रवधश्चोपपातकत्वेनतत्प्रायश्चित्तप्राप्तिरपिस्यादतःस्त्रीपुंनपुंसकत्वेनाविज्ञातेपिब्राह्मणगर्भत्वमा
त्रप्रयुक्तंब्रह्महत्याव्रतंकुर्यादित्यर्थवदतिदेशवचनम् उपजातेतुस्त्रीपुंसादिविशेषव्यंजनेयथायथमेवप्रायश्चित्तम् यश्चात्रेय्यानिषूदकोव्या
पादकःसोपितथाव्रतंचरेत् हन्यमानात्रेयीवर्णानुरूपंव्रतंचरेदित्यर्थः आत्रेयीशब्देनऋतुमत्युच्यते रजस्वलामृतुस्नातामात्रेयीमाहुरत्रह्ये
ष्यदपत्यंभवतीतिवसिष्ठस्मरणात् अत्रिगोत्रजाच अत्रिगोत्रजावानारीभवेदितिविष्णुस्मरणात् एतदुक्तंभवति ब्राह्मणगर्भवधेब्राह्मण्या
त्रेयीवधेचब्रह्महत्याव्रतम् अत्रक्षत्रियगर्भवधेक्षत्रियात्रेयीवधेचक्षत्रहत्याव्रतमेवमन्यत्रापीति चशब्दात्साक्ष्येअनृतवचनादिष्वपि य-
थाहमनुः उक्त्वाचैवानृतंसाक्ष्येप्रतिरभ्यगुरुंतथा अपहृत्यचनिक्षेपंकृत्वाचस्त्रीसुहृद्वधमिति यत्रव्यवहारेअसत्यवचनेनप्राणिनांवध
प्राप्तिस्तद्विषयमेतत् प्रायश्चित्तस्यातिगुरुत्वात् प्रतिरंभःक्रोधावेशः निक्षेपश्चब्राह्मणसंबंधी स्त्रीचाहिताग्निभार्यापतिव्रतात्वादिगुण
युक्तोच्यते सवनस्थाच यथाहांगिराः आहिताग्नेर्द्विजाग्र्यस्यतथापत्नीमनिंदिताम् ब्रह्महत्याव्रतंकुर्यादात्रेयीघ्नस्तथैवचेति सवनस्थांस्त्रि
यंहत्वाब्रह्महत्याव्रतंचरेदितिपराशरस्मरणात् एवंचसवनस्थाग्निहोत्रिण्यात्रेयीवधेब्रह्महत्याप्रायश्चित्तातिदेशात्तद्व्यतिरिक्तस्त्रीवधस्य-
ओळ ९ वर्णि

स्त्रीशूद्रविट्क्षत्रवध इत्युपपातकमध्यपाठादुपपातकत्वमेव ननु ब्राह्मणो न हंतव्य इत्यत्र निषेधेनुपादेयगतत्वेन लिंगवचनयोरविवक्षितत्वा
द्ब्राह्मणजातेश्च स्त्रीपुंसयोरविशेषात्तदतिक्रमनिमित्तप्रायश्चित्तविधेर्ब्रह्महा द्वादशाब्दानीत्यस्योभयत्र प्राप्तत्वात् किमर्थं तथात्रेयीनिषूदक
इत्यतिदेशवचनम् उच्यते सत्यपि ब्राह्मणत्वे अनात्रेय्या वधस्य महापातकप्रायश्चित्तनिराकरणार्थमतस्तस्योपपातकमध्यपाठादुपपातक-
प्रायश्चित्तमेव आतिदेशिकेषु च प्रायश्चित्तस्यैवातिदेशो न पातित्यस्यातः पतितत्यागादिकार्यमत्र न भवति २५१ किंच यथावर्णमित्यनुव

चरेद्व्रतमहत्वापि घातार्थं चेत्समागतः

र्तते ब्राह्मणादिहनने कृतनिश्चयस्तद्धापादनार्थं सम्यगागत्य शस्त्रादिप्रहारे कृते कथंचित्प्रतिघातादिप्रतिबंधवशादसौ न मृतस्तदा अहत्वा-
पि यथावर्णं ब्रह्महत्यादिव्रतं चरेत् तथा च गौतमः सृष्टश्चेद्ब्राह्मणवधे अहत्वापीति ननु हनने तदभावे चैकप्रायश्चित्ततानयुक्ता सत्यमेत-
त् अत एवौपदेशिकेभ्यो न्यूनत्वादातिदेशिकानां पादोनान्येव ब्रह्महत्यादिव्रतानि द्वादशवार्षिकादीनि भवंति एतच्च प्रपंचितं प्राक् ६७

किंच यस्तु सवनसंपाद्यं सोमयागमनुतिष्ठंतं ब्राह्मणं व्यापादयति तस्मिन् द्वादशवार्षिकादिव्रतं द्विगुणं समादिशेत् तेषां च व्रतानां गुरुलघूनां जातिशक्तिगुणाद्यपेक्षया सत्यपि सवनस्थत्वस्याविशेषे पूर्ववदेव व्यवस्थावगंतव्या ब्रह्महत्यासमानां तु गुर्वधिक्षेपादीनामातिदेशिकेभ्योपि न्यूनत्वादर्धोनं द्वादशवार्षिकादिप्रायश्चित्तमित्युक्तं इति ब्रह्महत्याप्रायश्चित्तप्रकरणम् २५२ अथ क्रमप्राप्तं सुरापानप्रायश्चित्तं प्रक्रमते सुरादीनां मध्येन्यतममग्निसंनिभं क्वाथापादिताग्निस्पर्शदाहशक्तिकं कृत्वा पीत्वा सुरापो मरणाच्छुद्धिं प्राप्नोति गोमूत्रसाहचर्याद्गव्ये एव घृत

द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेत् २५२ सुरांबुघृतगोमूत्रपयसामग्निसंनिभम् सुरापोन्यतमं पीत्वा मरणाच्छुद्धिमृच्छति २५३

पयसी ग्राह्ये घृतपयःसाहचर्याच्च स्त्रैणमेव गोमूत्रं एतच्चार्द्रवाससा कार्यम् सुरापआर्द्रवासाश्च अग्निवर्णां सुरां पिबेदिति पैठीनसिस्मरणात् तथा लौहेन पात्रेण सुरापोग्निवर्णां सुरामायसेन पात्रेण वापि बेदिति प्रचेतःस्मरणात् एतच्च सकृत्पानमात्रे सुरापानं सकृत्कृत्वाग्निवर्णां सुरां पिबेदित्यंगिरःस्मरणात् यत्तु वसिष्ठवचनम् अभ्यासे तु सुरायाश्च त्वग्निवर्णां सुरां पिबेत् द्विज इति तत्सुराव्यतिरिक्तमद्यपानविषयम् एतच्च कामकारविषयम् सुरापाने कामकृते ज्वलंतीं तां विनिक्षिपेत् मुखे तया विनिर्दग्धे मृतः शुद्धिमवाप्नुयादिति

बृहस्पतिस्मरणात् यत्तुसुरांपीत्वाद्विजोमोहादग्निवर्णांसुरांपिबेदितिमनुनामोहग्रहणंकृतंतच्छास्त्रार्थापरिज्ञानाभिप्रायेण अत्रेदंचिंत
नीयम् किंसुराशब्दोमद्यमात्रेरूढउततिसृष्वेवगौडीमाध्वीपैष्टीष्वाहोस्विदन्त्यस्यामेवेति तत्रकेचिन्मद्यमात्रेरूढइतिवर्णयंति अभ्यासेतुसु
रायाइतिवासिष्ठेपैष्ट्यादित्रयव्यतिरिक्तेपिमद्यमात्रेसुराशब्दप्रयोगदर्शनात् नचासौगौणःप्रयोगइतिशंकनीयम् मदजननशक्तिमत्त्वोपा
धिकतयासर्वत्रमुख्यत्वोपपत्तौगौणत्वकल्पनायाअन्याय्यत्वादिति तदयुक्तम् पानसंद्राक्षमाधूकंखार्जूरंतालमैक्षवम् माधुकंसैरमारिष्टं
मैरेयंनालिकेरजम् समानानिविजानीयान्मद्यान्येकादशैवतु द्वादशंतुसुरामद्यंसर्वेषामधमंस्मृतमितिपुलस्त्येनमद्यविशेषत्वेनसुरायानि-
र्दिष्टत्वात् अतश्चमद्यमात्रेसुराशब्दप्रयोगोगौणः अन्येपुनःपैष्ट्यादिषुतिसृषुसुराशब्दस्यनिरूढिंमन्यंते तथाहि यद्यप्यनेकत्रसुराशब्दप्र
योगोदृश्यतेतथापिकुत्रानादित्वमितिसंदेहे गौडीमाध्वीचपैष्टीचविज्ञेयात्रिविधासुरेतिमनुवचनाद्गुडपिष्टमधुविकारेष्वनादित्वनिर्धारणात्तत्रैव
मुख्यत्वंयुक्तम् नचानेकत्रशक्तिकल्पनंदोषः मदशक्तेरुपाधित्वाश्रवणेनतस्यसुपरिहरत्वात् नचतालादिरसेष्वप्युपाधेर्विद्यमानत्वादतिप्र
संगः पंकजादिशब्दवद्योगरूढत्वाश्रयणात् अतश्च यथैवैकातथासर्वानपातव्याद्विजोत्तमैरितितिसृणांसुराणांसमानदोषत्वप्रतिपादनप
रम् नपुनरनयोर्गौडीमाध्व्योःपैष्टीसुरासमत्वप्रतिपादनपरम् द्विजोत्तमग्रहणंद्विजात्युपलक्षणम् एतदप्ययुक्तम् द्वादशंतुसुरामद्यंसर्वेषा
मधमंस्मृतमितिपुलस्त्यवचनेगौडीमाध्वीभ्यामपिसुरामद्यस्यव्यतिरेकदर्शनात् तथा सुरावैमलमन्नानांपाप्माचमलमुच्यतइतिअन्नवि
कारस्यैवसुरात्वनिर्देशादन्नशब्दस्यचान्नेनव्यंजनमित्यादिषुव्रीह्याद्यादिविकारएवप्रयोगदर्शनाद्गुडमधुनोश्चरससरूपत्वात्तथासौत्रामणीग्रहे

पुवान्नविकार एव सुराशब्दस्य श्रुतत्वात् पैष्ट्येव सुरा मुख्योच्यते इतरयोस्तु सुराशब्दो गौणः यत्तूक्तं गौडी माध्वीति मनुवचनात्त्रिसृष्वप्युत्पत्ति
कत्वनिर्धारणेति तदप्ययुक्तम् यतोनेदं शब्दानुशासनवच्छब्दोर्थसंबंधानादित्वप्रतिपादनपरम् किंतु कार्यप्रतिपादनपरम् अतो गुरुप्राय
श्चित्तनिमित्ततया गौडीमाध्व्योर्गौणः सुराशब्दप्रयोगः एवं च नानेकशक्तिकल्पनादोषो नाप्युपाध्याश्रयणं कृतम् न चात्र द्विजोत्तमग्रहणस्यो-
पलक्षणत्वम् अतश्च सुरा वै मलमन्नानां पाप्मा च मलमुच्यते तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेदिति पैष्ट्या एव वर्णत्रयसंबंधित्वेन निषे
धः गौड्यादीनां तु मद्यानां ब्राह्मणसंबंधित्वेनैव निषेधो न क्षत्रियवैश्ययोः यक्षरक्षःपिशाचानां मद्यं मांसं सुरासवम् तद्ब्राह्मणेन नात्तव्यं देवाना
मश्नता हविरिति मानवे ब्राह्मणेनेति विशेषोपादानात् बृहद्विष्णुनापि ब्राह्मणस्यैव मद्यप्रतिषेधो दर्शितः मधूकमैक्षवं सैरं तालं खार्जूरपानसे
मधूत्थं चैव माध्वीकं मैरेयं नालिकेरजम् अमेध्यानि दशैतानि मद्यानि ब्राह्मणस्य त्विति बृहद्याज्ञवल्क्येनापि क्षत्रियवैश्ययोर्दोषाभावो दर्शितः
कामादपि हि राजन्यो वैश्यो वापि कथंचन मद्यमेव सुरां पीत्वा न दोषं प्रतिपद्यते व्यासेनापि तयोर्माध्वीपानमनुज्ञातम् उभौ मध्वासवक्षीबौ उ-
भौ चंदनचर्चितौ एकपर्यंकरथिनौ दृष्टौ मे केशवार्जुनाविति एवं ब्राह्मणसंबंधित्वेन मद्यमात्रनिषेधे सत्यपि गौडी माध्वी च पैष्टी च विज्ञेया-
त्रिविधा सुरा यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैरिति गौडीमाध्व्योः पृथङ्निषेधवचनं दोषगुरुत्वेन सुरासमत्वप्रतिपादनपरम् अयं च
सुरानिषेधोनुपनीतस्यानूढायाश्च कन्यायाश्च भवत्येव तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेदिति जातिमात्रावच्छेदेन निषेधात् अतश्च
सुरां पीत्वा द्विजो मोहादिति प्रायश्चित्तविधिवाक्ये मनुना यत् द्विजग्रहणं कृतं तद्वर्णत्रयोपलक्षणार्थम् निमित्तभूतनिषेधसापेक्षत्वान्नैमित्तिक

विधेर्निषेधेच्च वर्णमात्रस्यावच्छेदकत्वात् यथा यस्य हविर्निरुप्तं पुरस्ताच्चंद्रमा अभ्युदेतीति निमित्तवाक्ये हविर्मात्राभ्युदयस्य निमित्तत्वावगतौ तत्सापेक्षनैमित्तिकवाक्ये श्रूयमाणमपि त्रेधा तंदुलान्विभजेदिति तंदुलग्रहणं तंदुलादिस्वरूपहविर्मात्रोपलक्षणम् इयांस्तु विशेषः पादो बालेषु दातव्यः सर्वपापेष्वयं विधिरिति वचनात्कामकारेपि न मरणांतिकं किंतु पादमेव द्विगुणीकृत्य षड्वार्षिकं देयम् विहितं यदकामानां कामात्तद्द्विगुणं चरेदित्यंगिरःस्मरणात् एवं वृद्धातुरादिष्वपि योज्यम् तथा तद्ब्राह्मणेन नात्तव्यं देवानामभ्यतां हविरिति मद्यस्यापि जातिमात्रावच्छेदेन निषिद्धत्वादनुपनीतेनापि न पेयम् ननु कथमनुपनीतस्य दोषः प्रागुपनयनात्कामचारवादभक्षा इति गौतमवचनात् तथा मद्यमूत्रपुरीषाणां भक्षणे नास्ति कश्चन दोषस्त्वापंचमाद्वर्षादूर्ध्वं पित्रोः सुहृद्गुरोरिति कुमारवचनाच्च दोषाभावावगतेः उच्यते सुरामद्ययोर्निषेधवाक्ये जातिमात्र-स्यावच्छेदकत्वश्रवणादप्रतिहतैव निषेधप्रवृत्तिः अत एव स्मृत्यंतरे निषेधवचनम् सुरापाननिषेधस्तु जात्याश्रय इति स्थितिरिति अतः पादो बालेषु दातव्यः सर्वपापेष्वयं विधिरिति सर्वपापेषु सुरापानादिष्विति वचनात् पाद एव सुरापाने प्रायश्चित्तम् तथा जातूकर्ण्येन मद्यपानेपि प्रायश्चि-त्तमुक्तम् अनुपेतस्तु यो बालो मद्यं मोहात्पिबेद्यदि तस्य कृच्छ्रत्रयं कुर्यान्माता भ्राता तथा पितेति अतो गौतमवचनं सुरादिव्यतिरिक्तशुष्कप-र्युषितादिविषयम् कुमारवचनं तु स्वल्पदोषख्यापनपरम् अत एव प्रागुपनयनात्कृतदोषस्योपनयनमेव प्रायश्चित्तमित्युक्तं मनुना गर्भैर्होमैर्जातकर्मचूडामौंजीनिबंधनैः बैजिकं गार्भिकं चैनो द्विजानामपसृज्यत इति अयमत्रार्थः त्रैवर्णिकानामुत्पत्तिप्रभृति पैष्टीप्रतिषेधः ब्राह्मणस्य तु मद्यमात्रनिषेधोप्युत्पत्तिप्रभृत्येव राजन्यवैश्ययोस्तु न कदाचिदपि गौड्यादिमद्यप्रतिषेधः शूद्रस्य तु न सुराप्रतिषेधो नापि मद्यमात्रप्रतिषेधः २५२

प्रायश्चित्तांतरमाह गोच्छागादिलोमनिर्मितवस्त्रप्रावृतोवालवासाः वालवासोग्रहणंचीरवल्कलयोरुपलक्षणार्थं सुरापगुरुतल्पगोचीरवल्कल
वाससौब्रह्महत्याव्रतंचरेयातामितिप्रचेतःस्मरणात् जटीग्रहणंमुंडत्वनिराकरणार्थम् ब्रह्महत्याव्रतंचरेदित्यनेनैवसिद्धेयद्वालवसनादिग्रहणं
तदन्यत्रसंभवेस्वयंमारितशिरःकपालादिनिवृत्त्यर्थं इदमकामतोजलबुद्ध्यायःसुरांपिबतितद्विषयम् इयंविशुद्धिरुदितात्रमाप्या कामतोद्विज
मित्यकामत्वोपाधित्वेनविहितस्यैव द्वादशवार्षिकस्यातिदेशात् अत्रचसुरापानस्यमहापातकत्वात्सत्यप्यातिदेशिकत्वेसंपूर्णमेवद्वादशवार्षिकं

वालवासाजटीवापिब्रह्महत्याव्रतंचरेत् पिण्याकंवाकणान्वापिभक्षयेत्त्रिसमानिशि २५४

कुर्यात् नपादोनम् अतएववृद्धहारीतः द्वादशभिर्वर्षैर्महापातकिनःपूयंतेइति अथवापिण्याकपिंडान्त्रिसमाःवर्षत्रयपर्यंतंरात्रौभक्षयेत्
कणास्तंदुललवास्तान्वापूर्ववद्भक्षयेत् एतच्चसकृदेवकार्यम् कणान्वाभक्षयेदब्दंपिण्याकंवासकृन्निशीतिमनुस्मरणात् अस्यचपिण्याकादि
भक्षणस्यभोजनकार्येविहितत्वादशनांतरपरित्यागः एतच्चोदकबुद्ध्यासुरापानेच्छर्दनोत्तरकालेवेदितव्यम् एतदेवव्रतंकुर्यान्मद्यपश्छर्दने
कृते पंचगव्यंतुतस्योक्तंप्रत्यहंकायशोधनमितिव्यासवचनात् नचसुरासंसृष्टेषदुपलभ्यमानतद्गंधरसोदकपानविषयमिदमितिसुंदरम्

संसर्गेपिसुरात्वस्यानपायात् यथाज्यत्वस्यपृषदाज्ये अतएवाज्यपाइतिनिगमाःकार्याःनपृषदाज्यपाइत्येवमुक्तंन्यायविद्भिः यत्तुनरापस्तंब
वचनम् स्तेयंकृत्वासुरांपीत्वागुरुदारान्गत्वाब्राह्मणहत्यांचकृत्वाचतुर्थकालंमितभोजनोयोभ्युपेयात्सवनानुकल्पंस्थानासनाभ्यांविहरंस्त्रिभि
र्वर्षैःपापंव्यपनुदतीति यत्तंगिरोवचनम् महापातकसंयुक्तावर्षैःशुध्यतितेत्रिभिरिति तदुभयमपिपिण्याकंवाकणान्वेत्यनेनैकविषयम्
यदपियमेनप्रायश्चित्तद्वयमुक्तम् बृहस्पतिसवनेनेष्ट्वासुरापोब्राह्मणःपुनः समत्वंब्राह्मणैर्गच्छेदित्येषावैदिकीश्रुतिः भूमिप्रदानंयःकुर्या
त्सुरांपीत्वाद्विजोत्तमः पुनर्नचपिबेत्तांतुसंस्कृतःसविशुध्यतीति तदुभयंपूर्वेणसहैकविषयम् यद्वाअतिरिक्तदक्षिणाकल्पाश्रयेणद्वादश
वार्षिकेणसहविकल्प्यते अत्रापिबालवृद्धादीनांसार्द्धैकवर्षादियमनुपनीतानांतुनवमासिकमित्येवंकल्पनाकार्या यत्तुमनुवचनं कणान्वा-
भक्षयेदब्दंपिण्याकंवासकृन्निशि सुरापानापनुत्यर्थंवालवासाजटीध्वजीति तत्तुतालुमात्रसंयोगेसुरायाअबुद्धिपूर्वेद्रष्टव्यम् ननुचद्रव
द्रव्यस्याभ्यवहरणंपानमित्युच्यते अभ्यवहरणंचकंठस्याधोनयनं नताल्वादिसंयोगमात्रमतःकथंतत्रपाननिमित्तंप्रायश्चित्तमुच्यते
येनताल्वादिसंयोगेनविनापानक्रियाननिर्वर्त्तते सोपिपानक्रियाप्रतिषेधेनप्रतिषिद्धः अतोयद्यपिमुख्यपानाभावान्नमहापातकत्वंतथापित
त्प्रतिषेधेनतदंगभूताव्यभिचारिताल्वादिसंयोगस्यापिप्रतिषिद्धत्वेनदोषस्यविद्यमानत्वाद्भवत्येवप्रायश्चित्तम् चरेद्व्रतमहत्वापिघातार्थंचे
त्समागतइति यथाहननप्रतिषेधेनतदंगभूताध्यवसायादेरपिप्रतिषिद्धत्वात्प्रायश्चित्तविधानम् यत्तुबौधायनीयम् त्रैमासिकमसत्या-
सुरापानेकृच्छ्राब्दपादंचरित्वापुनरुपनयनमिति यच्चयाम्यं सुरांपीत्वाद्विजंहत्वारुक्मंहृत्वाद्विजन्मनः संयोगंपतितैर्गत्वाद्विजश्चांद्रायणं

चरेदिति यदपिबार्हस्पत्यं गौडीमाध्वीसुरांपैष्टींपीत्वाविप्रःसमाचरेत् तप्तकृच्छ्रंपराकंचचांद्रायणमनुक्रमादिति तत्त्रितयमप्यनन्यौषध
साध्यव्याध्युपशमार्थेपानेवेदितव्यम् प्रायश्चित्तस्याल्पत्वात् यदातुसुरासंसृष्टंशूकरसमेवान्नंभक्षयतितदापुनरुपनयनम् यथाहमनुः
अज्ञानात्प्राश्यविण्मूत्रंसुरासंसृष्टमेवच पुनःसंस्कारमर्हंतित्रयोवर्णाद्विजातयइति यदाशुष्कसुराभांडस्थोदकंपिबतितदाशातातपेनोक्तं
कुर्यात् सुराभांडोदकपानेच्छर्दनंघृतप्राशनमहोरात्रोपवासश्चेति यत्तुबौधायनीयम् सुरापानस्ययोभांडेष्वपःपर्युषिताःपिबेत् शंखपु
ष्पीविपक्वंतुक्षीरंसतुपिबेत्त्र्यहमितितत्पर्युषितत्वादधिकम् अकामतोभ्यासेपुनर्मनुनोक्तं अपःसुराभाजनस्थामद्यभांडस्थितास्तथा पं
चरात्रंपिबेत्पीत्वाशंखपुष्पीशृतंपयइति यत्तुविष्णूक्तम् अपःसुराभाजनस्थाःपीत्वासप्तरात्रंशंखपुष्पीशृतंपयःपिबेदिति तन्मतिपूर्वक
पाने ज्ञानतोभ्यासेतु बृहद्यमआह सुराभांडस्थितंतोयंयदिकश्चित्पिबेद्द्विजः सद्वादशाहंक्षीरेणपिबेद्ब्राह्मींसुवर्चलामिति सुरापस्यमु
खगंधघ्राणेतुमानवम् ब्राह्मणस्यसुरापस्यगंधमाघ्रायसोमपः प्राणानप्सुत्रिराचम्यघृतंप्राश्यविशुध्यतीति एतत्सोमयाजिनएवामतिपूर्वं
मतिपूर्वेतुद्विगुणम् अपीतसोमस्यतुकल्प्यम् साक्षात्सुरागंधघ्राणस्यतुघ्रातिरघ्रेयमद्ययोरितिजातिभ्रंशकरत्वात् जातिभ्रंशकरंकर्म
कृत्वान्यतममिच्छया चरेत्सांतपनंकृच्छ्रंप्राजापत्यमनिच्छयेतिमनूक्तंद्रष्टव्यम् २५४ एवंसुरव्यसुरापानेप्रायश्चित्तमुक्त्वामद्यपानेप्रा
यश्चित्तमाह यःपुनरज्ञानादुदकबुद्ध्यासुरांमद्यंब्राह्मणःपिबति येचब्राह्मणादयोरेतोविण्मूत्राणिप्राश्नंतितेत्रयोपिद्विजातयोवर्णास्तत्सकृ
च्छ्रपूर्वकंपुनरुपनयनंप्रायश्चित्तमर्हंति अत्रमद्यपानेयोयंपुनःसंस्कारःसब्राह्मणस्यैव क्षत्रियविशोस्तदभ्यनुज्ञानस्यदर्शितत्वात् सुराश

ब्दश्चात्रमद्यपरः प्रायश्चित्तस्यातिलघुत्वात् अज्ञानतोमुख्यसुरापाने द्वादशवार्षिकस्यविहितत्वाच्च अतएवगौतमेनात्रमद्यशब्दःप्रयुक्तः
अमत्यामद्यपानेपयोघृतमुदकंवायंप्रतित्र्यहंतप्तानिपिबेत्सतत्सकृच्छ्रस्ततोस्यसंस्कारोमूत्रपुरीषकुणपरेतसांप्राशनेचेति यदप्यस्मिन्नेव
विषयेमनुनोक्तं अज्ञानाद्वारुणींपीत्वासंस्कारेणविशुध्यतीति तदपितप्तकृच्छ्रपूर्वकमेव गौतमवाक्यानुरोधात् पुनःसंस्कारश्चपुनरुपनय
नम् तच्चाश्वलायनाद्युक्तक्रमेणकर्त्तव्यम् यथोक्तं अथोपेतपूर्वस्यकृताकृतंकेशवपनंमेधाजननंचानिरुक्तंपरिदानंकालश्चतत्सावितुर्वृणी

अज्ञानात्तुसुरांपीत्वारेतोविण्मूत्रमेवच पुनःसंस्कारमर्हंतित्रयोवर्णाद्विजातयः २५५

महइतिसावित्रीमिति मतिपूर्वमद्यपानेवसिष्ठोक्तंद्रष्टव्यम् मत्यामद्यपानेत्वसुरायाःसुरायाश्चाज्ञानेकृच्छ्रातिकृच्छ्रौघृतप्राशनंपुनःसंस्का
रश्चेति चांद्रायणंवाशंखोक्तम् असुरामद्यपायीचांद्रायणंचरेदिति मुखमात्रप्रवेशेतुमद्यस्यापस्तंबीयषड्रात्रम् अभक्ष्याणामपेयानाम-
लेह्यानांचभक्षणे रेतोमूत्रपुरीषाणांप्रायश्चित्तंकथंभवेत् पद्मोदुंबरबिल्वानांपलाशस्यकुशस्यच एतेषामुदकंपीत्वाषड्रात्रेणविशुध्य
तीति एतच्चतालादिमद्यविषयम् गौडीमाध्व्योःपुनरज्ञानपानेअसुरायाःसुरायाश्चाज्ञानतइतिवसिष्ठोक्तःकृच्छ्रातिकृच्छ्रसहितःपुनःसं

स्कारो घृतप्राशश्च द्रष्टव्यः तयोर्मतिपूर्वपानेतु पिण्याकंवाकणान्वेतित्रैवर्णिकम् कामतस्तुतत्पानाभ्यासे अभ्यासेतु सुरायाअग्निवर्णांसुरांपिबेन्मर
णात्पूतोभवतीतिवासिष्ठंमरणांतिकंद्रष्टव्यम् नात्रसुराशब्दःपैष्ट्यभिप्रायः तस्याःसकृत्पानेपिमरणांतिकस्यदर्शितत्वात् मद्यवासितशुष्कभां-
डोदकस्याज्ञानतःपाने त्र्यहद्यमोक्तं मद्यभांडस्थितंतोयंयदिकश्चित्पिबेत्द्विजः कुशमूलविपक्केनत्र्यहंक्षीरेणवर्त्तयेदिति अज्ञानतोभ्यासेतुवसि
ष्ठेनोक्तम् मद्यभांडस्थितंतोयंयदिकश्चित्पिबेत्द्विजः पद्मोदुंबरबिल्वानांपलाशस्यकुशस्यच एतेषामुदकंपीत्वात्रिरात्रेणविशुध्यतीति ज्ञा

पतिलोकंनसायातिब्राह्मणीयासुरांपिबेत् इहैवसाशुनीगृध्रीसूकरीचोपजायते २५६

नतःपानेतुविष्णूक्तं मद्यभांडस्थितंतोयंपीत्वापंचरात्रंशंखपुष्पीशृतंपयःपिबेदिति ज्ञानतोभ्यासेतुशंखेनोक्तं मद्यभांडस्थितंतोयंपीत्वासप्तरा
त्रंगोमूत्रंयावकंपिबेदिति अत्यंताभ्यासेतुहारीतोक्तम् मद्यभांडस्थितंतोयंयदिकश्चित्पिबेत्द्विजः द्वादशाहंतुपयसापिबेद्ब्राह्मीसुवर्चलामि
ति एषुचवाक्येषुद्विजग्रहणंब्राह्मणाभिप्रायं क्षत्रियवैश्ययोरप्रतिषेधादितिदर्शितंप्राक् इदंचगौडीमाध्वीभांडस्थजलपानविषयंगुरुत्वा
त्प्रायश्चित्तस्य तालादिमद्यभांडोदकपानेतुकल्प्यम् २५५ द्विजातिभार्यांप्रत्याह याद्विजातिभार्यासुरांपिबतिसाकृतपुण्यापिसतीपतिलोकं

नयातिकिंत्विहैवलोकेश्वगृध्रसूकरलक्षितांतिर्यग्योनिंक्रमेणप्राप्नोति ब्राह्मणीग्रहणंचात्रतिस्रोवर्णानुपूर्व्येणेतिन्यायेनयस्याद्विजातेर्याविं-
त्योभार्यास्तासांसुपलक्षणम् अतएवमनुः पतत्यर्धंशरीरस्ययस्यभार्यासुरांपिबेत् पतितार्धशरीरस्यनिष्कृतिर्नविधीयतेइति धर्मार्थकामे
षुसहाधिकाराद्दंपत्योरेकशरीरत्वमेवातोयस्यद्विजातेर्भार्यासुरांपिबतितस्यभार्यारूपमर्धंशरीरंपततिपतितस्यचभार्यारूपस्यार्धशरीरस्यनि
ष्कृतिर्नविधीयते तस्माद्विजातिभार्ययाब्राह्मण्याद्ययासुरानपातव्या तस्माद्ब्राह्मणराजन्यौवैश्यश्चनसुरांपिबेदितिनिषेधाविधौलिंगस्या

ब्राह्मणस्वर्णहारीतुराज्ञेमुशलमर्पयेत् स्वकर्मख्यापयंस्तेनहतोमुक्तोपिवाशुचिः २५७

विवक्षितत्वेनवर्णत्रयभार्याणामपिप्रतिषेधेसिद्धेपुनर्वचनंद्विजातिभार्यायाःशूद्रायाअपिसुराप्रतिषेधप्राप्त्यर्थं अतोद्विजातिभार्याभिःसु
रापानप्रायश्चित्तस्यार्धंकार्यम् शूद्रभार्यायास्तुशूद्रायाःशूद्रवदेव नप्रतिषेधः सुरापानसमेषुतुनिषिद्धभक्षणादिषुसुरापानप्रायश्चित्ता
र्धमित्युक्तंप्राक् इतिसुरापानप्रायश्चित्तप्रकरणम् २५७ क्रमप्राप्तंसुवर्णस्तेयप्रायश्चित्तमाह ब्राह्मणस्वामिकंसुवर्णंयोपहरत्यसौसुव
र्णस्तेयंमयाकृतमित्येवंस्वकर्मख्यापयन् राज्ञेमुशलंसमर्पयेत् मुशलसमर्पणस्यदृष्टार्थत्वात्तेनमुशलेनराजातंहन्यात् तेनराज्ञाहतोमुक्तो

वाशुद्धोभवति अपहरणशब्देनचसमक्षंपरोक्षंवाबलाच्चौर्येणवाक्रयादिस्वत्वहेतुंविनाग्रहणमुच्यते मुशलंसमर्पयेदितियद्यपिसामान्ये
नोक्तंतथापितस्यहननार्थत्वात्तत्समर्थस्यायोमयादेर्ग्रहणम् अतएवमनुनोक्तम् स्कंधेनादायमुशलंलकुटंवापिखादिरम् असिंचोभयतस्ती
क्ष्णमायसंदंडमेववेति शंखेनाप्यत्रविशेषउक्तः सुवर्णस्तेनःप्रकीर्णकेशआर्द्रवासाआयसंमुसलमादायराजानमुपतिष्ठेदिदंमयापापंकृतम
नेनमुशलेनमांघातयस्वेतिसराज्ञाशिष्टःसन्पूतोभवतीति हननंचावृत्तिविधानाभावात्सकृदेवकार्यम् अतएवमनुनोक्तम् ततोमुशलमादा
यसकृद्धन्यात्तुतंस्वयमिति एवंसकृत्ताडनेनहतोमृतःशुध्येत् मुक्तोवामरणाज्जीवन्नपिशुध्येदितियावत् तथाचसंवर्त्तेनोक्तम् ततोमुशल
मादायसकृद्धन्यात्तुतंस्वयम् यदिजीवतिसस्तेनस्ततस्तेयाद्विमुच्यतेइति यथोक्तंब्रह्मवधे मृतकल्पःप्रहारार्त्तोजीवन्नपिविशुध्यतीति
नन्वताडितएवराज्ञामुक्तःस्तेनःशुध्येदित्ययमर्थःकस्मान्नेष्यते उच्यते अघ्नन्नेनस्वीराजेतिगौतमीयेताडनमकुर्वतोराज्ञोदोषाभिधानात्
भवतुराज्ञोदोषः तथाप्यतिक्रांतनिषेधेनराज्ञास्नेहादिनामुक्तःस्तेनःकथंनशुध्येदितिचेत् उच्यते एवंचसत्यकारणिकाशुद्धिरापतेत् उच्यते
मोक्षोत्तरकालंद्वादशवार्षिकाद्यनुष्ठानेनशुध्यंगीकरणान्नाकारणिकेति तदप्यसुंदरं मुक्तःशुचिरितिमोक्षस्यैवशुद्धिहेतुत्वाभिधानात् अ
तःप्राच्यैवव्याख्याज्यायसी मुक्तोवामरणाज्जीवन्नपिविशुध्येदितियावत् इदंचमरणांतिकंसार्ववर्णिकस्यापहर्त्तुर्नतुब्राह्मणस्यैव ब्राह्म
णस्वर्णहारीतिनैमित्तिकवाक्येविशेषानुपादानात् क्षत्रियादीनांचमहापातकित्वाविशेषात्प्रायश्चित्तांतरस्यानाम्नानाच्च यत्तुनर्मानवेसुव
र्णस्तेयकृद्विप्रइतिविप्रग्रहणंतन्नरमात्रोपलक्षणं प्रायश्चित्तीयतेनरइतितस्यैवप्रकृतत्वात् ब्रह्महत्यासुरापानंस्तेयंगुर्वंगनागमइतिनि-

मित्तवाक्येविशेषानुपादानाच्च तत्सापेक्ष्यनैमित्तिकवाक्येसुवर्णस्तेयकृद्विप्रइत्यत्रश्रूयमाणमप्युपलक्षणमेवयुक्तम् यथाभ्युदितेष्ट्यांयस्य
हविरितिवाक्येतंदुलग्रहणंहविर्मात्रस्य इदंचराज्ञाहननंब्राह्मणव्यतिरिक्तस्य नजातुब्राह्मणंहन्यात्सर्वपापेष्वपिस्थितमितिमानवेब्राह्म
णवधस्यनिषिद्धत्वात् यदिकथंचिदतिक्रांतनिषेधेनराज्ञाहन्यतेतथापिशुद्धोभवति वधेनशुध्यतिस्तेनोब्राह्मणस्तपसैववेतिब्राह्मण-
स्यापिवधेनशुद्ध्यभिधानात् नचतपसैववेत्येवकारेणवधनिषेधः तस्यकेवलतपसापिशुद्ध्यभिधानपरत्वात् यदिवधोनिषिद्धः स्त
र्हितपसैववेतिविकल्पाभिधानमनुपपन्नं नचदंडाभिप्रायंविकल्पाभिधानम् तस्यानिर्दिष्टत्वात् किंचएककार्थास्तुविकल्पेरन्नितिन्यायेनैककार्था
नामेवविकल्पोव्रीहियवयोरिव नचदंडतपसोरेकार्थत्वं दंडस्यदमनार्थत्वात्तपसश्चपापक्षयहेतुत्वात् नचवधेनशुध्यतिस्तेनइतिसामान्यवि
षयेणवधेनब्राह्मणस्तपसैववेतिविशिष्टविषयस्य तपसोविकल्पोपपत्तिः नहिभवतिब्राह्मणेभ्योदधिदीयतांतक्रंकौंडिन्यायवेतिविकल्प
स्तस्माद्वयोरपिसामान्यविषयत्वमेव यद्वाक्षत्रियस्यापिननिषेधः मनुनासुवर्णस्तेयकृद्विप्रइत्यभिधाय गृहीत्वामुशलंराज्ञासकृद्धन्यात्तुतं
स्वयमितिसर्वनाम्नाप्रकृतब्राह्मणपरामर्शेनैवहननविधानात् नजातुब्राह्मणंहन्यादित्यस्यप्रायश्चित्तव्यतिरिक्तदंडरूपहननविषयत्वेना-
प्युपपत्तेः एतच्चमरणांतिकंमतिपूर्वसुवर्णस्तेयविषयम् मरणांतिकंहियत्प्रोक्तंप्रायश्चित्तंमनीषिभिः तत्तुकामकृतेपापेविज्ञेयंनात्रसंश
यइतिमध्यमांगिरसःस्मरणात् अत्रचसुवर्णशब्दःपरिमाणविशिष्टहेमद्रव्यवचनोनजातिमात्रवचनः जालसूर्यमरीचिस्थत्रसरेणूर
जःस्मृतं तेऽष्टौलिक्षातुतास्तिस्रोराजसर्षपउच्यते गौरस्तुतेत्रयःषड्भिर्यवोमध्यस्तुतेत्रयः कृष्णलःपंचतेमाषस्तेसुवर्णस्तुषोडशेतिषो

डशमाषपरिमिते हेमनि सुवर्णशब्दस्य परिभाषितत्वात् अतो ब्राह्मणसुवर्णापहरणं महापातकमित्यादिप्रयोगेषु कृतपरिमाणस्यैव सुवर्णस्य-
ग्रहणं युक्तम् परिमाणकरणस्य दृष्टार्थत्वात् न त्वदृष्टार्थं परिमाणस्मरणम् नापि लोकव्यवहारार्थम् अनन्तरत्वात् स्मृतिकारप्रवृत्तेः अत
एवोक्तं न्यायविद्भिः कार्यकाले संज्ञापरिभाषयोरुपस्थानमिति तथा नामापि गुणफलोपबंधेनार्थवदित्युक्तं पंचदशान्याज्यानीत्यत्र तु न च दंडम
त्रोपयोगि परिमाणस्मरणमिति युक्तम् तावन्मात्रार्थत्वे प्रमाणाभावात् अतो विशेषात् सर्वशेषत्वमेव युक्तम् किंच दंडस्य दमनार्थत्वाद्दमन-
स्य च परिमाणविशेषमंतरेणासिद्धेर्नातीव परिमाणस्मरणमुपयुज्यते शब्दैकसमधिगम्ये तु महापातकित्वादावेकांततः स्मरणमुपयुज्यते अ
तः षोडशमाषात्मकसुवर्णपरिमितहेमहरण एव महापातकित्वं तन्निमित्तं मरणांतिकादि प्रायश्चित्तविधानं च द्वित्र्यादिमाषात्मकहेमहरणं
तु क्षत्रियादिहेमहरणवदुपपातकमेवेति युक्तम् किंच सुवर्णान्न्यूनपरिमाणहेमहरणे प्रायश्चित्तांतरोपदेशात्तत्परिमाणस्य हेम्नो हरणे मर
णांतिकादि प्रायश्चित्तमिति युक्तम् तथा चोक्तं षट्त्रिंशन्मते वालाग्रमात्रे पहृते प्राणायामं समाचरेत् लिक्षामात्रे पि च तथा प्राणायामत्रयं
बुधः राजसर्षपमात्रे तु प्राणायामचतुष्टयम् गायत्र्यष्टसहस्रं च जपेत्पापविशुद्धये गौरसर्षपमात्रे च सावित्रीं वै दिनं जपेत् यवमात्रे सु
वर्णस्य प्रायश्चित्तं दिनद्वयम् सुवर्णकृष्णलं त्वेकमपहृत्य द्विजोत्तमः कुर्यात्सांतपनं कृच्छ्रं तस्य पापस्यापनुत्तये अपहृत्य सुवर्णस्य माष
मात्रं द्विजोत्तमः गोमूत्रयावकाहारस्त्रिभिर्मासैर्विशुध्यति सुवर्णस्यापहरणे वत्सरं यावकी भवेत् ऊर्ध्वं प्राणांतिकं ज्ञेयमथवा ब्रह्महव्रत
म् इदं च वत्सरं यावकाशनं किंचिन्न्यूनसुवर्णापहारविषयम् सुवर्णापहारे मन्वादिमहास्मृतिषु द्वादशवार्षिकविधानात् बलाद्येकामकारे

णगृण्हंतिस्वंनराधमाः तेषांतुबलहर्तॄणांप्राणांतिकमिहोच्यते सुवर्णपरिमाणादर्वागपीत्यभिप्रेतम् इदंचस्तेयप्रायश्चित्तमपहृतंधनं तत्स्वामिनेदत्वैवकार्यं स्तेयेब्रह्मस्वभूतस्यसुवर्णादेःकृतेपुनः स्वामिनेपहृतंदेयंहर्त्रात्वेकादशाधिकमितिस्मरणात् तथा चरेत्सांतपनंकृ च्छ्रंतन्निर्दप्यात्मशुद्धये इतिमनुस्मरणाच्च दंडप्रकरणेप्युक्तं शेषेप्येकादशगुणंदाप्यस्तस्यचतद्धनमिति यदात्वशक्त्याराजाहंतुमसमर्थ स्तदावसिष्ठोक्तंद्रष्टव्यम् स्तेनःप्रकीर्णकेशोराजानमभियाचेततनस्तस्मैराजोदुंबरंशस्त्रंदद्यात्तेनात्मानंप्रमापयेत् मरणात्पूतोभवतीति-

अनिवेद्यनृपेशुध्येत्सुरापव्रतमाचरन् आत्मतुल्यंसुवर्णंवादद्याद्वाविप्रतुष्टिकृत् २५८

विज्ञायतइति औदुंबरंताम्रमयम् यदपिद्वितीयंप्रायश्चित्तंतेनोक्तम् निःकालकोगोघृताक्तोगोमयाग्निनापादप्रभृत्यात्मानंप्रमापयेन्मर णात्पूतोभवतीतिविज्ञायतेइति तदपिगुरुश्रोत्रिययागस्यादिविप्रद्रव्यापहारविषयम् क्षत्रियाद्यपहर्तृविषयंवा तत्रनिःकालकइतिनि गतिकेशश्मश्रुलोमाभिधीयते तथाश्वमेधाद्यनुष्ठानेनवा यथाप्रचेतसामरणांतिकमभिधायोक्तम् इष्ट्वावाश्वमेधेनगोसवेनवाविशुध्ये दिति एतच्चविट्क्षत्रियाद्यपहर्तृविषयम् २५७ प्रायश्चित्तांतरमाह स्तेयंस्तेयंराजन्यनिवेद्यसुरापव्रतंद्वादशवार्षिकमाचरन्शुध्येत्

शवशिरोध्वजतत्कपालधारणनिराकरणार्थं सुरापव्रतमित्युक्तम् एतच्चाकामकारविषयम् इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजमित्य-
कामतो विहितस्यैव द्वादशवार्षिकस्यातिदेशात् नन्वकामतोपहार एव न संभवतीति कथं तद्विषयत्वमुच्यते यदा वस्त्रप्रांतग्रथितं सुवर्णादिक
मज्ञानादपहरति रजतादिद्रव्यांतरबुद्ध्या वा तत्क्षणानंतरमेवान्यस्मै दत्तं नाशितं वा न पुनः स्वामिने प्रत्यर्पितं तदा संभवत्येवाकामतोपहारः यस्तु
ताम्रादिकरसवेधाद्युत्पादितसुवर्णरूपस्यापहारो न तत्रेदं प्रायश्चित्तम् मुख्यजातिसमवायाभावात् न च मुख्यसादृश्यमात्रेण गौणे मुख्यध-
र्मा भवंति यद्यपीदृशमेवासुवर्णं सुवर्णभ्रांत्यापहरति तथापि नेदं प्रायश्चित्तम् असुवर्णापहारित्वादेव न च स्पृष्टश्चेद्ब्राह्मणवधे अहत्वापीति
वदत्रापि दोष इति वाच्यम् असुवर्णे प्रवृत्तत्वादेव नत्वब्राह्मणः स्पृष्टश्चेदित्यस्य विषयः यच्चेदं मनसा पापं ध्यात्वा प्रणवपूर्वव्याहृतीर्मनसा-
जपेत् व्याहृत्या प्राणायामं त्रिराचरेत् प्रवृत्तौ कृच्छ्रं द्वादशरात्रं चरेदिति तदपि सम्यगर्थप्रवृत्तिविषयम् अतो नेदृशमज्ञानतः स्वर्णापहारः प्रा
यश्चित्तस्य निमित्तम् किंतु रजतादिबुद्ध्या पूर्वोक्त एव स्वर्णापहारः अस्मिन्नेव विषये यदापहर्त्तात्यंतमहाधनः तदात्मतुलितं सुवर्णं दद्यात्
अथ तावद्धनं नास्ति तपश्चर्यायां चाशक्तस्तदा विप्रतुष्टिकृद्विप्रस्य यावज्जीवं कुटुंबभरणपर्याप्ततया तुष्टिकरं धनं दद्यात् यदा निर्गुणस्वामिकं
द्रव्यमपहरति तदा एतदेव व्रतं स्तेनः पादन्यूनं समाचरेदिति व्यासेनोक्तं नववार्षिकं द्रष्टव्यम् यदा पुनरीदृशमेव क्षुत्क्षामकुटुंबपरिरक्षणार्थमपह
रति तदा अत्रिप्रतिपादितषड्वार्षिकं स्वर्जिदादि वाक्रतुं कुर्यात्तीर्थयात्रां वा षडब्दं वाचरेत् कृच्छ्रं यजेद्वा क्रतुना द्विजः तीर्थानि वाभ्रमन्विद्वांस्ततः
स्तेयाद्विमुच्यते इति यदा त्वपहारसमनंतरमेव महाकष्टं मया कृतमिति जातानुतापः प्रत्यर्पयति त्यजति वा तदापस्तंबीयं चतुर्थकालमिताश

नेनत्रिवर्षमवस्थानमांगिरसंवावज्जारव्यंत्रैवार्षिकंद्रष्टव्यम् ननुप्रत्यर्पणेत्यागेवापहारधात्वर्थस्यनिष्पन्नत्वात्कथंप्रायश्चित्ताल्पत्वम् अ
थानिष्पन्नस्तदाप्रायश्चित्ताभावएवस्यान्नतुप्रायश्चित्ताल्पत्वम् मैवं अपहारस्योपभोगादिफलपर्यंतत्वादुपभोगात्प्राङ्निवृत्तौचपुष्कल-
स्यापहारार्थस्याभावाद्युक्तमेवप्रायश्चित्ताल्पत्वंपीतवांतद्वापेयेद्रव्ये नन्वेवंसतिचौरहस्ताद्बलादाकृष्यग्रहणेपितस्योपभोगलक्षणफला
भावात्प्रायश्चित्ताल्पत्वप्रसंगः मैवं तस्यत्यागेस्वतःप्रवृत्त्यभावात् फलपर्यंतेपहारेस्वतःप्रवृत्तत्वाच्च यस्तुरजतताम्रादिसंसृष्टसुवर्णा
पहारोनतत्रेदंलघुप्रायश्चित्तम् यतःसंसर्गेपिसुवर्णत्वंनापैति आज्यत्वमिवपृषदाज्ये अतस्तत्रद्वादशवार्षिकमेवेतियुक्तम् अथस्वर्णसदृशं
द्रव्यांतरमेवेतिलघुप्रायश्चित्तम् उच्यते नतर्हितत्रत्रैवार्षिकादिलघुप्रायश्चित्तादिविषयता असुवर्णत्वादेव किंतूपपातकप्रायश्चित्तमेव यद
प्यपरमापस्तंबोक्तम् स्तेयंकृत्वासुरांपीत्वाकृच्छ्रंसांवत्सरंचरेदिति तत्सुवर्णपरिमाणादर्वाङ्माषाच्चाधिकपरिमाणद्रव्यविषयम् यत्तूक्तंसुमं
तुना सुवर्णस्तेयीमासंसावित्र्याष्टसहस्रमाज्याहुतीर्जुहुयात् प्रत्यहंत्रिरात्रमुपवासंतप्तकृच्छ्रेणचपूतोभवतीति तत्पूर्वोक्तमाषपरिमाणसुव
र्णापहारप्रायश्चित्तेनसहविकल्पते यदप्यपरंतेनैवोक्तं सुवर्णस्तेयीद्वादशरात्रंवायुभक्षःपूतोभवतीतितन्मनसापहारेप्रवृत्तस्यस्वतएवोपरतापः-
जिहीर्षस्यवेदितव्यम् अत्रापिस्त्रीबालवृद्धादिष्वर्धमेवप्रायश्चित्तंवेदितव्यम् यानिचाश्वरत्नमनुष्यस्त्रीभूधेनुहरणतथैत्यादिनासुवर्णस्तेय
समत्वेनप्रतिपादितानितेष्वर्धमेवकार्यम् यत्तुनश्चतुर्विंशतिमतवचनम् रूप्यंहृत्वाद्विजोमोहाच्चरेच्चांद्रायणव्रतम् गद्याणदशकादूर्ध्वमाश
तान्द्विगुणंचरेत् आसहस्रात्तुत्रिगुणमूर्ध्वंहेमविधिःस्मृतः सर्वेषांधातुलोहानांपराकंतुसमाचरेत् धान्यानांहरणेकृच्छ्रंतिलानामैंदवंस्मृ

तम् रत्नानांहरणेविप्रश्चरेच्चांद्रायणव्रतमिति तदपिगद्याणसहस्राधिकरजतहरणेसुवर्णस्तेयसमप्रायश्चित्तप्रतिपादनार्थंनपुनस्तन्निवृत्त्यर्थम् यदपिरत्नापहारेचांद्रायणमुक्तम् तदपिगद्याणसहस्राद्धीनमूल्यरत्नापहारेद्रष्टव्यम् ऊर्ध्वंपुनःसुवर्णस्तेयसमम् इतिसुवर्णस्तेयप्रायश्चित्त प्रकरणम् २५८ उद्देशक्रमप्राप्तंगुरुतल्पगमनप्रायश्चित्तमाह समावागुरुतल्पगइतिवक्ष्यमाणश्लोकगतंगुरुतल्पगपदमात्रंसंबध्यते तप्तेयःशयनेयथामरणक्षमंभवतितथातप्तेअग्निवर्णीकृतेकार्ष्णायसेशयनेअयोमय्यास्त्रीप्रतिकृत्यातप्तयासहगुरुतल्पगःस्वप्यात् एवंस्व

तप्तेयःशयनेसार्धमायस्यायोषितास्वपेत् गृहीत्वोत्कृत्यवृषणौनैर्ऋत्यांचोत्सृजेत्तनुम् २५९

प्तांतनुंदेहंउत्सृजेन्म्रियेदितियावत् शयनंचगुर्वंगनागमनंमयाकृतमित्येवंस्वकर्मविख्याप्यकुर्यात् गुरुतल्पोभिभाष्यैनइतिमनुस्मरणात् तथास्त्रियमालिंग्यकार्यं गुरुतल्पगोमृन्मयीमायसींवास्त्रियाःप्रतिकृतिमग्निवर्णांकृतेकार्ष्णायसशयनेअयोमय्यास्त्रीप्रतिकृत्याकृत्वातामालिंग्यपूतोभवतीतिवृद्धहारीतस्मरणात् तथासुंडितलोमकेशेनघृताभ्यक्तेनकर्त्तव्यम् निःकालकोघृताभ्यक्तस्तप्तांस्त्रींमृन्मयींपरिष्वज्यमरणात्पूतोभवतीतिविज्ञायतइतिवसिष्ठस्मरणात् नचगुरुतल्पोभिभाष्यैनस्तप्तेस्वप्यादयोमये सूर्मींज्वलंतीं वाश्लिष्यमृत्युनासविशुध्यती

निमनुवाक्याविरोधेनतप्तलोहशयनम् तप्तलोहयोषिदालिंगनंचनिरपेक्ष्यप्रायश्चित्तद्वयमित्याशंकनीयम् आयस्यायोषितास्स्वपेत् कुत्रेत्या
कांक्षायांनस्तेयःशयनइतिपरस्परसापेक्षतयैकत्वावगमादेककल्पत्वमेवयुक्तम् अथवावृषणौसलिंगौस्वयमुत्कृत्यछित्वांजलिनागृहीत्वा
नैर्ऋत्यांदक्षिणप्रतीच्यांदिशिदेहपातांतमकुटिलगतिर्गत्वातन्नुमुत्सृजेत् यथाहमनुः स्वयंवाशिश्नवृषणावुत्कृत्याधायचांजलौ नैर्ऋतींदि
शमातिष्ठेदानिपातादजिह्मगइति गमनंपृष्ठतोवाक्षमाणेनकर्त्तव्यम् क्षुरेणशिश्नवृषणावुत्कृत्यानवेक्षमाणोव्रजेदितिशंखलिखितस्म
रणात् एवंगच्छन्यत्रकुड्यादिनाप्रतिबध्यतेतत्रैवमरणांततिष्ठेत् सवृषणंशिश्नमुत्कृत्यांजलावाधायदक्षिणाभिमुखोगच्छेद्यत्रैवप्रति
हतस्तत्रैवतिष्ठेदाप्रलयादितिवसिष्ठस्मरणात् यथाहनारदः आसामन्यतमांगच्छन्गुरुतल्पगउच्यते शिश्नस्योत्कर्त्तनात्तत्रनान्योदंडोवि
धीयतेइति एवंदंडार्थमपिलिंगाद्युत्कर्त्तनंपापक्षयार्थमपिभवति इदमेवमरणांतिकदंडमभिप्रेत्योक्तंमनुना राजभिर्धृतदंडास्तुकृत्वापापा
निमानवाः निर्मलाःस्वर्गमायांतिसंतःसुकृतिनोयथेति धनदंडेनपुनःप्रायश्चित्तंभवत्येव प्रायश्चित्तंतुकुर्वाणाःसर्वेवर्णायथोदितम् नांक्या
राज्ञाललाटेस्युर्दाप्यास्तूत्तमसाहसमितितेनैवोक्तत्वात् अनयोश्चमरणांतिकयोरन्यतरानुष्ठानेनगुरुतल्पगःशुध्येत् गुरुशब्दश्चात्रमुख्य
यावृत्त्यापितरिवर्त्तते निषेकादीनिकर्माणियःकरोतियथाविधि संभावयतिचान्नेनसविप्रोगुरुरुच्यतेइतिमनुनागुरुत्वप्रतिपादनपरेवा
क्येनिषेकादिकर्त्तुर्जनकस्यैवगुरुत्वाभिधानात् योगीश्वरेणचनिषेकादिकर्माभिप्रायेणोक्तम् सगुरुर्यःक्रियाःकृत्वावेदमस्मैप्रयच्छतीति न
नुगुरुशब्दस्यान्यत्रप्रयोगोपिदृश्यते उपनीयगुरुःशिष्यमित्यादिनाचार्ये स्वल्पंवाबहुवायस्यश्रुतस्योपकरोतियः तमपीहगुरुंविद्यादित्यु

पाध्याये व्यासेनाप्यन्यत्र प्रयोगो दर्शितः गुरवो मातृपितृपत्न्याचार्यविद्यादातृज्येष्ठभ्रातरऋत्विजोभयत्रातान्नदातान्वेति नचानेकार्थकल्पनादोषः गुरुशब्दस्य प्रवृत्तिनिमित्तभूतायाः पूजार्हतायाः सर्वत्रानुस्यूतेः दर्शितंचतस्याः प्रवृत्तिनिमित्तत्वं योगीश्वरेण एतेमान्याययथापूर्वमेभ्योमातागरीयसीतिमान्याइत्युपक्रम्यगरीयसीत्युपसंहारंकुर्वता नचोपाध्यायाद्दशाचार्यआचार्याणांशतंपितेत्युपाध्यायादधिकाचार्यात्पितुरतिशयितत्ववचनात्सएवमुख्यइतिवाच्यं आचार्येप्यतिशयितत्वस्याविशिष्टत्वात् उत्पादकब्रह्मदात्रोर्गरीयान्ब्रह्मदः पितेति गौतमेनाप्युक्तम् आचार्यःश्रेष्ठोगुरूणामिति किंचयद्यतिशयितत्वमात्रेणमुख्यत्वमुच्यते तर्हिसहस्रमितिवचनान्मातुरेवगुरुत्वंस्यात् तस्मात्सर्वेगुरवस्तत्पत्नीगमनंगुर्वङ्गनागमनमितियुक्तम् उच्यते निषेकादीनीतिमनुवचनंनिषेकादिकर्तुर्जनकस्यगुरुत्वप्रतिपादनपरम् अनन्यपरत्वात् यत्पुनर्व्यासगौतमवचनम् तत्परिचर्यापूजादिविधिशेषतयास्तुत्यर्थत्वेनान्यपरम् अतोगुरुत्वप्रतिपादनपरान्निषेकादिमनुवचनात्पितुरेवमुख्यंगुरुत्वमितिस्थितम् अतएववसिष्ठेनाचार्यपुत्रशिष्यभार्यासुचैवमित्याचार्यदारेष्वातिदेशिकंगुरुतल्पप्रायश्चित्तमुक्तम् तथाजातूकर्ण्यादिभिरप्युक्तम् आचार्यादेस्तुभार्यासुगुरुतल्पव्रतंचरेदित्यादि आचार्यादेर्मुख्यगुरुत्वेगुरुपदेशतएवव्रतप्राप्तेरतिदेशोनर्थकएवस्यात् किंचसंवर्तेनस्पष्टमेवपितृदारग्रहणंकृतम् पितृदारान्समारुह्यमातृवर्ज्यंनराधमइति षट्त्रिंशन्मतेपि पितृभार्यांतुविज्ञायसवर्णांयोधिगच्छतीति अतोपिनिषेकादिकर्तापितैवमुख्योगुरुः तच्चगुरुत्वंवर्णचतुष्टयेप्यविशिष्टंनिषेकादिकर्तृत्वाविशेषात् अतःसविप्रोगुरुरुच्यतेइतिविप्रग्रहणमुपलक्षणम् अतःपितृपत्नीगमनमेवमहापातकम् गमनंचचरमधातुविसर्गपर्यंतंकथ्यते अतस्ततोर्वाङ्निवृत्तोनमहापातकित्वम् तत्र

चेदं तत्स्तेयः शयने सार्धमायस्येत्याद्युक्तं मरणांतिकं प्रायश्चित्तद्वयम् तच्च जनन्यामकामकृते तत्सपत्न्यां तु सवर्णायामुत्तमवर्णायां च कृते द्रष्टव्यम्
पितृभार्यां तु विज्ञाय सवर्णां योधिगच्छति जननीं चाप्यविज्ञाय नामृतः शुद्धिमाप्नुयादिति षट्त्रिंशन्मते भिधानात् जनन्यां तु कामकृते वासिष्ठम्
निःकालको घृताभ्यक्तो गोमयाग्निना पादप्रभृत्यात्मानमवदाहयेदिति द्रष्टव्यम् अकामतो भ्यासे प्येतदेव ननु च मातुः सपत्नी भगिनी माचार्य
तनयां तथा आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पग इति अतिदेशाभिधानान्मातृसपत्नीगमने तौपदेशिकं प्रायश्चित्तमयुक्तम् उच्यते पितृ-
भार्यां सवर्णामित्यस्मादेव सवर्णग्रहणाद्धीनवर्णसपत्नीविषयमिदमतिदेशिकमिति न विरोधः इदं च मुख्यस्यैव पुत्रस्य इतरेषां पुनः पुत्रकार्यकर
त्वमेव न पुत्रत्वम् यथाह मनुः क्षेत्रजादीन्सुतानेतानेकादशयथोदितान् पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिण इति तत्रोभयेच्छातः प्रवृत्तौ त
त्स्तेयः शयन इति प्रथमं प्रायश्चित्तम् स्वेन प्रोत्साहनेतु गृहीत्वोत्कृत्य वृषणाविति द्वितीयम् अनुबंधातिशयेन प्रायश्चित्तगुरुत्वस्योक्तत्वात् तया
प्रोत्साहितस्य तु मानवम् तप्तलोहशयनज्वलत्सूर्म्यालिंगनयोरंतरं द्रष्टव्यम् यत्तु शंखेन द्वादशवार्षिकमुक्तम् अधःशायी जटाधारी पर्णमू
लफलाशनः एककालं समश्नीत वर्षे तु द्वादशे गते रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः व्रतेनैतेन शुद्ध्यंति महापातकिनस्त्विमे इति तत्स
मवर्णोत्तमवर्णपितृदारगमने अकामकृते द्रष्टव्यम् तत्रैव कामतः प्रवृत्तस्य रेतःसेकात्प्राङ्निवृत्तौ षड्वार्षिकमकामतस्तु त्रिवार्षिकम् जनन्यां
तु कामतः प्रवृत्तस्य रेतःसेकात्प्राङ्निवृत्तौ द्वादशवार्षिकमकामतस्तु षड्वार्षिकमिति कल्प्यम् यत्तु संवर्त्तेन पितृदारान्समारुह्य मातृवर्ज्जं-
नराधम इत्यादिना समारोहणमात्रे तप्तकृच्छ्र उक्तः स हीनवर्णगुरुदारेषु रेतःसेकादर्वाग्द्रष्टव्यः २५९ ७ ७ ७

प्रायश्चित्तांतरमाह अथवा प्राजापत्यं कृच्छ्रं वक्ष्यमाणलक्षणं समाः वर्षत्रयं चरेत् एतच्च ब्राह्मणीपुत्रस्य शूद्रजातीयगुरुभार्यागमने मतिपूर्वे द्रष्टव्यम् यदा तु गुरुपत्नीं सवर्णां व्यभिचारिणीमबुद्धिपूर्वं गच्छति तदा वेदजपसहितं चांद्रायणत्रयं कुर्यात् तत्रैव कामतः प्रवृत्तावौशनसम् गुरुतल्पाभिगामी संवत्सरं ब्रह्महत्याव्रतं षण्मासान्वा तप्तकृच्छ्रं चरेदिति क्षत्रियागमने तु मतिपूर्वे याज्ञवल्कीयम् मातुःसपत्नीं भगिनीमाचार्यतनयां तथेति गुरुतल्पव्रतातिदेशान्नववार्षिकम् इदं चातिदेशिकं सवर्णगुरुभार्यागमनविषयं न भवति तत्र कामतो मरणांतिकस्याकामतो द्वादशवार्षि-

प्राजापत्यं चरेत्कृच्छ्रं समा वा गुरुतल्पगः चांद्रायणं वा त्रीन्मासानभ्यसेद्वेदसंहिताम् २६०

कस्य विहितत्वात् अतः क्षत्रियादिविषयमेवेति युक्तम् तत्रैव कामतोऽभ्यासे मरणांतिकम् मत्यागत्वा गुरोर्भार्यां गुरोः क्षत्रसुतां द्विजः अंडाभ्यां रहितं लिंगमुत्कृत्य समृतः शुचिरिति कण्वस्मरणात् अत्रैव विषये प्रायश्चित्तं यदा न चिकीर्षति तदा छित्वा लिंगं वधस्तस्य सकामायाः स्त्रियास्तथेति याज्ञवल्कीयो वधदंडः प्रायश्चित्तस्थाने द्रष्टव्यः वैश्यायां तु गुरुभार्यायां कामतो गमने षड्वार्षिकम् अत एव स्मृत्यंतरं ब्राह्मणीपुत्रस्य-क्षत्रियायां मातरि गमने पादहान्या द्वादशवार्षिकमेवमन्यवर्णास्विति अयमर्थः ब्राह्मणीपुत्रस्य क्षत्रियायां मातुःसपत्न्यां गमने पादन्यूनं

द्वादशवार्षिकंनववार्षिकमितियावत् तस्यैवतथाभूतायांवैश्यायांषड्वार्षिकं शूद्रायांतुत्रिवार्षिकंप्रायश्चित्तमिति एवंक्षत्रियापुत्रस्य
वैश्यायांमातरिनववार्षिकम् शूद्रायांतुषड्वार्षिकम् एवमेववैश्यापुत्रस्यापीति वैश्यायांतुकामतोभ्यासेमरणांतिकमेव गुरोर्भार्यांतु
योवैश्यांमत्यागच्छेत्पुनःपुनः लिंगाग्रंच्छेदयित्वातु ततःशुध्येत्सकिल्बिषादितिलौगाक्षिस्मरणात् शूद्रायांतुकामतोभ्यासेद्वादशवार्षि
कं पुनःशूद्र्यांगुरोर्गत्वाबुध्याविप्रःसमाहितः ब्रह्मचर्यमदुष्टात्मासचरेद्द्वादशाब्दिकमित्युपमन्युस्मरणात् क्षत्रियायांगुरुभार्यायामबु
द्धिपूर्वगमनेयमोक्तंत्रिवार्षिकमष्टमकालाशनंद्रष्टव्यम् कालेष्टमेवाभुंजानोब्रह्मचारीसदाव्रती स्थानासनाभ्यांविचरंस्त्रिरन्होभ्युपयन्न
पः अधःशायीत्रिभिर्वर्षैस्तदपोहेत्तपातकमिति अत्रैवाभ्यासेजातूकर्ण्योक्तं गुरोःक्षत्रसुतांभार्यांपुनर्गत्वात्वकामतः अंडमात्रंसमुत्कृत्य
शुध्येज्जीवन्मृतोपिवेति वैश्यायांत्वकामतोगमनेप्राजापत्यंचरेत्कृच्छ्रमित्येतदेवयाज्ञवल्कीयम् तथाचवृद्धमनुः गमनेगुरुभार्यायाः-
पितृभार्यागमेतथा अब्दत्रयमकामात्तुकृच्छ्रंनित्यंसमाचरेदिति तत्रैवाभ्यासेहारीतोक्तम् मरणांतिकंब्रह्मचर्यं अभ्यस्यविप्रोवैश्यायां
गुरोरज्ञानमोहितः षडंगंब्रह्मचर्यंचसचरेद्यावदायुषमिति गुरुभार्यांशूद्रायांत्वमतिपूर्वंमानवम् खट्वांगीचीरवासावाश्मश्रुलोवि
जनेवने प्राजापत्यंचरेत्कृच्छ्रमब्दमेकंसमाहितमिति अथवागुरुदाराभिगामीसंवत्सरंकंटकिनीशाखांपरिष्वज्याधःशायीत्रिषवणीभै
क्ष्याहारःपूतोभवतीतिसुमंतूक्तंकुर्यात् तत्रैवाभ्यासेमानवम् चांद्रायणंवात्रिमासानभ्यस्यनियतेंद्रियइति क्षत्रियायांकामतःप्रवृत्तस्य
रेतःसेकादर्वाङ्निवृत्तौव्याघ्रोक्तं कृच्छ्रंचैवातिकृच्छ्रंचतथाकृच्छ्रातिकृच्छ्रकम् चरेन्मासत्रयंविप्रःक्षत्रियागमनेगुरोरिति अत्रेयंव्यव

स्या तयाप्रोत्साहितस्यत्रैमासिकंप्राजापत्याचरणम् उभयेच्छातःप्रवृत्तस्यातिकृच्छ्राचरणम् तावदेवस्वेनप्रोत्साहितायांपुनःकृच्छ्राति
कृच्छ्रानुष्ठानंचतावदेवेति तत्रैवकामतःप्रवृत्तस्यरेतःसेकात्पूर्वंकण्वोक्तंद्रष्टव्यम् चांद्रायणंतप्तकृच्छ्रमतिकृच्छ्रंतथैवच सकृद्गत्वागुरो
र्भार्यामिज्ञानात्क्षत्रियाद्विजइति तयाप्रोत्साहितस्यातिकृच्छ्रः उभयेच्छातःप्रवृत्तस्यतप्तकृच्छ्रः स्वेनप्रोत्साहितायांतुचांद्रायणम् वै-
श्यायां कामतःप्रवृत्तस्यरेतःसेकात्पूर्वंनिवृत्तौकण्वोक्तं तप्तकृच्छ्रंपराकंचतथासांतपनंगुरोः भार्यांवैश्यांसकृद्गत्वाबुद्ध्यामासंचरेद्द्वि
जइति अत्रोभयोरिच्छातःप्रवृत्तौतप्तकृच्छ्रः स्वेनप्रोत्साहितायांपराकः तयाप्रोत्साहितस्यसांतपनम् अत्रैवाकामतःप्रवृत्तस्यप्रजापतिरा
ह पंचरात्रंतुनाश्नीयात्सप्ताष्टौवातथैवच वैश्यांभार्यांगुरोर्गत्वासकृदज्ञानतोद्विजइति तयाप्रोत्साहितस्यतुपंचरात्रम् उभयेच्छातःप्र
वृत्तौसप्तरात्रम् स्वेनप्रोत्साहितायामष्टरात्रम् शूद्रायांतुकामतःप्रवृत्तस्यरेतःसेकात्पूर्वंनिवृत्तौजाबालिराह अतिकृच्छ्रंतप्तकृच्छ्रंपराकं
चतथैवच गुरोःशूद्रांसकृद्गत्वाबुद्ध्याविप्रःसमाचरेदिति तयाप्रोत्साहितस्यातिकृच्छ्रः उभयेच्छातःप्रवृत्तौतप्तकृच्छ्रः स्वेनप्रोत्साहिता
यांपराकः तत्रैवाकामतःप्रवृत्तस्यदैर्घ्यतमसम् प्राजापत्यंसांतपनंसप्तरात्रोपवासकम् गुरोःशूद्रांसकृद्गत्वाचरेद्विप्रःसमाहितइति
तयाप्रोत्साहितस्यप्राजापत्यं उभयेच्छातःप्रवृत्तौसांतपनम् स्वेनप्रोत्साहितायांसप्तरात्रोपवासइति अनयैवदिशान्येषामपिस्मृतिवचसांविषय
व्यवस्थोहनीया पुरुषवच्चस्त्रीणामप्यत्रमहापातकित्वमविशिष्टम् तथाहिकात्यायनः एषदोषश्चशुद्धिश्चपतितानामुदाहृता स्त्रीणामपिप्र
सक्तानामेषएवविधिःस्मृतइति अतस्तस्याअपिकामतःप्रवृत्तौमरणांतिकमविशिष्टम् अतएवपुरुषस्यमरणांतिकमुक्त्वास्त्रियाअपियोगी-

श्वरेणमरणांतिकंदर्शितम् छित्वालिंगंवधस्तस्यसकामायाःस्त्रियास्तथेति अकामतस्तुमनुनोक्तम् एतदेवव्रतंकार्यंयोषित्सुपतितास्वपीति द्वा
दशवार्षिकमेवार्द्धकल्पनयाकार्यम् यानिपुनर्गुरुतल्पसमानि सखिभार्याकुमारीषुस्वयोनिष्वंत्यजासुच सगोत्रासुसुतस्त्रीषुगुरुतल्पसमंस्मृ
तमिति प्रतिपादितानियानियानिचातिदेशविषयभूतानि पितुःस्वसारंमातुश्चमातुलानींस्नुषामपि मातुःसपत्नीभगिनीमाचार्यतनयांतथा आ
चार्यपत्नींस्वसुतांगच्छंस्तुगुरुतल्पगइति प्रतिपादितानि तत्रैकरात्रादूर्ध्वंकामतोभ्यस्तेषुयथाक्रमेणषड्वार्षिकम् नववार्षिकंचप्रायश्चित्तंवि-
ज्ञेयम् अस्मिन्नेवविषयेकामतोत्यंताभ्यासेमरणांतिकं तथाचबृहद्यमः रेतःसिक्त्वाकुमारीषुस्वयोनिष्वंत्यजासुच सपिंडापत्यदारेषुप्राणत्या
गोविधीयतेइति अंत्यजाश्चात्र चांडालःश्वपचःक्षत्तासूतोवैदेहिकस्तथा मागधायोगवौचैवसप्तैतेंत्यावसायिनइतिमध्यमांगिरोदर्शिताज्ञा
तव्याःनतुरजकश्चर्मकश्चेत्यादिप्रतिपादिताः तेषुलघुप्रायश्चित्तस्योक्तत्वात् तथाचांडालांत्यस्त्रियंगत्वाभुक्त्वाचप्रतिगृह्यच पतत्यज्ञानतोवि
प्रोज्ञानात्साम्यंतुगच्छतीति चांडालादिसाम्यंप्रतिपादयतामनुनापिकामतोत्यंताभ्यासेमरणांतिकंदर्शितम् तथात्वज्ञानतश्चांडालीगमनाभ्या
सेपतत्यतःपतितप्रायश्चित्तंद्वादशवार्षिकंकुर्यात् कामतोत्यंताभ्यासेचांडालैःसाम्यंगच्छत्यतोद्वादशवार्षिकाधिकंमरणांतिकंकुर्यात् एत-
च्चबहुकालाभ्यासविषयम् एकरात्राभ्यासेतुवर्षत्रयम् यथाहमनुः यत्करोत्येकरात्रेणवृषलीसेवनाद्द्विजः तद्भैक्ष्यभुग्जपन्नित्यंत्रिभिर्व-
र्षैर्व्यपोहतीति अत्रवृषलीशब्देनचांडाल्यभिधीयते चंडालीबंधकीवेश्यारजस्थायाचकन्यका ऊढायाचसगोत्रास्याद्वृषल्यःपंचकीर्त्ति
ताइतिस्मृत्यंतरेवृषलीशब्दप्रयोगदर्शनात् बंधकीस्वैरिणी कथंपुनरत्राभ्यासावगमः उच्यते यत्करोत्येकरात्रेणेत्यत्यंतसंयोगापवर्गा

चिन्यास्तृतीयायाऽदर्शनात् एकरात्रेणचात्यंतसंयोगोगमनस्याभ्यासंविनानुपपन्न इतिगमनाभ्यासोवगम्यते अतएवैकरात्राद्बहुकालाभ्यासवि
षयंप्रागुक्तंद्वादशवर्षादिगुरुतल्पव्रतातिदेशिकंमरणांतिकंच यदापुनर्ज्ञानतोज्ञानतोवाचांडालाद्याःसकृद्गच्छंतितदाचांडालपुल्कसानांतुभुक्त्वा
गत्वाचयोषितं कृच्छ्राब्दमाचरेत्ज्ञानादज्ञानादैंदवद्वयमितियमाद्युक्तंसंवत्सरंकृच्छ्रानुष्ठानम् अमत्याचांद्रायणद्वयंयथाक्रमेणद्रष्टव्यम् स्व
योनिषंत्यजासुचेत्येकवाक्यसमभिव्याहाराद्भगिन्यादिष्वपीयमेवव्यवस्थावेदितव्या मरणांतिकंचात्राग्निप्रवेशनम् जनन्यांचभगिन्यांचस्वसु
तायांतथैवच स्नुषायांगमनंचैवविज्ञेयमतिपातकम् अतिपातकिनस्त्वेतेप्रविशेयुर्हुताशनमितिकात्यायनस्मरणात् जनन्यांसकृद्गमनेभगि
न्यादिषुचासकृद्गमनेअग्निप्रवेशइतिद्रष्टव्यं महापातकस्यजननीगमनस्यतदतिदेशविषयभूतातिपातकस्यभगिन्यादिगमनस्यतुल्यत्वायो
गात् यत्तुबृहद्यमेनोक्तं चांडालींपुल्कसींम्लेच्छींस्नुषांचभगिनींसखीम् मातापित्रोःस्वसारंचनिक्षिप्तांशरणागताम् मातुलानींप्रव्रजितांस्व
गोत्रांनृपयोषितम् शिष्यभार्यांगुरोर्भार्यांगत्वाचांद्रायणंचरेदिति यत्त्वंगिरोवचनम् पतितांत्यस्त्रियोगत्वाभुक्त्वाचप्रतिगृह्यच मासोपवासंकु
र्वीतचांद्रायणमथापिवेति तदुभयमपिगुरुतल्पातिदेशविषयेषुकामतःप्रवृत्तस्यरेतःसेकादर्वाङ्निवृत्तौद्रष्टव्यम् यदपिसंवर्त्तवचनम् भ-
गिनींमातुराप्तांचस्वसारंचान्यमातृजाम् एतागत्वास्त्रियोमोहात्तप्तकृच्छ्रंसमाचरेदिति तदनंतरोक्तएवविषयेअकामतःप्रवृत्तस्यरेतःसेका
दर्वाङ्निवृत्तौद्रष्टव्यम् यदापुनरेताएवअत्यंतव्यभिचारिणीर्गच्छतितदापीदमेवप्रायश्चित्तयुगुलंचांद्रायणतप्तकृच्छ्रात्मकंक्रमेणकामतो
कामतश्चप्रवृत्तौद्रष्टव्यम् साधारणस्त्रीषुगुरुणोपभुक्तास्वपिगमनेगुरुतल्पदोषोनास्ति जात्युक्तंपारदार्यंचकन्यादूषणमेवच साधारण-

स्त्रियोनास्तिगुरुतल्पत्वमेवचेतिव्याघ्रस्मरणात् एवमन्यान्यपिस्मृतिवचनान्युच्चावचप्रायश्चित्तप्रतिपत्तिपराण्यन्विष्यविषयव्यवस्थोहनी-
यायंग्रंथगौरवभयान्नलिख्यंते इतिगुरुतल्पप्रायश्चित्तप्रकरणम् २६० एवंब्रह्महादिमहापातकिप्रायश्चित्तमभिधायावसरप्राप्तंतत्संसर्गि
प्रायश्चित्तमाह एभिःपूर्वोक्तैर्ब्रह्महादिभिरेकंसंवत्सरंयोत्यंतंसंवसतिसहाचरतिसोपितत्समः योयेनसहाचरतिसतदीयमेवप्रायश्चित्तंकु
र्यादितितदीयप्रायश्चित्तातिदेशार्थंतत्समग्रहणम् नपुनःपातकत्वातिदेशार्थं तस्ययश्चैतैःसहसंवसेदित्युपदेशातएवसिद्धत्वात् अत्रच

एभिस्तुसंवसेद्योवैवत्सरंसोपितत्समः

सत्यप्यतिदेशत्वे कृत्स्नमेवद्वादशवार्षिकंकार्यम् साक्षान्महापातकित्वात्संसर्गिणः अपिशब्दान्नकेवलंमहापातकिसंयोगीतत्समःकिंत्व
तिपातकिपातक्युपपातक्यादीनांमध्येयोयेनसहसंसर्गंकरोतिसोपितत्समइतितदीयमेवप्रायश्चित्तंकुर्यादितिदर्शयति अतएवमनुना-
सकलंप्रायश्चित्तजातमभिधायाभिहितम् योयेनपतितेनैषांसंसर्गंयातिमानवः सतस्यैवव्रतंकुर्यात्तत्संसर्गविशुद्धयेइति विष्णुनापिसा
मान्येनोपपातक्याद्येनस्विमात्रसंसर्गेतत्प्रायश्चित्तभाक्त्वंदर्शितम् पापात्मनायेनसहयःसंसृज्येतसतस्यैवव्रतंकुर्यादिति अतएवमनुना

सामान्येनैनस्विमात्रप्रतिषेधः कृतः एनस्विभिरनिर्णिक्तैर्नार्थं किंचित्समाचरेदिति तथा नसंसर्गं भजेत्सद्भिः प्रायश्चित्तेऽकृते सतीति एतच्च द्वादशवा
र्षिकादिपतितप्रायश्चित्तबुद्धिपूर्वसंसर्गविषयम् पतितेन सहोषित्वा जानन्संवत्सरं नरः मिश्रितस्तेन सोऽब्दान्ते स्वयं च पतितो भवेदिति देवलस्मर-
णात् अज्ञानतः संसर्गे पुनर्वासिष्ठोक्तम् पतितसंप्रयोगे तु ब्राह्मणेन वेदाध्यापनेन यौनेन वा स्रौवेण वा यास्तेभ्यः सकाशान्मात्रा उपलब्धास्ता-
सां परित्यागस्तैश्च न संवसेदुदीचीं दिशं गत्वानश्नन्संहिताध्ययनमधीयानः पूतो भवतीति विज्ञायत इति तथा ब्रह्महा मद्यपस्तेनस्तथैव गुरुतल्प
गः एते महापातकिनो यश्च तैः सह संवसेदिति सर्वमनवद्यम् परामृष्टप्रकृतब्रह्महादिचतुष्टयसंसर्गिण एव महापातकित्ववचनात्तत्संसर्गिणो-
न महापातकित्वम् ननु महापातकिसंसर्ग एव महापातकित्वहेतुना ब्रह्महादिसर्वज्ञानपरामृष्टप्रकृतब्रह्महादिविशेषसंसर्गः तस्य व्यभिचा
रात् अतोऽपि ब्रह्महादिसंसर्गिणोऽपि महापातकिसंसर्गो विद्यत इति तस्यापि महापातकित्वं स्यान्न च प्रतिषेध उच्यते स्यादेवं यदि प्रमाणान्तर
गम्यं यदि महापातकित्वं स्यात् शब्दैकसमधिगम्ये तु तस्मिन्नेव भवितुमर्हति तैरिति प्रकृतविशेषपरामर्शिना सर्वनाम्ना ब्रह्महादिविशेषसंसर्ग-
स्यैव महापातकित्वहेतुत्वस्यावगमितत्वात् एवं च प्रतिषेधाभावोऽप्यहेतुः प्राप्त्यभावादेव अतः संसर्गिसंसर्गिणां द्विजातिकर्मभ्यो हानिर्न भव
ति प्रायश्चित्तं तु भवत्येव न च संसर्गिसंसर्गिणः पातित्याभावे कथं प्रायश्चित्तमिति वाच्यम् एनस्विभिरनिर्णिक्तैर्नार्थं किंचित्समाचरेदिति सा
मान्येनैनस्विमात्रप्रतिषेधेन महापातकिसंसर्गस्यापि प्रतिषिद्धत्वात्पातित्याभावेऽपि युक्तमेव प्रायश्चित्तं तच्च पादहीनम् यो येन संवसेद्वर्षं
सोऽपि तत्समतामियात् पादहीनं चरेत्सोऽपि तस्य तस्य व्रतं द्विज इति व्यासोक्तं द्रष्टव्यम् एवं च तुर्यपंचमयोरपि कामतः संसर्गिणोरर्द्धहीनं त्रि

पादोनंचद्रष्टव्यम् अतःसाक्षाद्ब्रह्महादिसंसर्गिण एवतदीयप्रायश्चित्ताधिकारोनतत्संसर्गिण इतिसिद्धम् अत्रचब्रह्महादिषुयद्यपिकामतो
मरणांतिकमुपादिष्टम् तथापिसंसर्गिणस्तन्नातिदिश्यते सतस्यैवव्रतंकुर्यादितिव्रतस्यैवातिदेशात् मरणस्यचव्रतशब्दवाच्यत्वाभावात्
अतोत्रकामकृतेपिसंसर्गेद्वादशवार्षिकमकामतस्तुतदर्द्धम् संसर्गश्चस्वनिबंधनकर्मभेदादनेकधाभिद्यते तथाहबृहस्पतिः एक
शय्यासनंपंक्तिर्भांडपंक्त्यन्नमिश्रणम् याजनाध्यापनेयोनिस्तथाचसहभोजनम् नवधासंकरःप्रोक्तोनकर्तव्योधमैःसहेति देवलोपि सं
लापस्पर्शनिश्वाससहयानासनाशनात् याजनाध्यापनाद्योनात्पापंसंक्रमतेनृणामिति एकशय्यासनमेकखट्वासनमेकपंक्तिभोजनमे
कभांडपचनमन्नेनमिश्रणंसंसर्गस्तदीयान्नभोजनमितियावत् याजनंपतितस्यस्वस्यवातेन अध्यापनंवातस्यस्वस्यवातेन यौनंतस्मैक
न्यादानंतत्सकाशाद्वाकन्यायाःप्रतिग्रहः सहभोजनमेकामत्रभोजनम् संलापःसंभाषणम् स्पर्शोगात्रसंमर्दः निश्वासःपतितमुखवायु-
संपर्कः सहयानमेकतुरगाद्यारोहणम् एतेषांमध्येकेनकर्मणाकियताकालेनपातित्यमित्यपेक्षायांबृहद्विष्णुनोक्तम् संवत्सरेणपतिते
नसहाचरन्नेकयानभोजनासनशयनैर्यौनिस्रौवमुख्यैस्तुसंबंधैःसद्यएवेति अत्रैकभोजनमेकपंक्तिभोजनम् एकामत्रभोजनेतुसद्यःपाति
त्यम् याजनंयोनिसंबंधःस्वाध्यायःसहभोजनम् कृत्वासद्यःपतत्येवपतितेननसंशयइति देवलस्मरणात् स्रौवशब्देनयाजनमभिधी
यते मुखशब्देनमुखभवत्वेनाध्यापनम् यौनस्रौवमुख्यैरितिसत्यपिद्वंद्वनिर्देशेप्रत्येकमेवतेषांपतनहेतुत्वम् यःपतितैःसहयौनमु
खस्रौवानांसंबंधानामन्यतमसंबंधंकुर्यात्तस्याप्येतदेवप्रायश्चित्तमितिसुमंतुस्मरणात् एकयानादिचतुष्टयस्यतुसमुदितस्यैवपतनहे

तुत्वम् एकयानभोजनासनशयनैरितिइतरेतरयुक्तानांनिर्देशात् प्रत्येकानुष्ठानस्यपतनहेतुत्वाभावेपिदोषहेतुत्वमस्त्येव आसनाच्छयना
द्यानात्संभाषात्सहभोजनात् संक्रमंतिहिपापानितैलबिंदुरिवांभसीतिपराशरवचनेननिरपेक्षाणामपिपापहेतुत्वावगमात् संलापस्पर्श
निःश्वासानांतुयानादिचतुष्टयेनानुषंगिकतयासमुच्चितानामेवपतनहेतुत्वंनपृथग्भूतानामल्पत्वात् पापहेतुत्वंपुनरस्त्येव संलापस्पर्शनि
श्वासेतिदेवलवचनस्यदर्शितत्वात् अतःसंलापादिरहितेसहयानादिचतुष्टयेकृतेपंचमभागोनंद्वादशवार्षिकंप्रायश्चित्तंकुर्यात् तत्सहितेतु-
पूर्णमेवंचसतिएभिस्तुसंवसेद्योवैवत्सरंसोपितत्समइतियोगीश्वरवचनमपिसहयानादिचतुष्टयपरमेवयुक्तम् अतःसंलापादीनांपृथक्पा-
तित्यहेतुत्वंनास्त्यतएवमनुना संवत्सरेणपततिपतितेनसहाचरन् याजनाध्यापनाद्यौनान्नतुयानासनाशनादिति यानादिचतुष्टयस्यैवसंव
त्सरेणपातित्यहेतुत्वमुक्तम् अत्रासनग्रहणंशयनस्याप्युपलक्षणम् अत्रचसंवत्सरेणपततिपतितेनसहाचरन् यानाशनासनादितिव्य
वहितेनसंबंधः प्राग्दर्शितविष्णुवचनानुरोधात् तथा संवत्सरेणपततिपतितेनसहाचरन् भोजनासनशय्यादिकुर्वाणःसार्वकालिकमि-
तिवचनाच्च नचान्वयदोषः यानासनाशनादिहेतोराचरन्नाचारंकुर्वन्नितिभेदविवक्षयासंबंधोपपत्तेः यथाएतयापुनराधेयसम्मितयेष्टेति
यद्वाआचरन्नितिशतुर्हेत्वर्थस्यगमितत्वाद्यानासनानीतिद्वितीयार्थेपंचमी याजनाध्यापनाद्यौनान्नतुसंवत्सरेणपततिकिंतुसद्यएव प्राची
नवचननिचयानुरोधादेव अतोयौनादिचतुष्टयेसद्यःपततियानादिचतुष्टयेनसंवत्सरंनिरंतराभ्यस्तेनेतियुक्तम् संवत्सरंसोपितत्समइ
तिअत्यंतसंयोगवाचिन्याद्वितीयायादर्शनादंतरितदिवसगणनाकार्या यथाषष्ट्यधिकशतत्रयदिवसव्यापित्वंसंसर्गस्यभवति ततोन्यूने

तुनपतितप्रायश्चित्तंकिंत्वन्यदेव यथाहपराशरः संसर्गमाचरन्विप्रःपतितादिष्वकामतः पंचाहंवादशाहंवाद्वादशाहमथापिवा मासार्धं
मासमेकंवामासत्रयमथापिवा अब्दार्धमेकमब्दंवाभवेदूर्ध्वंतुतत्समः त्रिरात्रंप्रथमेपक्षेद्वितीयेकृच्छ्रमाचरन् चरेत्सांतपनंकृच्छ्रंतृतीये
पक्षएवतु चतुर्थेदशरात्रंस्यात्पराकःपंचमेततः षष्ठेचांद्रायणंकुर्यात्सप्तमेत्वैंदवद्वयम् अष्टमेचतथापक्षेषण्मासान्कृच्छ्रमाचरेदिति
कामतःसंसर्गेपुनर्विशेषं सुमंतुः पंचाहेतुचरेत्कृच्छ्रंदशाहेतप्तकृच्छ्रकम् पराकस्त्वर्धमासेस्यान्मासेचांद्रायणंचरेदिति मासत्रयेप्रकु
र्वीतकृच्छ्रंचांद्रायणांतरम् षाण्मासिकेतुसंसर्गेकृच्छ्रंत्वब्दार्धमाचरेत् संसर्गेत्वाब्दिकेकुर्यादब्दंचांद्रायणंनरइति अत्रचाब्दिकेसं-
सर्गइतिकिंचिन्न्यूनइतिद्रष्टव्यम् पूर्णेतुवत्सरेमन्वादिभिर्द्वादशवार्षिकस्मरणात् यत्तुबार्हस्पत्यंवचनम् षण्मासिकेतुसंसर्गेयाजनाध्यापनादिना
एकत्रासनशय्याभिःप्रायश्चित्तार्धमाचरेदितियाजनाध्यापनाद्यौनैकपात्रभोजनानांषण्मासात्पातित्यवचनमेतदकामतोत्यंतापदिपंचमहायज्ञादि-
प्रायेयाजनेगाध्यापनेदुहितृभगिनीव्यतिरिक्तेचयोनिसंबंधेद्रष्टव्यम् प्रकृष्टयाजनादिभिःसद्यःपातित्यस्योक्तत्वात् एतद्विगवलंबनेनैवदुहि
तृभगिनीस्नुषागाम्यतिपातकिसंसर्गिणांकामतोनववार्षिकम् अकामतःसार्धचतुर्वार्षिकंकल्पनीयम् सखिपितृव्यदारादिगामिपातकिसंस
र्गिणांकामतःषड्वार्षिकमकामतस्त्रैवार्षिकम् अथोपपातक्यादिसंसर्गिणामपिकामतस्तदीयमेवत्रैमासिकमकामतोऽर्धमित्यूहनीयम् पुरुष
वत्स्त्रीणामपिमहापातक्यादिसंसर्गात्पातित्यमविशिष्टम् यथाहशौनकः पुरुषस्ययानिपतननिमित्तानिस्त्रीणामपितान्येव ब्राह्मणीहीनव
र्णसेवायामधिकंपततीति अतस्तासामपिमहापातकिप्रभृतीनांमध्येयेनसहसंसर्गस्तदीयमेवप्रायश्चित्तमर्धंकृत्वायोजनीयम् एवंबालवृ

द्धातुराणामपिकामतोधर्मकामतःपादः तथानुपनीतस्यापिबालस्यकामतःपादोकामतस्तदर्धमित्येवमादिकं पतितसंसर्गप्रतिषेधेनप्रतिषि
द्धस्ययौनसंबंधस्यक्वचित्प्रतिप्रसवमाह एषांपतितानांकन्यांपतितावस्थायामुत्पन्नांसोपवासांकृततत्संसर्गकालोचितप्रायश्चित्तामकिंच
नामगृहीतवस्त्रालंकारादिपितृधनामुद्वहेत् कन्यांसमुद्वहेदितिवदन्स्वयमेवकन्यांत्यक्तपतितसंसर्गांसमुद्वहेन्नपुनःपतितहस्तात्प्रतिगृ
ण्हीयादितिदर्शयति एवंचसतिपतितयौनसंसर्गप्रतिषेधविरोधोपिपरिहृतोभवति अयंचार्थोहिद्धहारीतेनस्पष्टीकृतः पतितस्यतुकुमारीं

कन्यांसमुद्वहेदेषांसोपवासामकिंचनाम् २६१

विवस्त्रामहोरात्रमुपोषितांप्रातःशुक्लेनाहतेनवाससाच्छादितांनाहमेतेषांनसमैतइतित्रिरुच्चैरभिदधानांतीर्थेस्वगृहेवोद्वहेदिति तथाएषां
कन्यांसमुद्वहेदितिवचनात्स्त्रीव्यतिरिक्ततदीयापत्यस्यसंसर्गानर्हतांदर्शयति अतएववसिष्ठः पतितेनोत्पन्नःपतितोभवति अन्यत्रस्त्रियाः
साहिपरगामिनीमातृरिक्थमुपेयादिति इतिसंसर्गप्रायश्चित्तप्रकरणम् २६१ ७ ७ ७ ७ ७

निषिद्धसंसर्गप्रसंगान्निषिद्धसंसर्गोत्पन्नप्रतिलोमवधे प्रायश्चित्तमाह अवकृष्टाः सूतमागधादयः प्रतिलोमोत्पन्नास्तेषां प्रत्येकं हनने चांद्रायणम् तथा च शंखः सर्वेषामवकृष्टानां वधे प्रत्येकं चांद्रायणमिति यच्चांगिरसो वचनम् सर्वांत्यजानां गमने भोजने संप्रमापणे पराकेण विशुद्धिः स्यादित्यांगिरसभाषितमिति पराकं कुर्यात् तत्र कामनः सूतादिवधे चांद्रायणम् अकामतस्तु सूतवधे पराकः वैदेहकवधे पादोनः चांडालवधे द्विपादः मागधवधे पादोनः पराकः क्षत्तरि द्विपादः आयोगवे च पादद्वयम् अनयैव दिशा चांद्रायणस्यापि तारतम्यं कल्प्यम् यत्तु ब्रह्मगर्भवच-

चांद्रायणं चरेत्सर्वानवकृष्टान्निहत्य तु

नम् प्रतिलोमप्रसूतानां स्त्रीणां मासावधिः स्मृतः अंतरप्रभवानां च सूतादीनां चतुर्द्विषडिति तदाहिताग्निविषयम् तत्र सूतवधे षण्मासाः वैदेहकवधे चत्वारः चांडालवधे द्वाविति योग्यतयान्वयः तथा मागधवधे चत्वारः क्षत्तरि द्वैमासिकं आयोगवे च द्वैमासिकमिति व्यवस्था नैमित्तिकव्रतानां जपादिसाध्यत्वाद्विद्याविरहिणां च शूद्रादीनां तदनुपपत्ते राज्यावेक्षणादिसाध्ये षिवांधानामनधिकारमाशंक्याह

यद्यपिशूद्रोजपाद्यधिकारहीनः तथाप्यनेन द्वादशवार्षिकादिकालसंपाद्येन व्रतेन शुद्ध्यति शूद्रग्रहणं स्त्रीणां प्रतिलोमजानां चोपलक्षणं यद्यपितस्य गायत्र्यादिजपासंभवः तथापिनमस्कारमंत्रजपोभवति अतएवस्मृत्यंतरेभिहितम् उच्छिष्टं चास्य भोजनमनुज्ञातोस्यनमस्कारोमंत्रइति यद्वावचनबलाज्जपादिरहितमेवव्रतंकुर्यात् तस्माच्छूद्रं समासाद्य सदाधर्मपथेस्थितम् प्रायश्चित्तं प्रदातव्यंजपहोमविवर्जितमित्यंगिरसः स्मरणात् तथापरमपितेनैवोक्तम् शूद्रः कालेनशुद्ध्येत गोब्राह्मणहितेरतः दानैर्वाप्युपवासैर्वाद्विजशुश्रूषया तथेति यत्तुमानवम् न

**शूद्रोधिकारहीनोपिकालेनानेनशुद्ध्यति २६२**

चास्योपदिशेद्धर्मंनचास्यव्रतमादिशेदिति शूद्रस्यव्रतोपदेशनिषेधपरं वचनं तदुपसन्नशूद्राभिप्रायम् यदपिस्मृत्यंतरवचनं कृच्छ्राण्येतानिकार्याणि सदावर्णत्रयेणतु कृच्छ्रेष्वेतेषु शूद्रस्यनाधिकारोविधीयतेइति तत्काम्यकृच्छ्राभिप्रायं अतः स्त्रीशूद्रयोः प्रतिलोमजानां च त्रैवर्णिकवत् व्रताधिकारइतिसिद्धं यत्तुगौतमवचनं प्रतिलोमाधर्महीनाइतितदुपनयनादिविशिष्टधर्माभिप्रायम् इतिमहापातकप्रायश्चित्तप्रकरणम् २६२

महापातकादिपंचकमध्येमहापातकप्रायश्चित्तान्युक्त्वाधुनोपपातकप्रायश्चित्तानिव्याचक्षाणः पाठक्रमप्राप्तंगोवधप्रायश्चित्तंतावदाह गांहं
तीतिगोघ्नः मूलविभुजादित्वात्कप्रत्ययः असौमासंसमाहितआसीत् किंकुर्वन्पंचतानिगव्यानिगोमूत्रगोमयक्षीरदधिघृतानियथाविधिमि
श्रितानिपिबन् आहारांतरपरित्यागेनभोजनकार्येतस्यविधानात् तथागोष्ठेशयः प्राप्तशयनानुवादेनगोष्ठविधानेनादिवाचस्वापप्रतिषेधा
द्रात्रौगोघ्नोगोशालायांशयनोगाअनुगच्छतितदस्यव्रतमितिगोनुगामी व्रतेणिनिः अतश्चयासांगोष्ठेशेतेसन्निधानात्ताएवगाः प्रातर्वनंवि-

पंचगव्यंपिबेद्गोघ्नोमासमासीतसंयमः गोष्ठेशयोगोनुगामीगोप्रदानेनशुध्यति २६३
कृच्छ्रंचैवातिकृच्छ्रंचचरेद्वापिसमाहितः दद्यात्त्रिरात्रंचोपोष्यवृषभैकादशास्तुगाः २६४

चरंतीरनुगच्छेत् अनुगच्छेदितिवचनाद्यदातागच्छंतितदैवस्वयमनुगच्छेद्यदानुतिष्ठंत्यासतेवातदापश्चाद्गमनस्याशक्यकरणत्वात्स्वयम
मपितिष्ठेदासीतवेतिगम्यते अनुगमनविधानादेवताभिः सायंगोष्ठंव्रजंतीभिः सहगोष्ठप्रवेशोप्यर्थसिद्धः एवंकुर्वन्मासांतेगोप्रदानेनएकां-
गांदत्वातावताशास्त्रार्थस्यसंपत्तेगोहत्यायाः शुध्यतीत्येकंव्रतम् मासंगाष्ठेशयोगोनुगामीत्यनुवर्त्तते पंचगव्याहारस्यतुनिवृत्तिः कृच्छ्र

विधानादेव अतश्च मासं निरंतरं कृच्छ्रं समाहितश्चरेदित्यपरम् अतएव जाबालेन मासं प्राजापत्यस्य पृथक् प्रायश्चित्तत्वमुक्तम् प्राजापत्यं
चरेन्मासं गोहंता वेदकामतः गोहितो गोऽनुगामी स्याद्गोप्रदानेन शुद्ध्यतीति अतिकृच्छ्रं वा तथैव समाचरेदित्यन्यत् कृच्छ्रातिकृच्छ्रयोर्लक्षण
मुत्तरत्र वक्ष्यते अथवा त्रिरात्रमुपवासं कृत्वा वृषभ एकादशो या सा गवा तावद्द्यादिति व्रतचतुष्टयम् तत्राकामकृते जातिमात्रब्राह्मणस्वामि
कगोमात्रवधे उपवासं कृत्वा वृषभैकादशगोदानसहितस्त्रिरात्रोपवासो द्रष्टव्यः विशिष्टस्वामिकाया विशिष्टगुणवत्याश्च वधे गुरुप्राय-
श्चित्तस्य वक्ष्यमाणत्वात् क्षत्रियसंबंधिन्यास्तु तादृग्विधव्यापादने मासं पंचगव्याशित्वं प्रथमं प्रायश्चित्तम् अत्र मासं पंचगव्याशनस्य स्वल्प
त्वात् मासोपवासतुल्यत्वं ततश्च षड्भिः षड्भिरुपवासैरेकैकप्राजापत्यकल्पनया पंचकृच्छ्राणां प्रत्याम्नायेन पंचधेनवो मासांते च दीयमाना गौरे
केति षट् धेनवो भवंतीति वृषभैकादशगोदानं सहितत्रिरात्रव्रताल्लघीयस्त्वम् कथं पुनर्ब्राह्मणगवीनां गुरुत्वम् देवब्राह्मणराज्ञां तु विज्ञेयं द्र
व्यमुत्तममिति नारदेन तत्तद्द्रव्यस्योत्तमत्वाभिधानात् गोषु ब्राह्मणसंस्थास्विति दंडभूयस्त्वदर्शनाच्च वैश्यसंबंधिन्यास्तु तादृग्विधव्यापाद-
ने मासमतिकृच्छ्रं कुर्यात् अतिकृच्छ्रेत्याद्यो त्रिरात्रत्रयेणापि पूरान्नभोजनमुक्तम् अतो त्रिरात्रेऽनशनम् अतोऽतिकृच्छ्रधर्मेण मासं व्रते क्रि
यमाणे षड्रात्रमुपवासो भवति चतुर्विंशत्यहे च मते पाणिपूरान्नभोजनम् ततश्च कृच्छ्रप्रत्याम्नायकल्पनया किंचिन्न्यूनं धेनुपंचकं भव
तीति पूर्वस्माद्व्रतद्वयाल्लघिष्ठत्वेन वैश्यस्वामिकगोवधविषयता युक्ता तादृश एव विषये शूद्रस्वामिकगोहत्यायां मासं प्राजापत्यव्रतं द्वितीयं
तत्र च सार्द्धप्राजापत्यद्वयात्मकेन प्रत्याम्नायेन किंचिदधिकं धेनुद्वयं भवतीति पूर्वेभ्यो लघुतमत्वाच्छूद्रविषयतोचिता अथ चैतत्प्रायश्चित्तचतुष्टयं साक्षा

र्कचिनुग्राहकप्रयोजकानुसंतरुगुरुलघुभावतारतम्यापेक्षयापूर्वोक्तएवविषयेयोजनीयम् यत्तुवैष्णवंव्रतत्रयम् गोघ्नस्यपंचगव्येनमासमेकंप
लत्रयम् प्रत्यहंस्यात्सरकोवाचांद्रायणमथापिवेति यच्चकाश्यपीयम् गांहत्वातच्चर्मणाप्रावृतोमासंगोष्ठेशयस्त्रिषवणस्नायीनित्यंपंचगव्या-
हारइति यच्चशातातपीयम् मासंपंचगव्याहारइति तत्संचकमपियाज्ञवल्कीयपंचगव्याहारविषयं यच्चशंखप्रचेतोभ्यामुक्तं गोघ्नःपंचग
व्याहारःपंचविंशतिरात्रमुपवसेत्सशिखंवपनंकृत्वागोचर्मणाप्रावृतोगाश्चानुगच्छन्गोष्ठेशयोगांचदद्यादिति एतच्चयाज्ञवल्कीयमासाति
कृच्छ्रव्रतसमानविषयम् दद्यात्त्रिरात्रंचोपोष्येत्येतद्विषयेचात्यंतगुणिनोहंतुर्वेदितव्यं अत्रैवविषयेपंचगव्याशक्तस्यतुद्वितीयम् काश्य
पीयमासंपंचगव्येनेतिप्रतिपाद्यषष्ठेकालेपयोभक्षोवागच्छंतीस्त्वनुगच्छेत्तासुसुखोपविष्टासुचोपविशेन्नातिप्लुवंगच्छेत्तानिविषमेणाव
तारयेन्नाल्पोदकेपाययेदंतेब्राह्मणान्भोजयित्वातिलधेनुंदद्यादितिद्रष्टव्यम् अत्राप्यशक्तस्यगोघ्नोमासंयवागुंप्रसृततंडुलम्मृतांभुंजानो
गोभ्यःप्रियंकुर्वन्मुच्यतीतिपैठीनसिनोक्तंवेदितव्यम् यत्तुसौमंतवम् गोघ्नस्यगोप्रदानंगोष्ठेशयनंद्वादशरात्रंपंचगव्यप्राशनंगवानुगमनं
चेति यच्चसंवर्तेनोक्तम् सक्तुयावकभैक्षाशीपयोदधिघृतंसकृत् एतानिक्रमशोश्नीयान्मासार्द्धंतुसमाहितः ब्राह्मणान्भोजयित्वातुगांद-
द्यादात्मशुद्धयेइति यच्चबार्हस्पत्यं द्वादशरात्रंपंचगव्याहारइति तन्त्रितयमपियाज्ञवल्कीयमासप्राजापत्येनसमानविषयम् मृतकल्पगो
हत्याविषयंवाविषमप्रदेशत्रासेनजनितव्याधितोमरणविषयंवावेदितव्यम् तदिदंसर्वंप्रागुक्तकामविषयम् यदापुनरीदृग्विधामविशिष्टां
विप्रस्वामिकांविशिष्टांगांकामतःप्रमापयति तदामनुनामासंयवागूपानंमासद्वयंहविष्येणचतुर्थकालभोजनंमासत्रयंवृषभैकादशगोदा-

नयुक्तं शाकटादिनावर्तनमिति व्रतत्रितयमाम्नातं यथाह उपपातकसंयुक्तोगोघ्नोमासंयवान्पिबेत् कृतवापोवसेद्गोष्ठेचर्मणार्द्रेणसंवृतः
चतुर्थकालमश्नीयादक्षारलवणंमितम् गोमूत्रेणचरेत्स्नानं द्वौमासौनियतेंद्रियः दिवानुगच्छेत्तागास्तुतिष्ठन्नूर्ध्वंरजःपिबेत् शुश्रूषित्वानम
स्कृत्वारात्रौवीरासनंव्रजेत् तिष्ठंतीष्वनुतिष्ठेत्तुव्रजंतीष्वप्यनुव्रजेत् आसीनासुतथासीतनियतोवीतमत्सरः आतुरामभिषिक्तांवाचोरव्या-
घ्रादिभिर्भयैः पतितांपंकलग्नांवासर्वप्राणैर्विमोक्षयेत् उष्णेवर्षतिशीतेवामारुतेवातिवाभृशम् नकुर्वीतात्मनस्त्राणं गोरकृत्वातुशक्ति
तः आत्मनोयदिवान्येषांगृहेक्षेत्रेथवाखले भक्षयंतींनकथयेत्पिबंतंचैववत्सकम् अनेनविधिनायस्तुगोघ्नोगाअनुगच्छति सगोहत्या
कृतंपापंत्रिभिर्मासैर्व्यपोहति ऋषभैकादशागाश्चदद्यात्सुचरितव्रतः अविद्यमानेसर्वस्वंवेदविद्भ्योनिवेदयेत् एतत्त्रितययाज्ञवल्कीय
मासप्राजापत्यमासपंचगव्याशनवृषभैकादशगोदानयुक्तत्रिरात्रोपवासरूपव्रतत्रितयविषययथाक्रमेणद्रष्टव्यम् यत्त्वंगिरसामानवे-
तिकर्त्तव्यतायुक्तंत्रैमासिकमभिधायाधिकमभिहितम् अक्षारलवणंरुक्षंषष्ठेकालेस्यभोजनम् गोमतींवाजपेद्विद्यामोंकारंवेदमेवच व्र
तवद्धारयेद्दंडंसमंत्रांचैवमेखलामिति तन्मानवविषयएव पुष्टितरुण्यादिकिंचिद्गुणातिशययोगिन्यांद्रष्टव्यम् अतिबालामतिकृशा
मतिवृद्धांचरोगिणीम् हत्वापूर्वविधानेनचरेदर्द्धव्रतंद्विजइतिपुष्टितारुण्यादिरहितायांगव्यर्द्धप्रायश्चित्तदर्शनात् यदातुयाज्ञवल्कीय-
मासातिकृच्छ्रव्रतनिमित्तभूतांगामविशिष्टस्वामिकांजातिमात्रयोगिनींकामतोव्यापादयति तदाविहितंयदकामानांकामात्तुद्विगुणंचरेदि
तिन्यायेनपूर्वोक्तमेवाकामविहितंमासातिकृच्छ्रव्रतंद्विगुणंकुर्यात् यत्तुहारीतेन गोघ्नस्तच्चर्मोर्ध्ववालंपरिधायेत्यादिनामानवीमितिक

र्त्तव्यतामभिधायोक्तम् वृषभैकादशाश्च गा दत्त्वा त्रयोदशे मासे पूतो भवतीति तत्सवनस्थश्रोत्रियगोवधे अकामकृते द्रष्टव्यम् यत्तु वसि
ष्ठेन गां चेद्धन्यात्तस्याश्चर्मणार्द्रेण परिवेष्टितः षण्मासान् कृच्छ्रं तप्तकृच्छ्रं वातिष्ठेदृषभवेहतौ दद्यात्तामिति षाण्मासिकं कृच्छ्रतप्तकृच्छ्रा
नुष्ठानमुक्तम् यदपि देवलेन गोघ्नः षण्मासांस्तच्चर्मपरिवृतो गोग्रासाहारो गोव्रजनिवासी गोभिरेव सह चरन् प्रमुच्यत इति तत्द्वय-
मपि हारीतीयेन समानविषयम् तत्रैव कामकारकृते कात्यायनीयं त्रैवार्षिकं गोघ्नस्तच्चर्मसंवीतो वसेद्गोष्ठेऽथवा पुनः गाश्चानुगच्छेत्स
ततं मौनी वीरासनादिभिः वर्षशीतातपक्लेशवन्हिपंकभयार्दितः मोक्षयेत्सर्वयत्नेन पूयते वत्सरैस्त्रिभिरिति द्रष्टव्यम् यच्च शारवं त्रैवा
र्षिकं पादं तु शूद्रहत्यायां सुदक्यागमने तथा गोवधे च तथा कुर्यात्परस्त्रीगमने तथेति तदपि कात्यायनीयव्रतसमानविषयम् यत्तु यमे
नांगिरसीमितिकर्त्तव्यतामभिधाय गोसहस्रं शतं वापि दद्यात्सुचरितव्रतः अविद्यमाने सर्वस्वं वेदविद्भ्यो निवेदयेदिति गोसहस्रयुक्तं
गोशतयुक्तं द्वैमासिकं व्रतद्वयमभिहितम् तत्र यदा सवनस्थश्रोत्रियातिदुर्गतबहुकुटुंबब्राह्मणसंबंधिनीं कपिलां कर्मांगभूतां गार्भि-
णीं बहुक्षीरां तरुणिमादिगुणशालिनीं निर्गुणो धनवान्सप्रयत्नं खड्गादिना व्यापादयति तदा गोसहस्रयुक्तं द्वैमासिकं कुर्यात् गर्भिणीं क-
पिलां दोग्ध्रीं होमधेनुं च सुव्रताम् खड्गादिना घातयित्वा द्विगुणं व्रतमाचरेदिति विशिष्टायां गवि बाहुल्ये प्रायश्चित्तस्य दर्शनात् अत
एव प्रचेतसा स्त्रीगर्भिणीगोगर्भिणीबालवृद्धवधेषु भ्रूणहा भवतीति ईदृग्विधमेव गोवधमभिसंधाय ब्रह्महत्याव्रतमतिदिष्टम् द्वि
तीयं तु धान्यं गोशतदानयुक्तं द्वैमासिकं व्रतं कात्यायनीयव्रतविषये धनवतो द्रष्टव्यम् यत्तु गौतमेन वृषभैकगोशतदानसमुच्चितं त्रैवा

षिकं प्राकृतं ब्रह्मचर्यं वैश्यवधेभिधाय गोवधेतिदिष्टम्  गांचहत्वावैश्यवदिति  एतच्चत्रैवार्षिकव्रतप्रत्याम्नायभूतनवतिधेनुभिःसार्धमृष
भैकशतंगावोनवन्यूनंद्विशतंभवतीतिगोसहस्रयुक्तद्वैमासिकव्रतान्न्यूनत्वात्पूर्वोक्तविषयेएवकामतोवधे  यद्वातत्रैवविषयेगर्भरहितायाः
कामतोवधेद्रष्टव्यम्  तादृग्विधायाएवगर्भरहितायास्त्वकामतोहननेपिकात्यायनीयमेवत्रैवार्षिकंकल्प्यम्  यत्तुयमेनोक्तं  काष्ठलोष्ठा
श्मभिर्गावःशस्त्रैर्वानिहतायदि  प्रायश्चित्तंकथंतत्रशस्त्रेशस्त्रेविधीयते  काष्ठेसांतपनंकुर्यात्प्राजापत्यंतुलोष्ठके  तप्तकृच्छ्रंतुपाषा
णेशस्त्रेचाप्यतिकृच्छ्रकम्  प्रायश्चित्तेततश्चीर्णेकुर्याद्ब्राह्मणभोजनम्  त्रिंशद्गावृषभंचैकंदद्यात्तेभ्यश्चदक्षिणामिति  तत्पूर्वोक्तगोस
हस्रशतादिदानत्रैवार्षिकादिव्रतविषयेष्वेवकाष्ठादिसाधनविशेषजनितवधनिमित्तसांतपनादिपूर्वकत्वप्रतिपादनपरंनतुनिरपेक्षस्यलघु
त्वाद्व्रतस्य  तथावयोविशेषादपिप्रायश्चित्तविशेषउक्तः  अतिवृद्धामतिकृशामतिबालांचरोहिणीम्  हत्वापूर्वविधानेनचरेदर्धंव्रतंद्विजः
ब्राह्मणान्भोजयेच्छक्त्यादद्याद्धेमतिलांस्तथेति  निरोगादिवधेयद्विहितंतस्यार्धम्  बृहत्प्रचेतसाप्यत्रविशेषउक्तः  एकवर्षेहतेवत्से
कृच्छ्रपादोविधीयते  अबुद्धिपूर्वंपुंसःस्याद्द्विपादस्तुद्विहायने  त्रिहायनेत्रिपादःस्यात्प्राजापत्यमतःपरमिति  तथागर्भिण्यावधेयदाग-
र्भोपिनिहतोभवतितदाप्रतिनिमित्तंनैमित्तिकमावर्त्ततइतिन्यायेनाविशेषेणद्विगुणव्रतप्राप्तौषट्त्रिंशन्मतेविशेषउक्तः  पादउत्पन्नमा
त्रेतुद्वौपादौवृद्धतांगते  पादोनंव्रतमुद्दिष्टंहत्वागर्भमचेतनम्  अंगप्रत्यंगसंपूर्णेगर्भेचेतःसमन्विते  द्विगुणंगोव्रतंकुर्यादेषागोघ्नस्यनिष्कृति
रिति  बहुकर्तृकेतुहननेसंवर्त्तापस्तंबाभ्यांविशेषउक्तः  एकाचेद्बहुभिःकाचिद्दैवाद्व्यापादिताक्वचित्  पादंपादंतुहत्यायाश्चरेयुस्तेपृथक्पृ

थगिति याहृग्विधगोहत्यायांयद्व्रतमुपदिष्टंतत्पादंप्रत्येकंकुर्युर्वचनात् एकाचेदित्युपलक्षणम् अतोबहुभिर्द्वयोर्बहूनांचव्यापादनेप्रतिपुरु
षंपादद्वयंपादोनंवाकल्पनीयम् तच्चाकामतोवधेद्रष्टव्यम् दैवादितिविशेषणोपादानात् कामकारेतुबहूनामपिप्रत्येकंकृत्स्नदोषसंबंधात्कृ
त्स्नव्रतसंबंधोयुक्तः सत्रिणामिवप्रतिपुरुषंकृत्स्नव्यापारसमवायात् एकंघ्नतांबहूनांतुयथोक्तोद्विगुणोदमइतिप्रत्येकंदंडद्वैगुण्यदर्श
नाच्च यदाल्वेकेनैवबंधनादिव्यापारेणबहवोगावोव्यापादितास्तत्रसंवर्त्तापस्तंबाभ्यांविशेषउक्तः व्यापन्नानांबहूनांतुरोधनेबंध
नेतथा भिषङ्मिथ्योपचारेचद्विगुणंगोव्रतंचरेदिति बहुष्वपिव्यापन्नेषुनप्रतिनिमित्तंनैमित्तिकानुष्ठानम् नापितंत्रेण किंतुवच
नबलाद्विगुणमेव तथाभिषगपिविरुद्धौषधदानेनैकस्याप्यकामतोव्यापादनेद्विगुणंगोव्रतंकुर्यात् भिषग्व्यतिरिक्तस्यकेवलं
उपकारार्थंप्रवृत्तस्यत्वकामतःप्रतिकूलौषधदानेव्यासआह औषधंलवणंचैवपुण्यार्थमपिभोजनम् अतिरिक्तंनदातव्यंकाल्येस्व
ल्पंतुदापयेत् अतिरिक्तेविपत्तिश्चेत्कृच्छ्रपादोविधीयतइति यत्त्वापस्तंबेनोक्तं पादमेकंचरेद्रोधेद्वौपादौबंधनेचरेत् योजनेपा
दहीनंस्याच्चरेत्सर्वंनिपातनेइति तद्व्यवहितव्यापारिणोनिमित्तकर्त्तुर्विज्ञेयम् नसाक्षात्कर्त्तुः साक्षात्कर्तृनिमित्तिनोश्चभेदस्तेनैव-
दर्शितः पाषाणैर्लकुटैर्वापिशस्त्रेणान्येनवाबलात् निपातयंतियेगास्तुकृत्स्नंकुर्युर्व्रतंहिते तथैवबाहुजंघोरुपार्श्वग्रीवाग्निमो
टनैरिति एतदुक्तंभवति पाषाणखड्गादिभिर्ग्रीवामोटनादिनावायेगांनिपातयंतितेसाक्षाद्धंतारस्तेष्वेवकृत्स्नंप्रायश्चित्तम् येतु-
व्यवहितरोधबंधादिव्यापारयोगिनस्तेनिमित्तिनस्तेषांनकृत्स्नव्रतसंबंधः किंतुतदवयवैरेवपादद्विपादादिभिरिति तत्ररोधा

दीनांव्यवहितव्यापारत्वाविशेषेपिवचनात्क्वचित्पादः क्वचिद्द्विपादंपादोनंक्वचिदितियुक्तम् अत्राहपाराशरः गवांबंधनयोक्त्रेस्तु
भवेन्मृत्युरकामतः अकामकृतपापस्यप्राजापत्यंविनिर्दिशेत् प्रायश्चित्तेततश्चीर्णेकुर्याद्ब्राह्मणभोजनम् अनडुत्साहितंगांचद
द्याद्विप्रायदक्षिणामिति अथचप्राजापत्योयद्दिरोधादिकंकृत्वा तज्जन्यप्रमादपरिजिहीर्षयाप्रत्यवेक्षमाणआस्तेतदाद्रष्टव्यः
अकामकृतपापस्येतिविशेषणोपादानात् यदानप्रमादसंरक्षणंकरोतितदापादमेकंचरेद्रोधे द्वौपादौबंधनेचरेत् योजनेपादही-
नंस्याच्चरेत्सर्वंनिपातनइत्यंगिरोक्तंद्रष्टव्यम् त्रैमासिकपादंकिंचिदधिकंवाविंशत्यहर्गोवधव्रतंकुर्यात् आपस्तंबेनापिविशेषउ
क्तः अतिदाहातिवाहाभ्यांनासिकाच्छेदनेतथा नदीपर्वतसंरोधेमृतेपादोनमाचरेदिति लक्षणमात्रोपयोगिनितुदाहेनदोषः अ-
न्यत्रांकनलक्षाभ्यांवाहनेमोचनेतथा सायंसंगोपनार्थंचनदुष्येद्रोधबंधनेइतिपराशरस्मरणात् अंकनंस्थिरचिन्हकरणम् ल
क्षणंसांप्रतोपलक्षणम् वाहनेशास्त्रोक्तमार्गेण रक्षणार्थमपिनालिकेरादिभिर्बंधनेभवत्येवदोषः ननालिकेरेणनशाणवालैर्न
चापिमौंजेननबध्नश्रृंखलैः एतैस्तुगावोननिबंधनीयाबध्वानुतिष्ठेत्परशुंगृहीत्वा कुशैःकाशैश्चबध्नीयात्स्थानेदोषविवर्जिते इति
व्यासस्मरणात् तथान्योपिविशेषस्तेनैवोक्तः घंटाभरणदोषेणविपत्तिर्यदिगोर्भवेत् कृच्छ्रार्द्धंतुभवेत्तत्रभूषणार्थंहितत्स्मृतम्
अतिदोहातिदमनेसंघातेचैवयोजने बध्वाश्रृंखलपाशैश्चमृतेपादोनमाचरेदिति पालनकरणादिनोपेक्षायांक्वचित्प्रायश्चित्तविशे
षस्तेनैवोक्तः जलौघपल्वलेमग्नामेघविद्युद्धतापिवा गर्त्तायांपतिताकस्माच्छ्वापदेनापिभक्षिता प्राजापत्यंचरेत्कृच्छ्रंगोस्वामीव्रत-

मुत्तमम् शीतवाताहतावास्याद्दुर्दूधनहतापिवा शून्यागारउपेक्षायांप्राजापत्यंविनिर्दिशेदिति इदंतुकार्यांतरविरहेप्युपेक्षायां
वेदितव्यम् कार्यांतरव्यग्रतयोपेक्षयात्वर्धं पत्वलौघमृगव्याघ्रश्वापदादिनिपातने श्वभ्रप्रपातसर्पाद्यैर्मृतेकृच्छ्रार्धमाचरेत्
अपालत्वात्तुकृच्छ्रः स्याच्छून्यागारउपप्लवेइतिविष्णुस्मरणात् तथासत्यपिव्यापादनेक्वचिदुपकारार्थप्रवृत्तौवचनाद्दोषाभावः
यथाहसंवर्त्तः यंत्रणेगोचिकित्सार्थेगूढगर्भविमोचने यत्नेकृतेविपत्तिःस्यान्नसपापेनलिप्यतेइति यंत्रणंव्याध्यादिनिर्यातनार्थंसं
दंशांकुशादिप्रवेशनम् तथा औषधंस्नेहमाहारंददद्गोब्राह्मणेद्विजः दीयमानेविपत्तिश्चेन्नसपापेनलिप्यते ग्रामघातेशरौघेणवे-
श्मभंगान्निपातने तथा दाहच्छेदशिराभेदप्रयोगैरुपकुर्वताम् द्विजानांगोहितार्थंचप्रायश्चित्तंनविद्यते अत्रपराशरोप्याह अ
तिवृष्टिहतानांचप्रायश्चित्तंनविद्यते कूपखातेचधर्मार्थेगृहदाहेचयेमृताः ग्रामदाहेतथाघोरेप्रायश्चित्तंनविद्यतेइति इदंतुबंध
नरहितस्यैवपशोःकथंचित्गृहादिदानेनमृतविषयम् इतरथापस्तंबोक्तम् कांतारेषथदुर्गेषुगृहदाहेस्वलेषुच यदितत्रविपत्तिः
स्यात्पादएकोविधीयतेइति तथास्थ्यादिभंगेमरणाभावेक्वचित्प्रायश्चित्तमुक्तम् अस्थिभंगगवांकृत्वालांगूलच्छेदनंतथा पाट
नंदंतशृंगाणांमासार्द्धंचयवान्पिबेदिति यत्त्वांगिरसम् शृंगदंतास्थिभंगेवाचर्मनिर्मोचनेपिवा दशरात्रंपिबेद्वज्रंसुस्थापिय-
द्गोर्भवेदिति वज्रशब्दवाच्यक्षीरादिवर्त्तनमुक्तंतदशक्तविषयम् इदंचप्रायश्चित्तंगोस्वामिनेव्यापन्नगोसदृशींगांदत्त्वैवका-
र्यम् यथाहपराशरः प्रमापणेप्राणभृतांदद्यात्तत्प्रतिरूपकम् तस्यानुरूपंमूल्यंवादद्यादित्यब्रवीन्मनुरिति मनुरपि योयस्य-

हिंस्यात् द्र्व्याणि ज्ञानतोऽज्ञानतोऽपि वा स तस्योत्पादयेत्तुष्टिं राज्ञे दद्याच्च तत्समम् इति एतच्च पूर्वोक्तप्रायश्चित्तजातं ब्राह्मणस्यैव हं-
तुर्वेदितव्यं क्षत्रियादेस्तु हंतुर्बृहद्विष्णुना विशेषोऽभिहितः विप्रे तु सकलं देयं पादोनं क्षत्रिये स्मृतम् वैश्येऽर्धं पाद एकस्तु शूद्रजा-
तिषु शस्यत इति यत्त्वंगिरोवचनम् पर्षद्या ब्राह्मणानां तु सा राज्ञां द्विगुणा मता वैश्यानां त्रिगुणा प्रोक्ता पर्षद्वच्च व्रतं स्मृतम् इति न
त्रातिलोम्येन वाग्दंडपारुष्यादिविषयम् तथा स्त्रीवृद्धबालादीनामर्धं अनुपनीतस्य बालस्य पाद इति च प्रागुक्तमनुसंधेयम् स्त्री
णां पराशरेण विशेषोऽभिहितः वपनं नैव नारीणां नानुव्रज्या जपादिकम् न गोष्ठे शयनं तासां न वसीरन् गवाजिनम् सर्वान्केशान्समु-
द्धृत्य च्छेदयेदंगुलद्वयम् सर्वत्रैव हि नारीणां शिरसो मुंडनं स्मृतम् इति पुरुषेषु च विशेषः संवर्तेन दर्शितः पादेंऽगरोमवपनं द्विपादे
श्मश्रुणोऽपि च त्रिपादे तु शिखावर्जं सशिखं तु निपातने इति पादप्रायश्चित्तार्हस्य कंठादधस्तनांगरोम्णामेव वपनम् अर्धप्रायश्चि
त्तार्हस्य तु श्मश्रूणामपि पादोनप्रायश्चित्तार्हस्य पुनः शिरोगतानामपि शिखावर्जितानां पादचतुष्टयार्हस्य तु सशिखस्य सकलके
शजातस्येति एवमेतद्दिगवलंबनेनान्येषामपि स्मृतिवचसां विषयो निरूपणीयः इति गोवधप्रायश्चित्तप्रकरणम् २६३ २६४
अधुनान्येषामुपपातकानां प्रायश्चित्तमाह एवमुक्तेन गोवधव्रतेन मासं पंचगव्याशनादिनान्येषां व्रात्यतादीनामुपपातकानां शुद्धि
र्भवेत् चांद्रायणेन वा वक्ष्यमाणलक्षणेन मासं पयोव्रतेन वा पराकेण वा शुद्धिर्भवेत् अत्रातिदेशसामर्थ्यात् गोचर्मवसनगोपरिचर्यादि
भिर्गोवधासाधारणैः कतिपयैर्न्यूनत्वमवगम्यते एतच्च व्रतचतुष्टयमकामकारे शक्त्यपेक्षया विकल्पितं द्रष्टव्यम् कामकारे तु एत

देवव्रतंकुर्युरुपपातकिनोद्विजाः अवकीर्णिवर्जंशुद्ध्यर्थंचांद्रायणमथापिवेतिमनूक्तंत्रैमासिकंद्रष्टव्यम् अतएववचनादयंप्रायश्चित्तातिदेशःसर्वेषामुपपातकगणपठितानामुक्तप्रायश्चित्तानामनुक्तप्रायश्चित्तानांचावकीर्णिवर्जितानामविशेषेणवेदितव्यः अवकीर्णिनस्तुप्रतिपदोक्तमेव नन्वनुक्तप्रायश्चित्तविषयतयैवातिदेशतायुक्ता इतरथाप्रतिपदोक्तप्रायश्चित्तवधेसापेक्ष्यत्वप्रसंगात् मैवं तथा सत्यकृतनिष्कृतीनामुपपातकगणपाठोनर्थकःस्यात् यदिपरमुपपातकमध्येसामान्यतःपठितस्यान्यत्रविशेषतःप्रायश्चित्तांतरमु

उपपातकशुद्धिःस्यादेवंचान्द्रायणेनवा पयसावापिमासेनपराकेणाथवापुनः २६५

च्यते तथा अयाज्यानांचयाजनंत्रीन्कृच्छ्रानाचरेत् व्रात्ययाजकोभिचरन्नपीति सएवविषयःकेवलंपरिन्हीयेत नपुनर्विशेषतःपठितस्यान्यत्रापिविशेषतएवप्रायश्चित्तमुच्यते सोपियथाइंधनार्थंद्रुमच्छेदः वृक्षगुल्मलतावीरुधच्छेदनेजप्यमृक्शतमिति अतोव्रात्यतादिषुअस्मिन्शास्त्रेशास्त्रांतरेवादृष्टैःप्रायश्चित्तैःसहोपपातकशुद्धिःस्यादेवमित्यादिनाप्रतिपादितव्रतचतुष्टयस्यसमाविषमताकल्पनेनविकल्पोविषयविभागोवाश्रयणीयः तानिस्मृत्यंतरदृष्टप्रायश्चित्तानिपाठक्रमेणव्रात्यतादिषुयोजयिष्यामः तत्रव्रात्य

नायांमनुनेदमुक्तम् येषांद्विजानांसावित्रीनानूच्येतयथाविधि तांश्चारयित्वात्रीन्कृच्छ्रान्यथाविध्युपनायनेदिति एतच्चयमेनोक्तं
सावित्रीपतितायस्य दशवर्षाणिपंचच सशिखंवपनंकृत्वाव्रतंकुर्यात्समाहितः एकविंशतिरात्रंचपिबेत्प्रसृतयावकम् हविष्यंभो
जयित्वैवंब्राह्मणान्सप्तपंचच ततोयावकसुद्धस्यतस्योपनयनंस्मृतमिति तदुभयमपियाज्ञवल्कीयमासपयोव्रतविषयम् यत्तुवसि
ष्ठेनोक्तम् पतितसावित्रीकउद्दालकव्रतंचरेत्द्वौमासौयावकेनवर्त्तयेन्मासंपयसापक्षमामिक्षयाष्टरात्रंघृतेनषड्रात्रमयाचितेनत्रिरा-
त्रमब्भक्षोहोरात्रमुपवसेदश्वमेधावभृथंगच्छेद्व्रात्यस्तोमेनवायजेतेति अत्रेयंव्यवस्था यस्योपनेत्राद्यभावेनतत्कालातिक्रमस्तस्यया
ज्ञवल्कीयव्रतानामन्यतमंशक्त्यपेक्षयाभवति अनापद्यतिक्रमेतुमानवंत्रैमासिकम् तत्रैवपंचदशवर्षादूर्ध्वमपिक्रियत्कालातिक्र
मेतूद्दालकव्रतम् व्रात्यस्तोमोवेति येषांतुपित्रादयोऽनुपनीतास्तेषामापस्तंबोक्तम् यस्यपितापितामहावनुपनीतौस्यातांतस्यसंवत्स
रंत्रैविद्यकंब्रह्मचर्यम् यस्यप्रपितामहादेर्नानुस्मर्यतउपनयनंतस्यद्वादशवर्षाणित्रैविद्यकंब्रह्मचर्यमिति तथास्तेयेप्युपपातकसा
धारणमासव्रतचतुष्टयापवादकंप्रायश्चित्तंमनुनोक्तम् धान्यान्नधनचौर्याणिकृत्वाकामात्द्विजोत्तमः सजातीयगृहादेवकृच्छ्राब्देन
विशुद्ध्यतीतिद्विजोत्तमस्यसजातीयोब्राह्मणएवातोविप्रपरिग्रहेब्राह्मणस्यहर्त्तुरिदंक्षत्रियादेस्त्वल्पकल्प्यं अथाष्टपाद्यंस्तेय
किल्बिषंशूद्रस्यद्विगुणोत्तराणीतरेषांप्रतिवर्णंविदुषोतिक्रमेदंडभूयस्त्वमिति क्षत्रियादेरपहर्त्तुर्दंडाल्पत्वस्यदर्शनात् तथावि
प्रेतुसकलंदेयंपादोनंक्षत्रियेस्मृतमिति पादपादहान्याप्रायश्चित्तदर्शनात् तथा क्षत्रियादिपरिग्रहेणापिदंडानुसारेणप्रायश्चि

त्राल्पत्वं कल्प्यं अतः क्षत्रियपरिग्रहे चौर्ये षाण्मासिकम् वैश्यपरिग्रहे त्रैमासिकं गोवधव्रतम् शूद्रपरिग्रहे चांद्रायणं कल्प्यम् एव
मुत्तरत्राप्यूहनीयम् इदं च दशकुंभधान्यापहारविषयम् अधिके तु धान्यं दशभ्यः कुंभेभ्यो हरतो दमउत्तमः पलसहस्रादधिके-
वध इति दर्शनात् कुंभश्च पंचसहस्रपलपरिमाणः धान्यसाहचर्यादन्नधने चैतावद्धान्यपरिमिते वेदितव्यम् अन्नशब्देन तंदुला
दिकमभिधीयते धनशब्देन ताम्ररजतादिकं इदं तु प्रायश्चित्तं कामकारविषयम् अकामतस्तु त्रैमासिकं गोवधव्रतम् तथा मनुष्या
णां च हरणे स्त्रीणां क्षेत्रगृहस्य च कूपवापीजलानां च शुद्धिश्चांद्रायणेन त्विति सार्द्धशतद्वयपणलभ्यजलापहारे इदं चांद्राय-
णं प्राप्तमपीतरगोवधव्रतनिवृत्त्यर्थं विधीयते तावन्मूल्यजलापहारे पानीयस्य तृणस्य च तन्मूल्याद्द्विगुणो दंड इति पंचशतम् तथेति
चांद्रायणविषये पंचशतदंडविधानात्तावत्परिमाणदंडचांद्रायणयोर्गोवधादौ सहचरितत्वात्तथा कृच्छ्राति कृच्छ्रे द्वयोः पण पंच
शतं तथेति चांद्रायणविषये पंचशतपणदंडविधानाच्च एतच्च क्षत्रियादिद्रव्यापहारे द्रष्टव्यम् ब्राह्मणसंबंधिद्रव्यापहारे तु निक्षे
पस्यापहरणे नराश्वरजतस्य च भूमिवज्रमणीनां च रुक्मस्तेयसमं स्मृतमिति द्रष्टव्यम् तथा द्रव्याणामल्पसाराणां स्तेयं कृत्वान्यवे-
श्मनः चरेत् सांतपनं कृच्छ्रं तान्निर्यात्यात्मशुद्धय इत्यनेनाल्पप्रयोजनत्रपुसीसादिद्रव्यापहारविशेषेण स्तेयसामान्योपपातकप्रा
यश्चित्तापवाद इदं च चांद्रायणनिमित्तभूतार्द्धतृतीयशतमूल्यस्य पंचदशांशार्द्धत्रपुसीसाद्यपहारे प्रायश्चित्तम् चांद्रायणपंचद-
शांशत्वात्तस्य तथा द्रव्यविशेषेणाप्युपपातकसामान्यप्राप्तव्रतापवादः भक्ष्यभोज्यापहरणे यानशय्यासनस्य च पुष्पमूलफलानां

च पंचगव्यं विशोधनमिति एकवारभोजनपर्याप्तभक्ष्यभोज्यापहार इदं द्विवारभोजनपर्याप्तापहारे त्रिरात्रं यथाह पैठीनसिः भक्ष्य
भोज्यान्नस्योदरपूरणमात्रहरणे त्रिरात्रमेकरात्रं वा पंचगव्याहारतेति यानादीनामप्येतत्साहचर्यादेतावन्मूल्यानामेवापहरणे एतत्प्रा
यश्चित्तम् सर्वत्रापि न्हीयमाणद्रव्यन्यूनाधिकभावेन प्रायश्चित्तस्यापि गुरुलघुभावः कल्पनीयः तथा तृणकाष्ठद्रुमाणां च शुष्का
न्नस्य गुडस्य च तैलचर्मामिषाणां च त्रिरात्रं स्यादभोजनमिति एषां च तृणादीनां भक्ष्यादित्रिगुणत्रिरात्रप्रायश्चित्तस्य दर्शनात् न
त्रिगुणमूल्यार्घाणामेतत्प्रायश्चित्तं तथा मणिमुक्ताप्रवालानां ताम्रस्य रजतस्य च अयस्कांस्योपलानां च द्वादशाहं कणान्विते
ति अत्रापि भक्ष्यादिद्वादशगुणप्रायश्चित्तदर्शनात् तन्मूल्य द्वादशगुणमूल्यमणिमुक्ताद्यपहारे एतत्प्रायश्चित्तमिदं द्रष्टव्यम् तथा
कार्पासकीर्णजीर्णानां द्विखुरैकखुरस्य च पक्षिगंधौषधीनां च रज्वाश्चैव त्र्यहं पयइति अत्रापि भक्ष्यादित्रिगुणप्रायश्चित्तदर्शनात्त-
त्रिगुणमूल्यानामपहार एवैतत्प्रायश्चित्तम् न्हीयमाणद्रव्यन्यूनाधिकभावेन प्रायश्चित्ताल्पत्वमहत्त्वं कल्प्यमेव इदं च स्तेयप्राय-
श्चित्तमपहृतद्रव्यदानोत्तरकालमेव द्रष्टव्यम् यथाह विष्णुः दत्त्वैवापहृतं द्रव्यं स्वामिने व्रतमाचरेदिति ऋणापाकरणं च पुत्रपौ-
त्रैर्ऋणं देयमिति विहितं तस्यानपाकरणे तथा वैदिकस्य च जायमानो वै ब्राह्मण इत्येतद्वाक्येन र्णसंस्तुतयज्ञाद्यकरणे च उपपातक
शुद्धिः स्यादेवमित्यादिनोपपातकसामान्यविहितव्रतचतुष्टयं शक्त्यपेक्षया योज्यम् प्रायश्चित्तांतरमप्यत्र मनुनोक्तम् इष्टिं वैश्वा
नरीं चैव निर्वपेदब्दपर्यये लुप्तानां पशुसोमानां निष्कृत्यर्थमसंभवइति अब्दपर्यये संवत्सरांते तथाधिकृतस्याना हिताग्निस्त्वेप्येत

देवव्रतचतुष्टयम् वत्सरादूर्ध्वमापदिशक्त्यपेक्षया योज्यम् अनापदि तु मानवं त्रैमासिकं अर्वाक् पुनर्वत्सरात् कार्ष्णाजिनविशेषमाह का
लेत्वाधाय कर्माणि कुर्याद्धि यो विधानतः तदकुर्वन्त्रिरात्रेण मासि मासि विशुध्यति अनाहिताग्नौ पित्रादौ यक्ष्माणः सुतो यदि सहिमात्ये
न पशुना यजेत्तन्निष्क्रयायत्विति एकाग्नेरपि विशेषस्तेनैवोक्तः कृतदारो गृहे ज्येष्ठो यो नादध्यादुपासनम् चान्द्रायणं चरेद्वर्षं प्रतिमासम
होऽपि वेति यथा पण्यानां विक्रये च स्मृत्यन्तरे प्रायश्चित्तविशेष उक्तः यथाह हारीतः गुडतिलपुष्पमूलफलपक्वान्नविक्रये सोमपानम् सो
मकृच्छ्रः लाक्षालवणमधुमांसतैलक्षीरदधिघृतगंधतक्रचर्मवाससामन्यतमविक्रये चान्द्रायणं तथा ऊर्णाकेशकेशरभूधेनुवेश्मा
श्मशस्त्रविक्रये च भक्ष्यमांसस्नाय्वस्थिशृंगनखशुक्तिविक्रये तप्तकृच्छ्रः हिंगुगुग्गुलुहरितालमनःशिलांजनगैरिकलाक्षालवणम
णिमुक्ताप्रवालवैणववेणुमृन्मयेषु च तप्तकृच्छ्रः आरामतडागोदपानपुष्करिणीसुकृतविक्रये त्रिषवणस्नाय्यधःशायी चतुर्थकाला
हारो दशसहस्रं जपन् संवत्सरेण पूतो भवति हीनमानोन्मानसंकरसंकीर्णविक्रये चेति एवमन्यैरपि शङ्खविष्ण्वाद्युक्तवचनैर्युक्त प्रायश्चि
त्तविशेषेणोक्तं तत्रानापदि मानवमुपपातकसाधारणतः प्राप्तं त्रैमासिकम् आपदि तु याज्ञवल्कीयं व्रतचतुष्टयं शक्त्यपेक्षया योज्यं त-
था परिवेत्तरि च वसिष्ठेन प्रायश्चित्तविशेष उक्तः परिविविदानः कृच्छ्रातिकृच्छ्रौ चरित्वा तां तस्मै दत्वा पुनर्निविशेत् तां चैवोपयच्छेदे
ति परिविविदानः परिविन्निरुच्यते तत्स्वरूपं च प्राग्व्याख्यातम् असौ कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै ज्येष्ठाय तां स्वोढां दत्वा ब्रह्मचर्या-
द्दत्तभैक्ष्यवद्गुरुपरिभवपरिहारार्थं निवेद्य पुनरुद्वहेत् कामिन्यपेक्षया मुक्तम् तामेवोपयच्छेतेति तामेव स्वोढां ज्येष्ठाय निवेदितां तेन

चानुज्ञातामुद्वहेत् यत्तुहारीतेनोक्तम् ज्येष्ठेनिविष्टेकनीयान्विशमानःपरिवेत्ताभवतिपरिवित्तिर्ज्येष्ठः परिवेदनीकन्या परिदायीदाता
परियष्टायाजकः तेसर्वेपतिताःसंवत्सरंप्राजापत्येनकृच्छ्रेणपावयेयुरिति यदपिशंखेनोक्तम् परिवित्तिःपरिवेत्ताचसंवत्सरंब्राह्मण
गृहेषुभैक्ष्यंचरेयातामिति तदुभयमपिकामकारेणकन्यापित्राद्यनुज्ञातोद्वाहविषयम् प्रायश्चित्तस्यगुरुत्वात् यदापुनःकामतोक
न्यांपित्रादिदत्तामेवपरिणयतितदामानवंत्रैमासिकम् पूर्वोक्तौकृच्छ्रातिकृच्छ्रौयाज्ञवल्कीयव्रतचतुष्टयमज्ञातविषयम् यमेनाप्य
त्रविशेषउक्तः कृच्छ्रोद्वयोःपारिवेद्येकन्यायाः कृच्छ्रएवच अतिकृच्छ्रंचरेद्दाताहोताचान्द्रायणंचरेदिति एतच्चपर्याहिताग्न्यादीना
मपिसमानम् एकयोगनिर्देशात् यथाहगौतमः परिवित्तिपरिवेत्तृपर्याहितपर्याधात्रग्रेदिधिषूदिधिषूपतीनांसंवत्सरंप्राकृत-
ब्रह्मचर्यमिति अतएववसिष्ठेनाग्रेदिधिषूपत्यादाविदमेवप्रायश्चित्तमुक्तम् अग्रेदिधिषूपतिःकृच्छ्रंद्वादशरात्रंचरित्वानिर्विशेत् तांचैवोपय
च्छेत्तदिधिषूपतिः कृच्छ्रातिकृच्छ्रौचरित्वातस्मैदत्त्वापुनर्निर्विशेतेति अग्रेदिधिष्वादेर्लक्षणंस्मृत्यन्तरेऽभिहितम् ज्येष्ठायांयद्यनूढायांक-
न्यायामूह्यतेऽनुजा यासाग्रेदिधिषूर्ज्ञेयापूर्वातुदिधिषूःस्मृतेति तत्राग्रेदिधिषूपतिःप्राजापत्यंकृत्वातामेवज्येष्ठांपश्चादन्येनोढामुद्वहेत्
दिधिषूपतिस्तुकृच्छ्रातिकृच्छ्रौकृत्वास्वोढांज्येष्ठांकनीयस्याःपूर्वविप्रेभ्योदत्वान्यामुद्वहेदितिपरिवेदनम् तथा भृतकाध्यापकभृतकाध्या
पितयोश्चपयसाब्रह्मसुवर्चलांपिबेदित्यधिकृत्यविष्णुनोक्तम् भृतकाध्यापनंकृत्वाभृतकाध्यापितस्तथा अनुयोगप्रदानेनत्रीन्पक्षा
न्नियतःपिबेदिति उत्कर्षहेतोरधीयानस्यनाशितत्वयेत्येवंपर्यनुयोगोऽनुयोगप्रदानम् अतएवस्मृत्यन्तरे दत्त्वानुयोगानध्येतुःपतिता

न्मनुरब्रवीदित्युक्तं अत्रापिपूर्वोक्तिव्रतैः सहास्यशक्त्याद्यपेक्षयाविकल्पः इतिभृतकाध्यापकाध्यापितप्रकरणम् तथापारदार्येष्वुप-
पातकसामान्येप्राप्तमानत्रैमासिकस्ययाज्ञवल्कीयव्रतचतुष्टयस्यापिगुरुदारादावपवादउक्तः तथान्यत्रापिगौतमादिभिःपारदार्य-
विशेषेणापवादउक्तः यथाहगौतमः द्वेपरदारे त्रीणिश्रोत्रियस्येति तथावार्षिकंप्राकृतब्रह्मचर्यं प्रस्तुत्यतेनैवेदमभिहितम् उपपात
केषुचैवमिति तत्रेयव्यवस्था ऋतुकालेकामतोजातिमात्रब्राह्मणीगमनेवार्षिकंप्राकृतब्रह्मचर्यं तस्मिन्नेवकालेकर्मसाधनत्वाद्धि-
गुणशालिन्याब्राह्मण्यागमनेद्वेवर्षेप्राकृतंब्रह्मचर्यं तादृश्याएवश्रोत्रियभार्यायागमनेत्रीणिवर्षाणिप्राकृतब्रह्मचर्यं यदाश्रोत्रि
यपत्न्यांगुणवत्यांब्राह्मण्यांत्रैवार्षिकम् तादृग्विधायामेवक्षत्रियायांद्वैवार्षिकम् तादृश्यामेववैश्यायांवार्षिकमितिव्यवस्था एत
त्समानदृष्ट्याशूद्रायांषाण्मासिकंप्राकृतब्रह्मचर्यंकल्पनीयम् अतएवशंखेनवैश्यायामवकीर्णःसंवत्सरंब्रह्मचर्यंत्रिषवणंचानुति
ष्ठेत्क्षत्रियायांद्वेवर्षेत्रीणिब्राह्मण्यांवैश्यायांशूद्रायांब्राह्मणपरिणीतायामितिवर्णक्रमेणह्रासोदर्शितः एवंक्षत्रियस्यापिक्षत्रिया-
दिषुस्त्रीषुक्रमेणद्वैवार्षिकवार्षिकषाण्मासिकानिपूर्वोक्तएवविषयेयोजनीयानि वैश्यस्यवैश्याशूद्र्योर्वार्षिकषाण्मासिके शूद्र-
स्यशूद्रापरभार्यायांषाण्मासिकमेव यत्त्वापस्तंबीयम् सवर्णायामनन्यपूर्वायांसकृत्संनिपातेपादःपतत्येवमभ्यासेपादःपादश्च
तुर्थेसर्वमिति तद्गौतमीयत्रिवार्षिकेणसमानविषयम् अनन्यपूर्विकायांचतुरभ्यासेद्वादशवार्षिकप्रायश्चित्तविधानादेकस्यामेव
गमनाभ्यासेनेदंप्रायश्चित्तंकिंतुप्रतिगमनंपादपादन्यूनंकल्प्यम् एतत्सर्वंकामकारविषयम् अकामतःपुनरेतदेवार्द्धक्लृप्त्यापूर्वो

क्तविषयेयोजनीयम् अनृतुकालेतुजातिमात्रब्राह्मण्यांकामतोगमनेमानवंत्रैमासिकम् जातिमात्रक्षत्रियादिषुस्त्रीषुपुनरस्मि
न्नेवविषयेतदीयान्येवद्वैमासिकचांद्रायणमासिकानियोजनीयानि क्षत्रियादीनांक्षत्रियादिषुस्त्रीषुद्वैमासिकादीन्येव अकाम-
तःपुनरेतासुत्रैवार्षिकानांयाज्ञवल्कीयमृषभैकादशगोदानम् मासंपंचगव्याशनंमासंप्राजापत्यचरणंचक्रमेणद्रष्टव्यम् शूद्रा
गमनेतुकामतोविहितंमासव्रतमेवार्द्धकृत्स्यायोजनीयम् अतएवसंवर्त्तः शूद्रांतुब्राह्मणोगत्वामासंमासार्द्धमेववा गोमूत्र
यावकाहारस्तिष्ठेत्तत्पापमुक्तय इत्यकामतोर्द्धमासिकमित्यभिप्रेतम् ब्राह्मणश्चेदप्रेक्षापूर्वकंब्राह्मणदारानभिगच्छेदन्निवृत्त-
धर्मकर्मणःकृच्छ्रोनिवृत्तधर्मकर्मणोतिकृच्छ्रइति तद्ब्राह्मणभार्यायांशूद्रायांद्रष्टव्यम् द्विजातिस्त्रीषुचविप्रोढासुद्विस्त्रिर्व्य
भिचारितासुअबुद्धिपूर्वगमनेवा तथाचसंवर्त्तः विप्रास्त्वजाननागत्वाप्राजापत्यंसमाचरेदिति कामतस्तु राज्ञींप्रव्रजितां-
धात्रींसाध्वींवर्णोत्तमामिति कृच्छ्रद्वयंप्रकुर्वीतसगोत्रामभिगम्यचेतियमोक्तंकृच्छ्रद्वयंद्रष्टव्यम् चतुराद्यभ्यासेतुव्यभिचार
स्वस्वैरिण्यांवृषल्यामवकीर्णःसचैलस्नातोदकुंभंदद्याद्ब्राह्मणाय वैश्यायांचचतुर्थकालाहारोब्राह्मणान्भोजयेद्यवसभारं-
चगोभ्योदद्यात् क्षत्रियायांत्रिरात्रोपोषितोघृतपात्रंदद्यात् ब्राह्मण्यांषड्रात्रोपोषितोगांदद्याद्गोष्ववकीर्णःप्राजापत्यंचरेत् अनू
ढायामवकीर्णःपलालभारंसीसमाषकंचदद्यात् इतिशंखोक्तंवेदितव्यम् चतुराद्यभ्यासविषयत्वंचास्य चतुर्थेस्वैरिणीप्रोक्ता
पंचमेबंधकीमतेतिस्मृत्यंतराद्वगम्यते अत्रैवविषयेषट्त्रिंशन्मतेप्युक्तम् ब्राह्मणीबंधकींगत्वाकिंचिद्दद्यात्द्विजातये राज

न्यांचेद्दनुर्दद्याद्वैश्यांगत्वातुचैलकम् शूद्रांगत्वातुवैविप्रउदकुंभंद्विजातये दिवसोपोषितोवास्याद्दद्याद्विप्रायभोजनमिति अनुलोमव्यवा
येगर्भेद्विगुणं यदिसाअतिदूषितान प्रतिलोमगानभवतितदैव अन्यजातिगमनेद्वैगुण्यं प्रतिलोमदूषितासुअंत्यावसायिस्त्रीषुचचांडा
लीगर्भेयथागुरुतल्पव्रतं तथाकिंचिन्न्यूनंतारतम्यकल्प्यम् चांडालीगमनेवार्षिकम् गर्भेगुरुतल्पव्रतंतथैवज्ञेयं इदंप्रायश्चित्तंजातंग
र्भानुत्पत्तिविषयम् तदुत्पत्तौतुयद्विशेषेणयत्प्रायश्चित्तमुक्तंतदेवतत्रद्विगुणंकुर्यात् गमनेतुव्रतंयत्स्याद्गर्भेतद्द्विगुणंचरेदित्युशनसः
स्मरणात् शूद्रांगर्भमादधतश्चतुर्विंशतिमतेविशेषउक्तः वृषल्यामभिजातस्तुत्रीणिवर्षाणिचतुर्थकालसमयेनक्तंभुंजीतेति यत्तुम
नुवचनम् शूद्रांशयनमारोप्यब्राह्मणोयात्यधोगतिम् जनयित्वासुतंतस्यांब्राह्मण्यादेवहीयतइति तत्पापगौरवाख्यापनंपरम् प्रा
तिलोम्यव्यवायेतुसर्वत्रपुरुषस्यवधएव प्रातिलोम्येवधःपुंसोनार्याःकर्णादिकर्त्तनमितिवचनात् यत्तुवृद्धप्रचेतसोवचनं शूद्रस्यब्रा
ह्मणींमोहाद्गच्छतःशुद्धिमिच्छतः पूर्णमेतद्व्रतंदेयंमातायस्माद्धितस्यसा पादहान्यान्यवर्णासुगच्छतःसार्ववर्णिकमिति द्वादश
वर्षातिदेशकंतत्स्वप्रायश्चित्तात्यागच्छतोवेदितव्यम् मोहादितिविशेषणोपादानात् यत्तुसंवर्त्तवचनम् कथंचिद्ब्राह्मणींगच्छेत्क्ष
त्रियोवैश्यएववा कृच्छ्रसांतपनंवास्यात्प्रायश्चित्तंविशुद्धये शूद्रस्तुब्राह्मणींगच्छेत्कथंचित्काममोहितः गोमूत्रयावकाहारो-
मासेनैकेनशुद्ध्यतीति तदत्यंतव्यभिचरितब्राह्मणीविषयं अंत्यजागमनेपिप्रायश्चित्तंबृहत्संवर्त्तेनोक्तम् रजकव्याधशैलूष
वेणुचर्मोपजीविनाम् एतास्तुब्राह्मणोगत्वाचरेच्चांद्रायणद्वयमिति इदंब्राह्मणस्यकामतःसकृद्गमनविषयम् क्षत्रियादीनांतु-

पादहीनंकल्प्यम् अत्रैवापस्तंबेनोक्तम् म्लेच्छीनटींचर्मकारींरजकींबुरुडींतथा एतासुगमनंकृत्वाचरेच्चांद्रायणद्वयमिति अंत्यजाश्च
नेनैवदर्शिताः रजकश्चर्मकारश्चनटोबुरुडएवच कैवर्त्तमेदभिल्लाश्चसप्तैतेंत्यावसायिनः अंत्यजास्मृताइति येतुचांडादयोंत्या-
वसायिनस्तत्स्त्रीगमनेनगुरुतरप्रायश्चित्तंगुरुतल्पप्रकरणे दर्शितम् एतासांचांत्यजस्त्रीणांमध्येयदेकस्याव्यवायेप्राय
श्चित्तमभिहितंतत्सर्वासुभवति सर्वासांसदृशत्वात् तथाह्योशनाः बहूनामेकधर्माणामेकस्यापियदुच्यते सर्वेषांतद्भवेत्कार्यमेकरू
पाहितेस्मृताइति अकामतस्तुगमने चंडालमेदश्वपचकपालव्रतचारिणाम् अकामतःस्त्रियोगत्वापराकव्रतमाचरेदित्यापस्तं
बोक्तंद्रष्टव्यम् यच्चसंवर्त्तवचनम् रजकव्याधशैलूषवेणुचर्मोपजीविनाम् स्त्रियोविप्रोयदागच्छेत्कृच्छ्रंचांद्रायणंचरेदिति तद
प्यकामविषयम् यत्तुशातातपेनोक्तम् कैवर्त्तींरजकींचैववेणुचर्मोपजीविनीम् प्राजापत्यविधानेनकृच्छ्रेणैकेनशुद्ध्यतीति तद्रेत
सेकात्प्राङ्निवृत्तिविषयम् यत्तूशनसोक्तम् कापालिकान्नभोक्तॄणांतन्नारीगामिनांतथा ज्ञानात्कृच्छ्राब्दमुद्दिष्टमज्ञानादैंदवंस्मृ
तमिति तदभ्यासविषयम् यदातुचांडाल्यादिषुगच्छतोगर्भोभवतितदा चांडाल्यांगर्भमारोप्यगुरुतल्पव्रतंचरेदित्युशनसोक्तंद्वा
दशवार्षिकंद्रष्टव्यंयच्चतत्तजायांप्रसूतस्यनिष्कृतिर्नविधीयते निर्वासनंकृतांकस्यतस्यकार्यमसंशयमित्यापस्तंबवचनम् तत्काम-
कारविषयम् स्त्रीणामपिसवर्णानुलोमव्यवायेपुरुषस्योक्तंत्रिवार्षिकादितदेवभवति यत्पुंसःपरदारेषुतच्चैनांचारयेद्व्रतमितिमनुस्मर
णात् प्रातिलोम्येनव्यवायेएवपरस्त्रीपुंसयोःप्रायश्चित्तभेदः तथाहवसिष्ठः शूद्रश्चेद्ब्राह्मणीमभिगच्छेद्वीरणैर्वेष्टयित्वाशूद्रमग्नौ

प्रास्येत् ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषाभ्यज्य नग्नां गौरखरमारोप्य महापथमनुसंव्राजयेत्पूता भवतीति वैश्यश्चेद्ब्राह्मणी
मभिगच्छेल्लोहितदर्भैर्वेष्टयित्वा वैश्यमग्नौ प्रास्य ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषाभ्यज्य नग्नां गौरखरमारोप्य महापथमनु
संव्राजयेत्पूता भवतीति राजन्यश्चेद्ब्राह्मणीमभिगच्छेच्छरपत्रैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येत् ब्राह्मण्याः शिरसि वपनं कारयित्वा-
सर्पिषाभ्यज्य नग्नां गौरखरमारोप्य महापथमनुसंव्राजयेत्पूता भवतीति विज्ञायत इति एवं वैश्यो राजन्यां शूद्रश्च राजन्यावैश्य
योरिति पूता भवतीति वचनाद्राजवीथिपरिव्राजनमेव दंडरूपं प्रायश्चित्तांतरनिरपेक्षं शुद्धिसाधनमिति दर्शयति ब्राह्मण्याः प्रा-
तिलोम्येन द्विजातिव्यवाये प्रायश्चित्तांतरमप्युक्तं संवर्त्तेन ब्राह्मण्यकामागच्छेच्चेत्क्षत्रियं वैश्यमेव वा गोमूत्रयावकैर्मासात्तद
र्धाद्वा द्विशुध्यतीति कामतस्तु द्विगुणं कर्त्तव्यम् कामात्तु द्विगुणं भवेदिति वचनात् षट्त्रिंशन्मतेपि ब्राह्मणी क्षत्रियवैश्यसेवाया
मतिकृच्छ्रं कृच्छ्रातिकृच्छ्रो चरेत्क्षत्रियायोषितां ब्राह्मणराजन्यवैश्यसेवायां कृच्छ्रार्द्धं प्राजापत्यमतिकृच्छ्रं वैश्ययोषितां ब्राह्मण
राजन्यवैश्यसेवायां कृच्छ्रपादं कृच्छ्रार्द्धं प्राजापत्यं शूद्रायाः शूद्रसेवने प्राजापत्यम् ब्राह्मणराजन्यवैश्यसेवायां त्वहोरात्रत्रिरात्रं
कृच्छ्रार्द्धमिति शूद्रसेवायां तु विशेषो बृहद्यमेन तसोक्तः विप्रा शूद्रेण संपृक्ता न चेत्तस्मात्प्रसूयते प्रायश्चित्तं स्मृतं तस्याः कृच्छ्रं-
चांद्रायणत्रयम् एतदनिच्छंत्यां स्वपतिभ्रांत्या वा वेदितव्यम् चांद्रायणे द्वे कृच्छ्रश्च विप्राया वैश्यसेवने कृच्छ्रं चांद्रायणे स्यातां
तस्याः क्षत्रियसंगमे क्षत्रियाशूद्रसंपर्के कृच्छ्रं चांद्रायणद्वयम् चांद्रायणं सकृच्छ्रं तु चरेद्वैश्येन संगता शूद्रं गत्वा चरेद्वैश्या कृ-

कृच्छ्रंचांद्रायणोत्तरम् आनुलोम्ये प्रकुर्वीत कृच्छ्रंपादांतरोपितामिति प्रजातायास्तु चतुर्विंशतिमते विशेष उक्तः विप्रगर्भे पराकः स्यात्
क्षत्रियस्य तथैंदवम् ऐंदवश्च पराकश्च वैश्यस्याकामकारतः शूद्रगर्भे भवेत्त्यागश्चांडालो जायते यतः गर्भस्रवे धातुदोषे चरेच्चां
द्रायणत्रयमिति अकामकारत इति विशेषणोपादानात् कामकारे पुनः पराकादिकं द्विगुणं कुर्यात् यदात्वनिःसृतगर्भे च दशममास
स्थित्वा प्रजायते तदा प्रायश्चित्ताभावः ब्राह्मणक्षत्रियविशां भार्याः शूद्रेण संगताः अप्रजाता विशुध्यंति प्रायश्चित्तेन नेतरा इति वसि
ष्ठस्मरणात् यदात्वाहितगर्भैव पश्चाच्छूद्रादिभिर्व्यभिचरति तदा गर्भपातशंकया प्रसवोत्तरकालमेव प्रायश्चित्तं कुर्यात् अंतर्व-
त्नी तु या नारी समेता कामकामिना प्रायश्चित्तं न कुर्यात्सा यावद्गर्भो न निःसृतः जाते गर्भे व्रतं पश्चात्कुर्यान्मासं तु यावकम् न गर्भदोषस्त
स्यास्ति संस्कार्यः स यथाविधीति स्मृत्यंतरदर्शनात् यदा त्वौन्हूत्यात्प्रायश्चित्तं न कुर्वीत तदा नार्याः कर्णादिकर्त्तनमिति द्रष्टव्यम् अंत्य
जगमनेपि स्त्रीणां स्मृत्यंतरे प्रायश्चित्तं दर्शितम् रजकव्याधशैलूषवेणुचर्मोपजीविनः ब्राह्मण्येतान्यदा गच्छेदकामादैंदवत्रयमि
ति तथा चांडाल्याद्यंत्यजागमनेपि चांडालपुल्कसंम्लेच्छश्वपाकपतितांस्तथा ब्राह्मण्यकामतो गत्वा चांद्रायणचतुष्टयमिति अ
कामत इति वचनात्कामतो द्विगुणं कल्प्यम् तथा चांडालेन तु संपर्कं यदि गच्छेत्कथंचन सशिखं वपनं कुर्याद्भुंजीयाद्यावकौदनम्
त्रिरात्रमुपवासः स्यादेकरात्रं जले वसेत् आत्मनासंमिते कूपे गोमयोदककर्दमे तत्रस्थित्वा निराहारा सा त्रिरात्रं ततः क्षिपेत् शंख
पुष्पीलतामूलं पत्रं वा कुसुमं फलम् क्षीरे सुवर्णसंमिश्रं क्वाथयित्वा ततः पिबेत् एकभुक्तं चरेत्सम्यग्यावत्पुष्पवती भवेत् बहिस्ताव-

त्वनिवसेद्यावत्त्वरतिनद्व्रतम् प्रायश्चित्तेततश्चीर्णेकुर्याद्ब्राह्मणभोजनम् गोद्वयंदक्षिणांदद्याच्छुद्धैत्स्वायंभुवोऽब्रवीदिति एतदप्य
कामविषयमेव यदिगच्छेत्कथंचनेतिवचनात् ऋष्यशृंगेणाप्यंत्यजाव्यवायेप्रायश्चित्तांतरमुक्तम् संपृक्तास्याद्यथांत्यैर्यासाकृच्छ्रा-
ब्दंसमाचरेदिति कामतःसकृद्गमनेइदं यदात्वाहितगर्भायाएवपश्चाच्चांडालादिव्यवायस्तदातेनैवविशेषउक्तः अंतर्वत्नीतुयुवतिःसं
पृक्ताचांत्ययोनिना प्रायश्चित्तंनसाकुर्याद्यावद्गर्भोननिःसृतः नप्रचारंगृहेकुर्यान्निचांगेषुप्रसाधनम् नशयीतसमंभर्त्रानवाभुंजीत-
बांधवैः प्रायश्चित्तंगतेगर्भेविधिंकृच्छ्राब्दिकंचरेत् हिरण्यमथवाधेनुंदद्याद्विप्रायदक्षिणामिति यदात्तुकामतोत्यंतसंपर्कंकरोतित
दाअंत्यजेनतुसंपर्केभोजनेमैथुनेकृते प्रविशेत्संप्रदीप्तेग्नौमृत्युनासाविशुद्ध्यतीतित्युशनसोक्तंद्रष्टव्यम् यदातूक्तंप्रायश्चित्तंनकरो
तितदापुल्लिंगेनांकनीयावध्यावाभवेत् हीनवर्णोपभुक्तायासांक्यावध्याथवाभवेदितिपाराशर्यस्मरणात् इतिपारदार्यप्रायश्चित्तप्र
करणम् तथापरिवित्तिप्रायश्चित्तानामपिपरिवेत्तृप्रायश्चित्तवद्व्यवस्थाविज्ञेया इयांस्तुविशेषः परिवेत्तुर्यस्मिन्विषयेकृच्छ्राति-
कृच्छ्रौतत्रपरिवित्तेःप्राजापत्यइति परिवित्तिःकृच्छ्रंद्वादशरात्रंचरित्वापुनर्निर्विशेत्तांचैवोपयच्छेदितिवसिष्ठस्मरणात् इतिप
रिवित्तिप्रकरणम् २६५ वार्धुष्यलवणक्रय योस्तुमनुयोगीश्वरोक्तसामान्योपपातकप्रायश्चित्तानिजातिशक्तिगुणाद्यपेक्षयायो-
ज्यानि लवणक्रयानंतरंस्त्रीशूद्रविट्क्षत्रवधइत्युपपातकमध्येपठितंतत्रप्रायश्चित्तांतरमप्याह एकमधिकंयस्मिन्सहस्रेतदे
कसहस्रंतस्यपूरणएकसहस्रऋषभएकसहस्रोयासांगवांताःऋषभैकसहस्रास्ताःक्षत्रवधेदद्यात् अथवाब्रह्महत्याप्रायश्चित्तंब्रह्मह

त्याव्रतं वर्षत्रयं कुर्यात् वैश्याघाती पुनरेतत् ब्रह्महत्याव्रतमेकवर्षं चरेत् गवामृषभैकशतं वा दद्यात् शूद्रघाती तु ब्रह्महत्याव्रतं षण्मासं च-
रेत् यद्वा दश धेनूरचिरप्रसूताः सवत्सा दद्यात् इदमकामतो जातिमात्रक्षत्रियादिवधविषयम् अकामतस्तु राजन्यं विनिपात्येति प्रक्रम्यैते-
षामेव प्रायश्चित्तानां मानवेऽभिधानात् दानतपसोश्च शक्त्यपेक्षया व्यवस्था ईषद्वृत्तस्थयोस्तु विट्शूद्रयोस्तुरीयो ब्रह्महत्यायाः क्षत्रिय-
स्य वधे स्मृतः वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोडश इति मनूक्तं द्रष्टव्यम् वृत्तस्थे क्षत्रिये तु सार्द्धं चतुर्वार्षिकं कल्प्यम् वृत्तशब्देन चा-

ऋषभैकसहस्रा गा दद्यात्क्षत्रवधे पुमान् ब्रह्महत्याव्रतं वापि वत्सरांस्त्रितयं चरेत् २६६
वैश्यहाब्दं चरेदेतद्दद्याद्वैकशतं गवाम् षण्मासाच्छूद्रहाप्येतद्धेनूर्दद्याद्दशाथवा २६७

त्मगुणादिकमुच्यते गुरुपूजा घृणा शौचं सत्यमिन्द्रियनिग्रहः प्रवर्त्तनं हितानां च तत्सर्वं वृत्तमुच्यत इति मनुस्मरणात् यत्तु वृद्धहारीत-
वचनम् ब्राह्मणः क्षत्रियं हत्वा षड्वर्षाणि व्रतं चरेत् वैश्यं हत्वा चरेदेवं व्रतं त्रैवार्षिकं द्विजः शूद्रं हत्वा चरेद्वर्षं वृषभैकादशाश्च गा द-
ति तत्कामकारविषयम् श्रोत्रियक्षत्रियादिवधे तु तुरीयो न क्षत्रियस्य वधे ब्रह्महणि व्रतम् अर्द्धं वैश्यवधे कुर्यात्तुरीयं वृषलस्य

लितिवृद्धहारीतोक्तं द्रष्टव्यम् यत्तु वसिष्ठवचनम् ब्राह्मणो राजन्यं हत्वा षड्वर्षाणि व्रतं चरेत् षड्वैश्यं त्रीणि शूद्रमिति तदपि हा
रीतीयेन समानविषयम् क्षत्रिये लितिषड्गुणन्यूना इत्येतावान् विशेषः यदा तु श्रोत्रियो वृत्तस्थश्च भवति तदा पूर्वयोर्वर्णयोर्वेदाध्या
यिनं हत्वेत्यापस्तम्बोक्तं द्वादशवार्षिकं द्रष्टव्यम् प्रारब्धयागे च श्रोत्रिये क्षत्रियादौ व्यापादिते यागस्थक्षत्रविड्घाती चरेद्ब्रह्म
हणि व्रतमिति द्रष्टव्यम् श्रोत्रिये पुनर्यागस्थक्षत्रियादौ ब्राह्मणस्य राजन्यवधे प्राकृतं ब्रह्मचर्यं मृषभैकसहस्राश्च गा दद्याद्वैश्य
वधे त्रिवार्षिकं मृषभैकशताश्च गा दद्यात् शूद्रवधे सांवत्सरिकं मृषभैकादशाश्च गा दद्यादिति गौतमोक्तो दानतपसोः समुच्चयो द्र-
ष्टव्यः एतच्चाकामतिपूर्वविषयं पूर्ववदमतिपूर्वं चतुर्षु वर्णेषु प्रमाप्य द्वादश षट् त्रीन् वत्सरं च व्रतान्यादिशेत् तेषामन्ते गोसहस्रं च ततो
ऽर्द्धं तस्यार्द्धमर्द्धं दद्यात् सर्वेषामानुपूर्व्येणेति शङ्खस्मरणात् इदं च द्वादशवार्षिकं गौतमीयविषयमेव किंचिन्न्यूनगुणे क्षत्रिये-
गुणाधिकयोर्वैश्यशूद्रयोश्च द्रष्टव्यम् स्त्रीशूद्रविट्क्षत्रवध इत्युपपातकमध्ये विशेषत एव पठितत्वेनोत्सर्गापवादन्यायगोच
रत्वाभावादुपपातकसामान्यप्राप्तान्यपि प्रायश्चित्तान्यत्र योजनीयानि तत्र दुर्वृत्तक्षत्रियादौ कामतो व्यापादिते मानवं त्रैमासि
कं त्रैवार्षिकं द्वैमासिकं चान्द्रायणं च वर्णक्रमेण योज्यम् अकामतस्तु योगीश्वरेणोक्तं त्रिरात्रोपवाससहितमृषभैकादशगोदानं
मासं पञ्चगव्याशनं मासिकं च पयोव्रतं यथाक्रमेण योज्यम् एतच्च प्रागुक्तं व्रतजातं ब्राह्मणकर्तृके क्षत्रियादिवधे द्रष्टव्यम् अ
कामतस्तु राजन्यं विनिपात्य द्विजोत्तमः तथा ब्राह्मणराजन्यवधे षड्वार्षिकं तथा ब्राह्मणः क्षत्रियं हत्वेत्यादिषु मनुगौतमहारीत

वाक्येषु ब्राह्मणग्रहणात्क्षत्रियादिकर्तृके तु क्षत्रियादिवधे पादन्यूनं द्रष्टव्यम् विप्रे तु सकलं देयं पादोनं क्षत्रिये स्मृतम् वैश्येऽर्धं मे
कपादस्तु शूद्रजातिषु शस्यत इति वृद्धविष्णुस्मरणात् यत्तु पर्षद्या ब्राह्मणानां तु सा राज्ञां द्विगुणा मता वैश्यानां त्रिगुणा प्रोक्ता
पर्षद्वच्च व्रतं स्मृतमित्यंगिरोवचनम् तत्प्रातिलोम्येन वाग्दंडपारुष्यविषयमित्युक्तं गोवधप्रकरणे मूर्धावसिक्तादीनामेवंव
धे एतत्प्रायश्चित्तं जातं न भवति तेषां क्षत्रियादित्वाभावात् अतो दंडानुसारेणैतद्वधे पूर्वोक्तव्रतकदंबस्य वृद्धिह्रासौ दर्शितौ

दुर्वृत्तब्रह्मविट्क्षत्रशूद्रयोषाः प्रमाप्य तु दृतिं धनुर्बस्तमविं क्रमाद्दद्याद्विशुद्धये २६८

दंडप्रणयनं कार्यं वर्णजात्युत्तराधरे इत्यत्र इति क्षत्रियादिवधप्रकरणम् २६७ स्त्रीवधे प्रायश्चित्तमाह ब्राह्मणादिभार्या
दुर्वृत्ताः स्वैरिणीः प्रमाप्य क्रमेण दृतिं जलाधारचर्मकोशं धनुः कार्मुकं बस्तं छागमविं मेषं च विशुद्धये दद्यात् इदं च प्रातिलोम्येनां
त्यजातिप्रसूतानां ब्राह्मण्यादीनामकामतो वधविषयम् कामतस्तु ब्रह्मगर्भ आह प्रतिलोमप्रसूतानां स्त्रीणां मासावधः स्मृतः अ
तरप्रभवानां च सूतादीनां चतुर्द्विषडिति ब्राह्मण्यादिवधे षण्मासाः क्षत्रियायाश्चत्वारो वैश्याया द्वावित्येवं यथार्हतयान्वयः यदा तु वैश्य

कर्मणाजीवंतींव्यापादयतितदाकिंचिद्देयं वैशिकेनकिंचिदितिगौतमस्मरणात् वैशिकेनवैश्यकर्मणाजीवंत्यांव्यापादितायांकिंचिद्देयंत
न्त्र जलकोशंचकूपेचब्राह्मण्याः प्रतिपादयेत् वधेधेनुःक्षत्रियायाबस्तोवैश्यावधेस्मृतः शूद्रायामाविकंवैश्यांहत्वादद्याज्जलंनरइत्यंगि
रस्स्मरणात् यदापुनःक्षत्रियादिभिःप्रातिलोम्येनव्यभिचारिताब्राह्मण्याद्याव्यापादयतितदागोवधप्रायश्चित्तानियथार्हयोज्यानि २६८
ईषद्व्यभिचारितब्राह्मण्यादिवधेविशेषमाह यदात्वप्रकर्षेणदुष्टामीषद्व्यभिचारिणींब्राह्मण्यादिकांव्यापादयतितदाशूद्रहत्याव्रतंषा
ण्मासिकंकुर्यात्. यद्वादशधेनूर्दद्यात् इदंचषाण्मासिकमकामतोब्राह्मण्याव्यापादने क्षत्रियावधेतुकामकृतेद्रष्टव्यम् कामतोवै

अप्रदुष्टांस्त्रियंहत्वाशूद्रहत्याव्रतंचरेत्

श्यावधेदशधेनूर्दद्यात् कामतःशूद्रावधेतुउपपातकसाधारणप्राप्तंमासंपंचगव्याशनम् यदाकामतोब्राह्मणींव्यापादयतितदाद्वादश
मासिकं क्षत्रियादीनांत्वकामतोव्यापादनेत्रैमासिकंसार्द्धमासंसार्द्धद्वाविंशत्यहानि यथाहप्रचेताः अनृतुमतींब्राह्मणींहत्वाकृ-
च्छ्राब्दंषण्मासान्वेति क्षत्रियांहत्वाषण्मासान्मासत्रयंवेति वैश्यांहत्वामासत्रयंसार्द्धमासंवेति शूद्रांहत्वासार्द्धमासंसार्द्धद्वाविंश
त्यहानिवेति यत्तुहारीतेनषड्वर्षाणिराजन्येप्राकृतंब्रह्मचर्यंत्रीणिवैश्येसार्द्धंशूद्रइतिप्रतिपाद्योक्तम् क्षत्रियवत्ब्राह्मणीषुवै

श्यवत्क्षत्रियायांशूद्रवद्वैश्यायांशूद्रांहत्वानवमासानित्युक्तम् तदपिकर्मसाधनत्वादिगुणयोगिनीनांकामतोव्यापादनेद्रष्टव्यम् अका
मतस्तुसर्वत्रार्द्धकल्प्यम् आत्रेय्यांतुप्रागुक्तम् इतिस्त्रीवधप्रकरणम् हिंसाप्रायश्चित्तप्रसंगात्प्रकीर्णकपदाभिधेयात्तुपपातकप्रा
णिवधेपिप्रायश्चित्तमाह अस्थिमतांप्राणिनांकृकलासप्रभृतीनांमनूक्तनिष्कृतीनांसहस्रंहत्वाअनस्थिमतांचयूकामत्कुणदंशमश
कप्रभृतीनामनःशकटंतत्परिपूर्णमात्रंहत्वाशूद्रहत्याव्रतंषाण्मासिकंप्राकृतंब्रह्मचर्यंचरेद्दशधेनूर्वादद्यात् सहस्रमितिपरिमाणानि

अस्थिमतांसहस्रंतु तथानस्थिमतामनः २६९

यमात्ततोधिकवधेत्वतिरिक्तंकल्प्यम् अर्वाक्पुनःप्रत्येकवधेतुयत्किंचित्साऽस्थिवधेतुदेयम्. प्राणायामस्त्वनस्थिकइतिवक्ष्यति त
थानस्थिमतामनइति एतच्चक्ष्लोद्दिष्टजंतुविषयम् स्थविष्ठानस्थिगुणादिजंतुवधेतु कृमिकीटवयोहत्येत्यादिनामलिनीकरणी
यान्यभिधायमलिनीकरणीयेषुततःस्याद्यावकस्त्र्यहमितिमनूक्तंद्रष्टव्यम् २६९ ॐ ॐ ॐ ॐ

किंच मार्जारादयः प्रसिद्धाः पतत्रिणश्चाषकाकोलूकास्तान् हत्वा त्रिरात्रं पयः पिबेत् पादकृच्छ्रं वाचरेत् वाशब्दाद्योजनगमनादि
कं वा कुर्यात् यथाह मनुः पयः पिबेत्त्रिरात्रं वा योजनं वाध्वनो व्रजेत् अपः स्पृशेच्छ्रवंत्यां वा सूक्तं वाब्दैवतं जपेदिति इदं च प्रत्येकव
धविषयम् समुदितवधे तु मार्जारनकुलौ हत्वा चाषं मंडूकमेव च श्वगोधोलूककाकांश्च शूद्रहत्याव्रतं चरेदिति मनूक्तं षाण्मासि
कं द्रष्टव्यम् यत्पुनर्वसिष्ठेनोक्तम् श्वमार्जारनकुलमंडूकसर्पदहरमूषकान् हत्वा कृच्छ्रं द्वादशरात्रं चरेत् किंचिद्दद्यादिति एत-

मार्जारगोधानकुलमंडूकांश्च पतत्रिणः हत्वा त्र्यहं पिबेत्क्षीरं कृच्छ्रं वा पादिकं चरेत् २७०
गजे नीलवृषाः पंच शुके वत्सो द्विहायनः खराजमेषेषु वृषो देयः क्रौंचे त्रिहायनः २७१

त्कामतोऽभ्यासविषयं वेदितव्यम् दहरोऽल्पमूषकः कृच्छ्रं छंदरिर्वा २७१ किंच दंतिनि व्यापादिते पंच नीलवृषा देयाः शुके पक्षिणि द्वि
वर्षो वत्सः रासभच्छागैडकेषु व्यापादितेषु प्रत्येकमेको वृषः क्रौंचे पक्षिणि त्रिहायनो वत्सो देय इति सर्वत्रानुषंगः मनुनाप्यत्र विशे
षउक्तः वासो दद्याद्धयं हत्वा पंच नीलान्वृषान्गजम् अजमेषावनड्वाहं खरं हत्वैकहायनमिति २७१ ७ ७

किंच क्रव्यंमांसंतदत्तीतिक्रव्यादः व्याघ्रसृगालादिमृगविशेषः वानरसाहचर्यात् तथाहंसश्येनसमभिव्याहारात्कंकगृध्रादिपक्षि विशेषश्चगृह्यते जलशब्देनजलचराबकादयोगृह्यंते स्थलशब्देनस्थलचराबकादयः शिखंडीमयूरः भासःपक्षिविशेषः शेषाः प्रसिद्धाः एषांप्रत्येकवधेगामेकांदद्यात् अक्रव्यादस्तुहरिणादिमृगान् खंजरादिपक्षिविशेषान्हत्वावत्सतरींदद्यात् तथाचमनुः हत्वाहंसंबलाकांचबकंबर्हिणमेवच वानरंश्येनभासौचस्पर्शयेद्ब्राह्मणायगाम् क्रव्यादस्तुमृगान्हत्वाधेनुंदद्यात्पयस्विनीम्

हंसश्येनकपिक्रव्याज्जलस्थलशिखंडिनः भासंहत्वाचदद्याद्गामक्रव्यादस्तुवत्सिकां २७२
उरगेष्वायसोदंडोपंडकेत्रपुसीसकम् कोलेघृतघटोदेयउष्ट्रेगुंजाहयेंशुकम् २७३

अक्रव्यादेवत्सतरीमुष्ट्रंहत्वातुकृष्णालमिति २७२ किंच सरीसृपेषुव्यापादितेषुअयोमयोदंडस्तीक्ष्णप्रांतोदेयः पंडकेनपुंसकेव्या पादितेत्रपुसीसकंचमाषपरिमितंदद्यात् पलालभारंवा पंडकंहत्वापलालभारंत्रपुसीसकंवादद्यादितिस्मृत्यंतरदर्शनात् यद्यपि पंडकोलिंगहीनःस्यात्संस्काराहश्चनैवसइतिदेवलवचनेनसामान्येनैवस्त्रीपुंलिंगरहितोनिर्दिष्टस्तथापिनगोब्राह्मणस्येहविव- क्षा गोब्राह्मणनिषेधस्यजात्यवच्छेदेनप्रवृत्तेः लिंगविरहिणिचपिंडेजातिसमवायविशेषात्तन्निमित्तमेवलघुप्रायश्चित्तमुक्तं

तस्मान्मृगपक्षिण एवविवक्षिताः मृगपक्षिसमभिव्याहाराच्च कोलेसूकरेव्यापादिते घृतकुंभोदेयः उष्ट्रेगुंजादेया वाजिनिविनिपातितेंशुकं देयम् तथाचमनुः अभ्रिंकाष्णायसींदद्यात्सर्पंहत्वाद्विजोत्तमः पलालभारकंषंडेसैसकंचैवमाषकमिति २७३ किंचाह तित्तिरौपतत्रिणि व्यापादितेतिलद्रोणंदद्यात् द्रोणश्चपरिमाणविशेषवचनः अष्टमुष्टिभवेत्किंचित्किंचिदष्टौतुपुष्कलम् पुष्कलानितुचत्वारिआढकःपरिकीर्त्तितः चतुराढकेभवेद्द्रोणइत्येतन्मानलक्षणमितिस्मरणात् पूर्वोक्तानागजादीनांव्यापादनेनिर्धनत्वेननीलवृषपंचकादिदानंकर्तु-

तित्तिरौतुतिलद्रोणंगजादीनामशक्नुवन् दानंदातुंचरेत्कृच्छ्रमेकैकस्यविशुद्धये २७४

मशक्नुवन्प्रत्येकंकृच्छ्रंचरेद्वि-
शुद्ध्यर्थं कृच्छ्रशब्दश्चात्र लक्षणयाक्लेशसाध्येतपोमात्रेद्रष्टव्यः तपांसिगौतमेनदर्शितानि संवत्सरःषण्मासाश्चत्वारस्त्रयोद्वावेकश्चतु र्विंशत्यहोद्वादशाहःषडहस्त्र्यहोहोरात्रइतिकलना एतेन्येवातिदेशेविकल्पेनक्रियेरन्नेनसिगुरुणिगुरूणिलघुनिलघूनीति यदिकृ- च्छ्रशब्देनमुख्योर्योगृह्यतेतर्हिगजेशुकेवाविशेषेणप्राजापत्यएवस्यात् नचतद्युक्तं तपोमात्रपरत्वेतुदानगुरुलघुभावकल्पनयातप सोपिगुरुलघुभावोयुज्यते ततश्चगजेद्वैमासिकंयावकाशनंशुकेत्रैमासइति एवमन्यत्रापिदानानुसारेणप्रायश्चित्तंकल्प्यम् २७४

किंचाह औदुंबरादौ फलेमधुकादौचकुसुमेचिरस्थितभक्तसक्ताद्यंतेचरसेचगुडादौयानिसत्वानिप्राणिनोजायंतेतेषांघातेघृतप्राशनं
शुद्धिसाधनं इदंचघृतप्राशनंभोजनकार्येएवविधीयते प्रायश्चित्तानांतपोरूपत्वात् प्रायश्चित्तानांतपोरूपत्वमांगिरसेनोक्तम् प्रायो
नामतपःप्रोक्तंचित्तंनिश्चयउच्यते तपोनिश्चयसंयुक्तंप्रायश्चित्तंतदुच्यतेइति प्रतिप्राणिप्रायश्चित्तस्यानंत्यात् पृष्टाकोटेनापिव
क्तुमशक्यत्वात्सामान्येनप्रायश्चित्तमाह अस्थिमतांकृकलासादिप्राणिनांन्यूनसहस्रसंख्यानांप्रत्येकवधेकिंचित्स्वल्पंधान्यादिहि
रण्यादिदेयम् अनस्थिकेत्वेकःप्राणायामः तत्रकिंचिदितियदाहिरण्यंदीयतेतदापणमात्रम् अस्थिमतांवधेपणोदेयइतिसुमंतुस्म

फलपुष्पांतरसजसत्वघातेघृताशनम् किंचित्सास्थिमतांदेयंप्राणायामस्त्वनस्थिके २७५

रणात् यदातुधान्यंदेयंतदाष्टमुष्टिदेयं अष्टमुष्टिभवेत्किंचिदितिस्मरणात् एतच्चानुक्तनिष्कृतिप्राणिवधविषयम् यत्रतुप्रायश्चि-
त्तविशेषःश्रूयतेतत्रसएवभवति यथाहपराशरःहंससारसचक्राह्वक्रौंचकुक्कुटघातकः मयूरमेषौहत्वाचएकभक्तेनशुध्यति मु
द्गंचटिट्टिभंचैवशुकंपारावतंतथा आडिकांचबकंहत्वाशुध्येद्धैनक्तभोजनात् चाषकाककपोतानांसारित्तित्तिरघातकः अंतर्जले
उभेसंध्येप्राणायामेनशुध्यति गृध्रश्येनविहंगानामुलूकस्यचघातकः अपक्वाशीदिनंतिष्ठेत्द्वौकालौमारुताशनः हत्वासुखक-

मार्जारसर्पाजिगरडुंडुभान् प्रत्येकंभोजयेद्विप्रान् लोहदंडश्चदक्षिणा मेधाकच्छपगोधानांशशशल्यकघातकः वृंताकफलगुंजाशीअ
होरात्रेणशुद्ध्यति मृगरोहिवराहाणामविकाबस्तघातने वृकजंबूकऋक्षाणांतरक्षूणांचघातकः तिलप्रस्थंसमोदद्याद्वायुभक्षोदिनत्र
यम् गजमेषतुरंगोष्ट्रगवयानांनिपातने प्रायश्चित्तमहोरात्रंत्रिसंध्यंचावगाहनम् खरवानरसिंहानांचित्रकव्याघ्रघातकः शुद्धि
मेतित्रिरात्रेणब्राह्मणानांचभोजनैरिति एवमन्येषामपिस्मृतिवचसांदेशकालाद्यपेक्षयाविषयव्यवस्थाकल्पनीया इतिहिंसाप्राय
श्चित्तप्रकरणम् २७५ इंधनार्थंद्रुमच्छेदइत्युपपातकोद्देशेपठितंहिंसाप्रसंगलाभेनतद्युक्तमपठितमपिअपकृष्यतत्रप्रायश्चित्तमा

वृक्षगुल्मलतावीरुच्छेदनेजप्यमृक्शतम् स्यादोषधिवृथाच्छेदेक्षीराशीगोनुगोदिनं २७६

ह फलदानामाम्रपनसादीनांचवृक्षाणांगुल्मादीनांचयज्ञादीष्टार्थंविनाछेदनेऋचांगायत्र्यादीनांशतंजप्तव्यम् ओषधीनांतुग्राम्या
रण्यानांवृथैवच्छेदनेदिनंकृत्स्नमहर्गवांपरिचर्यार्थमनुगम्यानेक्षीरंपिबेत् आहारांतरपरित्यागेन पंचयज्ञार्थत्वेतुनदोषः एतच्च
फलादिद्वारेणोपयोगिषुद्रष्टव्यम् फलदानांतुवृक्षाणांच्छेदनेजप्यमृक्शतम् गुल्मवल्लीलतानांतुपुष्पितानांचवीरुधामितिस्मरणा
त् दृष्टार्थत्वेपिकर्षणांगभूतहलाद्यर्थत्वेननदोषः तद्दोषस्यखलुयज्ञेनपरिहार्यत्वात् फलपुष्पोपभोग्यान्पादपान्नहिंस्यात्कर्षणा

करणार्थं चोपहन्यादिति वसिष्ठस्मरणात् यत्र तु स्थानविशेषाद्दण्डाधिक्यं तत्र प्रायश्चित्ताधिक्यमपि कल्पनीयम् तदुक्तम् चैत्य-
श्मशानसीमासु पुण्यस्थाने सुरालये जातद्रुमाणां द्विगुणो दमो वृक्षे तु विश्रुते इति अयं च त्र्यहः कृच्छ्रश्च तज्जपो द्विजातिविषयो न पुनः शू-
द्रादिविषयः तेषां जपेऽनधिकारात् अतस्तेषां दण्डानुसारेण द्विरात्रादिकं कल्पनीयम् उपपातकमध्ये विशेषतः पाठस्यानर्थक्यप-
रिहारार्थमुपपातकसाधारणप्रायश्चित्तमप्यत्र भवति एतच्चागुरुत्वादभ्यासविषयं कल्प्यम् इति द्रुमच्छेदः २७६ पुंश्चलीवा-

पुंश्चलीवानरखरैर्दष्टश्वोष्ट्रादिवायसैः प्राणायामं जले कृत्वा घृतं प्राश्य विशुध्यति २७७

नरादिवधप्रायश्चित्तप्रसंगात्तद्दंशनिमित्तं प्रायश्चित्तमाह पुंश्चल्यादयः प्रसिद्धाः एतैर्दष्टः पुमान् जले प्राणायामं कृत्वा घृतं प्राश्य वि-
शुध्यति आदिग्रहणाच्छृगालादीनां ग्रहणम् यथाह मनुः श्वसृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च नराश्वोष्ट्रवराहैश्च प्राणायामेन शुध्य-
तीति अयं च घृतप्राशो भोजनप्रत्याम्नायो द्रष्टव्यः प्रायश्चित्तानां तपोरूपत्वेन शरीरसंतापनार्थत्वात् एतदशक्तविषयम् श्वसृगालमृगम-
हिषाजाविकखरकरभनकुलमार्जारमूषिकाप्लवककाकपुरुषदष्टानामापो हिष्ठेत्यादिस्नानं प्राणायामत्रयं चेति सुमन्तुवचनम् तन्नाभेरधः

प्रदेशईषद्दृष्टविषयम् यत्त्वंगिरोवचनम् ब्रह्मचारीश्वनादष्टस्त्र्यहंसायं पिबेत्पयः गृहस्थश्चेद्विरात्रंतु एकाहंयोग्निहोत्रवान् नाभेरूर्ध्वं
तुदष्टस्यतदेवद्विगुणंभवेत् स्यादेतद्विगुणंवक्त्रेमस्तकेचचतुर्गुणमिति तत्सम्यग्दष्टविषयम् क्षत्रियवैश्ययोस्तु पादपादन्यूनंकल्प-
नीयम् शूद्रस्यतु शूद्राणांचोपवासेनश्वद्भिर्दिनेनवापुनः गांवादद्याद्वृषंचैकं ब्राह्मणायविशुद्धयेइति बृहदंगिरसोक्तंद्रष्टव्यम् य
त्तुवसिष्ठवचनम् ब्राह्मणस्तुशुनादष्टोनदींगत्वासमुद्रगाम् प्राणायामशतंकृत्वाघृतंप्राश्यविशुद्ध्यतीति तदुत्तमांगदंशविषयम्
ब्राह्मणीतुशुनादष्टाजंबूकेनवृकेणवा उदितंग्रहनक्षत्रं दृष्ट्वासद्यःशुचिर्भवेदिति पराशरोक्तंद्रष्टव्यम् कृच्छ्रादिव्रतस्थायाःपुनस्ते
नैवविशेषोदर्शितः त्रिरात्रमेवोपवसेच्छुनादष्टातुसव्रता सघृतंयावकंभुक्त्वाव्रतशेषंसमापयेदिति रजस्वलायामपिविशेषःपुल-
स्त्येनदर्शितः रजस्वलायदादष्टाशुनाजंबूकरासभैः पंचरात्रंनिराहारापंचगव्येनशुद्ध्यति ऊर्ध्वंतुद्विगुणंनाभेर्वक्त्रेतुत्रिगुणंतथा
चतुर्गुणंस्मृतंमूर्ध्निदष्टेन्यत्रापुनतिर्भवेदिति अन्यत्ररजस्वलावस्थायाः यस्तुश्वादिभिर्घ्राणादिनोपहन्यते तस्यशातातपेनविशेषउ-
क्तः शुनाघ्रातावलीढस्यनखैर्विलिखितस्यच अद्भिःप्रक्षालनंशौचमग्निनाचोपचूलनमिति उपचूलनंतापनमिति यदाश्वादिदं
शशस्त्रघातादिजनितव्रणेकृमयउत्पद्यंते तदामनुनाविशेषउक्तः ब्राह्मणस्यव्रणद्वारेपूयशोणितसंभवे कृमिरुत्पद्यतेयस्यप्रायश्चि
त्तंकथंभवेत् गवांमूत्रपुरीषेणत्रिसंध्यंस्नानमाचरेत् त्रिरात्रंपंचगव्याशीत्वधोनाभ्याविशुद्ध्यति नाभिकंठांतरोद्भूतेव्रणेचोत्पद्यते
कृमिः षड्रात्रंतुत्र्यहंपंचगव्याशनमितिस्मृतम् तत्रश्वादिदंशव्रणेतद्दंशप्रायश्चित्तानंतरमिदंकर्तव्यम् शस्त्रादिजनितव्रणेएतदेव

त्र्यहं पंचगव्याशनादिकमितिविशेषः क्षत्रियादिषुतु प्रतिवर्णं पादपादन्ह्रासः कल्पनीयः २७७ शरीरत्वग्धातुच्छेदकदंश प्रायश्चित्त प्रसंगा च्छरीरचरमधातुविच्छेदकस्कंदने प्रायश्चित्तमाह यदिकथंचित्स्त्रीसंभोगगमनमंतरेणापि हठाच्चरम धातुर्विसृष्टस्तदा तत्स्कन्नं रेतस्त- न्मेद्यरेतः पृथिवीं॰ अस्कांपुनर्मामैत्विंद्रियमित्याभ्यांमंत्राभ्यामभिमंत्रयेत् तेनचाभिमंत्रितेनरेतसास्तनयोर्भ्रुवोश्चमध्यमुपकनिष्ठिकयास्पृ- शेत् अन्येतुस्कन्नरेतसोशुचित्वेनस्पर्शकर्मण्ययोग्यत्वात्तेनेनत्वनामिकासाहचर्याद्बुद्धिस्थांगुष्ठपरत्वेनव्याचक्षते तेनांगुष्ठेनानामिकया चेति अंगुष्ठपदग्रहणे वृत्तभंगप्रसंगात् तेनेतिनिर्दिष्टमिति तदसत् अंगुष्ठस्याबुद्धिस्थत्वात् नचशब्दसंनिहितपरित्यागेनार्थबुद्धिस्थ

यन्मेद्यरेतइत्याभ्यांस्कन्नंरेतोभिमंत्रयेत् स्तनांतरंभ्रुवोर्मध्येतेनानामिकयास्पृशेत् २७८

स्यान्वयोयुक्तः तदुक्तं गम्यमानस्यचार्थस्यनैवदृष्टंविशेषणम् शब्दांतरैर्विभक्त्यावाधूमोयंज्वलतीतिवदिति नचरेतसोशुचित्वेनस्प र्शायोग्यत्वम् विधानादेवप्रायश्चित्तार्थरूपस्पर्शयोग्यत्वमवगम्यताम् प्रायश्चित्तरूपपानइवसुरायाः इदंप्रायश्चित्तंगृहस्थस्यैवाका मतःस्कन्नविषयम् ब्रह्मचारिणःस्वप्नेजागरणावस्थायांचगुरुप्रायश्चित्तस्यदर्शनात् यत्तुमनुवचनम् गृहस्थःकामतःकुर्यादितसः स्कंदनभुवि सहस्रंतुजपेद्देव्याः प्राणायामैस्त्रिभिःसहेति तत्कामकारविषयम् २७८ ५ ५ ५ ५ ५

किंच स्वीयंप्रतिबिंबमंबुगतंचेत् दृष्टंतदामयितेजइंद्रियमितिमंत्रंजपेत् अशुचिद्रव्यदर्शनेपुनःसावित्रींसवितृदेवतांतत्सवितुरि-
त्यादिकामृचंजपेत् तथावाक्पाणिपादादिचापल्यकरणेतामेवजपेत् अनृतवचनेच एतत्कामकारेद्रष्टव्यम् अकामकृतेतु सुप्त्वा
भुक्त्वाचक्षुत्वाचनिष्ठीव्याप्यनृतानिच पीत्वापोध्येयमानस्यआचमेत्प्रयतोपिसन्नितिमनूक्तमाचमनंद्रष्टव्यम् यत्तुसंवर्त्तवचनम्
कृतेनिष्ठीवनेचैवदंतश्लिष्टेतथानृते पतितानांचसंवादेदक्षिणंश्रवणंस्पृशेत् नदल्पप्रयोजनेजलाभावेवाद्रष्टव्यम् स्त्रीशूद्रविट्

मयितेजइतिच्छायांस्वांदृष्ट्वांबुगतांजपेत् सावित्रीमशुचौदृष्टेचापल्येचानृतेपिच २७९

क्षत्रवधानंतरंनिंदितार्थोपजीवनंपठितम् तत्रचमनुयोगीश्वरप्रोक्तान्युपपातकप्रायश्चित्तानिजातिशक्तिगुणाद्यपेक्षयावेदितव्यानि
नास्तिक्येपितानिप्रायश्चित्तानितथैवप्रयोज्यानि नास्तिकशब्देनचवेदनिंदातेनजीवनमुच्यते अत्रोभयत्रापिवसिष्ठेनप्रायश्चित्ता
तरमप्युक्तम् नास्तिकःकृच्छ्रंद्वादशरात्रंचरित्वाविरमेन्नास्तिक्यान्नास्तिकवृत्तिस्त्वतिकृच्छ्रमिति एतच्चसकृत्करणविषयं उपपा-
तकप्रायश्चित्तान्यभ्यासविषयाणि यच्चशंखेनोक्तं नास्तिकोनास्तिकवृत्तिःकृतघ्नःकूटव्यवहारीमिथ्याभिशंसीइत्येतेपंचसंवत्स

रंब्राह्मणगृहेभैक्ष्यंचरेयुरिति यच्चहारीतेननास्तिकोनास्तिकवृत्तिरिति प्रक्रम्य पंचतापोभ्रावकाशजलशयनान्यनुतिष्ठेयुरितियी-
ष्मवर्षाहेमंतेष्विति तदुभयमप्यत्यंताभिनिवेशेनबहुकालाभ्यासविषयम् २७९ नास्तिक्यानंतरंव्रतलोपश्चेत्युक्तं तत्रावकीर्णिल-
स्याप्रसिद्धत्वात्तल्लक्षणकथनपूर्वकंप्रायश्चित्तमाह ब्रह्मचार्युपकुर्वाणकः नैष्ठिकश्चासौयोषितंगत्वावकीर्णीभवति चरमधा-
तोर्विसर्गोवकीर्णंतद्यस्यास्तीतिसोवकीर्णीसनिर्ऋतिदेवत्येनगर्दभपशुनायागंकृत्वाविशुध्यति गर्दभस्यपशुत्वेसिद्धेपिपुनःपशुग्र-

अवकीर्णीभवेद्गत्वाब्रह्मचारीतुयोषितम् गर्दभंपशुमालभ्यनैर्ऋतंसविशुध्यति २८०

हणमथपशुकल्पइत्याश्वलायनादिगृह्योक्तपशुधर्मप्राप्त्यर्थं एतच्चारण्येचतुष्पथेलौकिकाग्नौकार्यम् ब्रह्मचारीचेत्स्त्रियमुपेयादर-
ण्येचतुष्पथेलौकिकेग्नौरक्षोदैवतंगर्दभंपशुमालभेतेतिवसिष्ठस्मरणात् तथाराज्ञावेकाक्षिविकलेनयष्टव्यम् तथाचमनुः अव-
कीर्णीतुकालेनरासभेनचतुष्पथे पाकयज्ञविधानेनयजेतनिर्ऋतिंनिशीति पशोरभावेचरुणायष्टव्यम् निर्ऋतिंवाचरुंनिर्वपेत्
तस्यजुहुयात् कामायस्वाहा कामकामायस्वाहा निर्ऋत्यैस्वाहा रक्षोदेवताभ्यःस्वाहेतिवसिष्ठस्मरणात् एतच्चाशक्तविषयम्

शक्तस्य पुनर्गर्दभेनावकीर्णी निर्ऋतिं चतुष्पथे यजेत् तस्याजिनमूर्ध्ववालं परिधाय लोहितपात्रे सप्तगृहान् भैक्ष्यं चरेत् कर्माचक्षाणः संव-
त्सरेण शुध्यतीति गौतमोक्तो वार्षिकतपः समुचितः पशुयागश्च रुर्वा द्रष्टव्यः तथा त्रिषवणस्नानमेककालभोजनं च द्रष्टव्यम् एतस्मिन्ने
न सिप्रासे वसित्वा गर्दभाजिनम् सप्तागारान् चरन्भैक्ष्यं स्वकर्म परिकीर्त्तयन् तेभ्यो लब्धेन भैक्ष्येण वर्त्तयन्नेककालिकम् उपस्पृशंस्त्रिष
वणमब्देन स विशुध्यतीति मनुस्मरणात् इदं च वार्षिकम् श्रोत्रियब्राह्मणपत्न्यां वैश्यायां च श्रोत्रियपत्न्यां द्रष्टव्यम् यदा तु गुणवत्यो-
र्ब्राह्मणीक्षत्रिययोः श्रोत्रियभार्ययोरेव करोति तदा त्रिवार्षिकं द्विवार्षिकं च क्रमेण द्रष्टव्यम् यथाहतुः शंखलिखितौ गुप्तायां वैश्याया
मवकीर्णः संवत्सरं त्रिषवणमनुतिष्ठेत् क्षत्रियायां द्वे वर्षे ब्राह्मण्यां त्रीणि वर्षाणीति यत्त्वंगिरोवचनम् अवकीर्णनिमित्तं तु ब्रह्म
हत्याव्रतं चरेत् चीरवासास्तु षण्मासांस्तथा मुच्येत किल्बिषादिति तदकामतो मानवादिविषयमीषद्व्यभिचारिणीविषयं वा अत्य
न्तव्यभिचारासु पुनः स्वैरिण्यां वृषल्यामवकीर्णः सचैलस्नानमुदकुंभं दद्याद्ब्राह्मणाय वैश्यायां चतुर्थकालाहारो ब्राह्मणान् भोजये
त् यवसभारं च गोभ्यो दद्यात् क्षत्रियायां त्रिरात्रमुपोषितो घृतपात्रं दद्यात् ब्राह्मण्यां षड्रात्रमुपोषितो गां च दद्यात् गोष्ववकीर्णः प्रा
जापत्यं चरेत् षंढायामवकीर्णः पलालभारं सीसमाषकं च दद्यादिति शंखलिखितोदितं वेदितव्यम् एतच्चावकीर्णिप्रायश्चित्तं त्रैवर्णिक
स्यापि ब्रह्मचारिणः समानम् अवकीर्णी द्विजो राजा वैश्यश्चापि खरेण तु इष्ट्वा भैक्ष्याशिनो नित्यं शुध्यंत्यब्दात्समाहिता इति शाण्डिल्य
स्मरणात् यदा स्त्रीसंभोगमंतरेण कामतश्चरमधातुं विसृजति दिवा च स्वप्ने वा विसृजति तदा नैर्ऋतयागमात्रं द्रष्टव्यम् एतदेव रेतसः

प्रयत्नोत्सर्गेदिवास्वप्नेचेति वसिष्ठेन यागमात्रस्यातिदिष्टत्वात् व्रतांतरेषु च कृच्छ्रचांद्रायणादिष्विति अनिदिष्टब्रह्मचर्येषुचस्कंदनेसत्येत-
देवयागमात्रं व्रतांतरेषुचैवमितितेनैवातिदिष्टत्वात् स्वप्नस्कंदनेतुमनूक्तंद्रष्टव्यम् स्वप्नेसिक्त्वाब्रह्मचारीद्विजः शुक्रमकामतः स्नात्वा-
र्कमर्चयित्वात्रिःपुनर्मामित्यृचंजपेदिति वानप्रस्थादीनांचेदमेवब्रह्मचर्यखंडनेअवकीर्णिव्रतंकृच्छ्रत्रयाधिकंभवति वानप्रस्थोयतिश्चै-
वस्कंदनेसतिकामतः पराकत्रयसंयुक्तमवकीर्णिव्रतंचरेदितिशांडिल्यस्मरणात् यदागार्हस्थ्यपरिग्रहेणसंन्यासात्प्रच्युतोभवतितदा
संवर्त्तोक्तंद्रष्टव्यम् संन्यस्यदुर्मतिःकश्चित्प्रत्यापत्तिंचरेद्यदि सकुर्यात्कृच्छ्रमश्रांतःषण्मासात्प्रत्यनंतरमिति प्रत्यापत्तिर्गार्हस्थ्यपरि-
ग्रहः अतएववसिष्ठः यस्तुप्रव्रजितोभूत्वापुनःसेवेतमैथुनम् षष्टिवर्षसहस्राणिविष्ठायांजायतेकृमिरिति तथाचपराशरः यःप्रत्य
वसितोविप्रोप्रव्रज्यातोविनिर्गतः अनाशकोनिवृत्तश्चगार्हस्थ्यंचेच्चिकीर्षति सचरेत्त्रीणिकृच्छ्राणित्रीणिचांद्रायणानिच जातकर्मादि
भिःसर्वैःसंस्कृतःशुद्धिमाप्नुयात् नचब्राह्मणस्यषाण्मासिकःकृच्छ्रःपुनःसंन्यासः क्षत्रियस्यचांद्रायणत्रयम् वैश्यस्यकृच्छ्रत्रयमिति
व्यवस्था अथवाब्राह्मणस्यैवशक्तिसकृदभ्यासाद्यपेक्षयाव्यवस्थितप्रायश्चित्तत्रयंद्रष्टव्यम् तथामरणसंन्यासिनामपियमेनापिप्रा
यश्चित्तमुक्तम् जलाग्न्युद्बंधनभ्रष्टाःप्रव्रज्यानाशकच्युताः विषप्रपतनप्रायःशस्त्रघातच्युताश्चये नैवैतेप्रत्यवसिताःसर्वलोकब-
हिष्कृताः चांद्रायणेनशुद्ध्यंतितप्तकृच्छ्रद्वयेनचेति इदंचचांद्रायणतप्तकृच्छ्रद्वयात्मकंप्रायश्चित्तद्वयंशक्त्याद्यपेक्षयाव्यवस्थितंवि
ज्ञेयं यदातुशस्त्रघातहताश्चेतिपाठः तदात्मत्यागाद्यशास्त्रीयमरणनिमित्तस्तत्सुतादेरुपदेशोद्रष्टव्यः यत्तुनवसिष्ठेनोक्तं जीवन्ना

त्मत्यागी कृच्छ्रं द्वादशरात्रं चरेत् त्रिरात्रं चोपवसेदिति तदप्यध्यवसिता शास्त्रीयमरणस्यैव कथंचिज्जीवनशक्त्यपेक्षया द्रष्टव्यं अथ वाध्यवसायमात्रे त्रिरात्रं शस्त्रादिक्षतस्य द्वादशरात्रमिति व्यवस्था इदं चावकीर्णिप्रायश्चित्तं गुरुदारतत्समव्यतिरिक्तागम्यागमनविषयम् तत्र गुरुतरप्रायश्चित्तस्य दर्शितत्वात् न च लघुनावकीर्णिव्रतेन द्वादशवार्षिकाद्यपनोद्यमहापातकदोषनिर्हरणमुचितम् न च ब्रह्मचारित्वोपाधिकं लघुप्रायश्चित्तविधानमुक्तम् आश्रमांतराणां द्वैगुण्यादिवृद्धेर्ब्रह्महत्याप्रकरणे दर्शितत्वात् न चागम्यागमनप्रायश्चित्तं पृथक् कर्त्तव्यम् ब्रह्मचारिणो योषिति ब्रह्मचर्यस्खलनस्यागम्यागमनेनांतरीयकत्वात् अतोन्यत्रापि यस्मिन्निमित्ते यन्निमित्तांतरं समं न्यूनं वावश्यंभावि तन्न पृथक् नैमित्तिकं प्रयुक्तं यथा अवगूर्य चरेत् कृच्छ्रमतिकृच्छ्रं निपातने कृच्छ्रातिकृच्छ्रो सृक्पाते कृच्छ्रोभ्यंतरशोणिते इत्यत्र शोणितोत्पादननिमित्ते वगूरणनिमित्तपातलक्षणंनिमित्तद्वयमवश्यंभावि स्वनैमित्तिकं कृच्छ्रमतिकृच्छ्रं च न प्रयुक्तम् अत एवमन्यत्राप्यूहनीयम् यत्र पुनर्निमित्तानामंतर्भावनियमो नास्ति तत्र पुनर्नैमित्तिकानि पृथक् प्रयुज्यंते निमित्तानि यदा पर्वणि परभार्यां रजस्वलां तैलाभ्यक्तो दिवा जले गच्छतीति ननु ब्रह्मचारिणो योषिति ब्रह्मचर्यस्खलनस्यागम्यागमनांतरीयकत्वं नास्त्येव पुत्रिकागमनेऽगम्यागमनदोषाभावात् तथाहि न तावत्पुत्रिका कन्याक्षतयोनित्वात् नापि परभार्या प्रदानाभावात् नापि वेश्या अतद्वृत्तित्वात् नापि विधवा भर्तृमरणाभावात् अतः पुत्रिकायाः क्वाप्यनंतर्भावादप्रतिषिद्धेति तत्रैव विप्लुतस्य केवलमवकीर्णिव्रतम् अन्यविप्लुतस्य तु निमित्तांतरसंनिपातादवकीर्णिव्रते नैमित्तिकांतरमपि प्रयोक्तव्य

भिति तदसत् पुत्रिकाया अपि परभार्यात्वे तद्भावात् प्रदानाभावेपि विवाहसंस्कारेण संस्कृतत्वात् गांधर्वादिपरिणीतावत् न-
चयस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशंकयेति प्रतिषेधात्सगोत्रास्विव भार्यात्वं नोपप
द्यत इति वाच्यम् दृष्टार्थत्वात्प्रतिषेधस्य व्यंग्यांग्यादिप्रतिषेधवत् दृष्टार्थत्वं च पुत्रिकाधर्मशंकयेति हेतूपादानात् न च पुत्रार्थमेव परिणय
नम् अपितु धर्मार्थमपि अतश्चोत्पादितपुत्रस्य मृतभार्यस्य धर्मार्थं पुत्रिकापरिणयने को विरोधः प्रपंचितं चैतत्पुरस्तादित्यलमतिप्रसंगेन

भैक्ष्याग्निकार्ये त्यक्त्वा तु सप्तरात्रमनातुरः कामावकीर्ण इत्याभ्यां जुहुयादाहुतिद्वयम् २८१

तस्माद्ब्रह्मचारिणो योषिति ब्रह्मचर्यस्खलनस्यागम्यागमनानंतरीकत्वान्न पृथङ्नैमित्तिकं प्रयोक्तव्यमिति सुष्ठूक्तम् २८० ब्रह्मचा
रिप्रायश्चित्तप्रसंगादन्यदप्यनुपपातकप्रायश्चित्तमाह यस्त्वनातुर एव ब्रह्मचारी निरंतरं सप्तरात्रं भैक्ष्यमग्निकार्यं वा त्यजति असौ
कामावकीर्णोस्म्यवकीर्णोस्मि काम कामाय स्वाहा कामावपन्नोस्म्यवपन्नोस्मि काम कामाय स्वाहा इत्येताभ्यां मंत्राभ्यामाहुती हुत्वा स
मासिंचतु मरुतः समिंद्रः संबृहस्पतिः संमायमग्निः सिंचतां यशसा ब्रह्मवर्चसेनेत्यनेन मंत्रेणाग्निमुपतिष्ठेत् एवं च गुरुपरिचर्यादि

गुरुतरकार्यव्यग्रतया अकरणे द्रष्टव्यम् यदा त्वव्यग्र एव भैक्ष्याग्निकार्ये त्यजति तदा अकृत्वा भैक्ष्यचरणमसमिध्य च पावकं अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेदिति मानवं द्रष्टव्यम् यज्ञोपवीतादिनाशे तु हारीतेन प्रायश्चित्तमुक्तम् मनोव्रतपतीभिश्चतस्र आज्याहुती-र्हुत्वा पुनर्यथार्थं प्रतीयादसकृत् असद्भैक्ष्यभोजने भ्युदितेभिनिर्मुक्ते वांते दिवास्वप्ने नग्नस्त्रीदर्शने नग्नस्वापे श्मशानमाक्रम्य हयादी-नारुह्य पूज्यातिक्रमे चैताभिरेव जुहुयादग्निसमिंधने स्थावरसरीसृपादीनां वधे यद्देवा देवहेडनमिति कूष्मांडीभिस्त्रिरात्रमाज्यं जुहुया

उपस्थानं ततः कुर्यात्समासिंचत्वनेन तु मधुमांसाशने कार्यः कृच्छ्रः शेषव्रतानि च २८२
प्रतिकूलं गुरोः कृत्वा प्रसाद्यैव विशुध्यति कृच्छ्रत्रयं गुरुः कुर्यान्म्रियते प्रहितो यदि २८३

त् मणिवासोगवादीनां प्रतिग्रहे सावित्र्यष्टसहस्रं जपेदिति मनोव्रतपतीभिरिति मनोज्योतिरित्यादि मनोलिंगाभिस्त्वमग्ने व्रतपा असी-त्यादिव्रतलिंगाभिरित्यर्थः यथार्थं प्रतीयादिति उपनयनोक्तमार्गेण समंत्रकं गृण्हीयादित्यर्थः यज्ञोपवीतं विना भोजनादिकरणे तु ब्रह्म-सूत्रं विना भुंक्ते विण्मूत्रं कुरुतेथवा गायत्र्यष्टसहस्रेण प्राणायामेन शुध्यतीति मरीच्युक्तं द्रष्टव्यम् किंच ब्रह्मचारिणा अमत्या मधुमांस-भक्षणे कृच्छ्रः कार्यः तदनंतरमवशिष्टानि व्रतानि समापयेत् एतच्चाशिष्टभोजनार्हशशादिमांसभक्षणविषयम् ब्रह्मचारी चेन्मांसम

श्नीयादुच्छिष्टभोजनीयं कृच्छ्रं द्वादशरात्रं चरित्वा व्रतशेषं समापयेदिति वसिष्ठस्मरणात् द्वादशरात्रग्रहणं तु मतिपूर्वाभ्यासापेक्षया तिकृच्छ्रप
राकादेरपि प्राप्त्यर्थं यदा तु मांसैकायनो घव्याध्यभिभूतस्तदा मांसं गुरोरुच्छिष्टं कृत्वा भक्षणीयम् स चेद्याधीयीत कामं गुरोरुच्छिष्टं भैष
जार्थं सर्वं प्राश्नीयादिति नेनैवोक्तत्वात् सर्वग्रहणं मांसलशुनाद्यभक्ष्यमात्रसंग्रहणार्थम् तद्भक्षणेन चापगतव्याधिरादित्यमुपतिष्ठेत
तथा च बौधायनः येनेच्छेच्चिकित्सितुं स यदागदो भवति तदोत्थायादित्यमुपतिष्ठेत हंसः शुचिषदिति मधुनोप्यज्ञानतः प्राशनोपपत्तौ
न दोषः अकामोपनतं मधु वाजसनेयके न दुष्यतीति वसिष्ठस्मरणात् अन्यत्र सूतकान्नादिभक्षण प्रायश्चित्तं त्वभक्ष्यप्रायश्चित्तप्रकर
णे वक्ष्यामः आज्ञाप्रतिघातादिना गुरोः प्रतिकूलमाचरन् पादप्रणिपातादिना गुरुं प्रसाद्य विशुध्यति ब्रह्मचारिप्रायश्चित्तप्रसङ्गाद्गुरो
रपि प्रायश्चित्तमाह यस्तु गुरुर्घोरोरगव्याघ्रादिभयाकुलप्रदेशे सांद्रतरांधकाराकुलितनिशीथावसरे कार्यार्थं शिष्यं प्रेरयति स च तथा प्रे
रितो दैवान्मृतस्तदा स गुरुः कृच्छ्रादीनां प्राजापत्यादीनां त्रयं कुर्यात् न पुनस्त्रयः प्राजापत्याः तथा सति पृथङ्निवेशिनी संख्यानुपपन्ना-
स्यात् न चैकादश प्रयाजान्यजतीतिवदावृत्त्यपेक्षा संख्येति चतुरस्रम् स्वरूपपृथक्त्वे संभवत्यावृत्त्यपेक्षाया अन्याय्यत्वात् यदी यस्तु
त्यन्नगता संख्या स्यात्तदा स्यादपि कथंचिदावृत्त्यपेक्षा किं तूत्पत्तिगतेयम् अतस्तिस्र आहुतीर्जुहोतीतिवत्स्वरूपपृथक्त्वापेक्षयैव त्रित्व
संख्याघटना युक्ता २८१ २८२ २८३ सकलहिंसाप्रायश्चित्तापवादमाह आयुर्वेदोपदेशानुसारेणौषधपथ्यान्नप्रदानादिभि
श्चिकित्सकादिना क्रियमाण उपकारो यस्य ब्राह्मणादेस्तस्मिन् कथंचिन्मृतेपि पातकं नैव भवति विप्रग्रहणं प्राणिमात्रोपलक्षणार्थम्

अतएवयंत्रणेगोचिकित्सार्थेगूढगर्भविमोचने यत्नेकृतेविपत्तिःस्यान्नसपापेनलिप्यतइत्यादिसंवर्त्ताद्यैरुक्तम् एतच्चप्रपंचितंप्राक्
मिथ्याभिसर्गप्रायश्चित्तप्रसंगाद्विवक्षयायावदुपयोगार्थवादंतावदाह यस्तुपरोत्कर्षेर्ष्याजनितरोषकलुषितांतःकरणोजनसमक्षं
मिथ्याभिशापंब्रह्महत्यादिकमनेनकृतमितिआरोपयतितस्यतदेवद्विगुणंभवतियस्तुविद्यमानमेवदोषमलोकविदितंजनसमक्षंप्रका

क्रियमाणोपकारेतुमृतेविप्रेनपातकम् मिथ्याभिशंसिनोद्वेषोद्विःस
माभूतवादिनः २८४ मिथ्याभिशस्तदोषंचसमादत्तेमृषावदन्

शयतितस्यतत्पातकिंसमदोषभाक्त्वम् तथापस्तंबः दोषंबुध्वानपूर्वःपरेभ्यःपतितस्यसमाख्यातास्यात् परिहरेच्चैनंधर्मेष्विति नके
वलमिथ्याभिशंसीद्विगुणदोषभाक् अपितुमिथ्याभिशस्तस्ययदन्यद्दुष्कृतजातंतदपिसमादत्तइतिवक्ष्यमाणप्रायश्चित्तेयेअर्थवादाः
नपुनःपापद्वैगुण्यादिप्रतिपादनमात्रंविवक्षितं निमित्तस्यलघुप्रायश्चित्तस्योपलक्ष्यमाणत्वात् कृतनाशाकृताभ्यागमप्रसंगाच्च ७८

तत्र प्रायश्चित्तमाह यस्तु महापापेन ब्रह्महत्यादिना गोवधाद्युपपापेन वा मृषैव परमभिशंसति स मासं याबज्जलाशनो जपशीलो जितेंद्रि
यश्च भवेत् जपश्चास्तु द्वीवतीभिः कार्यः ब्राह्मणमनृतेनाभिशंस्य पतनीयेनोपपातकेन वा मासमबूभक्षः शुद्धवतीभिरावर्त्तयेदश्वमेधा
वभृथं वा गच्छेदिति वसिष्ठस्मरणात् महापापोपग्रहणमन्येषामप्यतिपातकादीनामुपलक्षणम् एतच्च ब्राह्मणस्यैव ब्राह्मणेनाभिशं
सने कृते द्रष्टव्यम् यदा तु ब्राह्मणः क्षत्रियादेरभिशंसनं करोति क्षत्रियादिर्वा ब्राह्मणस्य तदा प्रतिलोमापवादेषु द्विगुणस्त्रिगुणो दमः

महापापोपपापाभ्यां योभिशंसेन्मृषा परम् अब्भक्षो मासमासीत स जापी नियतेंद्रियः २८५

वर्णानामानुलोम्येन तस्मादर्धार्धहानित इति दंडानुसारेण वृद्धिह्रासौ कल्पनीयौ भूताभिशंसिनस्तु पूर्वोक्तार्थवादानुसारेण च तदर्धं कल्प
नीयं तथातिपातकशंसिन एवैतदेव व्रतं पादोनम् पातकाभिशंसिनस्त्वर्धम् उपपातकाभिशंसिनस्तु पादः तुरीयो ब्रह्महत्यायाः क्षत्रि
यस्य वधे स्मृत इत्युपपातकभूत क्षत्रियादिवधे महापातकप्रायश्चित्तत्तुरीयांशस्य दर्शनात् एवं प्रकीर्णाभिशंसिनोपि ततोन्यूनं कल्पनी
यम् शक्तिं चावेक्ष्य पापं च प्रायश्चित्तं प्रकल्पयेदिति स्मरणात् यत्तु शंखलिखिताभ्यां नास्तिकः कृतघ्नः कूटव्यवहारी ब्राह्मणवृत्तिघ्नो

मिथ्याभिशंसाचेत्येते षड्वर्षाणि ब्राह्मणगृहेषु भैक्ष्यं चरेयुः संवत्सरं धौतभैक्ष्यमश्नीयुः षण्मासान्वा गा अनुगच्छेयुरिति गुरुप्रायश्चित्तमुक्तं न द
भ्यासतारतम्यापेक्ष न्यायोजनीयम् २८४ २८५ अभिशंसिप्रायश्चित्तप्रसंगादभिशस्तप्रायश्चित्तमाह यः पुनर्मिथ्याभिशस्तः स कृच्छ्रं
प्राजापत्यं चरेत् अग्निदैवत्येन वा पुरोडाशेन यजेत् वायुदैवत्येन वा पशुना एषां च पक्षाणां शक्तिसंभवाद्यपेक्षया व्यवस्था यत्तु वसिष्ठेन मा
सम् अब्भक्षणमुक्तमेतेनैवाभिशस्तो व्याख्यात इति तदभिशस्तस्यैव किंचित्कालमकृतप्रायश्चित्तस्य सतो द्रष्टव्यम् संवत्सराभिशस्तस्य दु

अभिशस्तो मृषा कृच्छ्रं चरेदाग्नेयमेव च निर्वपेत्तु पुरोडाशं वायव्यं पशुमेव वा २८६

ष्टस्य द्विगुणो दम इति दंडातिरेकद
र्शनात् यत्तु पैठीनसिनोक्तं अनृतेनाभिशस्यमानः कृच्छ्रं चरेन्मासं पातकेषु महापातकेषु द्विमासमिति तदपि वासिष्ठेन समानविषयं
वाशक्तिविषयं वा एवमन्येषामप्युच्चावचप्रायश्चित्तानामभिशस्तविषयाणां कालशक्त्याद्यपेक्षया व्यवस्था विज्ञेया यथाह मनुः षष्ठान्नका
लता मासं संहिताजप एव वा होमाश्च शाकला नित्यमपंक्त्यानां विशोधनमिति अपंक्त्यानां मध्ये अभिशस्तादयः पठिताः यद्यप्यत्राभिशस्त
स्य निषिद्धाचरणं नोपलभ्यते तथापि मिथ्याभिशस्तलिंगानुमित प्राग्भवीयनिषिद्धाचरणपूर्वनिबंधनमिदं प्रायश्चित्तं कृमिदुष्टानामिवेति न विरोधः २८६

किंच यस्तुनियोगंविनाभ्रातुर्ज्येष्ठस्यकनिष्ठस्यवाभार्यांगच्छतिसचांद्रायणंचरेत् एतच्चसकृदमतिपूर्वविषयंद्रष्टव्यम् यत्तुशंखवच-
नम् परिवित्तिःपरिवेत्ताच संवत्सरंब्राह्मणगृहेषुभैक्ष्यंचरेयातांज्येष्ठभार्यामनियुक्तोगच्छंस्तदेवकनिष्ठभार्यांचेति तत्कामकारविषयम्
२८७ किंचाह यःपुनरुदक्यांरजस्वलांस्वभार्यामपिगच्छतिसत्रिरात्रमुपोष्यांतेघृतंप्राश्यविशुध्यति इदमकामतःसकृद्गमनविषयं
तत्रैवाभ्यासेरजस्वलागमनेसप्तरात्रमितिशातातपेनोक्तंद्रष्टव्यम् कामतःसकृद्गमनेप्येतदेव यत्तुबृहत्संवर्तेनोक्तम् रजस्वलांतुयोग-

अनियुक्तोभ्रातृजायांगच्छंश्चांद्रायणंचरेत् २८७ त्रिरात्रांतेघृतंप्राश्यगत्वोदक्यांविशुध्यति २८८

च्छेद्गर्भिणींपतितांतथा तस्यपापविशुध्यर्थमतिकृच्छ्रंविशोधनमिति तत्कामतोभ्यासविषयम् यत्तुनःशंखेनत्रिवार्षिकमुक्तम्
पादस्तुशूद्रहत्यायामुदक्यागमनेतथेति तत्कामतोत्यंतानवच्छिन्नाभ्यासविषयम् रजस्वलायांतुरजस्वलादिस्पर्शेप्रायश्चित्तंस्मृत्यं
तरोक्तंद्रष्टव्यम् तयाचबृहद्वसिष्ठः स्पृष्टेरजस्वलेन्योन्यंसगोत्रेत्वेकभर्तृके कामादकामतोवापिसद्यःस्नानेनशुध्यतीति असपत्न्यो
स्तुसवर्णयोरकामतःस्नानमात्रम् उदक्यातुसवर्णायास्पृष्टाचेत्स्यादुदक्यया तस्मिन्नेवाहनिस्नात्वाशुद्धिमाप्नोत्यसंशयमितिमा

र्कंडेयस्मरणात् यत्तुकश्यपवचनम् रजस्वलातुसंस्पृष्टाब्राह्मण्याब्राह्मणीयदि एकरात्रंनिराहारापंचगव्येनशुध्यतीतित
त्कामकारविषयम् असवर्णस्पर्शेतु बृहद्वसिष्टेनविशेषोदर्शितः स्पृष्ट्वारजस्वलान्योन्यंब्राह्मणीशूद्रजाअपि कृच्छ्रेणशुध्यते
पूर्वाशूद्रीदानेनशुध्यति दानेनेतिपादकृच्छ्रमत्याम्नायभूतनिष्कचतुर्थांशदानेनशुध्यतीति स्पृष्टारजस्वलान्योन्यंब्राह्मणीवैश्य
जापिच पादहीनंचरेत्पूर्वापादकृच्छ्रंतथोत्तरा स्पृष्टारजस्वलान्योन्यब्राह्मणीक्षत्रियातथा कृच्छ्रार्धाच्छुध्यतेपूर्वातूत्तराचतद
र्धतः स्पृष्टारजस्वलान्योन्यंक्षत्रियाशूद्रजाअपि उपवासैस्त्रिभिःपूर्वात्वहोरात्रेणचोत्तरा स्पृष्टारजस्वलान्योन्यंक्षत्रियावैश्य-
जापिच त्रिरात्राच्छुध्यतेपूर्वात्वहोरात्रेणचोत्तरा स्पृष्टारजस्वलान्योन्यंवैश्यशूद्रीतथैवच त्रिरात्राच्छुध्यतेपूर्वातूत्तराचदिनद्वया
त् वर्णानांकामतःस्पर्शेच्छुद्धिरेषापुरातनीति अकामतस्तुबृहद्विष्णुनोक्तंस्नानमात्रं रजस्वलातुहीनवर्णारजस्वलांस्पृष्ट्वा नता
वदश्नीयाद्यावन्नशुद्धास्यात् सवर्णामधिकवर्णांवास्पृष्ट्वासद्यःस्नात्वाशुध्यतीति चांडालादिस्पर्शेतु बृहद्वसिष्टेनविशेषउक्तः
पतितान्त्यश्वपाकेनसंस्पृष्टाचेद्रजस्वला तान्यहानिव्यतिक्रम्यप्रायश्चित्तंसमाचरेत् प्रथमेन्हित्रिरात्रंस्यात्द्वितीयेद्व्यहमेवतु अ-
होरात्रंतृतीयेन्हिपरतोनक्तमाचरेत् शूद्रयोच्छिष्टयास्पृष्टाशुनाचेत्त्र्यहमाचरेदिति तान्यहानिव्यतिक्रम्यअनाशकेननीत्वेति
यावत् एतत्कामतःस्पर्शविषयम् अकामतस्तुरजस्वलातुसंस्पृष्टाचांडालांत्यश्ववायसैः तावत्तिष्ठेन्निराहारायावत्कालेनशुध्यती
तिबौधायनोक्तंद्रष्टव्यम् यत्तुनस्तेनैवोक्तम् रजस्वलातुसंस्पृष्टाग्रामकुक्कुटसूकरैः श्वभिःस्नात्वाक्षिपेत्तावद्यावच्चंद्रस्यदर्शन

मिति तदशक्तविषयम् यदातुभुंजानायाःश्वादिस्पर्शनंभवतितदास्मृत्यंतरेविशेषउक्तः रजस्वलातुभुंजानाश्वांत्यजादीन्स्पृशेद्यदि
गोमूत्रयावकाहाराषड्रात्रेणैवशुध्यति अशक्तौकांचनदद्याद्विप्रेभ्योवापिभोजनमिति यदातूच्छिष्टयोःपरस्परंस्पर्शनंभवतित-
दा उच्छिष्टोच्छिष्टयास्पृष्टाकदाचित्स्त्रीरजस्वला कृच्छ्रेणशुध्यतेपूर्वाशूद्रादानैरुपोषितेत्यत्रिणोक्तंद्रष्टव्यम् यदातूच्छिष्टा
न्द्विजान्रजस्वलास्पृशतितदा द्विजान्कथंचिदुच्छिष्टान्रजःस्त्रीयदिसंस्पृशेत् अधोच्छिष्टेत्वहोरात्रमूर्ध्वोच्छिष्टेत्र्यहंक्षिपेदि
तिमार्कंडेयोक्तंद्रष्टव्यम् एवमवकीर्णिप्रायश्चित्तप्रसंगात्कानिचिदनुपपातकभूतप्रायश्चित्तान्यपिव्याख्यायप्रकृतमनुसरामः
तत्रावकीर्ण्यनंतरंसुतानांचैवविक्रयइत्युक्तम् तत्रमनुयोगीश्वरोक्तानित्रैमासिकादीनिकामाकामजातिशक्त्याद्यपेक्षयापूर्वव-
द्व्यवस्थापनीयानि यत्तुशंखवचनम् देवगृहप्रतिश्रयोद्यानारामसभाप्रपातडागपुण्यसेतुसुतविक्रयंकृत्वा तप्तकृच्छ्रंचरेदिति
यच्चपराशरेणोक्तम् विक्रीयकन्यकांगांचकृच्छ्रंसांतपनंचरेदिति तदुभयमप्यापद्यकामतोद्रष्टव्यम् कामतस्तु नारीणांविक्रयंकृ
त्वाचरेच्चांद्रायणव्रतम् द्विगुणंपुरुषस्यैवव्रतमाहुर्मनीषिणइतिचतुर्विंशतिमतोक्तंद्रष्टव्यम् यत्तुपैठीनसिनोक्तम् आरामतडा
गोदपानपुष्करिणीसुकृतसुतविक्रयेत्रिषवणस्नाय्यधःशायीचतुर्थकालाहारःसंवत्सरेणपूतोभवति तदेकपुत्रविषयम् तद
नंतरंधान्यकुप्यपशुस्तेयमित्युक्तंतत्प्रायश्चित्तानिचस्तेयप्रकरणेप्रपंचितानि २०८ अनंतरमयाज्यानांचयाजनमित्युक्तंतत्रप्राय
श्चित्तमाह यस्तुसावित्रीपतितानांयाजनंकरोतिसप्राजापत्यप्रभृतीन्त्रीन्कृच्छ्रानाचरेत् तेषांचगुरुलघुभूतानांकृच्छ्रानाचरेत् तेषांच-

गुरुलघुभूतानां कृच्छ्राणां त्रित्वं निमित्तगुरुलघुभावेन कल्पनीयम् तथा अभिचरन्नपीदमेव प्रायश्चित्तं कुर्यात् एतच्चाग्निदाद्याततायिव्य तिरेकेण षट्स्वभिचरन्पततीति वसिष्ठस्मरणात् अपिशब्दो हीनयाजकात्येष्टियाजकयोः संग्रहणार्थः अत एवोक्तं मनुना व्रात्यानां या जनं कृत्वा परेषामंत्यकर्म च अभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहतीति परेषामंत्यकर्मेत्यस्यं ताभ्यासविषयम् शूद्रांत्यकर्मविषयं वा प्रायश्चित्तस्य गुरुत्वात् अहीनो द्विरात्रादिर्द्वादशाहपर्यंतोहर्गणयागः यत्तु शातातपेनोक्तम् पतितसावित्रीकान्नोपनयेत् नाध्यापयेत्

त्रीन्कृच्छ्रानाचरेद्व्रात्ययाजकोभिचरन्नपि वेदप्लावी यवान्यब्दं त्यक्त्वा च शरणागतम् २८९

य एतानुपनाययेदध्यापयेद्याजयेद्वा स उद्दालकव्रतं चरेदिति कामकारविषयम् उद्दालकव्रतं च प्राक् प्रदर्शितम् एतच्च कृच्छ्रत्रय साधारणोपपातकप्रायश्चित्तस्यापवादकम् अत उपपातकसाधारणप्रायश्चित्तं शूद्राद्ययाज्ययाजने व्यवतिष्ठते तत्र कामतस्त्रैमा सिकम् अकामतस्तु योगीश्वरोक्तं मासव्रतादि यत्तु प्रचेतसा शूद्रयाजकादीन् पठित्वोक्तम् एते पंच तपोभ्यावकाशजलशयनान्यनु- तिष्ठेयुः क्रमेण ग्रीष्मवर्षहिमंतेषु मासं गोमूत्रयावकमश्नीयुरिति तत्कामतोभ्यासविषयम् यच्च यमेनोक्तम् पुरोधाः शूद्रवर्णस्य ब्रा-

ब्राह्मणो यः प्रवर्त्तेत स्नेहादर्थप्रसंगाद्वा तस्य कृच्छ्रो विशोधनमिति तदशक्तविषयम् यच्च पैठीनसिनोक्तं शूद्रयाजकः सर्वद्रव्यपरित्यागा
त्पूतो भवति प्राणायामसहस्रेषु दशकृत्वोऽभ्यासे वेदितव्यम् तदप्यकामतोऽभ्यासविषयम् यत्तु गौतमेनोक्तं निषिद्धमंत्रप्रयोगे सहस्रवा
कश्चेदिति निषिद्धानां पतितादीनां याजनाध्यापनात्मके मंत्रप्रयोगे बहुशोऽभ्यस्ते प्राकृतं ब्रह्मचर्यमुपदिष्टम् तत्कामतोऽभ्यासविषयम्
यस्तु वेदं विप्लावयति यश्च रक्षणक्षमोऽपि तस्करव्यतिरिक्तं शरणागतमुपेक्षते सोऽपि संवत्सरं यवौदनं भुंजानः शुध्यति तत्र विप्लवो नाम प्र
वर्तितचांडालश्रोत्रावकाशाद्यनध्यायेष्वध्ययनम् उत्कर्षहेतोरधीयानस्य किं पठसि नाशितं त्वयेत्येवं पर्यनुयोगोदानं वा विप्लावनमुच्यते अत
एवोक्तं स्मृत्यंतरे दत्वानुयोगानध्येतुः पतितान्मनुरब्रवीदिति यत्तु वसिष्ठेनोक्तम् पतितचांडालशवश्रवणे त्रिरात्रं वाग्यता अनश्नंत आ
सीरन् सहस्रपरमं वा तदभ्यस्यतः पूतो भवतीति विज्ञायत इति एतेनैव गर्हिताध्यापकयाजका व्याख्याता दक्षिणात्यागाच्च पूतो भवतीति
विज्ञायत इति तद्बुद्धिपूर्वविषयम् यत्तु षट्त्रिंशन्मतेऽभिहितम् चांडालश्रोत्रावकाशे श्रुतिस्मृतिपाठे एकरात्रमभोजनमिति तदबुद्धिपू
र्वविषयम् यदा सर्पाद्यंतरागमनमात्रं भवति न पुनस्तत्राधीते तदापि प्रायश्चित्तं यमेनोक्तम् सर्पस्य नकुलस्याथ अजमार्जारयोस्तथा मू
षकस्य तथोष्ट्रस्य मंडूकस्य च योषितः पुरुषस्यैकुकस्यापि शुनोऽश्वस्य खरस्य च अंतरागमने सद्यः प्रायश्चित्तमिदं शृणु त्रिरात्रमुपवा
सश्च त्रिरन्हश्चाभिषेचनम् ग्रामांतरं वा गंतव्यं जानुभ्यां नात्र संशय इति पितृमातृसुतत्यागतडागारामविक्रयेषु मनुयोगीश्वरोक्तोप
पातकसाधारणप्रायश्चित्तानि पूर्ववज्जातिशक्तिगुणाद्यपेक्षया योज्यानि तत्र पितृमात्रादित्यागस्य अकारणे परित्यक्ता मातापित्रोर्गुरो

स्तथेत्यपांक्तेयमध्यपाठात्तन्निमित्तमपिप्रायश्चित्तंभवति यथाहमनुः षष्ठान्नकालतामासंसंहिताजपएववा होमाश्चशाकलानि
त्यमपांक्तानांविशोधनमिति अपाङ्क्तांश्चश्राद्धकांडेयेस्तेनपतितक्लीबाइत्यादिवाक्यैर्दर्शिताः तडागारामविक्रयेषुच कतिचिद्विशेषप्रा
यश्चित्तानिसविषयाणिकृतविक्रयप्रायश्चित्तकथनावसरेकथितानि अनंतरंकन्यायादूषणमित्युक्तम् तत्रचत्रैमासिकद्वैमासि-
कचांद्रायणादीनिसवर्णविषयेयोज्यानि आनुलोम्येपुनर्मासिकंपयोशनंप्राजापत्यंवा सकामास्वनुलोमासुनदोषस्त्वन्यथादमइति
दंडाल्पत्वदर्शनात् यत्तुशंखेनोक्तम् कन्यादोषीसोमविक्रयीच कृच्छ्रमब्दंचरेयातामिति यच्चहारीतवचनम् कन्याविक्रयीसोमवि
क्रयीवृषलीपतिकौमारदारत्यागःसुरामद्यपःशूद्रयाजकोगुरोःप्रतिहंतानास्तिकवृत्तिःकृतघ्नःकूटव्यवहारीमित्रध्रुक्शरणागतघाती
प्रतिरूपकवृत्तिरित्येतेपंचतपोऽवकाशजलशयनान्यनुतिष्ठेयुर्ग्रीष्मवर्षाहेमंतेषुमासंगोमूत्रयावकमश्नीयुरितितदुभयमपिक्षत्रि
यवैश्ययोःप्रातिलोम्येनदूषणेयोज्यंशूद्रस्यतुवधएव दूषणेतुकरच्छेदउत्तमायांवधस्तथेतिवधदर्शनात् परविंदकस्ययाजनंक
न्याप्रदानयोःकौटिल्यअशिष्टाप्रतिषिद्धव्रतलोपेआत्मार्थपाकक्रियारंभेमद्यपस्त्रीनिषेवणेचसाधारणोपपातकप्रायश्चित्तंप्रा
ग्व्यवस्थापनीयम् आद्ययोस्तुविशेषप्रायश्चित्तानिपरिवेदनायाज्ययाजनप्रायश्चित्तकथनप्रस्तावेदर्शितानि अनंतरंस्वा-
ध्यायत्यागइत्युक्तंतत्रव्यसनासक्त्यात्यागेअधीतस्यचनाशनमितिब्रह्महत्यासमंप्रायश्चित्तमुक्तम् शास्त्रश्रवणव्याकुलतयात्यागेतुत्रैमा
सिकाद्युपपातकप्रायश्चित्तानिशक्त्याद्यपेक्षयायोज्यानि यत्तुवसिष्ठेनोक्तं ब्रह्मोज्झताकृच्छ्रंद्वादशरात्रंचरित्वापुनरुपयुंजीतवेदमाचा

यादितितदत्यं तापद्विषयम् अग्नित्यागेपितेनैवविशेषोदर्शितः योग्नीनपविध्येत्सकृच्छ्रंद्वादशरात्रंचरित्वापुनराधेयंकारयेदितिद्वाद-
शरात्रग्रहणमुत्तमकालापेक्षयाप्राजापत्यादिगुरुलघुकृच्छ्राणांप्राप्त्यर्थं तत्रमासद्वयेप्राजापत्यंमासचतुष्टयेतिकृच्छ्रः षण्मासोच्छिन्नेपरा
कः षण्मासादूर्ध्वंयोगीश्वरोक्तान्युपपातकसामान्यप्रायश्चित्तानिकालाद्यपेक्षयायोज्यानि संवत्सरादूर्ध्वंतुमानवंत्रैमासिकमितिव्यवस्था
एतच्चनास्तिक्येनत्यागविषयं तथाव्याघ्रः योग्निंत्यजतिनास्तिक्यात्प्राजापत्यंचरेत्द्विजइति यदातुप्रमादात्त्यजतितदाभारद्वाजगृह्येवि
शेषउक्तः प्राणायामशतमात्रिरात्रादुपवासःस्यादाविंशतिरात्रात् अतऊर्ध्वमाषष्टिरात्रात्तिस्रोरात्रीरुपवसेदतऊर्ध्वमासंवत्सरात्
प्राजापत्यंचरेत् अतऊर्ध्वंकालबहुत्वेदोषगुरुत्वमिति यदात्वालस्यादिनात्यजतितदापितेनैवविशेषउक्तः द्वादशाहाति
क्रमेत्र्यहमुपवासोमासातिक्रमेद्वादशाहमुपवासःसंवत्सरातिक्रमेमासोपवासःपयोभक्षणंचेति संवत्सरादूर्ध्वंतुहारीतेनविशे
षउक्तः संवत्सरोत्सन्नेग्निहोत्रेचान्द्रायणंकृत्वापुनरादध्यात् द्विवर्षेच्छिन्नेचान्द्रायणंसोमायनंचकुर्यात् त्रिवर्षेच्छिन्नेसंव
त्सरंकृच्छ्रमभ्यस्यपुनरादध्यादिति सोमायनंचकृच्छ्रकांडेवक्ष्यते शंखेनापिविशेषउक्तः अग्न्युत्सादीसंवत्सरंप्राजापत्यं
चरेद्गांचदद्यादिति कृतत्यागेबंधुत्यागेचत्रैमासिकंगोवधव्रतंकामतोकामतस्तुयोगीश्वरोक्तंव्रतचतुष्टयंशक्त्याद्यपेक्षयायोज्य
म् द्रुमच्छेदेप्रायश्चित्तंप्रागुक्तम् स्त्रीप्राणिवधवशीकरणादिभिर्जीवनेतिलेक्षुयंत्रप्रवर्त्तनेचतान्येवप्रायश्चित्तानितथैवयो
ज्यानि व्यसनेषुचद्यूतमृगयादिष्वेतान्येवप्रायश्चित्तानितथैवयोज्यानि यत्तुबौधायनेन अथाशुचिकराणिद्यूतमभिचारोना

हिताग्नेरुंञ्छवृत्तिः समावृत्तस्य भैक्ष्यचर्या तस्य च गुरुकुले वासः ऊर्ध्वं चतुर्भ्यो मासेभ्यो यश्च तमध्यापयति नक्षत्रनिर्देशनं चेति
द्वादशमासान्द्वादशार्द्धमासान्द्वादश द्वादशाहान्द्वादशषडहान्द्वादशत्र्यहांस्त्र्यहमेकाहमित्यशुचिकरनिर्देश इति घृते वार्षि-
कव्रतमुक्तं तदभ्यासविषयम् यत्तु प्रचेतसोक्तम् अनृतवाक्तस्करो राजभृत्यो वृक्षारोपकवृत्तिर्गरदोऽग्निदोश्वरथगजारो
हणवृत्तिः रंगोपजीवी श्वगणिकः शूद्रोपाध्यायो वृषलीपतिर्भांडिको नक्षत्रोपजीवी श्ववृत्तिर्ब्रह्मजीवी चिकित्सको देवलकः पुरो
हितः कितवो मद्यपः कूटकारकोपत्यविक्रयी मनुष्यपशुविक्रेता चेति नानुद्धरेत्समेत्यन्यायतो ब्राह्मणव्यवस्थया सर्वद्रव्यत्यागेन च
तुर्थकालाहारः संवत्सरं त्रिषवणमुपस्पृशेयुः तस्यान्ते देवपितृतर्पणं गवाह्निकं चेत्येवं व्यवहार्या इति तदपि बौधायनेन समानवि-
षयम् श्वगणिकादयः श्वगणेन जीवति भांडिको बंदिव्यतिरिक्तो राज्ञां तूर्यादिस्वनैः प्रतिबोधयिता बंदिनः पृथगुपादानात् श्ववृत्तिः
सेवकः ब्रह्मजीवी ब्राह्मणकार्येषु मूल्येन परिचारकः मनूक्तेष्वपांक्ते प्रायश्चित्तानि षष्ठान्नकालता मासमित्यादीनि जात्याद्यपेक्ष
या योज्यानि तदुक्तापांक्त्यमध्ये कितवादिव्यसनिनां पठितत्वात् आत्मविक्रये शूद्रसेवायां च सामान्यप्रायश्चित्तानि प्राग्वदेव यो-
ज्यानि यत्तु बौधायनेनोक्तम् समुद्रयानं ब्राह्मणस्य न्यासापहरणं सर्वापण्यैर्व्यवहरणं भृत्यवृत्तं शूद्रसेवा यश्च शूद्रायामभिजाय-
ते तदपत्यं च भवति तेषां तु निर्देशः चतुर्थकालं मितभोजनाः स्युरपोभ्युपेयुः सवनानुकल्पम् स्थानासनाभ्यां विहरंत एते त्रिभि
र्वर्षैस्तदपघ्नंति पापमिति तद्बहुकालसेवाविषयम् हीनजातिभिः सख्ये तु उपपातकसामान्यप्रायश्चित्तान्येव यत्तु प्रचेतसोक्तम्

मित्रभेदकरणाद्दहोरात्रमनश्नन् अङ्गुलापयःपिबेदिति तदहीनसख्यभेदविषयम् हीनयोनिनिषेवणेष्पुपपातकसामान्यप्राय
श्चित्तानियोज्यानि यत्तुशातातपेनोक्तम् ब्राह्मणोराजन्यापूर्वंकृच्छ्रंद्वादशरात्रंचरित्वानिविशेत्तांचोपयच्छेद्वैश्यापूर्वातिसकृच्छ्रं
शूद्रापूर्वांतुकृच्छ्रातिकृच्छ्रंराजन्यश्चेद्वैश्यापूर्वंकृच्छ्रंद्वादशरात्रंचरित्वानिविशेत्तांचोपयच्छेदितिशूद्रापूर्वांत्वतिकृच्छ्रंवैश्यश्चे-
च्छूद्रापूर्वंकृच्छ्रंद्वादशरात्रंचरित्वातांचोपयच्छेदितितत्रनिविशेत्तांचोपयच्छेदितिकृच्छ्रानुष्ठानोत्तरकालंसवर्णपरिणयनादूर्ध्वंतां
चराजन्यादिकामुपयच्छेदित्यर्थः इदंचाज्ञानविषयम् ज्ञानतस्तूपपातकसामान्यप्रायश्चित्तंव्यवस्थितमेवद्रष्टव्यम् साधारणस्त्री
संभोगेचहीनयोनिनिषेवणंइत्युक्तम् तत्रापिपण्यवैश्याभिगमनेप्राजापत्यंविधीयतइतिसंवर्त्तोक्तमकामतोद्रष्टव्यम् वैश्यागमनजं-
पापंव्यपोहंतिद्विजातयः पीत्वासकृत्सकृत्तप्तंसप्तरात्रंकुशोदकमिति उपपातकसामान्यप्रायश्चित्तानिकामाकामतोभ्यासापेक्षया
योज्यानि तत्रमत्यभ्यासेतुप्रतिनिमित्तंनैमित्तिकमावर्तत इतिन्यायात् प्रतिनिमित्तंनैमित्तिकावृत्तौप्रसक्तायांलौगाक्षिणांविशेष
उक्तः अभ्यासेद्विगुणावृद्धिर्मासादर्वाक्विधीयते ततोमासगुणावृद्धिर्यावत्संवत्सरंभवेत् ततःसंवत्सरगुणायावत्पापंसमाचरेदि-
ति इदंमतिपूर्वविषयम् अमतिपूर्ववृत्तौचतुर्विंशतिमतेविशेषउक्तः सकृत्कृतेतुयत्प्रोक्तंत्रिगुणंतत्त्रिभिर्दिनैः मासात्पंचगुणंप्रोक्तं
षण्मासाद्दशधाभवेत् संवत्सरात्पंचदशंत्र्यब्दाद्विंशगुणंभवेत् ततोप्येवंप्रकल्प्यंस्यात् शातातपवचोयथेति यत्पुनर्विधेःप्राथमिका
दस्मात्द्वितीयेद्विगुणंचरेदितिप्रतिनिमित्तमावृत्तिविधायकंतन्महापातकविषयमित्युक्तंप्राक् यत्तुयमेनसाधारणस्त्रीगमनमधिकृ

त्यगुरुतल्पव्रतमितिदिष्टम् गुरुतल्पव्रतं केचित् केचित्तु चांद्रायणव्रतम् गोघ्नस्येच्छंति केचिच्च केचिदेवावकीर्णिन इति एतच्च ज
न्मप्रभृतिसानुबंधानवच्छिन्नाभ्यासविषयम् अनंतरं तथैवानाश्रमेवास इत्युक्तं तत्र हारीतेन विशेष उक्तः अनाश्रमी संवत्सरं प्राजा-
पत्यं कृच्छ्रं चरित्वाश्रममुपेयात् द्वितीये तिकृच्छ्रं तृतीये कृच्छ्रातिकृच्छ्रं अत ऊर्ध्वं चांद्रायणमिति एतदसंभवविषयम् संभवे तु सामान्यो-
पपातकप्रायश्चित्तानि कामाकामतो व्यवस्थापनीयानि परपाकरुचित्वासच्छास्त्राधिगमनाकराधिकारभार्याविक्रयेषु च मनुयोगीश्वर
प्रतिपादितोपपातकसामान्यप्रायश्चित्तानि जातिशक्तिगुणाद्यपेक्षया व्यवस्थापनीयानि २८९ भार्याया विक्रयश्चैषामित्यत्र चशब्दि

गोष्ठे वसन् ब्रह्मचारी मासमेकं पयोव्रतः गायत्रीजाप्यनिरतः शुध्यते सत्प्रतिगृहात् २९०

मन्वाद्युक्तासत्प्रतिगृहनिंदितान्नादीनामुपलक्षणार्थमित्युक्तम् तत्रासत्प्रतिग्रहे प्रायश्चित्तविशेषमाह यस्त्वसत्प्रतिग्रहं करोति ब्र
ह्मचर्ययुक्तो गोष्ठे वसन् गायत्रीजपशीलो मासं पयोव्रतेन शुध्यतीति प्रतिग्रहस्य चासत्त्वं दातुर्जातिकर्मनिबंधनं यथा चांडालादेः पतित
देश्च तथा देशकालनिबंधनं च यथा कुरुक्षेत्रोपरागादौ तथा प्रतिग्राह्यद्रव्यनिबंधनं च यथा सुरामेषीमृतशय्योभयतोमुख्यादेः य

दातुपतितादेर्मेष्यादिकंगृण्हातित देदंगुरुप्रायश्चित्तंद्रष्टव्यम् व्यतिक्रमेद्व्यदर्शनेननिमित्तस्यगुरुत्वात् तत्रजपेमनुः नासंख्या
विशेषउक्तः जपित्वात्रीणिसावित्र्यासहस्राणिसमाहितः मासंगोष्ठेपयःपीत्वामुच्यतेसत्प्रतिग्रहादितिप्रत्यहंत्रिसहस्रंजपोद्रष्ट
व्यः मासमितिद्वितीययात्रिसहस्रसंख्याकस्यजपस्यप्रतिदिवसव्यापित्वावगमात् यदातुन्यायवर्तिब्राह्मणादेःसकाशान्निषिद्धं
मेषादिकंगृण्हातिपतितादेर्वाभूम्यादिकमनिषिद्धंतदाषट्त्रिंशन्मतोक्तंद्रष्टव्यम् पवित्रेष्ट्याविशुध्यंतिसर्वेघोराःप्रतिग्रहाः ऐंदवेन
मृगारेष्ट्याकदाचिन्मित्रविंदया देव्यालक्षजपेनैवशुध्यंतेदुष्प्रतिग्रहात् यत्तुबृहद्धारीतवचनम् राज्ञःप्रतिग्रहंकृत्वामासमप्सुस
दावसेत् षष्ठेकालेपयोभक्षःपूर्णेमासेविशुध्यति तर्पयित्वाद्विजान्कामैःसततंनियतव्रतइति तत्पूर्वोक्तविषयाभ्यासेद्रष्टव्यम् अ
थवापतितादेःकुरुक्षेत्रोपरागादौकृष्णाजिनादिप्रतिग्रहविषयम् तथाप्रतिग्राह्यद्रव्याल्पतयाप्रायश्चित्ताल्पत्वम् यथाहहारीतः म
णिवासोगवादीनांप्रतिग्रहणेसावित्र्यष्टसहस्रंजपेदिति तथाषट्त्रिंशन्मतेपि भिक्षामात्रेगृहीतेतिपुण्यमंत्रमुदीरयेत् प्रतिग्रहेषुस-
र्वेषुषष्ठमंशंप्रकल्पयेत् इतीदंप्रायश्चित्तजातंद्रव्यत्यागोत्तरकालंद्रष्टव्यम् यद्गर्हितेनार्जयंतिब्राह्मणाकर्मणाधनं तस्योत्सर्गेण शुध्यं
तिजपेनतपसैवचेतिमनुस्मरणात् एवमन्यान्यपिस्मृतिवाक्यानिद्रव्यसाराल्पत्वमहत्त्वाभ्यांविषयेषुव्यवस्थापनीयानि इत्युपपा
तकानि जात्याश्रयादिदोषेणनिंद्यान्नादेनशब्दतः योगीद्रोक्तव्रतव्रातंसांप्रतंतुप्रतन्यते तत्रजातिदुष्टपलांड्वादिभक्षणेकामतः
सकृत्कृतेपलांडुंविड्वराहंचेत्यादिनाचांद्रायणमुक्तम् कामतोभ्यासेतुनिषिद्धभक्षणेजेह्म्यादिनोक्तंसुरापानसमंप्रायश्चित्तम् अ-

कामतः सकृद्भक्षणे सांतपनम् तत्रैवाभ्यासे यतिचांद्रायणम् अमत्यैतानि षड् जग्ध्वा कृच्छ्रं सांतपनं चरेत् यतिचांद्रायणं वापि शे
षेषूपवसेदहरिति मनुस्मरणात् यत्तु बृहद्यमेनोक्तम् खट्वावार्त्ताककुंभीकब्रश्चनप्रभवाणि च भूतृणं शिग्रुकं चैव सुखंडं कवचा
नि च एतेषां भक्षणं कृत्वा प्राजापत्यं चरेद् द्विजः इति तत्कामतो पूर्वाभ्यासविषयम् मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं क्षिपेदि
ति योगीश्वरेण कामतः सकृद्भक्षणे त्र्यहस्योक्तत्वात् खट्वाख्यः पक्षी कुसुंभमित्यन्ये कवचं कृष्णसर्षपाख्यं शाकम् सुखंडं नाडि
शेषो गोबलीवर्दन्यायेन निर्दिष्टः यत्तु यमेनोक्तं तंदुलीयककुंभीकब्रश्चनप्रभवास्तथा नालिकानालिकेरीं च श्लेष्मातकफलानि
च भूतृणं शिग्रुकं चैव खट्वाख्यं कवचं तथा एतेषां भक्षणं कृत्वा प्राजापत्यं व्रतं चरेदिति तदपि मतिपूर्वाभ्यासविषयम् नालि
कानालिकेरा च शाकविशेषौ खट्वाख्यश्च अकामतः सकृद्भक्षणे तु शेषेषूपवसेदहरिति मनूक्तं द्रष्टव्यम् तत्रैवाभ्यासे त्वावृत्तिः
कल्प्या अनंताभ्यासे तु संसर्गदुष्टं यच्चान्नं क्रियादुष्टमकामतः भुक्त्वा स्वभावदुष्टं च तप्तकृच्छ्रं समाचरेदिति प्रचेतोभिहितं
द्रष्टव्यम् नील्यास्तु कामतः सकृद्भक्षणे चांद्रायणं भक्षयेद्यदि नीलीं तु प्रमादाद्ब्राह्मणः क्वचित् चांद्रायणेन शुद्धिः स्यादापस्तंबोऽब्रवीन्मु-
निरिति आपस्तंबस्मरणात् कामतोऽभ्यासे चावृत्तिः कल्प्या यदपि षट्त्रिंशन्मतेऽभिहितम् शणपुष्पं शाल्मलं च करनिर्मथितं दधि बहिर्वे
दि पुरोडाशं जग्ध्वा नाद्यादहर्निशमिति तदप्यकामविषयम् यत्तु सुमंतुनोक्तम् लशुनपलांडुगृंजनकवकभक्षणे सावित्र्यष्टसहस्रेण
मूर्ध्नि संपातान्नयेदिति तद्बलात्कारेणानिच्छतो भक्षणविषयम् तदेकसाध्यव्याध्युपशमार्थे वा भक्षणे द्रष्टव्यम् अत एवानंतरं तेने

वोक्तम् एतान्येव व्याधितस्य भिषक्क्रियायाम प्रतिषिद्धानि भवंति यानित्वेवं प्रकाराणि नेषापिन दोषइति संपातान्नयेदुदकबिंदून् पात
येत् अथजातिदुष्टसंधिन्यादिक्षीरपाने प्रायश्चित्तम् तत्रचाकामतः सकृत्पाने अनिर्दशायागोःक्षीरमौष्ट्रमेकशफंतथा आविकंसं
धिनीक्षीरंविवत्सायाश्चगोःपयः आरण्यानांचसर्वेषांमृगाणांमहिषींविना स्त्रीक्षीरंचैववर्ज्यानिसर्वशुक्तानिचैवहीति दधिभक्ष्यंचशु
क्तेषुसर्वंचदधिसंभवमित्युक्त्वाशेषेषूपवसेदहरितिमनूक्तउपवासोद्रष्टव्यः कामतस्तुयोगीश्वरोक्तस्त्रिरात्रोपवासोद्रष्टव्यः यत्तुपैठी
नसिनोक्तम् अविखरोष्ट्रमानुषीक्षीरप्राशनेतप्तकृच्छ्रःपुनरुपनयनंच अनिर्दशाहगोमहिषीक्षीरप्राशनेषड्रात्रमभोजनम् सर्वा-
सांद्विस्तनीनांक्षीरपानेप्यजावर्जमेतदेवेति यच्चशंखेन क्षीराणियान्यभक्ष्याणितद्विकाराशनेबुधः सप्तरात्रंव्रतंकुर्यात्प्रयत्नेनसमाहि
त इतियावकव्रतमुक्तंतदुभयमपि कामतोभ्यासविषयम् यत्तुशंखेन संधिन्यमेध्यभक्षणेक्षीरप्राशनेपक्षव्रतमुक्तम् संधिन्यमेध्यभ
क्षायाभुक्त्वापक्षव्रतंचरेदितितदभ्यासविषयम् सकृत्पानेगोअजमहिषीवर्जंसर्वाणिपयांसिप्राश्यउपवसेत् अनिर्दशाहंतान्यपिसंधि
नीयमसूस्यादिनीविवत्साक्षीरंचामेध्यभुजश्चेतिविष्णुनोपवासस्योक्तत्वात् तथावर्णनिबंधनश्चप्रतिषेधः क्षत्रियश्चापिवृत्तस्थोवै-
श्यःशूद्रोथवापुनः यःपिबेत्कपिलाक्षीरंनततोन्योस्त्यपुण्यकृदिति एवमादौचयत्रप्रतिपदोक्तंप्रायश्चित्तंनदृश्यते तत्रशेषेषूपवसेदह
रितिसाधारणप्रायश्चित्तंमनूक्तंद्रष्टव्यम् अथस्वभावदुष्टमांसादिभक्षणेप्रायश्चित्तमुक्तम् तत्रकामतःसकृद्भक्षणेशेषेषूपवसे
दहरितिमनूक्तंसाधारणप्रायश्चित्तंद्रष्टव्यम् कामतस्तु चाषांश्चरक्तपादांश्चसौनंवल्लूरमेवच मत्स्यांश्चकामतोजग्ध्वासोपवास-

स्त्र्यहं वसेदिति योगीश्वरोक्तं द्रष्टव्यम् कामतोऽभ्यासे तु जग्ध्वा मांसमभक्ष्यं तु सप्तरात्रं पयः पिबेदिति मनूक्तं द्रष्टव्यम् इदं विट्सूक
रादिमांसव्यतिरिक्तविषयम् क्रव्यादिविट्सूकरोष्ट्राणां कुक्कुटानां च भक्षणे नरकाकखरोष्ट्राणां तप्तकृच्छ्रं विशोधनमिति मनुना जाति
विशेषेण प्रायश्चित्तविशेषस्योक्तत्वात् एतन्मूत्रपुरीषप्राशनेऽप्येतदेव वराहैकशफानां तु काककुक्कुटयोस्तथा क्रव्यादानां च सर्वेषा
मभक्ष्या ये च कीर्त्तिताः मांसमूत्रपुरीषाणि प्राश्य गोमांसमेव च श्वगोमायुकपीनां च तप्तकृच्छ्रं विधीयते उपोष्य वा द्वादशाहं कूष्मां
डैर्जुहुयाद्घृतमिति बृहद्यमस्मरणात् तत्र कामनस्तप्तकृच्छ्रः अभ्यासे तु कूष्मांडसहितः पराक इति व्यवस्था तथा प्रचेतसाप्युक्तम्
श्वसृगालकाककुक्कुटपार्षतवानरचित्रकचाषक्रव्यादखरोष्ट्रगजवाजिविड्वराहगोमानुषमांसभक्षणे तप्तकृच्छ्रमादिशेदेषां मूत्रपुरी
षभक्षणे त्वतिकृच्छ्रमिति इदं च कामकारविषयम् यत्तूशनसो वचनम् नरमांसं श्वमांसं च गोमांसं चाश्वमेव च भुक्त्वा पंचन-
खानां च महासांतपनं चरेदिति तदकामविषयम् यत्त्वंगिरोवचनं बलाकाभासगृध्राखुखरवानरसूकराः इष्वाचैषाममेध्यानि स्पृ
ष्ट्वा चैव विशुध्यति इच्छयैषाममेध्यानि भक्षयित्वा द्विजातयः कुर्युः सांतपनं कृच्छ्रं प्राजापत्यमनिच्छय इति तद्भक्षितोद्गारितवि
षयम् सांतपनशब्देन चात्र महासांतपनमुच्यते अकामतः प्राजापत्यविधानात् यत्पुनरंगिरोवचनम् नरकाकखराश्वानां जग्ध्वा
मांसं गजस्य च एषां मूत्रपुरीषाणि द्विजश्चांद्रायणं चरेदिति यच्च वृद्धयमेनोक्तं शुष्कमांसाशने विप्रो व्रतं चांद्रायणं चरेदिति तदुभ
यमपि कामतोऽभ्यासविषयम् यत्पुनः शंखेनोक्तम् भुक्त्वा चोभयतोदंतांस्तथा चैकशफानपि औष्ट्रं गव्यं तथा जग्ध्वा षण्मासान्व्रत

माचरेदिति तत्कामतोऽत्यंताभ्यासविषयम् यत्तु स्मृत्यंतरोक्तम् जग्ध्वा मांसं नराणां च विड्वराहं खरं तथा गवाश्वकुंजरोष्ट्राणां सर्वं-
पंचनखं तथा क्रव्यादं कुक्कुटं ग्राम्यं कुर्यात्संवत्सरं व्रतमिति तदत्यंतानवच्छिन्नाभ्यासविषयम् अत्र प्रकरणे मूत्रपुरीषग्रहणं वसाशु-
क्रासृङ्मज्जानामुपलक्षणम् कर्णविट्प्रभृतिमलषट्के त्वर्धं कल्पनीयम् केशादिषु पुनः षट्त्रिंशन्मते विशेष उक्तः अजाविमहिष-
मृगाणामाममांसभक्षणे केशनखरुधिरप्राशने बुद्धिपूर्वे त्रिरात्रमज्ञानादुपवास इति यत्तु प्रचेतसोक्तम् नखकेशमृल्लोष्टभक्षणे अहो-
रात्रमभोजनाच्छुद्धिरिति तदप्यकामतः सकृत्प्राशनविषयम् यत्तु स्मृत्यंतरवचनम् केशकीटनखं प्राश्य मत्स्यकंटकमेव च हेमतप्तं घृ-
तं पीत्वा तत्क्षणादेव शुध्यति तन्मुखमात्रप्रवेशविषयम् यदा तु भाजनस्थमन्नं केशादिदूषितं भवति तदा अन्नं भोजनकाले तु मक्षि-
काकेशदूषितम् अनंतरं स्पृशेदापस्तच्चान्नं भस्मना स्पृशेदिति प्रचेतसाभिहितं वेदितव्यम् प्रासंगिकोऽयं श्लोकः सूक्ष्मतरकृमिकीटा-
स्थिभक्षणे पुनर्हारीतेन विशेष उक्तः कृमिकीटपिपीलिकाजलौकःपतंगास्थिप्राशने गोमूत्रगोमयाहारस्त्रिरात्रेण विशुध्यतीति जलौ-
कोमत्स्यादिः एवं च पशुपतत्रिजलचरमांसादिप्राशने संक्षेपतः प्रायश्चित्तानि दर्शितानि ग्रंथगौरवभयात्प्रतिव्यक्ति न लिख्यंते
अथाशुचिसंसृष्टभक्षणे प्रायश्चित्तं तत्र तावदुच्छिष्टाभक्ष्यभक्षणे वक्ष्यते मनुः बिडालकाकाखूच्छिष्टं जग्ध्वा श्वनकुलस्य च केश-
कीटावपन्नं च पिबेद्ब्राह्मीं सुवर्चलामिति कालविशेषानुपादानादेकरात्रम् इदमकामतो द्रष्टव्यम् यत्तु विष्णुनोक्तम् पक्षिश्वापदज-
ग्धस्य रसस्यान्नस्य भूयसः संस्काररहितस्यापि भोजने कृच्छ्रपादकमिति तत्कामकारविषयम् संस्कारश्च देवद्रोण्यामित्यादिनाऽद्-

व्यशुद्धिप्रकरणोक्तोद्रष्टव्यः यत्तुशातातपेनोक्तम् श्वकाकाद्यवलीढशूद्रोच्छेषणभोजनेत्वतिकृच्छ्रमितितदकामतोभ्यासविषयम् य
त्तुशंखेन शुनामुच्छिष्टकंभुक्त्वामासमेकंव्रतीभवेत् काकोच्छिष्टंगवाघ्रातंभुक्त्वापक्षंव्रतीभवेदितियावकव्रतमुक्तंतत्कामतोभ्यास
विषयम् ब्राह्मणोच्छिष्टभोजनेतुबृहद्विष्णुनोक्तम् ब्राह्मणःशूद्रोच्छिष्टाशनेसप्तरात्रंपंचगव्यंपिबेत् वैश्योच्छिष्टाशनेपंचरात्रंरा
जन्योच्छिष्टाशनेत्रिरात्रंब्राह्मणोच्छिष्टाशनेत्वेकाहमितितत्कामकारविषयम् यत्तुयमवचनम् भुक्त्वासहब्राह्मणेनप्राजापत्येनशु
ध्यति भूभुजासहभुक्त्वान्नंतप्तकृच्छ्रेणशुध्यति वैश्येनसहभुक्त्वान्नमतिकृच्छ्रेणशुध्यति शूद्रेणसहभुक्त्वान्नंचांद्रायणमथाचरे
त् तत्कामतोभ्यासविषयम् यत्तुपुनःशंखवचनम् ब्राह्मणोच्छिष्टाशनेमहाव्याहृतिभिरभिमंत्र्यापःपिबेत्क्षत्रियोच्छिष्टाशनेब्राह्मी
रसविपक्वेनत्र्यहक्षीरेणवर्त्तयेत् विशोच्छिष्टाशनेत्रिरात्रोपोषितोब्राह्मींसुवर्चलांपिबेत् शूद्रोच्छिष्टभोजनेषड्रात्रमभोजनमितित
दकामविषयम् तत्राभ्यासेद्वैगुण्यादिकंकर्त्तव्यम् एतच्चपित्रादिव्यतिरेकेण पितुर्ज्येष्ठस्यचभ्रातुरुच्छिष्टंभोज्यमित्यापस्तंबस्मरणा
त् यत्तुबृहद्व्यासवचनम् मातावाभगिनीवापिभार्यावान्याश्चयोषितः नताभिःसहभोक्तव्यंभुक्त्वाचांद्रायणंचरेत् तत्सहभोजन
विषयम् उच्छिष्टमात्रभोजनेषुशूद्रोच्छिष्टभोजनेसप्तरात्रमभोजनंस्त्रीणांचेत्यापस्तंबोक्तंद्रष्टव्यम् यत्त्वंगिरोवचनम् ब्राह्मण्या
सहयोश्नीयादुच्छिष्टंवाकदाचन नतत्रदोषंमन्यंतेसर्वएवमनीषिणइति तद्विवाहविषयमापद्विषयंवा अंत्योच्छिष्टभोजनेतु अं
त्यानांभुक्तशेषंतुभक्षयित्वाद्विजातयः चांद्रंकृच्छ्रंतदर्धंचब्रह्मक्षत्रविशांविधिरितिआपस्तंबोक्तंद्रष्टव्यम् अत्रचांद्रंचांद्रायणम्

अंत्यावसाय्युच्छिष्टभोजनेतु चांडालपतितादीनामुच्छिष्टान्नस्यभोजने चान्द्रायणंचरेद्विप्रः क्षत्रःसांतपनंचरेत् षड्रात्रंचत्रिरात्रंचवर्ण
योरनुपूर्वशः इत्यंगिरोभिहितंसांतपनमत्रमहासांतपनंद्रष्टव्यम् आपदितु आपत्कालेतुविप्रस्यभुक्तंशूद्रगृहेयदि मनस्तापेनशुध्ये
तद्रुपदांचशतंजपेदितिपाराशरोक्तंवेदितव्यम् यत्तुबृहच्छातातपेनोक्तम् पीतशेषंचयत्किंचिद्भाजनेमुखनिःसृतम् अभोज्यंतद्वि-
जानीयाद्भुक्त्वाचांद्रायणंचरेदितितदभ्यासविषयंज्ञेयम् निमित्तस्यातिलघुत्वात् पीतोच्छिष्टेतुपानीयंपीत्वातुब्राह्मणःक्वचित् त्रि-
रात्रंतुव्रतंकुर्याद्वामहस्तेनवापुनरिति एतद्बुद्धिपूर्वविषयम् अकामतस्त्वर्द्धकल्प्यमिति दीपोच्छिष्टेतु दीपोच्छिष्टंतुयत्तैलंरात्रौरथ्यादि
तंतुयत् अभ्यंगान्नैवयच्छिष्टंभुक्त्वानक्तेनशुध्यतीतिषट्त्रिंशन्मतोक्तंद्रष्टव्यम् अथाशुचिद्रव्यसंस्पृष्टभक्षणेप्रायश्चित्तम् त
त्राहसंवर्त्तः केशकीटोपपन्नंतुनीलीलाक्षोपघातनम् स्नाय्वस्थिचर्मसंस्पृष्टंभुक्त्वातूपवसेदहरिति तथाहशातातपः केशकीटाव
पन्नरुधिरमांसास्पृश्यस्पृष्टभ्रूणहावेक्षितपतत्र्यवलीढश्वसूकरगवाघ्रातशुक्तपर्युषितवृथापक्वदेवान्नहविषांभोजनेतूपवासःपं
चगव्याशनंचेति एतच्चोभयमपिअकामविषयम् कामतस्तु मृद्वारिकुसुमादीश्चफलकंदेक्षुमूलकान् विण्मूत्रदूषितान्प्राश्यकृच्छ्र
पादंसमाचरेत् संनिकृष्टेर्धमेवस्यात्कृच्छ्रःस्याच्छुचिभोजनमितिविष्णूक्तंवेदितव्यम् अल्पसंसर्गेपादोमहासंसर्गेर्धंकृच्छ्रइतिव्यव
स्था यत्तुव्यासेनोक्तम् संसर्गदुष्टंयच्चान्नंक्रियादुष्टंचकामतः भुक्त्वास्वभावदुष्टंचतप्तकृच्छ्रंसमाचरेदिति एतच्चासंस्पृष्टामेध्यादिर
सोपलब्धौवेदितव्यम् रजस्वलादिस्पर्शेतुशंखोक्तम् अमेध्यपतितचांडालपुल्कसरजस्वलावधूतकुणिकुष्ठिकुनखिसंस्पृष्टानि

भुक्त्वा कृच्छ्रं चरेदिति कुणिर्हस्तविकलः एतत्कामकारविषयम् अकामतोर्धम् भुक्त्वास्पृश्यैस्तथाशौचिकेशकीटैश्च दूषितम् कुशो
दुंबरबिल्वाद्यैः पनसांबुजपत्रकैः शंखपुष्पीसुवर्चादिक्काथंपीत्वा विशुध्यतीति यद्विष्णुनोक्तं तदशक्तविषयं रजकादिस्पर्शविषयं वा
मूढाद्युपहते तु हारीतोक्तं विज्ञेयम् शूद्रेणोपहतं भोज्यं कीटैर्वामेध्यसेविभिः भुंजानेषु तु वा यत्र दद्यात्कृच्छ्रं द्वउपस्पृशेत् अनर्हत्वात्स
पंक्तौ तु भुंजानेषु वा यत्रोत्थाय योच्छिष्टं प्रयच्छेदाचामेद्वा कुत्सित्वा वा यत्रान्नं दद्युस्तत्र प्रायश्चित्तमहोरात्रमिति उच्छिष्टपंक्तिभोजने-
प्येतदेव यस्तु भुंक्ते द्विजः पंक्त्यामुच्छिष्टायां कदाचन अहोरात्रोषितो भूत्वा पंचगव्येन शुध्यतीति क्रतुस्मरणात् वामकरनिर्मुक्तामत्र
भोजने तु समुत्थितस्तु यो भुंक्ते यो भुंक्ते मुक्तभाजने एवं वैवस्वतः प्राह भुक्त्वा सांतपनं चरेदिति षट्त्रिंशन्मतोक्तं वेदितव्यम् तथापराशरेणाप्यत्रोक्तम्
एकपंक्त्युपविष्टानां विप्राणां सहभोजने यद्येकोपि त्यजेत्पात्रं शेषमन्नं न भोजयेत् मोहाद्भुंजीत यस्तत्र पंक्त्यामुच्छिष्टभोजनः प्रायश्चित्तं चरेद्विप्रः कृच्छ्रं सांतपनं चरेदिति
शवादिसंपृक्तकूपाद्युदकपाने तु विष्णुराह मृतपंचनखात्कूपादत्यंतोपहताद्वोदकं पीत्वा ब्राह्मणस्त्र्यहमुपवसेत् द्व्यहं राजन्य एकाहं वैश्यः शूद्रो नक्तं सर्वेचांते पंचगव्यं पिबेयुरिति
अत्यंतोपहताद्वेति मूत्रपुरीषादिभिर्वेत्यभिप्रेतं यदा तु तत्रैव शवमुच्छूनतया भिन्नं भवति तदा हारीतोक्तो विशेषः क्लिन्ने भिन्ने शवे तोयं तत्रस्थं यदि तत्पिबेत् शुद्ध्यै चांद्रायणं कुर्यात्तप्तकृच्छ्रमथापि वा यदि कश्चित्ततः स्नायात्प्रमादेन द्विजोत्तमः जपंस्त्रिषवणस्नायी अहोरात्रेण शुध्यतीति इदं चांद्रायणं कामतो मानुषशवोपहतकूपजलपानविषयम् अकामतस्तु षड्रात्रं क्लिन्नं भिन्नं शवं चैव कूपस्थं यदि जायते पयः पिबे

त्रिरात्रेणमानुषेद्विगुणंस्मृतमितिदेवलस्मरणात् यदाचंडालकूपादिगतंजलंपिबतितदापस्तंबोक्तंद्रष्टव्यम् चांडालकूपभांड-
स्थंनरःकामाज्जलंपिबेत् प्रायश्चित्तंकथंतत्रवर्णेवर्णेविनिर्दिशेत् चरेत्सांतपनंविप्रःप्राजापत्यंचभूमिपः तदर्धंचचरेद्वैश्यःशूद्रे
पादंविनिर्दिशेदिति इदंचकामकारविषयम् अकामतस्तु चांडालकूपभांडस्थमज्ञानादुदकंपिबेत् सतुत्र्यहेणशुध्येतशूद्रस्त्वेकेन
शुध्यतीतिदेवलोक्तंद्रष्टव्यम् चांडालादिसंबद्धाल्पजलाशयेष्वपिकूपवच्छुद्धिः शिलाशयेषुयथाल्पेषुस्थावरेषुमहीतले कूपवत्क
थिताशुद्धिर्महत्सुतुनदूषणमितिविष्णुस्मरणात् पुष्करिण्यादिषुपुनः म्लेच्छादीनांजलंपीत्वापुष्करिण्यांह्रदेपिवा जानुदघ्नेशुचि
ज्ञेयमधस्तादशुचिस्मृतम् तत्तोयंयःपिबेद्विप्रःकामतोकामतोपिवा अकामान्नक्तभुंजीस्यादहोरात्रंतुकामतः इत्यापस्तंबोक्तंद्रष्टव्य
म् रजकादिभांडस्थतोयेषु भांडस्थमंत्यजानांतुजलंदधिपयःपिबेत् ब्राह्मणःक्षत्रियोवैश्यःशूद्रश्चैवप्रमादतः ब्रह्मकूर्चोपवासेन
द्विजातीनांतुनिष्कृतिः शूद्रस्यचोपवासेनतथादानेनशक्तितइतिपराशरोक्तंद्रष्टव्यम् कामतस्तुद्विगुणम् अंत्यजैःखानिताःकूपास्त
डागंवाप्यएववा एषुस्नात्वाचपीत्वाचप्राजापत्येनशुध्यतीतिआपस्तंबोक्तमभ्यासविषयंवेदितव्यम् यत्त्वापस्तंबेन चांडालादिकू
पादिजलपानेपंचगव्यमात्रमुक्तम् प्रपास्वरण्येघटकेचशैलेद्रोण्यांजलंकोशविनिर्गतंच श्वपाकचांडालपरिग्रहेषुपीत्वाजलंपंच-
गव्येनशुध्येदितितदशक्तविषयम् प्रपांगतोविनातोयंशरीरेयोनिषिंचति एकाहंक्षपणंकृत्वासचैलंस्नानमाचरेत् सुराघटप्रपा
तोयेपीत्वानाव्यजलंतथा अहोरात्रोषितोभूत्वापंचगव्यंजलंपिबेत् अथभावदुष्टभक्षणेप्रायश्चित्तम् भावदुष्टंचयद्दूर्णतआकार

तोयानिसदृशनयाजुगुप्सितशरीरमलादिवासनांजनयतितदुच्यते अरिप्रयुक्तगरलादिशंकाच तत्रपराशरः वाग्दुष्टंभावदुष्टंच
भाजनेभावदूषितम् भुक्त्वान्नंब्राह्मणःपश्चात्त्रिरात्रेणविशुध्यतीति एतत्सामान्यकारविषयम् शंकायांतु शंकास्थानेसमुत्पन्ने अभो
ज्याभक्ष्यसंज्ञिते आहारशुद्धिंवक्ष्यामितन्मेनिगदतःशृणु अक्षारलवणारूक्षांपिबेद्ब्राह्मीसुवर्चलाम् त्रिरात्रंशंखपुष्पींवाब्राह्मणः
पयसासह पलाशबिल्वपत्राणिकुशान्पद्मोदुंबरम् अपःपिबेत्क्वाथयित्वात्रिरात्रेणविशुध्यतीतिवसिष्ठोक्तंद्रष्टव्यम् मनुनाप्यभो
ज्यभोजनशंकायामुक्तम् संवत्सरस्यैकमपिचरेत्कृच्छ्रंद्विजोत्तमः अज्ञातभुक्तशुध्यर्थंज्ञातस्यचविशेषतइति कालदुष्टभक्षण
प्रायश्चित्तम् कालदुष्टंचपर्युषितानिर्दशगोक्षीरादि तत्राकामतःशेषेषूपवसेदहरितिमनूक्तंवेदितव्यम् कामतस्तु केवलानिचशु
क्तानितथापर्युषितंचयत् रुचीसपक्वंभुक्त्वातुत्रिरात्रंतुव्रतीभवेदितिशंखोक्तंवेदितव्यम् केवलान्यस्नेहाक्तानि अनिर्दशगोक्षीरा
दिषुप्रायश्चित्तंप्रदर्शितम् नवोदकपानेतुपंचगव्यप्राशनम् शृंगास्थिदंतजैःपात्रैःशंखशुक्तिकपर्दिकैः पीत्वानवोदकंचैवपंचगव्ये
नशुध्यतीतिबृहद्याज्ञवल्क्यस्मरणात् कामतस्तूपवासःकर्तव्यः कालेनवोदकंशुद्धंनपिबेच्चत्र्यहंहितत् अकालेतुदशाहंस्या
त्पीत्वानाद्यादहर्निशमितिस्मृत्यंतरदर्शनात् ग्रहकालभोजनंतुचांद्रायणम् नवश्राद्धंग्रामयाजकान्नंसग्रहभोजनम् नारीणांप्र
थमेगर्भेभुक्त्वाचांद्रायणंचरेदितिशातातपस्मरणात् यदातुसग्रहादन्यत्रनिषिद्धकालेभुंक्ते यथाहमार्कंडेयः चंद्रस्ययदिवाभा-
नोर्यस्मिन्नहनिभार्गव ग्रहणंतुभवेत्तस्मिन्नपूर्वंभोजनक्रियाम् नाचरेत्सग्रहेचैवतथैवास्तमुपागते यावत्स्यान्नोदयस्तस्यना

श्नीयात्तावदेवतु तथा ग्रहणंतुभवेदिंदोः प्रथमादधियामतः भुंजीतावर्त्तनात्पूर्वं प्रथमेप्रथमात्दधः तथा अपराण्हेनमध्यान्हेसा-
यान्हेनतुसंगवे भुंजीतसंगवेचेत्स्यान्नपूर्वभोजनक्रियेति यच्चमनुनोक्तम् नाश्नीयात्संधिवेलायांनातिप्रगेनातिसायमित्येवमा-
दि यच्चवृहच्छातातपेनोक्तम् धानादधिचसक्तूंश्चश्रीकामोवर्जयेन्निशि भोजनंतिलसंबन्धंस्नानंचैवविचक्षणइति एवमादिष्व-
नादिष्टप्रायश्चित्तेषुप्राणायामशतंकार्यंसर्वपापापनुत्तये उपपातकजातानामनादिष्टस्यचैवहीतियोगीश्वरोक्तंद्रष्टव्यम् अकाम
तस्तुशेषेषूपवसेदहरितिमनूक्तोपवासोद्रष्टव्यः अथगुणदुष्टशुक्तादिभक्षणेप्रायश्चित्तम् तत्रचमनुः शुक्तानिचकषायांश्चपी-
त्वामेध्यानपिद्विजः तावद्भवत्यप्रयतोयावत्तन्नव्रजत्यधइति अत्राकामतः शेषेषूपवसेदहरित्युपवासोद्रष्टव्यः कामतस्तु केवलानि
चशुक्तानितथापर्युषितंचयत् ऋबीसपक्कंभुक्त्वाचत्रिरात्रंतुव्रतीभवेदितिशंखस्मरणात् एतच्चामलकादिफलयुक्तकांजिकादिव्य
तिरेकेणद्रष्टव्यम् कुंडिकासफलायेषुगृहेषुस्थापिताभवेत् तस्यास्तुकंजिकायात्थानेतरस्याः कदाचनेतिस्मरणात् उत्धृतस्नेहादि
षुतु उत्धृत्यस्नेहविलयनपिण्याकमथितप्रभृतीनांचात्तवीर्याणिनाश्नीयादित्युक्त्वाप्राक् पंचनखेभ्यश्छर्दनंघृतप्राशनंचेतिगौतमो
क्तंद्रष्टव्यम् विलयनंघृतमलम् अहुताद्यन्नभोजनेतुलिखितआह यस्यचाग्नौनक्षिपतेयस्यचान्नंनदीयते नतद्भोज्यंद्विजाती
नांभुक्त्वाचोपवसेदहः वृथाकृसरसंयावपायसापूपशष्कुलीः आहिताग्निर्द्विजोभुक्त्वाप्राजापत्यंसमाचरेदिति अनाहिताग्नेस्तुशे
षेषूपवसेदहरित्युपवासोद्रष्टव्यः भिन्नभाजनादिषुभोजनेसंवर्त्तेनोक्तम् शूद्राणांभाजनेभुक्त्वाभुक्त्वावाभिन्नभाजने अहोरा

त्रोषितोभूत्वापंचगव्येनशुद्ध्यतीति तथास्मृत्यंतरेप्युक्तम् वटार्काश्वत्थपत्रेषुकुंभीतिंदुकपत्रयोः कोविदारकदंबेषुभुक्त्वाचांद्राय
णंचरेदिति तथा पलाशपद्मपत्रेषुगृहीभुक्त्वैंदवंचरेत् वानप्रस्थोयतिश्चैवलभतेचांद्रिकंफलमिति अथहस्तदानादिक्रियादु-
ष्टाभोज्यभक्षणेप्रायश्चित्तम् तत्रपराशरः माक्षिकंफाणितंशाकंगोरसंलवणंघृतम् हस्तदत्तानिभुक्त्वातुदिनमेकमभोजनमिति
क्रमतस्तु हस्तदत्तभोजनेऽब्राह्मणसमीपेभोजनेदुष्टपंक्तिभोजनेपंक्त्यग्रतोभोजनेऽभ्यक्तमूत्रपुरीषकरणेमृतसूतकशूद्रान्नभोज
नेशूद्रैःसहस्वप्नेत्रिरात्रमभोजनमितिहारीतोक्तंविज्ञेयम् पर्यायान्नदानदुष्टेतु ब्राह्मणान्नंददच्छूद्रःशूद्रान्नंब्राह्मणोददत् द्वय
मेतदभोज्यंस्याद्भुक्त्वातूपवसेदहरिति इत्ययाज्ञवल्क्योक्तमवगंतव्यम् शूद्रहस्तभोजनेतु शूद्रहस्तेनयोभुंक्तेपानीयंवापिबेत्क्वचि
त् अहोरात्रोषितोभूत्वापंचगव्येनशुध्यतीतिमनूक्तंविज्ञेयम् धमनदुष्टेपि आसनारूढपादोवावस्त्रार्धप्रावृतोपिवा मुखेन
धमितंभुक्त्वाकृच्छ्रंसांतपनंचरेदितितेनैवोक्तम् त्रिरात्राद्युद्देशेनत्यक्तान्नभोजनेतु भुंक्तेचेत्सावर्णश्राद्धे प्राणायामान्षडाचरे
त् उपवासस्त्रिमासादिवत्सरांतंप्रकीर्त्तितः प्राणायामत्रयंवृद्धावहोरात्रंसपिंडने असरूपेस्मृतंनक्तंव्रतपारणकेतथा द्विगुणं
क्षत्रियस्यैनस्त्रिगुणंवैश्यभोजने साक्षाच्चतुर्गुणंत्वेतत्स्मृतंशूद्रस्यभोजने अतिथौतिष्ठतिद्वारित्वापःप्राश्नंतियेद्विजाः रुधिरंतद्भवेद्वारिभुक्त्वा
चांद्रायणंचरेदितिभारद्वाजोक्तमवगंतव्यम् हारीतेनाप्युक्तम् एकादशाहेतुत्र्यहंभुक्त्वासंचयनेतथा उपोष्यविधिवत्स्नात्वाकूश्मांडैर्जुहु
याद्घृतमिति विष्णुनाप्युक्तम् प्राजापत्यंनवश्राद्धेपादोनंचाद्यमासिके त्रैपक्षिकेतदर्द्धंतुपंचगव्यंद्विमासिकेइतिचापद्विषयम् अना

पदितु चांद्रायणंनवश्राद्धे प्राजापत्यंतुमिश्रके एकाहस्तुपुराणेषु प्राजापत्यंविधीयतेइतिहारीतोक्तंद्रष्टव्यम् प्राजापत्यंतुमिश्रकेइत्ये
तदाद्यमासिकविषयंद्रष्टव्यम् द्वितीयादिषुतु प्राजापत्यंनवश्राद्धे पादोनंचाद्यमासिके त्रैपक्षिकेतदर्धंतुपाक्षेद्वैमासिकेतथा पादो
नकृच्छ्रंनिर्दिष्टंषण्मासेचतथाब्दिके त्रिरात्रंचान्यमासेषुप्रत्यहंचेदहःस्मृतमितिषट्त्रिंशन्मतोक्तंद्रष्टव्यम् क्षत्रियादिश्राद्धभोजने
त्वनापदितत्रैवविशेषउक्तः चान्द्रायणंनवश्राद्धेपराकोमासिकेस्मृतः त्रैपक्षिकेसांतपनंकृच्छ्रोमासद्वयेस्मृतः क्षत्रियस्यनवश्रा
द्धेव्रतमेतदुदाहृतम् वैश्यस्यार्द्धाधिकंप्रोक्तंक्षत्रियात्तुमनीषिभिः शूद्रस्यतुनवश्राद्धेचरेच्चांद्रायणद्वयम् सार्द्धंचांद्रायणंमासेत्रिप
क्षेत्वेदवव्रतम् मासद्वयेपराकःस्यादूर्ध्वंसांतपनंस्मृतम् यत्तुशंखवचनम् चांद्रायणंनवश्राद्धेपराकोमासिकेस्मृतः पक्षत्रयेति
कृच्छ्रःस्यात्षण्मासेकृच्छ्रएवतु आब्दिकेपादकृच्छ्रंस्यादेकाहःपुनराब्दिके अतऊर्ध्वंनदोषःस्याच्छंखस्यवचनंयथेति तत्सर्पा-
दिहतविषयम् यस्तेनपतितक्लीबाद्याद्यपांक्तेयविषयंवा चांडालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि दंष्ट्रिभ्यश्चपशुभ्यश्चमरणं-
पापकर्मणाम् पतनानाशकेचैवविषोद्बंधनकेस्तथा भुक्त्वैषांषोडशश्राद्धेकुर्यादिंदुव्रतंद्विजइति तथा अपांक्तेयान्नमुद्दिश्यश्रा
द्धमेकादशेहनि ब्राह्मणस्तत्रभुक्त्वान्नंशिशुचांद्रायणंचरेदिति आमश्राद्धेतथाभुक्त्वातप्तकृच्छ्रेणशुध्यति संकल्पितेतथाभुक्त्वा
त्रिरात्रंक्षपणंभवेदितिभरद्वाजेनगुरुप्रायश्चित्ताभिधानात् ब्रह्मचारिषुबृहद्यमोविशेषमाह मासिकादिषुयोश्नीयादासमाप्तव्र-
तोद्विजः त्रिरात्रमुपवासोवै प्रायश्चित्तंविधीयते प्राणायामत्रयंकृत्वाघृतंप्राश्यविशुद्ध्यतीति इदमज्ञानविषयम् कामतोपिसए

वाह मधुमांसंचयोऽश्नीयात् श्राद्धंसूतकमेववा प्राजापत्यंचरेत्कृच्छ्रंव्रतशेषंसमापयेदिति आमश्राद्धेतुसर्वत्रार्द्धम् आमश्राद्धेत-
दर्द्धंतु प्राजापत्यंतुसर्वदेतिषट्त्रिंशन्मतेविधानात् यत्तूशनसोक्तम् दशकृत्वःपिबेच्चापोगायत्र्याश्राद्धभुग्द्विजः ततःसंध्यामु-
पासीतशक्त्यंतुतदनंतरमिति तदनुक्तप्रायश्चित्तश्राद्धविषयम् संस्कारांगभूतश्राद्धभोजनेतुव्यासेनविशेषउक्तः निवृत्तेचूडा
होमेतुप्राङ्नामकरणात्तथा चरेत्सांतपनंभुक्त्वाजातकर्मणिचैवहि अतोन्येषुतुभुक्त्वान्नंसंस्कारेषुद्विजोत्तमः नियोगादुपवासेन
शुद्ध्यतेनिंद्यभोजनइति सीमंतोन्नयनादिषुपुनर्धौम्योविशेषमाह ब्रह्मौदनेचसोमेचसीमंतोन्नयनेतथा जातश्राद्धेनवश्राद्धेद्वि
जश्चांद्रायणंचरेदिति अत्रब्रह्मौदनाख्यंकर्मयज्ञांगभूतंसोमसाहचर्यात् अथपरिग्रहाभोज्यभोजनेप्रायश्चित्तम् यत्स्वरू
पतोऽनिषिद्धमपिविशिष्टपुरुषस्वामिकतयाऽभोज्यंभण्यतेतत्परिग्रहाशुचि तत्रयोगीश्वरेण अदत्तान्यग्निहीनस्यनान्नमद्या
दनापदीत्यारभ्यसार्द्धपंचभिःश्लोकैरभोज्यान्नाःप्रतिपादिताः मनुनापितएवकिंचिदधिकाःप्रतिपादिताः नाश्रोत्रियततेयज्ञेग्राम
याजिहुतेतथा स्त्रियाक्लीबेनचहुतेभुंजीतब्राह्मणःक्वचित् मत्तक्रुद्धातुराणांतुनभुंजीतकदाचन गणान्नंगणिकान्नंचविदुषांच-
जुगुप्सितम् स्तेनगायनयोश्चान्नंतक्ष्णोवार्धुषिकस्यच दीक्षितस्यकदर्यस्यबद्धस्यनिगडस्यच अभिशस्तस्यषंढस्यपुंश्चल्या
दांभिकस्यच चिकित्सकस्यमृगयोःक्रूरस्योच्छिष्टभोजिनः उग्रान्नंसूतिकान्नंचपर्यायान्नमनिर्दशम् अनर्चितंवृथामांसम
वीरायाश्चयोषितः द्विषदन्नंकदर्यान्नंपतितान्नमवक्षुतम् पिशुनानृतिनोश्चैवक्रतुविक्रयकस्यच शैलूषतंतुवायान्नंकृतघ्न

स्यान्नमेवच कर्मारस्यनिषादस्यरंगावतरणस्यच सुवर्णकर्तुर्वेनस्यशस्त्रविक्रयिणस्तथा श्ववतांशौंडिकानांचचैलनिर्णेजिकस्य
च रजकस्यनृशंसस्ययस्यचोपपतिर्गृहे मृष्यंतियेचोपपतिंस्त्रीजितानांचसर्वशः अनिर्दशंचप्रेतान्नमतुष्टिकरमेवचेति अत्रच
पदार्थाअभक्ष्यकांडेश्राद्धकांडेचव्याख्याताः अत्रप्रायश्चित्तमाह भुक्त्वातोन्यतमस्यान्नममत्याक्षपणंत्र्यहम् मत्याभुक्त्वाच
रेत्कृच्छ्रंरेतोविण्मूत्रमेवचेतिपैठीनसिनाप्यकामतस्त्रिरात्रमेवोक्तम् कुनखीश्यावदंतःपित्राविवदमानःस्त्रीजितःकुष्ठीपिशुनःसो
मविक्रयीवाणिजकोग्रामयाजकोभिशस्तोवृषल्यामभिजातःपरिवित्तिःपरिविंदानोदिधिषूपतिःपुनर्भूपुत्रश्चौरःकांडपृष्ठसेवक-
श्चेत्यभोज्यान्नाअपांक्तेयाअश्राद्धार्हाः एषांभुक्त्वादत्वावाविज्ञानात्त्रिरात्रमिति शंखेनत्वेतानेवकिंचिदधिकान्पठित्वाचांद्रायणमु
क्तम् तदभ्यासविषयम् गौतमेनपुनरुच्छिष्टपुंश्चल्यभिशस्तेत्यादिनाअभोज्यान्पठित्वाप्राक्पंचनखेभ्यश्छर्दनंघृतप्राशनंचेति
प्रायश्चित्तमुक्तंतदापद्विषयम् यस्तुबलात्कारेणभुज्यतेतस्यापस्तंबेनविशेषउक्तः बलाद्दासीकृतायेतुम्लेच्छचांडालदस्युभिः अ
शुभंकारिताःकर्मगवादिप्राणिहिंसनम् उच्छिष्टमार्जनंचैवतथोच्छिष्टस्यभोजनम् खरोष्ट्रविड्वराहाणामामिषस्यचभक्षणम् तत्स्त्री
णांचतथासंगस्ताभिश्चसहभोजनम् मासोषितेद्विजातौतुप्राजापत्यंविशोधनम् चांद्रायणंत्वाहिताग्नेःपराकस्त्वथवाभवेत् चां
द्रायणंपराकंचचरेत्संवत्सरोषितः संवत्सरोषितोशूद्रोमासार्द्धंयावकंपिबेत् माससमात्रोषितःशूद्रःकृच्छ्रपादेनशुद्ध्यति ऊर्ध्वंसंव
त्सरात्कल्प्यंप्रायश्चित्तंद्विजोत्तमैः संवत्सरैस्त्रिभिश्चैवतद्भावसनियच्छतीति आशौचपरिग्रहान्नभोजनेच्छागलआह

अज्ञानाद्भोजने विप्राः सूतके मृतकेपि वा प्राणायामशतं कृत्वा शुध्यंते शूद्रसूतके वैश्ये षष्टिर्भवेद्राज्ञि विंशतिर्ब्राह्मणे दश एका-
हं चत्र्यहं पंच सप्तरात्रमभोजनम् तथा शूद्रैर्भवत्येषां पंचगव्यं पिबेत्त त इति ब्राह्मणादिक्रमेणैकाहत्र्यहादयो योज्याः इदमका-
मविषयम् कामतस्तु मार्कंडेय आह भुक्त्वा तु ब्राह्मणाशौचे चरेत्स्नानं पनं द्विजः भुक्त्वा तु क्षत्रियाशौचे न तथा कृच्छ्रो विधीयते वैश्या-
शौचे न तथा भुक्त्वा महासांतपनं चरेत् शूद्रस्यैव तथा भुक्त्वा द्विजश्चांद्रायणं चरेदिति यच्च शंखेनोक्तम् शूद्रस्य सूतके भुक्त्वा ष-
ण्मासव्रतमाचरेत् वैश्यस्य तु तथा भुक्त्वा त्रिमासान्व्रतमाचरेत् क्षत्रियस्य तथा भुक्त्वा द्वौ मासौ व्रतमाचरेत् ब्राह्मणस्य तथाशौ-
चे भुक्त्वा मासव्रतं चरेदिति इदमभ्यासविषयम् एतच्च प्रायश्चित्तमाशौचादनंतरं वेदितव्यम् ब्राह्मणादीनामाशौचे यः सकृदेवा-
न्नमश्नाति तस्य तावदाशौचम् आशौचव्यपगमे प्रायश्चित्तं कुर्यादिति विष्णुस्मरणात् अपुत्राद्यन्नभोजने तु लिखित आह भु-
क्त्वा वार्धुषिकस्यान्नमव्रतस्यासुतस्य च शूद्रस्य च तथा भुक्त्वा त्रिरात्रं स्यादभोजनम् तथा परपाकनिवृत्तस्य परपाकरतस्य च
अपचस्य तु भुक्त्वान्नं द्विजश्चांद्रायणं चरेत् एतच्चाभ्यासविषयम् परपाकनिवृत्तादेर्लक्षणं तेनैवोक्तम् गृहीत्वाग्निं समारो-
प्य पंच यज्ञान्न निर्वपेत् परपाकनिवृत्तोसौ मुनिभिः परिकीर्त्तितः पंच यज्ञान्स्वयं कृत्वा परान्नादुपजीवति सततं प्रातरुत्थाय-
परपाकरतस्तु सः गृहस्थधर्मवृत्तो यो ददाति परिवर्जितः ऋषिभिर्धर्मतत्वज्ञैरपचः संप्रकीर्त्तित इति यत्तु ब्रह्मचार्याद्यन्नभोजने
वृद्धयाज्ञवल्क्य आह यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ तयोरन्नं न भोक्तव्यं भुक्त्वा चांद्रायणं चरेदिति यत्तु पार्वणश्रा-

श्राद्धकर्त्तुरन्नभोजनेभरद्वाजआह पक्षेवायदिवामासेयस्यनाश्नंतिदेवताः भुक्त्वादुरात्मनस्तस्यद्विजश्चांद्रायणंचरेदिति तदु
भयमप्यभ्यासविषयम् पूर्वपरिगणितातिरिक्तायेनिषिद्धाचरणशीलास्तदन्नभोजनेतु निराचारस्यविप्रस्यनिषिद्धाचरणस्य
च अन्नंभुक्त्वाद्विजःकुर्याद्दिनमेकमभोजनमितिषट्त्रिंशन्मतोक्तंद्रष्टव्यम् अत्रैवसंवत्सराभ्यासेषट्त्रिंशन्मतएवोक्तम् उ
पपातकयुक्तस्याब्दमेकंनिरंतरम् अन्नंभुक्त्वाद्विजःकुर्यात्पराकंतुविशोधनमिति इदंतुभक्ष्याभक्ष्यप्रायश्चित्तकांडगतविशे
षोदितव्रतकदंबकंद्विजाग्र्यस्यैव क्षत्रियादीनांतुपादपादह्रान्याभवति विप्रेतुसकलंदेयंपादोनंक्षत्रियेस्मृतम् वैश्येर्द्धंपाद
एकस्तुशूद्रजातिषुशस्यतेइतिविष्णुस्मरणात् इत्यभक्ष्यभक्षणप्रायश्चित्तप्रकरणम् निमित्तपरिगणनवेलायामुपपातका-
नंतरंजातिभ्रंशकरादीनिपरिगणितानि तत्रप्रायश्चित्तान्युच्यंते तत्रमनुः जातिभ्रंशकरंकर्मकृत्वान्यतममिच्छया चरेत्सांतप-
नंकृच्छ्रंप्राजापत्यमनिच्छया संकरापात्रकृत्यासुमासःशोधनमैंदवः मलिनीकरणीयेषुतप्तःस्याद्यावकस्त्र्यहमिति अन्यत
ममितिसर्वत्रसंबध्यते यमेनाप्यत्रविशेषउक्तः संकरीकरणंकृत्वामासमश्नीतयावकम् कृच्छ्रातिकृच्छ्रमथवाप्रायश्चित्तंसमा
चरेत् अपात्रीकरणंकृत्वातप्तकृच्छ्रेणशुध्यति सांतकृच्छ्रेणयाशुद्धिर्महासांतपनेनवा मलिनीकरणीयेषुतप्तकृच्छ्रंविशोधनमि
ति बृहस्पतिनापिजातिभ्रंशकरेविशेषउक्तः ब्राह्मणस्यरुजंकृत्वारासभादिप्रमापणम् निंदितेभ्योधनादानंकृच्छ्रार्द्धंव्रतमाचरे
दिति एतेषांजातिभ्रंशकरादिप्रायश्चित्तानांमन्वाद्युक्तानांजातिशक्त्याद्यपेक्षयाविषयोविभजनीयः एवंयोगाद्दृत्वकृतमभ

क्ष्यादिप्रायश्चित्तंसंक्षेपतोदर्शितम् २९० अधुनाप्रकृतमनुसरामः महापातकमतिपातकमनुपातकमुपपातकंप्रकीर्णकमितिपंचविधंपापजातमुक्तम् तत्रचतुर्विधप्रायश्चित्तमभिधायक्रमप्राप्तंप्रकीर्णकप्रायश्चित्तमाह खरयुक्तंयानंखरयानम् उष्ट्रयुक्तंयानमुष्ट्रयानम् रथगंत्र्यादि तेनाध्वगमनंकृत्वादिगंबरःस्नात्वाप्स्ववल्हत्यवावासरेचनिजांगनासंभोगंकृत्वाचतडागतरंगिण्यादाववगाह्यकृत

प्राणायामीजलेस्नात्वाखरयानोष्ट्रयानयः नग्नःस्नात्वाचभुक्त्वाचगत्वाचैवदिवास्त्रियम् २९१
गुरुंहुंकृत्यत्वंकृत्यविप्रंनिर्जित्यवादतः बध्वावावाससाक्षिप्रंप्रसाद्योपवसेद्दिनम् २९२

प्राणायामःशुध्यति इदंचकामकारविषयम् उष्ट्रयानंसमारुह्यखरयानंतुकामतः सवासाजलमाप्लुत्यप्राणायामेनशुध्यतीति मनुस्मरणात् अकामतःस्नानमात्रंकल्प्यम् साक्षात्खरारोहणेतुद्विगुणावृत्तिःकल्पनीया तस्यगुरुत्वात् २९१ किंच गुरुंजनकादिकंत्वंकृत्यत्वमेवमात्थत्वयैवकृतमित्येकवचनांतयुष्मच्छब्दोच्चारणेननिर्भर्त्स्यविप्रंवाज्यायांसंसमंकनीयांसंवासक्रोधं

हुंतूष्णीमास्वहुंमाबहुवादीरित्येवमाक्षिप्य जल्पवितंडाभ्यां जयफलाभ्यां विप्रंनिर्जित्य कंठेवाससा मृदुस्पर्शेनापि बध्वाक्षिप्रंपादप्रणि-
पातादिना प्रसाद्य क्रोधत्याजयित्वा दिनमुपवसेत् अनश्नन् कृत्स्नंवासरंनयेत् यत्तुयमेनोक्तम् वादेनब्राह्मणंजित्वा प्रायश्चित्तविधि
त्सया त्रिरात्रोपोषितःस्नात्वा प्रणिपत्य प्रसादयेदिति तदभ्यासविषयम् २९२ किंचाह विप्रजिघांसयादंडोद्यमे कृच्छ्रःशुद्धिहेतुः
निपातनेताडने अतिकृच्छ्रः असृक्पाते रुधिरस्रवणे पुनः कृच्छ्रातिकृच्छ्रः अभ्यंतरशोणितेपि कृच्छ्रःशुद्धिहेतुः बृहस्पतिनाप्यत्र

विप्रदंडोद्यमे कृच्छ्रस्त्वतिकृच्छ्रो निपातने कृच्छ्रातिकृच्छ्रोसृक्पाते कृच्छ्रोभ्यंतरशोणिते २९३

विशेषउक्तः काष्ठादिनाताडयित्वा त्वग्भेदे कृच्छ्रमाचरेत् अस्थिभेदेतिकृच्छ्रःस्यात्पराकस्त्वंगकर्त्तने पादप्रहारेयमआह पादेन
ब्राह्मणंस्पृष्ट्वा प्रायश्चित्तविधित्सया द्विवसोपोषितःस्नात्वा प्रणिपत्य प्रसादयेदिति मनुनोक्तान्यन्यानि प्रकीर्णकप्रायश्चित्तानि
दर्शितानि विनाद्भिरप्सुवाप्यार्त्तःशारीरंसंनिषेव्यतु सचैलोबहिराप्लुत्य गामालभ्य विशुद्ध्यतीति विनाद्भिरित्यसंनिहितास्वप्सु

इत्यर्थः शारीरंमूत्रपुरीषादि इदमकामविषयम् कामतस्तु आपद्गतोविनातोयंशारीरंयोनिषेवते एकाहंक्षपणंकृत्वासचैलो जलमाविशेदितियमोक्तंवेदितव्यम् यत्तुस्मृतंतुवचनम् अप्स्वग्नौवामेहनस्तप्तकृच्छ्रमिति तदनार्त्तविषयमभ्यासविषयंवा नित्यश्रौतादिकर्मलोपेतुमनुराह वेदोदितानांनित्यानांकर्मणांसमतिक्रमे स्नातकव्रतलोपेच प्रायश्चित्तमभोजनमिति श्रौतेषुदर्शपूर्णमासादिषु कर्मसुस्मार्त्तेषुनित्यहोमादिषुप्रतिपदोक्तेष्वादि प्रायश्चित्तैरुपवासस्यसमुच्चयः स्नातकव्रतानि नजीर्णमलवद्वासाभवेच्चविभवेसतीत्येवमादीनिशास्त्रोक्तानि स्नातकव्रतमधिकृत्यक्रतुनाप्युक्तम् एतेषामाचाराणामेकैकस्यव्यतिक्रमणेगायत्र्यष्टशतंजपंकृत्वापूतोभवतीति पंचमहायज्ञाकरणेबृहस्पतिराह अनिर्वर्त्त्यमहायज्ञान्योभुंक्तेप्रत्यहंगृही अनातुरःसतिधनेकृच्छ्रार्द्धेनसशुध्यति आहिताग्निरुपस्थानंनकुर्याद्यस्तुपर्वणि ऋतौनगच्छेद्भार्यांवासोपिकृच्छ्रार्द्धमाचरेदिति द्वितीयादिभार्योपरमेतुदेवलआह मृतांद्वितीयांयोभार्यांदहेद्वैतानिकाग्निभिः जीवंत्यांप्रथमायांतुसुरापानसमंहितदिति स्वभार्याभिशंसनेतुयमआह स्वभार्यांतुयदाक्रोधादगम्येतिनरोवदेत् प्राजापत्यंचरेद्विप्रःक्षत्रियोदिवसान्नव षड्रात्रंतुचरेद्वैश्यस्त्रिरात्रंशूद्रआचरेदिति अस्नानभोजनादौहारीतआह वहन्कमंडलुंरिक्तमस्नातोश्नंश्चभोजनम् अहोरात्रेणशुद्धिःस्याद्दिनजाप्येनचैवहीति एकपंक्त्युपविष्टानांस्नेहादिनावैषम्येणदानादौयमआह नपंक्त्यांविषमंदद्यान्नयाचेतनदापयेत् प्राजापत्येनकृच्छ्रेणमुच्यतेकर्मणस्ततः नदीसंक्रमहंतुश्चकन्याविघ्नकरस्यच समेविषमकर्तुश्चनिष्कृतिर्नविधीयते

त्रयाणामपिचैतेषांप्राजापत्यंतुमार्गणम् भैक्ष्यलब्धेनचान्नेनद्विजश्चांद्रायणंचरेदिति संक्रमउदकावतरणमार्गः समेविषम
कर्त्तापूजादौ इंद्रधनुर्दर्शनादावृष्यशृंगआह इंद्रचापपलाशाग्निंयद्यन्यस्यप्रदर्शयेत् प्रायश्चित्तमहोरात्रंधनुर्दंडश्चदक्षि-
णा पतितादिसंभाषणेतुगोतमआह नम्लेच्छाशुच्यधार्मिकैःसहसंभाषेत संभाष्यपुण्यकृतोमनसाध्यायेत् ब्राह्मणेनसहवासंभा
षेत भार्यान्नधनलाभवधंपृथग्वर्षाणीति भार्यान्नधनानांलाभस्यवधेविघ्नकरणेप्रत्येकंसंवत्सरंप्राकृतंब्रह्मचर्यम् तथा ब्रह्मसूत्रंवि
नाविण्मूत्रोत्सर्गादौस्मृत्यंतरेप्रायश्चित्तमुक्तम् विनायज्ञोपवीतेनयद्युच्छिष्टोभवेद्द्विजः प्रायश्चित्तमहोरात्रंगायत्र्यष्टशतंतुवा तत्रऊ
र्ध्वोच्छिष्टेउपवासः अधोच्छिष्टस्योदकपानादिषुगायत्रीजपइतिव्यवस्था अकामतस्तु पिबतोमेहतश्चैवभुंजतोनुपवीतिनः प्रा
णायामत्रिकंषट्कंनक्तंचत्रितयंक्रमादितिस्मृत्यंतरोक्तंद्रष्टव्यम् भुक्त्वाशौचाचमनमकृत्वोत्थानेतु यद्युत्तिष्ठत्यनाचांतोभुक्त्वेवा
नाशनात्ततः सद्यःस्नानंप्रकुर्वीतसोन्यथापतितोभवेदितिस्मृत्यंतरोक्तंद्रष्टव्यम् चौराद्युत्सर्गादौवसिष्ठआह दंडोत्सर्गेराजैकरात्र
मुपवासेत्त्रिरात्रंपुरोहितःकृच्छ्रमदंड्यदंडनेपुरोहितस्त्रिरात्रंराजाकुनखीश्यावदंतश्चकृच्छ्रंद्वादशरात्रंचरित्वोद्धरेयातामितिदंतान्नखां
श्चदंतनखाच्छुद्धारयतांचेत्यभिप्रेतम् स्तेनपतितादिपंक्तिभोजनेतुमार्कंडेयआह अपांक्तेयस्ययःकश्चित्पंक्तौभुंक्तेद्विजोत्तमः
अहोरात्रोषितोभूत्वापंचगव्येनशुध्यतीति नीलीविषयेत्वापस्तंबआह नीलीरक्तंयदावस्त्रंब्राह्मणोंगेषुधारयेत् अहोरात्रोषितो
भूत्वापंचगव्येनशुध्यति रोमकूपैर्यदागच्छेद्रसोनील्यास्तुकस्यचित् त्रिषुवर्णेषुसामान्यंतप्तकृच्छ्रंविशोधनम् पालनंविक्र-

यश्चैव तद्धस्त्यात्तूपजीवनम् पातनं तु भवेद्विप्रैस्त्रिभिः कृच्छ्रैर्व्यपोहति नीली दारु यदा भिंद्याद्ब्राह्मणस्य शरीरतः शोणितं दृश्यते यत्र
द्विजश्चांद्रायणं चरेत् स्त्रीणां क्रीडार्थसंभोगे शयनीये न दुष्यतीति भृगुणाप्युक्तम् स्त्रीधृता शयने नीली ब्राह्मणस्य न दुष्यति नृप
स्य राष्ट्रे वैश्यस्य पर्ववर्जं विधारणमिति तथा वस्त्रविशेषकृतश्च प्रतिप्रसवः कंबले पट्टसूत्रे च नीलीरागो न दुष्यतीति स्मरणात्
ब्राह्मणस्य पलाशतरुनिर्मितखट्वारोहणे शंख आह अभ्यस्य शयनं यानमासनं पादुके तथा द्विजः पालाशवृक्षस्य त्रिरात्रं तु व्र
ती भवेत् क्षत्रियस्य रणे पृष्ठं दत्त्वा प्राणपरायणः संवत्सरं व्रतं कुर्याच्छित्त्वा वृक्षं फलप्रदम् द्वौ विप्रौ ब्राह्मणाग्नी वा दंपती गोद्विजोत्त
मौ अंतरेण यदा गच्छेत्कृच्छ्रं सांतपनं चरेत् होमकाले तथा दोहे स्वाध्याये दारसंग्रहे अंतरेण यदा गच्छेद्द्विजश्चांद्रायणं चरेदि
ति दोहे सांनाय्यागभूते एतच्चाभ्यासविषयम् सच्छिद्रादित्याद्यरिष्टदर्शनादौ शंख आह दुःस्वप्नारिष्टदर्शनादौ घृतं सुवर्णं च दद्या
दिति क्वचिद्देशविशेषगमनेपि देवल आह सिंधुसौवीरसौराष्ट्रांस्तथा प्रत्यंतवासिनः अंगवंगकलिंगांध्रान्गत्वा संस्कारमर्हति
एतच्च तीर्थयात्राव्यतिरेकेण द्रष्टव्यम् यमेनाप्युक्तम् प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत् दृष्ट्वा सूर्यं निरीक्षेत ब्राह्मणं गाम-
थापि वेति शंखोप्याह पादप्रक्षापनं कृत्वा कृत्वा वह्निमधस्तथा कुशैः प्रमृज्य पादौ तु दिनमेकं व्रती भवेदिति क्षत्रियाद्युपसंग्रहणे
हारीत आह क्षत्रियाभिवादने होरात्रमुपवसेत् वैश्याभिवादने द्विरात्रम् शूद्रस्याभिवादने त्रिरात्रमुपवास इति तथा शय्यारू
ढपादुकोपानहारोपितपादोच्छिष्टांधकारस्थश्राद्धकृज्जपदेवपूजानिरताभिवादने त्रिरात्रमुपवासः स्यादन्यत्र निमंत्रितेनान्यत्र

भोजनेपित्रिरात्रमिति समित्पुष्पादिहस्तस्याभिवादनेप्येतदेव समित्पुष्पकुशाज्यांबुमृदन्नाक्षतपाणिकम् जपहोमंचकुर्वाणंना
भिवादयेत्तवेद्विजमित्यापस्तंबीयेजपादिभिःसमभिव्याहारात् अभिवादकस्यापीदमेवप्रायश्चित्तम् नोदकुंभहस्तमभिवादयेत्
नभैक्ष्यंचरन्नपुष्पाज्यादिहस्तेनाशुचिर्नजपन्नदेवपितृकार्यंकुर्वन्नशयानइतितस्यापिशंखेनप्रतिषेधात् अन्यान्यपिवचांसिस्मृत्यं
तरतोन्वेष्याणिग्रंथगौरवभयान्नलिख्यंते इतिप्रकीर्णकप्रायश्चित्तप्रकरणम् २९३ निमित्तानामानंत्यात्प्रतिव्यक्तिप्रायश्चि

देशंकालंवयःशक्तिंपापंचावेक्ष्ययत्नतः प्रायश्चित्तंप्रकल्प्यंस्याद्यत्रचोक्तानननिष्कृतिः २९४

त्तनिमित्तस्यवक्तुमशक्यत्वात्सामान्यतउपदिष्टानुपदिष्टविषयंप्रायश्चित्तविशेषज्ञापनार्थमाह यदुक्तंप्रायश्चित्तजातंवक्ष्यमाणंवात
द्देशादिकमवेक्ष्ययथाकर्त्तुःप्राणविपत्तिर्नभवतितथाविषयविशेषेकल्पनीयम् इतरथाप्रधानानिवृत्तिप्रसंगात् यथावक्ष्यति वायुभ
क्ष्योदिवातिष्ठन्रात्रिंनीत्वाप्सुसूर्यदृगिति तत्रयदिहिमवद्गिरिनिकटवर्त्तिनामुदकवासउपदिश्यतेअतिशीताकुलितेवाशिशिरादिका
लेतदाप्राणवियोगोभवेदितितद्देशकालपरिहारेणोदवासःकल्पनीयः तथावयोविशेषादपियदिनवतिवार्षिकादेरपरिपूर्णद्वाद

शवार्षिकस्य वा द्वादशाब्दिकं प्रायश्चित्तमुपदिश्यते तदा प्राणाविपद्येरन् ततो वयोविशेषादपि अन्यवयस्केतत्प्रायश्चित्तं कल्प्यं
अत एव स्मृत्यंतरे क्वचिदर्द्धं क्वचित्पाद इति वृद्धादिषु प्रायश्चित्तस्य ह्रासो दर्शितः तच्च प्राक्प्रपंचितं तथा धनदानतपश्चरणादि
शक्त्यपेक्षया च न निर्धनस्य पात्रे धनं वा पर्याप्तमित्याद्युपपद्यते तथोद्दिक्तपात्रादेर्व्रापराकादिकं नापि स्त्रीशूद्रादेर्जपादिकं अत ए
व गजादीनामशक्तुवन् दानं दातुं चरेत्कृच्छ्रमेकैकस्य विशुद्धय इत्युक्तम् तथा प्रायश्चित्तार्द्धमर्हति स्त्रियो रोगिण एव चेति तपस्य-
शक्तस्य स्मृत्यंतरे प्रायश्चित्तह्रासो दर्शितः पापं च महापातकादिरूपेण सप्रत्यया प्रत्ययसकृदभ्यासरूपेण वा वेक्ष्य यत्नतः स
कलधर्मशास्त्रपर्यालोचनया प्रायश्चित्तं कल्पनीयम् तत्राकामतो यद्विहितं तदेव कामकृते द्विगुणं कामतोऽभ्यासे चतुर्गुणमित्येवं
स्मृत्यंतरानुसारेण कल्पनीयम् तथा महापापोपपापाभ्यां योऽभिशंसेन्मृषापरम् अब्भक्षो मासमासीतेत्युक्तम् तत्र महापा-
पोपपापयोस्तुल्य प्रायश्चित्तस्यायुक्तत्वात्पापापेक्षयोपपातके मासिकव्रतस्य ह्रासः कल्पनीयः तत्र च हसितजृंभितास्फोटनानि
नाकस्मात्कुर्यात्तथा नोदन्वतोंऽभसि स्नायान्न च श्मश्र्वादि कर्त्तयेत् अंतर्वत्न्याः पतिः कुर्वन्न प्रजाभवति ध्रुवमित्यादौ प्रायश्चित्तं-
नोपदिष्टम् तत्रापि देशाद्यपेक्षया प्रायश्चित्तं कल्प्यम् ननु किंचिदपि निमित्तजातमनूक्तनिष्कृतिकमुपलभ्यते प्राणायामश
तं कार्यं सर्वपापापनुत्तये उपपातकजातानामनादिष्टस्य चैव हीत्यनूक्तनिष्कृतिष्वपि प्रायश्चित्तस्य वक्ष्यमाणत्वात् गौतमेनाप्ये
तान्येवानादेशे विकल्पेन क्रियेरन्निति एकाहादयः प्रतिपादिताः उच्यते सत्यमस्त्येव सामान्यतः प्रायश्चित्तोपदेशस्तथापि सर्वदो

श्वकालादीनामपेक्षितत्वादस्त्येवकल्पनावसरः नचहसितादिषुसर्वत्रप्राणायामशतंयुक्तंनिमित्तस्यलघुत्वात् अतःपापापेक्षया
न्हासःकल्पनीयः प्रायश्चित्तांतरंवा ननुकथंपापस्यलघुत्वंयेनप्रायश्चित्तस्यन्हासस्यवाकल्पनास्यात् नचप्रायश्चित्ताल्पत्वा-
दितिवाच्यम् अनुक्तनिष्कृतित्वादेव सत्यं किंचिदर्थवादसंकीर्त्तनाद्बुद्धिपूर्वाबुद्धिपूर्वानुबंधाद्यपेक्षयाचसुबोधएवदोषस्य-
गुरुलघुभावः तथादंड न्हासवृध्यपेक्षयाचप्रायश्चित्तगुरुलघुभावः यथाब्राह्मणावगोरणादौसजातिविषयेप्राजापत्या

दासीकुंभंबहिर्ग्रामान्निनयेरन्स्वबांधवाः पतितस्यबहिःकुर्युःसर्वकार्येषुचैवतम् २९५

दिकमुक्तम् तत्रयदानुलोम्येनप्रातिलोम्येनवावगोरणादिक्रियतेयदातदावामूर्द्धावसिक्तादिभिस्तदादंडस्यतारतम्यदर्शनाद्दोषा
ल्पत्वमहत्त्वावगमात् प्रायश्चित्तस्यापिगुरुलघुभावःकल्पनीयः दर्शितश्चदंडस्यगुरुलघुभावःप्रातिलोम्यापवादेषुद्विगुणास्त्रि
गुणोदमइत्यादिना २९४ एवंमहापातकादिभिःपतितस्यप्रायश्चित्तमुक्तम् यस्त्वेत्याद्येतन्नचिकीर्षतितस्यकिंकार्यमित्य
तआह जीवतएवपतितस्ययेज्ञातयोबांधवाभ्रातृपक्षास्तेसर्वेसंनिपत्यदासींप्रेष्यतयासपिंडादिप्रेषितयाआनीतमपांपूर्ण-

कुंभंग्रामाद्बहिर्निनयेयुः एतच्चतुर्थ्यादिरिक्तातिथिषन्हःपंचमेभागेगुर्वादिसंनिधौकार्यम् पतितस्योदकंकार्यंसपिंडैर्बांधवैःसह निंदि
तेहनिसायान्हेज्ञात्यृत्विग्गुरुसन्निधाविति मनुस्मरणात् अथवादास्येवसपिंडादिप्रयुक्तानिनयेत् यथाहमनुः दासीघटमपांपूर्णंपर्यस्ये
त्प्रेतवद्यदा अहोरात्रमुपासीरन्नाशौचंब्राह्मणैःसहेति प्रेतवदितिदक्षिणाभिमुखापसव्ययोःप्राप्त्यर्थं एतच्चनिनयनंउदकपिंडदाना
दिप्रेतक्रियोत्तरकालंद्रष्टव्यम् तस्यविद्यायोनिगुरुसंबंधाश्चसन्निपात्यसर्वाण्युदकादीनिप्रेतकर्माणिकुर्युःपात्रंचास्यविपर्यस्येयुःदासः
कर्मकरोवाचकमरात् पात्रमानायदासीघटान्पूरयित्वादक्षिणाभिमुखोयदाविपर्यस्येदिदं अमुकमनुदकंकरोमीतिनामग्राहांतसर्वे
न्वालभेरन् प्राचीनावीतिनोमुक्तशिखाविद्यागुरवोयोनिसंबंधाश्चवीक्ष्येरन्ततोपउपस्पृश्यग्रामंप्रविशेयुरितिगौतमस्मरणात् अयंच
त्यागोयदाबंधुभिःप्रेर्यमाणोपिप्रायश्चित्तंनकरोतितदाद्रष्टव्यः तस्यगुरुबांधवान्राजसमक्षंदोषानभिख्याप्यानुभाष्यपुनःपुनरा
चारंलभस्वेतिसयद्येवमप्यनवस्थितमतिःस्यात्ततोस्यपात्रंविपर्यस्येदितिशंखस्मरणात् ततस्तंलब्धोदकंपतितंसर्वकार्येषुसंभा
षणसहासनादिषुबहिःकुर्युर्वर्जयेयुः तथाचमनुः निवर्तेरंस्ततस्तस्मात्संभाषणसहासने दायाद्यस्यप्रदानंचयात्रामेवचलौ
किकीमिति यदिस्नेहादिनासंभाषणंकरोतितदाप्रायश्चित्तंकार्यम् अतऊर्ध्वंतेनसंभाष्यतिष्ठेदेकरात्रंजपन्सावित्रीमज्ञानपूर्वं
ज्ञानपूर्वंचेत्त्रिरात्रमिति २९५ यदातुबंधुत्यागादन्यथावाजातवैराग्यःप्रायश्चित्तंच कृततदाकिंकार्यमित्यतआह कृतप्रा-
यश्चित्तेबंधुसमीपंपुनरायानेतत्सपिंडाद्यास्तेनसहितानवंअनुपहतघटंउदकपूर्णंनिनयेयुः एतच्चनिनयनंपुण्यन्हदादिस्ना

नोत्तरं द्रष्टव्यम् प्रायश्चित्तेतु चरिते पूर्णकुंभमपांनवम् तेनैव सार्द्धं प्रास्येयुः स्नात्वा पुण्ये जलाशय इति मनुस्मरणात् गौतमेन तु वि-
शेष उक्तः यस्तु प्रायश्चित्तेन शुध्येत तस्मिन्कुंभे शातकुंभमयं पात्रं पुण्यतमात् ह्रदात्पूरयित्वा स्रवंतीभ्यो वा तत एनमप उपस्पृशे-
युरथास्मै तत्पात्रं दद्युस्तत्संप्रतिगृह्य जपेत् शांता द्यौः शांता पृथिवी शांतं शिवमंतरिक्षं यो रोचनस्तमिह गृण्हामीत्येतैर्यजुर्भिः पावमा-
नीभिस्तरत्समंदीभिः कूष्मांडैश्चाज्यं जुहुयाद्धिरण्यं दद्याद्गांचाचार्याय यस्य प्राणांतिकं प्रायश्चित्तं समृतः शुध्येत्तस्य दद्यात्सर्वाण्युदकं

चरितव्रत आयाते निनयेरन्नवं घटम् जुगुप्सेरन्नवाप्येनं संविशेयुश्च सर्वशः २९६ पति-
तानामेष एव विधिः स्त्रीणां प्रकीर्तितः वासो गृहांतिकं देयमन्नं वासः सरक्षणम् २९७

सर्वेष्वेवोपपातकेष्विति ततएनं कृतप्रायश्चित्तं तेनैव कुत्सयेयुः तथा सर्वकार्येषु क्रयविक्रयादिषु तेन सह संव्यवहरेयुः २९६ पूर्वोक्त-
स्य पतितपरित्यागादिविधेरतिदेशमाह एवं पुरुषाणां परित्यागे पिंडोदकदानविधिः कृतप्रायश्चित्तानां परिग्रहविधिः स एव पति-
तानां स्त्रीणामपि वेदितव्यः इयांस्तु विशेषः पतिताभ्योपि स्त्रीभ्यः कृतोदकादिकर्मभ्यो वासस्तृणपर्णमयकुटीगृहकं प्रधानगृहसमी-

पैदेयम् तथाप्राणधारणमात्रमन्नंमलिनंचवस्त्रंपुनःपुरुषांतरोपभोगनिवारणसहितंदेयम् २९७ ननुकाःपतितास्तासांयासाम
यपरित्यागविधिरित्यतआह हीनवर्णगमनंगर्भपातनमब्राह्मण्याअपिभर्त्तुःअब्राह्मणस्यापिहिंसनमित्येतानिस्त्रीणामसाधार
णानिपतननिमित्तानि अपिशब्दात्पुरुषस्ययानिपतननिमित्तानिमहापातकातिपातकानुपपातकान्यभ्यस्तानिचोपपातकादीनि
तान्यपिस्त्रीणांध्रुवंनिश्चितंपतनकारणानिभवंति अतएवशौनकः पुरुषस्ययानिपतननिमित्तानिस्त्रीणामपितान्येवब्राह्मणीहीन
वर्णसेवायामधिकंपततीति यत्तुवसिष्ठेन त्रीणिस्त्रियाःपातकानिलोकेधर्मविदोविदुः भर्त्तुर्वधोभ्रूणहत्यास्वस्यगर्भस्यपातनमिति

नीचाभिगमनंगर्भपातनंभर्तृहिंसनम् विशेषपतनीयानिस्त्रीणामेतान्यपिध्रुवम् २९८

भ्रूणहत्याग्रहणंकृतंतत्दृष्टांतार्थंनपुनरितरेषांमहापातकादीनांपतनहेतुत्वनिरासार्थं यदपितेनचतस्रस्तुपरित्याज्याःशिष्यगा
गुरुगाच्चया पतिघ्नीचविशेषेणजुंगितोपगताचयाइतिचतसृणामेवपरित्यागइत्युक्तम् तस्यापितासांप्रायश्चित्तमचिकीर्षंती
नांमध्येचतसृणामेवशिष्यगादीनांचैलान्नगृहवासादिजीवनहेतुत्वाद्युच्छेदेनत्यागंकुर्यात् नान्यासामित्यभिप्रायः अतश्चा
न्यासांपतितानांप्रायश्चित्तमकुर्वतीनामपिवासोगृहांतिकेदेयमित्यादिकंकर्त्तव्यमित्यवगम्यते २९८ ७ ७ ७

जुगुप्सेरन्नवाप्येनंसंविशेयुश्चसर्वशइत्यस्यापवादमाह शरणागतादिव्यापादनकारिणः कृतघ्नसहितान्प्रायश्चित्तेनक्षीणदोषानपिनसंव्यवहरेदितिवाचनिकोयंप्रतिषेधः किमिदंवचनंकुर्यान्नहिवचनस्यातिभारोस्ति अतश्चयद्यपिव्यभिचारिणास्त्रीवधेपिइदमेवप्रायश्चित्तंतथापिवाचनिकोयंव्यवहारप्रतिषेधः २९९ एवंप्रसंगेनस्त्रीषुविशेषमभिधायप्रकृतएवचरितव्रतविधौविशेषमाह घटेपवर्जितेन्हदादुद्धृत्यपूर्णकुंभेचनिनीतेसोचरितव्रतः सपिंडादिमध्यस्थोगोभ्योयवसंदद्यात् ताभिःप्रथमसत्कृतस्यपूजितस्यपश्चाज्ज्ञात्यादिभिःसत्क्रियाकार्या

शरणागतबालस्त्रीहिंसकान्संविशेन्नतु चीर्णव्रतानपिसतः कृतघ्नसहितानिमान् २९९
घटेपवर्जितेज्ञातिमध्यस्थोयवसंगवाम् प्रदद्यात्प्रथमंगोभिःसत्कृतस्यहिसत्क्रिया ३००

कृतस्यपूजितस्यपश्चाज्ज्ञात्यादिभिःसत्क्रियाकार्या गोभिश्चतस्यसत्कारस्तद्दत्तयवसभक्षणमेव यदिगावस्तद्दत्तमन्नंयवसंनगृण्हीयुस्तर्हिपुनःप्रायश्चित्तमुपतिष्ठेत् यथाहहारीतः स्वशिरसायवसमादायगोभ्योदद्याद्यदिनाःप्रतिगृण्हीयुरर्थेनंप्रवर्त्तयेयुरितिइतरथानेत्यभिप्रेतम् ३०० ७ ७ ७ ७ ७ ७

महापातकादिपंचविधेपिदूषणे प्रातिस्विकव्रतसंदोहमभिधायाधुनासकलव्रतसाधारणंधर्ममाह यद्दोषोयावत्कर्त्तृसंपाद्यस्तन्नोन्यैर्वि
ख्यातोदोषोयस्यासौपर्षदुपदिष्टंव्रतंकुर्यात् यद्यपिस्वयंसकलशास्त्रार्थविचारचतुरस्तथापिपर्षत्समीपमुपगम्यतयासहविचार्यतद-
नुमतमेवकुर्यात् तदुपगमनेचांगिरसाविशेषउक्तः कृतेनिःसंशयंपापेनभुंजीतानुपस्थितः भुंजानोवर्द्धयेत्पापंयावन्नाख्यातिपर्षदि स
चैलंवाग्यतःस्नात्वाक्लिन्नवासाःसमाहितः पर्षदानुमतस्तत्त्वसर्वंविख्यापयेन्नरः व्रतमादायभूयोपितथास्नात्वाव्रतंचरेदितिविख्यापनं

विख्यातदोषःकुर्वीतपर्षदोनुमतंव्रतम्

दक्षिणादानानंतरंकार्यम् तथाहपराशरः पापंविख्यापयेत्पापीदत्वाधेनुंतथावृषमिति एतच्चोपपातकविषयम् महापातकादि-
ष्वधिककल्प्यम् यदुक्तं तस्माद्द्विजःप्राप्तपापःसकृदाप्लुत्यवारिणि विख्यायपापंपर्षद्भ्यःकिंचिद्दत्वाव्रतंचरेदितितत्प्रकीर्णकविषयं
पर्षत्स्वरूपंचमनुनादर्शितम् त्रैविद्योहेतुकस्तर्कीनैरुक्तोधर्मपाठकः त्रयश्चाश्रमिणःपूर्वेपर्षदेषादशावरा हेतुकःउभयमीमांसा
र्थतत्त्वज्ञः तर्कीन्यायशास्त्रकुशलः तथान्यदपिपर्षद्द्वयंतेनैवदर्शितम् ऋग्वेदविद्यजुर्वेदसामवेदविदेवच त्र्यवरापर्ष-

द्विज्ञेयाधर्मसंशयनिर्णयइति तथा एकोपिधर्मविद्धर्मयंव्यवस्येत्ससमाहितः सज्ञेयःपरमोधर्मोनाज्ञानादुदितोयुतैरिति आसांचप-
र्षदांसंभवापेक्षयाव्यवस्थामहापातकाद्यपेक्षयावा यत्तुस्मृत्यंतरेभिहितम् पातकेषुशतंवर्षसहस्रंमहदादिषु उपपापेषुपंचाशत्स्वल्प
स्वल्पेतथाभवेदिति तदपिमहापातकादिदोषानुसारेणपर्षदोगुरुलघुभावप्रतिपादनपरंनपुनःसंख्यानियमार्थं मन्वादिमहास्मृ-
तिविरोधप्रसंगात् तथादेवलेनचात्रविशेषोदर्शितः स्वयंतुब्राह्मणाब्रूयुरल्पदोषेषुनिष्कृतिम् राजाचब्राह्मणाश्चैवमहत्सुसुपरि
क्षितामिति तयाचपर्षदाअवश्यंव्रतमुपदेष्टव्यम् आर्त्तानांमार्गमाणानांप्रायश्चित्तानियेद्विजाः जानंतोनप्रयच्छंतितेयांतिसमतां-
तुतैरित्यंगिरःस्मरणात् तथाचतयापर्षदाज्ञात्वैवव्रतमुपदेष्टव्यम् अज्ञात्वाधर्मशास्त्राणिप्रायश्चित्तंददातियः प्रायश्चित्तीभवेत्पू
तःकिल्बिषंपर्षदंव्रजेदितिवसिष्ठस्मरणात् क्षत्रियादीनांतुकृतेनसाधर्मोपदेशोविशेषोंगिरसादर्शितः न्यायतोब्राह्मणःक्षिप्रंक्षत्रिया
देःकृतैनसः अंतराब्राह्मणंकृत्वाव्रतंसर्वंसमादिशेत् तथाशूद्रंसमासाद्यसदाधर्मपुरःसरम् प्रायश्चित्तंप्रदातव्यंमंत्रहोमविवर्जि
तमिति तत्रयागाद्यनुष्ठानशीलानांजपादिकंवाच्यम् इतरेषांतुतपः कर्मनिष्ठास्तपोनिष्ठाःकदाचित्पापमागताः जपहोमादिकंतेभ्यो
विशेषेणप्रदीयते येनामधारकाविप्रामूर्खाधनविवर्जिताः कृच्छ्रचांद्रायणादीनितेभ्योदद्याद्विशेषतइति इतिप्रकाशप्रायश्चित्तप्र
करणम् अथरहस्यप्रायश्चित्तंव्याख्यायतद्दुरितशमिनीं व्रतसंततिंरहःकृताघसंदोहकारिणींव्याहरन्मुनिः तत्रप्रथमंसकल
रहस्यव्रतसाधारणंधर्ममाह कर्त्तृव्यतिरिक्तैरनभिख्यातोदोषोयस्यासौरहस्यमप्रकाशंप्रायश्चित्तमनुतिष्ठेत् अतःस्त्रीसंभोगा

दीनस्यापिकारकत्वात् तदितरैरविज्ञातदोषैरहस्यमितिमंतव्यम् अत्रयदिकर्त्तास्वयंधर्मशास्त्रकुशलस्तदापरस्मिन्नविभाव्यस्व
निमित्तोचितंप्रायश्चित्तमनुतिष्ठेत् यस्तुस्वयमनभिज्ञोसौकेनचिदंहोब्रह्महत्यादिकंकृतंतत्रकिंरहस्यप्रायश्चित्तमित्यन्यव्याजेना
वगम्यअंहोव्रतमनुतिष्ठेत् अतश्चवस्त्रीशूद्रयोरप्यमुनैवमार्गेणरहस्यव्रतज्ञानसिद्धेरधिकारसिद्धिः नचवाच्यंरहस्यव्रतानांजपा
दिप्रधानत्वादविद्ययोश्चस्त्रीशूद्रयोस्तदनुपपत्तेरनधिकारइति यतोनैकांततोरहस्यव्रतानांजपादिप्रधानत्वंदानादेरप्युपदेशात्

अनभिख्यातदोषस्तुरहस्यंव्रतमाचरेत् ३०१

गौतमोक्तप्राणायामादिसंभवाच्च इतरेषामपिमंत्रदैवतर्षिच्छंदःपरिज्ञानमात्रमेवाधिकारोपयोगित्वन्यविषयम् नहितडागनि
र्माणादौज्योतिष्टोमादिविषयिणीविप्रतिपत्तिरुपयुज्यते देवतादिपरिज्ञानत्वमवश्यमपेक्षणीयम् अविदित्वाऋषिच्छंदोदैवतंयो
गमेवच योध्यापयेज्जपेद्वापिपापीयान्जायतेतुसइतिव्याससमरणात् अत्राप्याहारविशेषानुक्तौपयःप्रभृतयः कालविशेषानुक्तौ
संवत्सरादयः देशविशेषानुक्तौशिलोच्चयादयोगौतमाद्यभिहिताःप्रकाशप्रायश्चित्तेन्वेषणीयाः ३०१ ॐ ॐ ॐ

एवंसकलरहस्यसाधारणंधर्ममभिधायप्रकाशप्रायश्चित्तवद्ब्रह्महत्यादिक्रमेणैवरहस्यप्रायश्चित्तान्याह त्रिरात्रमुपोषितोऽन्तर्जलेऽघमर्षणेनमहर्षिणादृष्टंसूक्तंअघमर्षणंऋतंचसत्यंचेतितृचामानुष्टुभंभाववृत्तदेवताकंजप्त्वात्रिरात्रांतेपयस्विनींगांदत्वाब्रह्महाविशुध्यति जपश्चांतर्जलेनिमग्नेनत्रिरावर्त्तनीयः यथाहसुमंतुः देवद्विजगुरुहंताप्सुनिमग्नोघमर्षणंसूक्तंत्रिरावर्त्तयेत् मातरंभगिनींगत्वामातृष्वसारंपितृष्वसारंस्नुषांसखींचान्यद्वागम्यागमनंकृत्वाघमर्षणमेवांतर्जलेत्रिरावर्त्त्यतदेतस्मात्पूतोभवतीति एतच्चकामका

त्रिरात्रोपोषितोजप्त्वाब्रह्महात्वघमर्षणम् अंतर्जलेविशुध्येतदत्वागांचपयस्विनीम् ३०२

रविषयम् यत्तुमनुनोक्तम् सव्याहृतिप्रणवकाः प्राणायामास्तुषोडश अपिभ्रूणहनंमासात्पुनंत्यहरहःकृताः तदप्यस्मिन्नेवविषये गोदानाशक्तस्यवेदितव्यम् यत्तुगौतमेनषट्त्रिंशदहोरात्रव्रतमुक्त्वोक्तम् तद्व्रतएवब्रह्महत्यासुरापानसुवर्णस्तेयगुरुतल्पेषुप्राणायामैःस्नातोघमर्षणंजपेदिति तदकामतोसकृद्विषयम् यत्तुबौधायनेनोक्तम् ग्रामात्प्राचींवोदीचींवादिशमुपनिष्क्रम्यस्नातःशुचिवासाः उदकांतेस्थंडिलमुपलिप्यसकृत्क्लिन्नवासाःसकृत्पूतेनपाणिनादित्याभिमुखोघमर्षणंस्वाध्यायमधीयीत प्रातःशतंमध्यान्हेशतमपरा

एद्देशतमपरिमितंचोदितेषुनक्षत्रेषु प्रसृतियावकंप्राश्नीयात् ज्ञानतोज्ञानतः कृतेभ्यश्चोपपातकेभ्यः सप्तरात्रात्प्रमुच्यते द्वादशरात्रान्महापात
केभ्यो ब्रह्महत्यासुरापानसुवर्णस्तेयानि वर्जयित्वा एकविंशतिरात्रेण तान्यपितरतीति तत्कामकारविषयम् अकामतः श्रोत्रियाचार्यसवनस्थव
धविषयंवा यत्तुमनुनोक्तम् अरण्येवात्रिरभ्यस्य प्रयतोवेदसंहिताम् मुच्यतेपातकैः सर्वैः पराकैः शोधितैस्त्रिभिरिति तत्कामतः श्रोत्रिया
दिवधविषयमितरत्रकामतोभ्यासविषयंवा यत्तुबृहद्विष्णुनोक्तम् ब्रह्महत्यांकृत्वाग्रामात्प्राचीमुदीचींवादिशमुपनिष्क्रम्य प्रभूतेंधनेनाग्निं
प्रज्वाल्याघमर्षणेनाष्टसहस्रमाहुतीर्जुहुयात्तत एतस्मात्पूतो भवतीति तन्निर्गुण वधविषयमनुग्राहकविषयंवा यत्तुयमेनोक्तम् त्र्यहं-

लोमभ्यः स्वाहेत्यथवादिवसंमारुताशनः जलेस्थित्वाग्निंजुहुयाच्चत्वारिंशद्घृताहुतीः ३०३

तूपवसेद्युक्तस्त्रिरह्नोभ्युपयन्नपः मुच्यतेपातकैः सर्वैस्त्रिर्जपित्वाघमर्षणम् तद्गुणवतोहंतुर्निर्गुणवधविषयम् प्रयोजकानुमंतृविषयं
वा यत्तुहारीतेनोक्तं महापातकातिपातकानुपपातकानामेकतः संपातेवाघमर्षणमेवत्रिर्जपेदिति तन्निमित्तकर्तृविषयं एवमन्यान्य-
पिस्मृतिवाक्यानिअन्विष्यविधिविषयेषुविभजनीयानिग्रंथगौरवभयान्नलिख्यंते एतदेवव्रतंजातयागस्थयोषित्क्षत्रविट्स्वात्रेय्या
माहिताग्निपत्न्यांगर्भिण्यामविज्ञातेचगर्भेव्यापादितेतुरीयांशन्यूनमनुष्ठेयम् ३०२ प्रायश्चित्तांतरमाह अथवाहोरात्रमुपोषितोरा-

त्र्युदवासं कृत्वा प्रातर्जलादुत्तीर्य लोमभ्यः स्वाहेत्याद्यैरष्टभिर्मंत्रैरेकैकेन पंचाहुतय इत्येवं चत्वारिंशतं घृताहुतीर्जुहुयात् इदं च पूर्वोक्त-
समानविषयं उदवासस्य तपोबाहुल्यात् ३०३ क्रमप्राप्तसुरापानप्रायश्चित्तमाह सुरापश्चत्वारिंशत् घृताहुतीरित्यनुवर्त्तते सुरा
पस्त्रिरात्रमुपोषितः कूश्मांडीभिः यद्देवादेवहेडनमित्याद्याभिः कूश्मांडदृष्टाभिरनुष्टुप्मंत्रलिंगदेवताभिर्ऋग्भिश्चत्वारिंशत् घृताहुती-
र्हुत्वा शुचिर्भवेत् बौधायनेनोक्तम् अथ कूश्मांडदृष्टाभिरनुष्टुभिर्जुहुयाद्यो पूत एवात्मानं मन्येत यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मा

त्रिरात्रोपोषितो हुत्वा कूश्मांडीभिर्घृतं शुचिः

न्मुच्यते अयोनौ वा रेतः सिक्त्वान्यत्र स्वप्नादिति यत्तु मनुना कौत्सं जपित्वाप इत्येतद्वासिष्ठं च तृचं प्रति माहित्रं शुद्धवत्यश्च सुरापोपि वि
शुध्यतीति मासं प्रत्यहं षोडश कृत्वोप नः शोशुचदघमिति सूक्तोमेभि रूपसंवसिष्ठा महित्रीणामवोस्त्वित्येतोन्विंद्रं स्तवामेत्येतेषामन्यतमस्य
जप उक्तः स त्रिरात्रोपवासकूश्मांडहोमाशक्तस्य वेदितव्यः एतच्चाकामतः पैष्ट्याः सकृत्पाने गौडीमाध्व्योस्तु पानावृत्तौ च वेदितव्यम् य
च्च मनुना मंत्रैः शाकलहोमीयैरब्दं हुत्वा घृतं द्विजः सुगुर्वप्यपहंत्येनो जप्त्वा वा नम इत्यृचमिति संवत्सरं प्रत्यहं देवकृतस्यैनस इत्यादि

भिरष्टभिर्मंत्रैर्हेमोनमइदुयंनमआविवासइत्यस्यावाक्रुचोजपउक्तः सकामकारविषयः यत्तुमहापातकसंयुक्तोनुगच्छेद्गाःसमाहि
तः अभ्यस्याब्दंपावमानीर्भैक्ष्याहारोविशुद्ध्यतीतितदभ्यासविषयम् समुच्चितमहापातकविषयंवा सुवर्णस्तेयप्रायश्चित्तमाह
ब्राह्मणस्वर्णहारीपुनस्त्रिरात्रोपोषितः जलमध्यस्थोनमस्तेरुद्रमन्यवइतिशतरुद्रीयजपयुक्तःशुध्यतीति शातातपेनात्रविशेषउक्तःमद्यं
पीत्वागुरुदारांश्चगत्वास्तेयंकृत्वाब्रह्महत्यांचकृत्वा भस्माच्छन्नोभस्मशय्यांशयानोरुद्राध्यायीमुच्यतेसर्वपापैरिति जपश्चैकादश

ब्राह्मणस्स्वर्णहारीतुरुद्रजापीजलेस्थितः ३०४

कृतःकार्यः एकादशगुणान्वापिरुद्रानाव-

वर्त्यधर्मवित् महापापैरपिस्पृष्टोमुच्यतेनात्रसंशयइत्यत्रिस्मरणात् यत्तुमनुना सकृज्जप्त्वास्यवामीयंशिवसंकल्पमेवच सुवर्ण
मपहृत्यापिक्षणाद्भवतिनिर्मलइतिद्विपंचाशदृक्संख्याकस्यास्यवामस्यपलितस्यहोतुरितिसूक्तस्य तथायज्जाग्रतोदूरमुदैतु-
दैवमितिशिवसंकल्पदृष्टस्यषडृचस्यवासकृज्जपउक्तः सोसंतनिर्गुणस्वामिकस्वर्णहरणेगुणवतोपहर्त्तुर्द्रष्टव्यः सुवर्णान्न्यून
परिमाणविषयोनुग्राहकप्रयोजकविषयोवा आवृत्तोतुमहापातकसंयुक्तोनुगच्छेदित्यादिनोक्तंद्रष्टव्यम् ३०४ ७ ७

क्रमप्राप्तंगुरुतल्पप्रायश्चित्तमाह गुरुतल्पगस्तुसहस्रशीर्षेतिषोडशर्चंसूक्तंनारायणदृष्टंपुरुषदैवत्यमानुष्टुभंत्रिष्टुबंतंजपंस्तस्मा
त्पापान्मुच्यते सहस्रशीर्षजापीतितत्तच्छील्यप्रत्ययादावृत्तिर्गम्यते अतएवयमेनोक्तम् पौरुषंसूक्तमावर्त्यमुच्यतेसर्वकिल्बिषा
दिति आवृत्तौचसंख्यापेक्षायामधस्तनश्लोकगताचत्वारिंशत्संख्यानुमीयते अत्रापिप्राक्तनश्लोकगतंत्रिरात्रोपोषितइतिसंबध्य
ते अतएवबृहद्विष्णुः त्रिरात्रोपोषितःपुरुषसूक्तजपहोमाभ्यांगुरुतल्पगःशुद्ध्येदिति एभिश्चसुरापीसुवर्णस्तेयगुरुतल्पगैस्त्रि

सहस्रशीर्षजापीतुमुच्यतेगुरुतल्पगः गौर्देयाकर्मणोस्यांतेपृथगेभिःपयस्विनी ३०५

भिःपृथक्पृथग्स्यत्रिरात्रव्रतस्यांतेबहुक्षीरागौर्देया इदमकामविषयम् यत्तुमनुना हविष्यांतीयमभ्यस्यनतमंहइतीतिच ज-
प्त्वातुपौरुषंसूक्तंमुच्यतेगुरुतल्पगः हविष्यांतीयमजरंस्वर्विदिनतमंहोनदुरितइतिवाइतिमेमनःसहस्रशीर्षेत्येषामन्यतमस्य
मासंप्रत्यहंषोडशषोडशऋचांचत्वारिंशत्संख्याकजपउक्तः सोप्यकामविषयएव कामतस्तुमंत्रैःशाकलहोमीयैरितिमनूक्तंद्रष्टव्यम् य
त्तुषट्त्रिंशन्मतेभिहितम् महाव्याहृतिभिर्होमैस्तिलैःकार्योद्विजन्मना उपपातकशुद्ध्यर्थंसहस्रपरिसंख्यया महापातकसंयुक्तोल-

क्षहोमेनशुध्यतीतितदावृत्तिविषयम् यत्तुयमेनोक्तम् जपेद्वाप्यस्यवामीयंपावमानीरथापिवा कुंतापंवालखिल्यांश्चनिवित्प्रैषान्वृ
षाकपिं होत्रिंरुद्रान्सकृज्जप्त्वामुच्यतेसर्वपातकैरिति तद्व्यभिचारिणीगमनविषयम् यानिपुनःगुरुतल्पातिदेशविषयाणितत्समा-
निवातिपातकोपपातकपदाभिधेयानितेषुतुरीयांशन्यूनमर्धानिचक्रमेणवेदितव्यम् पातकातिपातकोपपातकमहापातकानामेकत-
मेसंनिपातेवाअघमर्षणमेवत्रिर्जपेदितिहारीतोक्तंवाद्रष्टव्यम् महापातकसंसर्गिणश्चसतस्यैवव्रतंकुर्यादितिवचनाद्येनसहसंसर्ग

प्राणायामशतंकार्यंसर्वपापापनुत्तये उपपातकजातानामनादिष्टस्यचैवहि ३०६

स्तदीयमेवप्रायश्चित्तम् नन्ववाच्यमध्यापनादिसंसर्गस्यानेककर्तृकसंपाद्यत्वाद्रहस्यत्वानुपपत्तिरितियतःसत्यप्यनेककर्तृत्वेपर-
दारगमनवत्कर्तृव्यतिरिक्ततृतीयाद्यपरिज्ञानमात्रेणैवरहस्यत्वम् अतोभवत्येवरहस्यप्रायश्चित्तम् एवमतिपातकादिसंसर्गिणो
पितदीयमेवप्रायश्चित्तंवेदितव्यम् इतिमहापातकरहस्यप्रायश्चित्तप्रकरणंचतुर्दशम् ३०५ क्रमप्राप्तमुपपातकप्रायश्चित्त
माह गोवधादिषट्पंचाशदुपपातकजातानामनादिष्टरहस्यव्रतानांचजातिभ्रंशकरादीनामपनुत्तयेप्राणायामानांशतंकार्यम्

तथा सर्वेषां महापातकादीनां प्रकीर्णकांतानामप्यपनुत्तये प्राणायामाः कार्याः तत्र च महापातकेषु चतुःशतम् अतिपातकेषु त्रिशतं अनुपातकेषु द्विशतमिति संख्यावृत्तिः कल्पनीया प्रकाशप्रायश्चित्तेषु महापातकप्रायश्चित्ततुरीयांशस्योपपातकेषु विधानात् प्रकीर्णकेषु च ह्रासः कल्प्यः अत एवोक्तं यमेन दशप्रणवसंयुक्तैः प्राणायामैश्चतुःशतैः मुच्यते ब्रह्महत्यायाः किं पुनः शेषपातकैरिति बौधायनेनाप्यत्र विशेष उक्तः अपि वाक्चक्षुःश्रोत्रत्वक्घ्राणमनोव्यतिक्रमेषु त्रिभिः प्राणायामैः शुध्यति शूद्रस्त्रीगमनान्नभोजनेषु पृथक्पृथक्सप्ताहं सप्तप्राणायामान्धारयेत् अभक्ष्याभोज्यामेध्यप्राशनेषु तथा वा पण्यविक्रयेषु मधुमांसघृततैललाक्षालवणरसान्नवर्जेषु यच्चाप्यन्यदेवंयुक्तं द्वादशाहं द्वादश द्वादश प्राणायामान्धारयेत् अथ पातकोपपातकवर्जं यच्चाप्यन्यदेवंयुक्तं अर्द्धमासं द्वादश द्वादश प्राणायामान्धारयेत् अथ पातकोपपातकवर्जं यच्चाप्यन्यदेवंयुक्तं द्वादशार्द्धमासान् द्वादश द्वादश प्राणायामान् धारयेत् अथ पातकपतनीयवर्जं यच्चाप्यन्यदेवंयुक्तं अर्धमासं द्वादश द्वादश प्राणायामान् धारयेत् अथ पातकवर्जं यच्चान्यदप्येवंयुक्तं द्वादशार्धमासान् द्वादश द्वादश प्राणायामान् धारयेत् अथ पातकेषु संवत्सरं द्वादश द्वादश प्राणायामान् धारयेदिति तत्र वा वाक्चक्षुरित्यादि प्राणायामत्रयं प्रकीर्णकाभिप्रायम् शूद्रस्त्रीगमनान्नभोजनेत्यादिनोक्ता एकोनपंचाशत्प्राणायामा उपपातकविशेषाभिप्रायाः तथा अभक्ष्याभोज्येत्यादिनोक्ताश्चतुश्चत्वारिंशदधिकशतप्राणायामा अप्युपपातकविशेषाभिप्राया एव अथ पातकोपपातकवर्जमित्यादिनोक्ताः साशीतिशतप्राणायामा जातिभ्रंशकराद्यभिप्रायाः अथ पातकपतनीयवर्जमित्यादिनोक्ताः षष्ट्यधिकशतत्रयप्राणा

यामाःगोवधाद्युपपातकाभिप्रायाः अथपातकवर्जमित्यादिनोक्ताःषष्ट्यधिकशतसहितद्विसहस्रसंख्याकाःप्राणायामाःअतिपातका
नुपपातकाभिप्रायाः अथपातकेष्वित्यादिनोक्ताविंशत्यधिकशतत्रययुक्ताश्चतुःसहस्रप्राणायामाःमहापातकविषयाः इदंचाभक्ष्य
भोज्येत्यादिनोक्तंप्रायश्चित्तपंचकंअत्यंताभ्यासविषयम् ससुच्चित्तविषयंवा यत्तुमनुना एनसांस्थूलसूक्ष्माणांचिकीर्षन्नपनोदनम्
अवेत्यृचंजपेदब्दंयत्किंचिदमितीतिच इत्यब्दंयावत्प्रत्यहमर्थानराविरुद्धेषुकालेषुअवतेहेळोवरुणेत्यस्याऋचोयत्किंचेदमित्यस्य

ओंकाराभिष्टुतःसोमसलिलंपावनंपिबेत् कृत्वातुरेतोविण्मूत्रप्राशनंतुद्विजोत्तमः ३०७

इतिवाइतिमेमनसइत्यस्याश्चजपउक्तःसोप्यभ्यासविषयः ३०६ उपपातकसामान्यप्राप्तस्यप्राणायामशतस्यापवादमाह द्विजो
रेतोविण्मूत्रप्राशनंकृत्वासोमलतारसमोंकारेणाभिमंत्रितंशुद्धिसाधनंपिबेत् एतच्चाकामकारविषयम् कामतस्तुसुमंतूक्तम् रेतो
विण्मूत्रप्राशनंकृत्वालशुनपलांडुगृंजनकुंभिकादीनामन्येषांचाभक्ष्यादीनाभक्षणंकृत्वाहंसग्रामकुक्कुटश्वशृगालादिमांसभक्षण
कृत्वाततःकंठमात्रमुदकमवतीर्यत्रिरुद्धवतीभिःप्राणायामंकृत्वाब्रह्मव्याहृतिभि रुरोगमुदकंपीत्वातदेतस्मात्पूतोभवतीति मनुना

पिसप्तविधाभक्ष्यभक्षणेप्रायश्चित्तंनारमुक्तं प्रतिगृह्याप्रतिग्राह्यंभुक्त्वाचान्नंविगर्हितम् जपंस्तरत्समंदीयंपूयतेमानवस्त्र्यहा
दिति अप्रतिग्राह्यंविषशस्त्रसुरादिपतितादिद्रव्यंच यदारेतःस्फुरेत्तोविण्मूत्रादिशारीरंमलंविसृजतितदापितेनैवोक्तम् अप्रश
स्तंतुकृत्वाप्सुमासमासीतभैक्ष्यभुगिति ३०७ अज्ञानकृतेप्रकीर्णकेमानसेचोपपातकेप्रायश्चित्तमाह रजन्यावासरेवापियत्प्र

निशायांवादिवावापियदज्ञानकृतंभवेत् त्रैकाल्यसंध्याकरणात्तत्सर्वंविप्रणश्यति ३०८

मादकृतंप्रकीर्णकंमानसंवाचिकंचोपपातकंतत्सर्वंप्रातर्मध्याह्नादिकालत्रयविहितनित्यसंध्योपासनयाप्रणश्यति तथाचय-
मः यदह्नाकुरुतेपापंकर्मणामनसागिरा आसीनःपश्चिमांसंध्यांप्राणायामैर्निहंतितदिति शातातपेनाप्युक्तम् अनृतं
मद्यगंधंचदिवामैथुनमेवच पुनातिवृषलान्नंचसंध्याबहिरुपासितेति ३०८ ७ ७ ७ ७

सकलमहापातकादिसाधारणान् पवित्रमंत्रानाह शुक्रियंनामअरण्यकविशेषः विश्वानिदेवसवितरित्यादिवाजसनेयके पठ्यते आ
रण्यकंचऋतंवाचंप्रपद्येमनोयज्ञःप्रपद्येइत्यादि तत्रचपठ्यतेतयोर्जपःसकलमहापातकादिहरः तथागायत्र्याश्चमहापातकेषुलक्ष
मितिपातकानुपातकयोर्दशसहस्रंउपपातकेषुसहस्रंप्रकीर्णकेषुशतमित्येवंविशेषतोजपःसर्वपापहरः तथाचगायत्रीमधिकृत्यश्लो
कःशंखेनोक्तः शतंजप्तातुसावित्रीमहापातकनाशिनी सहस्रजप्तातुतथापातकेभ्यःप्रमोचिनी दशसाहस्रजाप्येनसर्वकिल्बिष

सुक्रियारण्यकजपोगायत्र्याश्चविशेषतः सर्वपापहरात्येनेरुद्रैकादशिनीतथा ३०९

नाशिनी लक्षंजप्तातुसादेवीमहापातकनाशिनी सुवर्णस्तेयकृद्विप्रोब्रह्महागुरुतल्पगः सुरापश्चविशुद्ध्यंतिलक्षंजप्त्वानसंशयइ-
ति चतुर्विंशतिमतेनोक्तं गायत्र्यास्तुजपेत्कोटिंब्रह्महत्यांव्यपोहति लक्षाशीतिंजपेद्यस्तुसुरापानाद्विमुच्यते पुनातिहेमहर्त्तारंगा-
यत्र्यालक्षसप्ततिः गायत्र्यालक्षषष्ट्यातुमुच्यतेगुरुतल्पग इतितद्गुरुत्वाल्पकाशविषयम् तथारुद्रैकादशिनी एकादशानांरुद्रानु
वाकानांसमाहारोरुद्रैकादशिनी साचविशेषतोजप्तासर्वपापहरा एकादशगुणान्वापिरुद्रानावर्त्यधर्मवित् महद्भ्यःसतुपा-

पेभ्योमुच्यतेनात्रसंशयः इतिमहापातकेष्वेकादशगुणावृत्तिदर्शनात् अतिपातकादिषुचतुर्थचतुर्थांशन्हासोयोजनीयः चशब्दोघमर्षणा
दिसमुच्चयार्थः यथाहवसिष्ठः सर्ववेदपवित्राणिवक्ष्याम्यहमतःपरम् येषांजपैश्चहोमैश्चपूयतेनात्रसंशयः अघमर्षणंदेवकृतंशुद्ध
वत्यस्तरत्समाः कूष्मांड्यःपावमान्यश्चदुर्गासावित्र्यथैवच अभिषंगाःपदस्तोमाःसामानिव्याहृतीस्तथा भारुंडानिचसामानिगाय
त्रंरैवतंतथा पुरुषव्रतंचभासंचतथादेवव्रतानिच अब्लिंगाबार्हस्पत्यंवाचाक्सूक्तंमधुमत्तथा शतरुद्राथर्वशिरस्त्रिसुपर्णंमहा

यत्रयत्रचसंकीर्णमात्मानंमन्यतेद्विजः तत्रतत्रतिलैर्होमोगायत्र्यावाचनंद्विजः ३१०

व्रतम् गोसूक्तंचाश्वसूक्तंचइंद्रशुक्त्येवसामनी त्रीण्याज्यदोहानिरथंतरंचअग्नेर्व्रतंवामदेव्यंबृहच्च एतानिगीतानिपुनंतिजंतून्जा
तिस्मरत्वंलभतेयदिच्छेदिति ३०९ किंच यत्रयत्रब्रह्मवधादौतज्जनितदोषजातेनात्मानंसंकीर्णमभिभूतंद्विजोमन्यतेतत्रतत्र
गायत्र्यातिलैर्होमःकार्यः तत्रमहापातकेषुगायत्र्यालक्षहोमःकार्यः गायत्र्यालक्षहोमेतुमुच्यतेसर्वपातकैरितिनियमस्मरणात्
अतिपातकादिषुपादन्हासःकल्पनीयः तथातिलैर्वाचनंकार्यम् तथारहस्याधिकारेवसिष्ठः वैशाख्यांपौर्णमास्यांचब्राह्मणान्पं

चसप्तच क्षौद्रयुक्तैस्तिलैः कृष्णैर्वाचयेदथवेतरैः प्रीयतां धर्मराजेति यद्वा मनसि वर्त्तते यावज्जीवकृतं पापं तत्क्षणादेव नश्यतीति
अनियतकालमपि दानं तेनैवोक्तं कृष्णाजिने तिलान्कृत्वा हिरण्यं मधुसर्पिषी ददाति यस्तु विप्राय सर्वं तरति दुष्कृतमिति तथा व्या
सेनाप्युक्तम् तिलधेनुंच यो दद्यात्संयतात्मा द्विजन्मने ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशय इति एवमादि दान ज्ञानरहस्य-
कांडोक्तमविदुषां द्विजातीनां स्त्रीशूद्रयोश्च वेदितव्यम् यत्तु यमेनोक्तम् तिलान्ददाति यः प्रातस्तिलान्स्पृशति खादति तिलस्ना

वेदाभ्यासरतं क्षांतं पंचयज्ञक्रियापरम् न स्पृशंतीह पापानि महापातकजान्यपि ३११

यी तिलाञ्जुह्वन्सर्वं तरति दुष्कृतम् तथा द्वेचाष्टम्यौ तु मासस्य चतुर्दश्यां तथैवच अमावास्या पूर्णमासी सप्तमी द्वादशी द्वयम् संव-
त्सरमभुंजानः सततं विजितेंद्रियः मुच्यते पातकैः सर्वैः स्वर्गलोकंच गच्छतीति यच्चात्रिणोक्तम् क्षीराब्धौ शेषपर्यंके आषाढ्यां संवि
शेद्धरिः निद्रां त्यजति कार्त्तिक्यां तयोः संपूजयेद्धरिम् ब्रह्महत्यादिकं पापं क्षिप्रमेव व्यपोहतीत्यादि तत्सर्वं विद्याविरहिणा कामाकाम
सकृदभ्यासविषयतया व्यवस्थापनीयम् ३१० किंचाह वेदस्वीकरणं पूर्वं विचारोभ्यसनं तपः तद्दानंचैव शिष्येभ्यो वेदाभ्यासो हि पंच

धेति उक्तक्रमेण वेदाभ्यासनिरतं नित्यं क्षान्तं पञ्चमहायज्ञानुष्ठाननिरतम् महापातकजान्यपि पापानि न स्पृशन्ति किंपुनः प्रकीर्णकजानि वाङ्मनसजन्योपपातकानि चेत्यत्र तात्पर्यमपिशब्दाल्लक्ष्यते एतच्चाकामकारविषयम् अतएव वसिष्ठेन यद्यकार्यशतं साग्रं कृतं वेदश्च धार्यते सर्वं तत्तस्य वेदाग्निर्दहत्यग्निरिवेन्धनमिति प्रकीर्णकाद्यभिप्रायेणाभिधायाभिहितम् न वेदबलमाश्रित्य पापकर्मरतिर्भवेत् अज्ञानाच्च प्रमादाच्च दह्यते कर्म नेतरत् ३११ किंच सोपवासो वासरमुपविशन् उषित्वा सलिले वसन् निशां नीत्वा दित्योदया

वायुभक्षो दिवा तिष्ठन् रात्रिं नीत्वाप्सु सूर्यदृक् जप्त्वा सहस्रं गायत्र्याः शुध्येद्ब्रह्मवधादृते ३१२

नन्तरं सावित्र्याः सहस्रं जपित्वा ब्रह्मवधव्यतिरिक्तसकलमहापातकादिपापजालान्मुच्यते अतश्चोपपातकादिष्वभ्यासेनेकदोषसमुच्चये वा वेदितव्यम् विषमविषयसमीकरणस्यान्याय्यत्वात् अतएव वृद्धवसिष्ठेन महापातकोपपातकयोः कालविशेषेण व्रतविशेष उक्तः यथाह यवानां प्रसृतिमञ्जलिं वा श्रपयमाणं घृतं चाभिमन्त्रयेत् यवोसि धान्यराजस्त्वं वारुणो मधुसंयुतः निर्णोदः सर्वपापानां पवित्रमृषिभिः स्मृत इत्यनेन घृतं यवा मधु यवाः पवित्रममृतं यवाः सर्वं पुनन्तु मे पापं वाङ्मनःकायसंभवमित्यनेन वा अग्निकार्यं न कुर्वीत नैव भूतबलिं तथा

नाग्रंनभिक्षांनातिथ्यांनचोच्छिष्टंपरित्यजेत् येदेवामनोजातामनोयज्ञसदक्षादक्षपितरः तेनःपांतुतेअवंतुतेभ्योनमस्तेभ्यःस्वाहेत्या-
त्मनिजुहुयात्त्रिरात्रंमेधाभिवृद्ध्येपापक्षयायत्रिरात्रंसप्तरात्रंब्रह्महत्यादिषुद्वादशरात्रंपतितोत्पन्नश्चैतत्तद्दिग्वलंबनेनान्यान्यपिस्मृ
तिवचनानिविवेचनीयानि इतिरहस्यप्रायश्चित्तप्रकरणंपंचदशम् ३१२ विनियुक्तव्रतव्रातरूपभेदंबुभुत्सिते कीदृक्षमितिसंक्षे-
पाल्लक्षणंवक्ष्यतेधुना तत्रतावत्सकलप्रकाशरहस्यव्रतांगभूतान्धर्मानाह ब्रह्मचर्यंसकलेंद्रियसंयमः उपस्थनिग्रहोलिंगनिग्रहः

ब्रह्मचर्यंदयाक्षांतिर्दानंसत्यमकल्पता अहिंसास्तेयमाधुर्येदमश्चेतियमाःस्मृताः ३१३ स्नानं
मौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः नियमागुरुशुश्रूषाशौचाक्रोधोप्रमादता ३१४

गोबलीवर्दन्यायेननिर्दि
ष्टः अकल्पताअकुटिलता शेषःप्रसिद्धः यत्तुपुनर्मनुनोक्तम् अहिंसासत्यमक्रोधमार्जवंचसमाचरेदितितदप्येतेषामुपलक्षणंनपरिग
णनाय अत्रचदयाक्षांत्यादीनापुरुषार्थतयाप्राप्तानामपिपुनर्विधानंप्रायश्चित्तांगत्वार्थं क्वचिद्विशेषोप्यस्ति यथाविवाहादिष्वभ्यनु-
ज्ञातस्याप्यनृतवचनस्यनिवृत्त्यर्थंसत्यस्यविधानम् पुत्रशिष्यादिकमपिताडनीयमित्येवमर्थमहिंसाविधानमित्येवमादि ३१३ ३१४

तत्रसांतपनाख्यंव्रतंतावदाह पूर्वेद्युराहारांतरपरित्यागेन गोमूत्रादीनिपंचगव्यानिपंचद्रव्याणिकुशोदकसहितानिसंयुज्यपीत्वाअपरे द्युरुपवसेदितिद्व्यहसाध्यःसांतपनःकृच्छ्रः संयोजनंचोत्तर श्लोकपृथक्कृत्वविधानादवगम्यते कृच्छ्रइतिचान्वर्थसंज्ञेयम् तयोरूपत्वेनक्लेश साध्यत्वात् गोमूत्रादीनांपरिमाणंवक्ष्यते यदापुनःपूर्वेद्युरुपोष्यापरेद्युःसमंत्रकंसंयुज्यसमंत्रकमेवपंचगव्यंपीयते तदाब्रह्मकूर्चइत्या ख्यायते यथाहपाराशरः गोमूत्रंगोमयंक्षीरंदधिसर्पिःकुशोदकम् निर्दिष्टंपंचगव्यंतुप्रत्येकंकायशोधनम् गोमूत्रंताम्रवर्णायाःश्वेता

गोमूत्रंगोमयक्षीरंदधिसर्पिःकुशोदकम् जग्ध्वापरेद्युरुपवसेत्कृच्छ्रंसांतपनंपरम् ३१५

याश्चापिगोमयं पयःकांचनवर्णायानीलायाश्चतथादधि घृतंचकृष्णवर्णायाःसर्वंकापिलमेवच अलाभेसर्ववर्णानांपंचगव्येष्वयंवि धिः गोमूत्रेमाषकास्त्वष्टौगोमयस्यतुषोडश क्षीरस्यद्वादशप्रोक्तादध्नस्तुदशकीर्त्तिताः गोमूत्रवत्घृतस्याष्टौतदर्द्धंतुकुशोदकम् पंच गव्यमृचापूतंहोमयेदग्निसंनिधौ सप्तपत्राश्चयेदर्भाअच्छिन्नाग्राःशुचित्विषः एतैरुद्धृत्यहोतव्यंपंचगव्यंयथाविधि इरावतीइदंवि ष्णुर्मानस्तोकेचशंवती एताभिश्चैवहोतव्यंहुतशेषंपिबेद्द्विजः प्रणवेनसमालोड्यप्रणवेनाभिमंत्र्यच प्रणवेनसमुद्धृत्यपिबेत्तत्प-

णवेनतु मध्यमेनपलाशस्यपद्मपत्रेणवापिबेत् स्वर्णपात्रेणताम्रेणब्रह्मतीर्थेनवापुनः यत्त्वगस्थिगतंपापंदेहेतिष्ठतिमानवे ब्रह्मकू
र्चोपवासस्तुदहत्यग्निरिवेंधनमिति यदात्वेतदेवपंचगव्यमिश्रितंत्रिरात्रमभ्यस्यतेतदायतिसांतपनसंज्ञांलभते एतदेवत्र्यहाभ्यस्त
यतिसांतपनंस्मृतमितिशंखस्मरणात् जाबालेनतुसप्ताहसाध्यसांतपनमुक्तम् गोमूत्रंगोमयंक्षीरंदधिसर्पिःकुशोदकम् एकैकंप्रत्य-
हंपीत्वात्वहोरात्रमभोजनम् कृच्छ्रसांतपनंनामसर्वपापप्रणाशनमिति एषांचगुरुलघुकृच्छ्राणांशक्त्याद्यपेक्षयाव्यवस्थाविज्ञेया ए

पृथक्सांतपनंद्रव्यैःषडहःसोपवासकः सप्ताहेनतुकृच्छ्रोयंमहासांतपनःस्मृतः ३१६

वमुत्तरत्रापिव्यवस्थाबोद्धव्या ३१५ महासांतपनाख्यंव्रतमाह सप्ताहेनापवर्जितोमहासांतपनाख्यःकृच्छ्रोविज्ञेयः कथमित्यपे
क्षायामुक्तम् पृथग्भूतैःषड्भिर्गोमूत्रादिभिरेकैकेनैकैकमहरतिवाहयेत् सप्तमंचोपवासेनेति यमेनतुपंचदशाहसंपाद्योमहासांतपनो
भिहितः त्र्यहंपिबेत्तुगोमूत्रंत्र्यहंवैगोमयंपिबेत् त्र्यहंदधित्र्यहंक्षीरंत्र्यहंसर्पिस्ततःशुचिः महासांतपनंह्येतत्सर्वपापप्रणाशनमिति
जाबालेनत्वेकविंशतिरात्रनिर्वर्त्योमहासांतपनउक्तः षण्णामेकैकमेतेषांत्रिरात्रमुपयोजयेत् त्र्यहंचोपवसेदंत्यंमहासांतपनंविदुरि

ति यदातुषण्णांसांतपनद्रव्याणामेकैकस्यद्व्यहमुपयोगस्तदाअतिसांतपनम् यथाहयमः एतान्येवतथापेयादेकैकंतुद्व्यहंद्व्यहम् अतिसांतपनंनामश्वपाकमपिशोधयेदिति श्वपाककमपिशोधयेदित्यर्थवादः ३१६ पर्णकृच्छ्राख्यंव्रतमाह पलाशोदुंबरारविंदश्रीवृक्षपर्णानामेकैकेनक्वथितमुदकंप्रत्यहंपिबेत् कुशोदकंचैकस्मिन्निति पंचाहसाध्यः पर्णकृच्छ्रः यदातुपर्णादीनामेकीकृतानांक्वाथस्त्रिरात्रंनेपीयतेतदापर्णकूर्चः यथाहयमः एतान्येवसमस्तानित्रिरात्रोपोषितःशुचिः क्वाथयित्वापिबेदद्भिःपर्णकूर्चोभिधीयते-

पर्णोदुंबरराजीवबिल्वपत्रकुशोदकैः प्रत्येकंप्रत्यहंपीतैःपर्णकृच्छ्रउदाहृतः ३१७ तप्तक्षीरघृतांबूनामेकैकंप्रत्यहंपिबेत् एकरात्रोपवासश्चतप्तकृच्छ्रउदाहृतः ३१८

इति यत्तुबिल्वादिफलानिप्रत्येकंक्वथितानिमासंपीयंतेतदाफलकृच्छ्रादिव्यपदेशंलभंते यथाहमार्कंडेयः फलैर्मासेनकथितःफलकृच्छ्रोमनीषिभिः श्रीकृच्छ्रःश्रीफलैःप्रोक्तःपद्माक्षैरपरस्तथा मासेनामलकैरेवंश्रीकृच्छ्रमपरंस्मृतम् पत्रैर्मतःपत्रकृच्छ्रःपुष्पैस्तत्कृच्छ्रउच्यते मूलकृच्छ्रःस्मृतोमूलैस्तोयकृच्छ्रोजलेनत्विति ३१७ तप्तकृच्छ्रव्रतमाह तप्तदुग्धसर्पिरुदकानांतप्तानामेकैकंप्रतिदिवसंप्राश्यापरेद्युरुपवसेत्

एषदिवसचतुष्टयसंपाद्योमहान्सप्तकृच्छ्रः एभिरेवसमस्तैःसोपवासैर्द्विरात्रसंपाद्यःसांतपनवत्सप्तकृच्छ्रः मनुनातुद्वादशरात्रनिर्वर्त्यो-
भिहितः तप्तकृच्छ्रंचरन्विप्रोजनक्षीरघृतानिलान् प्रतित्र्यहंपिबेदुष्णान्सकृत्स्नायीसमाहितइति क्षीरादिपरिमाणंतुपराशरेणोक्तं
द्रष्टव्यम् अपांपिबेत्तुत्रिपलंद्विपलंतुपयःपिबेत् पलमेकंपिबेत्सर्पिस्त्रिरात्रंचोष्णमारुतमिति त्रिरात्रंचोष्णमारुतमितित्रिरात्रस्य
पूर्णउष्णोदकबाष्पंपिबेदित्यर्थः यदातुशीतंक्षीरादिपीयतेतदाशीतकृच्छ्रः त्र्यहंशीतंपिबेत्तोयंत्र्यहंशीतंपयःपिबेत् त्र्यहंशीतंघृतं

एकभक्तेननक्तेनतथैवायाचितेनच उपवासेनचैवायंपादकृच्छ्रःप्रकीर्त्तितः ३१९

पीत्वावायुभक्षःपरंत्र्यहमितिस्मरणात् ३१८ पादकृच्छ्रमाह एकभक्तेनसकृद्भोजनेनादिवैव नक्तेनेतिपृथगुपादानात् अतश्चादि
वैवैकवारमेवभोजनेनैवैकमहोरात्रमितिवाहयेदिति तत्रदिवेतिरात्रिव्युदासः एकवारमितिद्विवारादिव्युदासः भोजनेनेत्यभोजन-
व्युदासः एतच्चकृच्छ्रादीनांव्रतरूपत्वात्पुरुषार्थभोजनपर्युदासेनकृच्छ्रांगभूतंभोजनंविधीयते तथाचापस्तंबः त्र्यहमनक्ताश्यदि
वाशीतनस्त्र्यहमयाचितव्रतइति अत्रचानक्ताशीत्यनेनव्रतविहितेनाणिनिप्रत्ययेननक्तपर्युदासेनदिवाभोजननियमंदर्शयति गौत

मेनापीद मेवस्पष्टीकृतम् हविष्यंप्रातराशीभुक्त्वान्विस्त्रोरात्रीर्नाश्नीयादिति एवंनक्तभोजनविधावपि नविद्यतेयाचितंयस्मिन्भोज
नेतदयाचितमिति तेनकालविशेषानुपादानाद्दिवारात्रौवासकृदित्येव तपोरूपत्वात् कृच्छ्राणाद्द्वितीयभोजनेनतदनुपपत्तेः अयाचित
मितिनकेवलंपरकीयान्नयाचनप्रतिषेधोपितुस्वकीयमितिपरिचारकभार्यादिभ्योनयाचितव्यम् प्रेषणाध्येषणयोःसाधारणत्वात्या
च्ञायाः अतःस्वगृहेपिभृत्यभार्यादयोअनाज्ञप्ताएवयदिभोजनमुपहरंतितर्हिभोक्तव्यंनान्यथा अमुनैवाभिप्रायेणोक्तंगौतमेन अ-
थापरंत्र्यहंनकंचनयाचेतेति अत्रचग्रासंख्यानियमःपराशरेणदर्शितः सायंतुद्वादशग्रासाःप्रातःपंचदशस्मृताः चतुर्विंशतिरा-
याच्याःपरंनिरशनंस्मृतमिति आपस्तंबेनत्वन्यथोक्तम् सायंद्वाविंशतिर्ग्रासाःप्रातःषड्विंशतिस्मृताः चतुर्विंशतिरायाच्याःपरंनिरश
नास्त्रयः कुक्कुटाण्डप्रमाणस्तुयथावास्यंविशेत्सुखमिति अनयोश्चकल्पयोःशक्त्यपेक्षयाविकल्पः आपस्तंबेनतुप्राजापत्यप्रायश्चि
त्तंचतुर्धाविभज्यचतुरःपादकृच्छ्रान्कृत्वावर्णानुरूपेणव्यवस्थादर्शिता त्र्यहंनिरशनंपादःपादश्चायाचितंत्र्यहम् सायंत्र्यहंतथा
पादःपादःप्रातस्तथात्र्यहम् प्रातःपादंचरेच्छूद्रःसायंवैश्यस्यदापयेत् अयाचितंतुराजन्येत्रिरात्रंब्राह्मणेस्मृतमिति यदात्वयाचि
तोपवासात्मकत्र्यहद्वयानुष्ठानंतदार्धकृच्छ्रः सायंव्यतिरिक्तापरत्र्यहानुष्ठानंतुपादोनमितिविज्ञेयम् सायंप्रातर्विनार्द्धंस्यात्पादो
नंनक्तवर्जितमितितेनैवोक्तत्वात् अर्द्धकृच्छ्रस्यप्रकारांतरमपितेनैवदर्शितम् सायंप्रातस्तथैकैकंदिनद्वयमयाचितम् दिनद्वयं-
चनाश्नीयात्कृच्छ्रार्द्धंतद्विधीयतेइति ३१९ ७ ७ ७ ७ ७ ७ ७

प्राजापत्यं कृच्छ्रमाह अयमेव पादकृच्छ्रः यथाकथंचिद्दंडकालितवदावृत्त्या स्वस्थानविवृद्ध्या वा तत्राप्यानुलोम्येन प्रातिलोम्ये-
न वा तथा वक्ष्यमाणजपादियुक्तं तद्रहितं वा त्रिरभ्यस्तः प्राजापत्यं विधीयते तत्र दंडकालितवदावृत्तिपक्षो वसिष्ठेन दर्शितः अहः
प्रातरहर्नक्तमहरेकमयाचितम् अहः पराकं तत्रैकमेवं चतुरहौ परौ अनुग्रहार्थं विप्राणां मनुर्धर्मभृतां वरः बालवृद्धातुरेष्वेवं शि
शुकृच्छ्रमुवाच हेति आनुलोम्येन स्वस्थानविवृद्धिपक्षस्तु मनुना दर्शितः त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् परं त्र्यहं च ना-

यथाकथंचित्त्रिगुणः प्राजापत्योयमुच्यते

श्नीयात्प्राजापत्यं चरेद्द्विज इति प्रातिलोम्यावृत्तिस्तु वसिष्ठेन दर्शिता प्रातिलोम्यं चरेद्विप्रः कृच्छ्रं चांद्रायणोत्तरमिति जपादिरहितपक्षस्तु
स्त्रीशूद्रादिविषयेंगिरसा दर्शितः तस्माच्छूद्रं समासाद्य सदा धर्मपथे स्थितम् प्रायश्चित्तं प्रदातव्यं जपहोमादिवर्जितमिति जपादियुक्तप-
क्षस्तु परिशेषाद्योग्यतया च त्रैवर्णिकविषयः स च गौतमादिभिर्दर्शितः अथातः कृच्छ्रान्व्याख्यास्यामो हविष्यान्प्रातराशान्भुक्त्वा तिस्रो रा
त्रीर्नाश्नीयादथापरं त्र्यहं नक्तं भुंजीयाथापरं त्र्यहं न कंचन याचेत्तथापरं त्र्यहमुपवसेत्तिष्ठेदहनि रात्रावासीत क्षिप्रकामः सत्यं वदेदनार्यैः स

हनभाषेनरौरवयोधांजपेन्नित्यंप्रयुंजीनानुसवनमुदकोपस्पर्शनमापोहिष्ठेतितिसृभिःपवित्रवतीभिर्मार्जयीत हिरण्यवर्णाःशुचयःपा
वकाइत्यष्टाभिरथोदकतर्पणम् नमोहमायमोहमायमंहमायधन्वने तापसायपुनर्वसेनमः मौंज्याय औम्र्यायवसुविंदायसर्ववर्णवि
दायनमः पारायस्रुपाराय महापाराय पारदाय पारयिष्णवेनमः रुद्रायपसुपतये महतेदेवायत्र्यंबकायैकचरा याधिपतयेहरायश
र्वायेशानाय उग्रायवज्रिणे घृणिने कपर्दिनेनमः सूर्यायादित्यायनमः नीलग्रीवायाशितिकंठायनमः कृष्णायपिंगलायनमः ज्येष्ठा
यश्रेष्ठायवृद्धायेंद्रियाय हरिकेशायऊर्ध्वरेतसेनमः सत्यायपावकाय पावकवर्णायैकवर्णायकामायकामरूपिणेनमः दीप्तायदी
प्तरूपिणेनमः तीक्ष्णायतीक्ष्णरूपिणेनमः सौम्यायपुरुषाय महापुरुषायमध्यमपुरुषायउत्तमपुरुषाय ब्रह्मचारिणेनमः चंद्रललाे
टायकृत्तिवाससेनमइति एनदेवादित्योपस्थानमेताएवाज्याहुतयो द्वादशरात्रस्यांतेचरुंश्रपयित्वाएताभ्योदेवताभ्योजुहुयादग्नयेस्वा
हासोमायस्वाहाग्नीषोमाभ्यामिंद्राग्निभ्यामिंद्रायविश्वेभ्योदेवेभ्योब्रह्मणेप्रजापतयेग्नयेस्विष्टकृते इतिअंतेब्राह्मणभोजनमिति तत्र
तिष्ठेदहनिरात्रावासीतक्षिप्रकामइत्यस्यार्थः यस्तुमनसोप्येनसःक्षिप्रमेकेनैव कृच्छ्रेणक्षिप्रमुच्येयमित्येवंकामयतेअसावहनिकर्मा
विरुद्धेषुकालेषुतिष्ठेद्रात्रावासीतएवंरौरवयोधारव्यसामजपेन मोहमायेत्यादिभिस्तर्पणादित्योपस्थानादिकंचरुश्रपणादिकंचयोगीश्व
राद्यनुक्तंक्षिप्रकामःकुर्वीत अनश्चयोगीश्वराद्युक्तप्राजापत्यहृदयस्थानेगौतमीयमनेकेतिकर्त्तव्यतासहितंद्रष्टव्यम् एवमन्यान्यपिस्मृ
त्यंतरोक्तानिविशेषेणान्वेषणीयानि ७ ७ ७ ७ ७ ७ ७ ७

अतिकृच्छ्रमाह एतद्धर्मक एव एकभक्तादिप्राजापत्यधर्मयुक्तोतिकृच्छ्रःस्यात् इयांस्तु विशेषः आद्येत्र्यहत्रयेपाणिपूरणमात्रमन्नं भुंजीत नतु नद्वाविंशत्यादिग्रासान् अत्रच प्राप्तभोजनानुवादेन पाणिपूरान्नविधानादत्यत्र्यहेति देशमात्रउपवासोप्रतिपक्ष एव अत्रापि पादशोव्यवस्था पूर्ववदेव द्रष्टव्या यत्तु मनुनोक्तं एकैकंग्रासमश्नीयात्त्र्यहाणित्रीणिपूर्ववत् त्र्यहंचोपवसेदंत्यमतिकृच्छ्रं

अयमेवातिकृच्छ्रःस्यात्पाणिपूरान्नभोजनः ३२० कृच्छ्रातिकृच्छ्रःपयसा
दिवसानेकविंशतिम् द्वादशाहोपवासेनपराकःपरिकीर्त्तितः ३२१

चरेत्द्विजइति तत्पाणिपूरान्नपरिमितत्वादल्पत्वाच्छक्तविषयम् ३२० कृच्छ्रातिकृच्छ्रमाह एकविंशतिरात्रंपयसावर्त्तनं कृच्छ्रातिकृच्छ्राख्यं व्रतं विज्ञेयम् गौतमेन तु द्वादशरात्रमुदकेन वर्त्तनं कृच्छ्रातिकृच्छ्र इत्युक्तम् अब्भक्षस्तृतीयः स कृच्छ्रातिकृच्छ्र इति अतश्च शक्त्यपेक्षया तयोर्व्यवस्था पराकमाह त्र्यृज्वर्थोयमर्द्धश्लोकः ३२१ ॐ ॐ ॐ ॐ

सौम्यकृच्छ्रमाह पिण्याकोदननिस्रावोदश्विदुदकसक्तूनां पंचानां एकैकं प्रतिदिवसमुपयुज्य षष्ठेन्हि उपवसेदेष सौम्याख्यः कृच्छ्रोभिधी-
यते द्रव्यपरिमाणं तु प्राणयात्रामात्रनिबंधनमधिगतव्यम् जाबालेन तु चतुरहव्यापी सौम्यकृच्छ्र उक्तः पिण्याकं सक्तवस्तक्रं चतुर्थेह्
न्यभोजनम् वासो वै दक्षिणां दद्यात्सौम्योयं कृच्छ्र उच्यते इति ३२२ तुलापुरुषाख्यं कृच्छ्रमाह एषां पिण्याकादीनां पंचानां क्रमेणैकै

पिण्याकाचामतक्रांबुसक्तूनां प्रतिवासरम् एकरात्रोपवासश्च कृच्छ्रः सौम्योयमुच्यते ३२२
एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम् तुलापुरुष इत्येष ज्ञेयः पंचदशाहिकः ३२३

कस्य त्रिरात्राभ्यासेन पंचदशाहव्यापी तुलापुरुषाख्यः कृच्छ्रो वेदितव्यः अत्र च पंचदशाहिकत्वविधानादुपवासस्य निवृत्तिः यमेन त्वे
कविंशतिरात्रिकस्तुलापुरुष उक्तः आचाममथ पिण्याकं तक्रं चोदकसक्तुकान् त्र्यहं त्र्यहं प्रयुंजानो वायुभक्षस्त्र्यहं द्वयम् एकविंशति
रात्रस्तु तुलापुरुष उच्यत इति हारीतोक्तेतिकर्त्तव्यता ग्रंथगौरवभयान्न लिख्यते ३२३ ७ ७ ७ ७

चांद्रायणमाह चांद्रायणाख्यंव्रतंकुर्यात् मयूरांडपरिमितान्पिंडान् शुक्ले आपूर्यमाणेपक्षेतिथिवृद्ध्याचरेत् भक्षयेत् यथाप्रतिपत्प्र
भृतिषुचंद्रकलानामेकैकशोवृद्धिरर्द्धमासेनतद्वत्पिंडानामपिप्रतिपद्येकोद्वितीयायांद्वावित्येवमेकैकशोवर्द्धयन्भक्षयेद्यावत्पौर्णमा
सीततःपंचदश्यांपंचदशग्रासान्भुक्त्वाततःकृष्णपक्षेचतुर्दशप्रतिपदिद्वितीयायांत्रयोदशेत्येवमेकैकशोग्रासान्ह्रासयन्अश्नीयात्
यावच्चतुर्दशीततश्चतुर्दश्यामेकंग्रासंग्रसित्वाइंदुक्षयेअर्थाद्दुपवसेत् तथाचवसिष्ठः एकैकंवर्द्धयेत्पिंडंशुक्लेकृष्णेचह्रासयेत् इंदुक्ष

तिथिवृद्ध्याचरेत्पिंडान्शुक्लेशिख्यंडसंमितान् एकैकंह्रासयेत्कृष्णेपिंडंचांद्रायणंचरन् ३२४

येनभुंजीतएषचांद्रायणेविधिरिति चंद्रस्यायनमिवायनंचरणंयस्मिन्कर्मणिह्रासवृद्धिभ्यांतच्चांद्रायणम् संज्ञायांदीर्घः इदंचय
ववत्प्रांतयोरणीयःमध्येस्थवीयइतियवमध्यमितिकथ्यते एतदेवव्रतंयदाकृष्णपक्षप्रतिपदिप्रक्रम्यपूर्वोक्तक्रमेणानुष्ठीयतेतदा
पिपीलिकावन्मध्यमितिकथ्यते तथाहि पूर्वोक्तक्रमेणकृष्णपक्षप्रतिपदिचतुर्दशग्रासान्भुक्त्वाएकैकग्रासापचयेनचतुर्दशींयाव-
द्भुंजीतततश्चतुर्दश्यामेकंग्रासंग्रसित्वामावास्यायामुपोष्यशुक्लप्रतिपदिएकमेवग्रासंप्राश्नीयात् ततएकोपचयभोजनेनपक्षशेषे

निर्वर्त्यमाने पौर्णमास्यां पंचदशग्रासाः संपद्यंत इति युक्तैव पिपीलिकामध्यता तथाच वसिष्ठः मासस्य कृष्णपक्षादौ ग्रासानद्याच्चतु
र्दश ग्रासान्पंचच भोजी सन् पक्षशेषं समापयेत् तथैव शुक्लपक्षादौ ग्रासं भुंजीत चापरम् ग्रासोपचय भोजी सन्पक्षशेषं समापये
दिति यदा त्वेकस्मिन्पक्षशेषं समापयेदिति यदा त्वेकस्मिन्पक्षे तिथिवृद्धिह्रासवशात् षोडशदिनानि भवंति चतुर्दश वा तदा ग्रासा-
नामपि वृद्धिह्रासौ वेदितव्यौ तिथिवृत्त्या पिंडांश्चरेदिति नियमात् गौतमेन तत्र विशेषो दर्शितः अथातश्चांद्रायण तस्योक्तो विधिः कृच्छ्रेव-
पनं व्रतंचरेत् श्वोभूतां पौर्णमासीमुपवसेत् आप्यायस्व सं ते पयांसि नवो नव इति चैताभिस्तर्पणमाज्यहोमो हविषश्चानुमंत्रणं उपस्थानंच
चंद्रमसः यद्देवा देवहेडनमिति चतसृभिराज्यं जुहुयाद्देवकृतस्येति चांते समिद्भिः ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं य
शः श्रीऊर्कइट् ॐ जः तेजः पुरुषः धर्मः शिव इत्येतैर्ग्रासानुमंत्रणं प्रतिमंत्रं मनसा नमः स्वाहेति वा सर्वान्नितैरे व ग्रासान्भुंजीत तद्ग्रास प्रमाण
मास्याविकारेण चरुभैक्ष्यसक्तुकणयावकशाकपयोदधिघृतमूलफलोदकानि हवींषि उत्तरोत्तर प्रशस्तानि पौर्णमास्यां पंचदश ग्रासान्
भुक्त्वा एकैकापचयेनापरपक्षमश्नीयात् अमावास्यायामुपोष्यैकैकोपचयेन पूर्वपक्षं विपरीतमेकेषामेष चांद्रायणो मास इति अत्र ग्रा
सप्रमाणमास्याविकारेणेति यदुक्तं तद्बालाभिप्रायम् शिखंडपरिमितपंचग्रासभोजनाशक्तेः क्षीरादिद्रवहविषां शिखंड परिमित
त्वं तु पर्णपुटकादिना संपादनीयम् तथा कुक्कुटांडाद्यामलकादीनि तु ग्रासपरिमाणानि स्मृत्यंतरोक्तानि शक्तिविषयाणि शिखंडपरिमा
णाद्बहुत्वात्तेषां यत्पुनरुक्तं श्वोभूतां पौर्णमासीमुपवसेदित्यत्र चतुर्दश्यामुपवासमभिधाय पौर्णमास्यां पंचदश ग्रासान्भुक्त्वेत्यादि

नाह्नांत्रिंशदहरात्मकत्वंचांद्रायणस्योक्तम् नतत्पक्षांतरप्रदर्शनार्थंनसार्वत्रिकंयोगीश्वरवचनानुरोधेनत्रिंशदहरात्मकस्यदर्शितत्वात्
यद्येतत्सार्वत्रिकंस्यात्तदानैरंतर्येणसंवत्सरेचांद्रायणानुष्ठानानुपपत्तिःस्यात् चंद्रगत्यनुवर्त्तनानुपपत्तिश्च ३२४ चांद्रायणांतर-
माह पिंडानांचत्वारिंशदधिकंशतद्वयमासेनभुंजीत यथाकथंचित्प्रतिदिनंमध्यान्हेष्टौग्रासान्तथानक्तंदिनयोश्चतुरश्चतुरोवाअ

यथाकथंचित्पिंडानांचत्वारिंशच्छतद्वयम् मासेनैवोपभुंजीतचांद्रायणमथापरम् ३२५

थैकस्मिंश्चतुरोपरस्मिन्द्वादशतथैकरात्रमुपोष्यापरस्मिन्षोडशवेत्यादिप्रकाराणामन्यतमेनशक्त्याद्यपेक्षयाभुंजीतेत्येतत्पूर्वोक्तचां
द्रायणद्वयादपरंचांद्रायणम् अतस्तयोर्नायंग्राससंख्यानियमः किंतुपंचविंशत्यधिकंशतद्वयसंख्यैव मनुनाचैतेप्रकारादर्शिताः
अष्टावष्टौसमश्नीयात्पिंडान्मध्यंदिनेस्थिते नियतात्माहविष्यस्ययतिचांद्रायणंचरेत् चतुरःप्रातरश्नीयात्पिंडान्विप्रःसमाहितः च
तुरोस्तमितेसूर्येशिशुचांद्रायणंचरेत् यथाकथंचित्पिंडानांतिस्रोशीतीःसमाहितः मासेनाश्नन्हविष्यस्यचंद्रस्यैतिसलोकतामिति

तथाचत्वारिंशच्छतद्वयन्यूनसंख्यायाससंपाद्यस्यापिसंग्रहार्थमपरग्रहणं यथाहयमः त्रींस्त्रीन्पिंडान्समश्नीयान्नियतात्माद्दृढव्रतः
हविष्यान्नस्यवैमासमृषिचांद्रायणंस्मृतमिति एषुचयतिचांद्रायणप्रभृतिषुनचंद्रगत्यनुसरणमपेक्षितम् अतस्त्रिंशद्दिनात्मकसा
धारणेनमासेननैरंतर्येणचांद्रायणानुष्ठानेयदिकथंचित्तिथिवृद्धिह्रासवशात्पंचम्यादिष्वारंभोभवतितथापिनदोषः यद्यपिसो
मायनाख्यंमासव्रतंमार्कंडेयेनोक्तम् गोक्षीरंसप्तरात्रंतुपिबेत्स्तनचतुष्टयात् स्तनत्रयात्सप्तरात्रंसप्तरात्रंस्तनद्वयात् स्तनेनैके
नषड्रात्रंत्रिरात्रंवायुभुग्भवेत् एतत्सोमायनंनाममहाकल्मषनाशनमिति स्मृत्यंतरेसप्ताहंचेत्येतद्दोस्तनमखिलमथत्रीन्स्तना
न्द्वौतथैकंकुर्यात्त्रींश्चोपवासान्यदिभवतितदामासिसोमायनंतत् तदपिचांद्रायणधर्मकमेव हारीतेन अथातश्चांद्रायणमनुक्रमि-
ष्यामइत्यादिनासेतिकर्त्तव्यताकंचांद्रायणमभिधायैवसोमायनमित्यतिदेशाभिधानात् यत्पुनस्तेनकृष्णचतुर्दशीमारभ्यशुक्लद्वा
दशीपर्यंतंसोमायनमुक्तम् चतुर्थीप्रभृतिचतुस्तनेनत्रिरात्रंत्रिस्तनेनत्रिरात्रंद्विस्तनेनत्रिरात्रंएकस्तनेनत्रिरात्रमेवमेकस्तनप्रभृ-
तिपुनश्चतुस्तनांतंयातेसोमचतुर्थीतिनूस्तयानःपाहितस्यैनमःस्वाहायातेसोमपंचमीषष्ठीत्येवंयथार्थास्तिथिहोमाएकमासंएनोभ्यःपू
तश्चंद्रमसःसमानतांसलोकतांसायुज्यंचगच्छतीतिचतुर्विंशतिदिनात्मकंसोमायनमुक्तंतदशक्तविषयम् ३२५ अथकृच्छ्र-
चांद्रायणसाधारणीमितिकर्त्तव्यतामाह कृच्छ्रंप्राजापत्यादिकंचांद्रायणंवात्रिषवणस्नानयुक्तःकुर्यात् एतच्चतप्तकृच्छ्रव्यतिरेके
ण तत्रसकृत्स्नायीसमाहितइतिमनुनाविशेषाभिधानात् यत्पुनस्तप्तकृच्छ्रेषुत्रिषवणस्नानमभिहितंत्रिरह्नित्रिर्निशायांतुसवासा

जलाभाविशेदितितदशक्तविषयम् यत्तुनवैशंपायनेनद्वैकालिकंस्नानमुक्तम् स्नानंद्विकालमेवस्यात्रिकालंवाद्विजन्मनइतितत्रि
षवणस्नानाशक्तस्यवेदितव्यम् यत्तुगार्ग्येण एकवासाश्चरेद्भैक्ष्यंस्नात्वावासोनपीडयेत् तदपिशक्तस्यैव एकवासाआर्द्रवा
सालब्धाशीस्थंडिलेशयइत्येकवस्त्रतायाअपिशंखेनपाक्षिकत्वाभिधानात् स्नानेचहारीतेनविशेषउक्तः त्र्यवरंशन्नोवतीभिः
स्नात्वाघमर्षणमंतर्जलेजपित्वाधौतमहतवासःपरिधायसाम्नासौम्येनादित्यमुपतिष्ठेदिति स्नानानंतरंचपवित्राणिजपेत् पवि

कुर्यात्त्रिषवणस्नायीकृच्छ्रंचांद्रायणंतथा पवित्राणिजपेत्पिंडान्गायत्र्याचाभिमंत्रयेत् ३२६

त्राणिच अघमर्षणंदेवकृतःशन्नोवत्यस्तरत्समाइत्यादिवसिष्ठादिप्रतिपादितानामन्यतमान्यर्थाविरुद्धेषुकालेषुजपेत् सावित्रींवा
सावित्रींवाजपेन्नित्यंपवित्राणिचशक्तितइतिमनुस्मरणात् यत्तुगौतमेनोक्तम् रौरवयौधाजपेन्नित्यंप्रयुंजीतेतितदपिपवित्रत्वा
देवोक्तं नपुनर्नियमाय तथासतिश्रुत्यंतरमूलत्वकल्पनाप्रसंगात् अतोनधीतसामवेदेनगायत्र्यादिकमेवजप्तव्यम् यदपिन

मोहमायमोहमायइत्यादिपठित्वाएता एवाज्याहुतयइत्युक्तंतदपिननैयमिकम् किंतुमहाव्याहृतिभिर्होमस्तिलैःकार्योद्विजन्म
नेतिमनुनामहाव्याहृतिभिर्होमविधानात् तथाषड्त्रिंशन्मतेप्युक्तम् जपहोमादियत्किंचित्कृच्छ्रोक्तंसंभवेन्नचेत् सर्वव्याहृति-
भिःकुर्याद्गायत्र्याप्रणवेनचेति आदिग्रहणादुदकतर्पणादित्योपस्थानादेर्ग्रहणम् अतएववैशंपायनः स्नात्वोपतिष्ठेदादित्यं-
सौरीभिस्तुकृतांजलिरिति एवमन्येष्वपिविरोधिपदार्थेषुविकल्पआश्रयणीयः अविरोधिषुसमुच्चयः शाखांतराधिकरणन्या
येनसर्वस्मृतिप्रत्ययत्वात्कर्मणाजपसंख्यायांचविशेषस्तेनैवदर्शितः ऋषभंविरुजंचैवतथाचैवाघमर्षणम् गायत्रींवाजपेद्दे
वींपवित्रांवेदमातरम् शतमष्टशतंवापिसहस्रमथवापरम् उपांशुमनसावापितर्पयेत्पितृदेवताः मनुष्यांश्चैवभूतानिप्रणम्यशिरसाततइ-
ति तथापिंडांश्चप्रत्येकंगायत्र्याचाभिमंत्रयेत् यमेनापिविशेषउक्तः अंगुल्यग्रेस्थितंपिंडंगायत्र्याचाभिमंत्रितम् प्राश्याचम्यपुनःकुर्या
दन्यस्याप्यभिमंत्रणमिति अतश्चोंभूर्भुवःस्वरित्यादिभिर्गौतमोक्तैरभिमंत्रणमंत्रैःसहास्यविकल्पः यत्पुनराप्यायस्वसंतेपयांसीत्यादि
भिःपिंडकरणात्पूर्वंहविषोनुमंत्रणमुक्तंतद्भिन्नकार्यत्वान्नसमुच्चीयते एतानिचकृच्छ्रादिव्रतानियदाप्रायश्चित्तार्थमनुष्ठीयंतेतदाकेशा
दिवपनपूर्वकंपरिगृहीतव्यानि वपनंव्रतंचरेदितिगौतमस्मरणात् अभ्युदयार्थेतुनैववपनम् वसिष्ठेनाप्यत्रविशेषउक्तः कृच्छ्राणां
व्रतरूपाणांश्मश्रुकेशादिवापयेत् कक्षिरोमशिखावर्जमिति कृच्छ्राणांव्रतरूपाणिवपनादीन्यंगानिवक्ष्यंतइतिशेषः पर्षदुपदिष्टव्रत
ग्रहणंचव्रतानुष्ठानदिवसात्पूर्वेद्युःसायान्हेकार्यम् तथाहवसिष्ठः सर्वोपायेषुसर्वेषांव्रतानांविधिपूर्वकम् ग्रहणसंप्रवक्ष्यामिप्राय

श्चित्तेचिकीर्षिते दिनांतेनखरोमादीन् प्रवाप्यस्नानमाचरेत् भस्मगोमयमृद्वारिपंचगव्यादिकल्पितैः मलापकर्षणंकार्यंबाह्यशौ
चोपसिद्धये दंतधावनपूर्वेण पंचगव्येनसंयुतम् व्रतंनिशामुखेग्राह्यंबहिस्तारकदर्शने आचम्यातःपरंमौनीध्यायन्दुष्कृतमात्मनः
मनःसंतापनंतीव्रमुद्वहेच्छोकमंततइति वारिरिनियामाद्बहिर्निष्क्रम्य स्त्रियाअप्येवमेवव्रतपरिग्रहःकार्यः केशश्मश्रुलोमनखवप-
नंतुनास्ति चांद्रायणादिषु तदेवस्त्रियाःश्मश्रुकेशवपनवर्जमितिबोधायनस्मरणात् वपनादिषुच हारीतेनविशेषउक्तः राजावारा
जपुत्रोवाब्राह्मणोवाबहुश्रुतः केशानांवपनंकृत्वाप्रायश्चित्तंसमाचरेत् केशानांरक्षणार्थंतुद्विगुणंव्रतमाचरेत् द्विगुणेतुव्रतेचीर्णेदक्षि
णाद्विगुणाभवेदिति एतच्चमहापातकादिदोषविशेषाभिप्रायेण द्रष्टव्यम् विद्वद्विप्रनृप स्त्रीणांनेष्यतेकेशवापनम् ऋतेमहापातकि
नोगोहंतुश्चावकीर्णिनइतिमनुस्मरणात् जाबालेनाप्यत्रविशेषउक्तः आरंभेसर्वकृच्छ्राणांसमाप्तौचविशेषतः आज्येनबहिःशा-
लाग्नौजुहुयाद्व्याहृतीःपृथक् श्राद्धंकुर्याद्व्रतांतेतुगोहिरण्यादिदक्षिणाइति यमेनाप्यत्रविशेषोभिहितः पश्चात्तापान्निवृत्तिश्चस्नान-
चांगतयोदितम् निमित्तकानांसर्वेषांतथात्वेवानुकीर्त्तनमिति तथागात्राभ्यंगशिरोभ्यंगंतांबूलमनुलेपनम् व्रतस्थोवर्जयेत्सर्वंयच्चा
न्यद्बलरागकृदिति एवमादिकर्त्तव्यताजातंस्मृत्यंतरात् द्रष्टव्यम् एवमनेनविधिनाव्रतंगृहीत्वावश्यपरिसमापनीयम् अन्यथातु
प्रत्यवायः पूर्वंव्रतंगृहीत्वातुनाचरेत्काममोहितः जीवन्भवतिचांडालोमृतःश्वाचैवजायत इतिच्छागलेयस्मरणात् इत्यलंप्रपंचे

इत्थमुक्तविनियोगस्यचांद्रायणादेःस्वरूपमभिधायलब्धप्रसंगकार्यांतरेपिविनियोगमाह आदिश्यतइत्यादिष्टंप्रायश्चित्तंनविद्यतेआ-
दिष्टयेषुपापेषुतेषुचांद्रायणेनशुद्धिः चशब्दात्प्राजापत्यादिभिः कृच्छ्रैरैंदवसहितैस्तन्निरपेक्षैर्वाशुद्धिः तथाचषट्त्रिंशन्मतेभिहितम्
यानिकानिचपापानिगुरोर्गुरुतराणिच कृच्छ्रातिकृच्छ्रचांद्रैस्तुशोध्यंतेमनुरब्रवीदितित्रयाणांसमुच्चयःप्रतिपादितः उशनसाचद्वयोःस
मुच्चयउक्तः दुरितानांदुरिष्टानांपापानांमहतामपि कृच्छ्रंचांद्रायणंचैवसर्वपापप्रणाशनमिति दुरितमुपपातकं दुरिष्टंपानकम् गौत

अनादिष्टेषुपापेषुशुद्धिश्चांद्रायणेनतु धर्मार्थंयश्चरेदेतच्चंद्रस्यैतिसलोकताम् ३२७

मेनतुकृच्छ्रातिकृच्छ्रौचांद्रायणमितिसर्वप्रायश्चित्तसमासकरणेनैंदवनिरपेक्षताकृच्छ्रातिकृच्छ्रयोःसूचिता चांद्रायणस्यचतन्निर
पेक्षता इतिशब्देनत्रयाणांसमुच्चयः केवलप्राजापत्यस्यतुनैरपेक्ष्यंचतुर्विंशतिमतेभिहितम् लघुदोषेत्वनादिष्टेप्राजापत्यंसमाचरे
दिति गौतमेनापिप्राजापत्यादेर्नैरपेक्ष्यमुक्तम् प्रथमंचरित्वाशुचिपूतःकर्मण्योभवति द्वितीयंचरित्वायदन्य न्महापातकेभ्यःपा
पंकुरुतेतस्मान्मुच्यते तृतीयंचरित्वासर्वस्मादेनसोमुच्यतइतिमहापातकादपीत्यभिप्रेतम् मनुनाप्युक्तम् पराकोनामकृच्छ्रोयंस

र्वपापापनोदनइति हारीतेनाप्युक्तम् चांद्रायणंयावकश्चतुलापुरुषएववा गवांचैवानुगमनंसर्वपापप्रणाशनम् तथा गोमूत्रंगोम
यक्षीरदधिसर्पिःकुशोदकम् एकरात्रोपवासश्चश्वपाकमपिशोधयेत् तथानग्नकृच्छ्रमधिकृत्यतत्रैवोक्तम् एषकृच्छ्रोद्विरभ्यस्तः
पातकेभ्यःप्रमोचयेत् त्रिरभ्यस्तोयथान्यायंशूद्रहत्यांव्यपोहतीति उशनसोक्तम् यत्रोक्तंयत्रवानोक्तंमहापातकनाशनम् प्राजा
पत्येनकृच्छ्रेणशोधयेन्नात्रसंशयइति एतानिप्राजापत्यादीनिअनादिष्टेषूपपातकादिषुसकृदभ्यासापेक्षयाव्यस्तानिसमस्ता
निवायोजनीयानि तथाआदिष्टव्रतेष्वपिमहापातकादिषुअभ्यासापेक्षयायोजनीयानि अतएवोक्तंयमेन यत्रोक्तमित्यादि गौत
मेनाप्युक्तनिष्कृतीनांसंग्रहार्थंसर्वप्रायश्चित्तग्रहणंकृतम् तथायदपितेनैवोक्तं द्वितीयंचरित्वायदन्यन्महापातकेभ्यःपापंकुरुतेत-
स्मात्प्रमुच्यतइत्युक्त्वातृतीयंचरित्वासर्वस्मादेनसोमुच्यतइति तदपिमहापातकाभिप्रायमुक्तम् नतुक्षुद्रपातकाभिप्रायम् न
चमहापातकंमनूक्तनिष्कृतिकंसंभवति तस्मादुक्तनिष्कृतीनामपिप्राजापत्याद्योयोजनीयाः तत्रद्वादशवार्षिकव्रतेद्वादशद्वाद-
शदिनानिएकैकंप्राजापत्यंचपरिकल्प्यगण्यमानप्राजापत्यानांषष्ट्यधिकशतत्रयंद्वादशवार्षिकेवैकल्पिकमनुष्ठेयंभवति तद
शक्तौचतावत्योवाधेनवोदातव्याः तदसंभवेनिष्काणांषष्ट्यधिकशतत्रयंदातव्यम् तथास्मृत्यंतरं प्राजापत्यक्रियाशक्तौधेनुंद
द्याद्विचक्षणः धेनोरभावेदातव्यंमूल्यंतुल्यमसंशयम् मूल्यार्धमपिनिष्कंवातदर्धंवाशक्त्यपेक्षयादातव्यम् गवामभावेनिष्कं
स्यात्तदर्धंपादमेववेतिस्मरणात् मूल्यदानस्याप्यशक्तौतावतोवोदवासाःकार्याः तत्राप्यशक्तौगायत्रीजपःषट्त्रिंशल्लक्षसंख्या

कः कार्यः कृच्छ्रोयुतं तु गायत्र्या उदवासास्तथैव च धेनुप्रदानं विप्राय सममेतच्चतुष्टयमिति पराशरस्मरणात् यत्तु चतुर्विंशति
मतेभिहितं गायत्र्यास्तु जपन्कोटिं ब्रह्महत्यां व्यपोहति लक्षाशीतिं जपेद्यस्तु सुरापानाद्विमुच्यते पुनाति हेमहर्तारं गायत्र्या ल
क्षसप्ततिः गायत्र्याः षष्टिभिर्लक्षैर्मुच्यते गुरुतल्पगइति द्वादशवार्षिकतुल्यविधानतयोक्तम् नपुनरशक्तविषयमिति न विरोधः
एवमन्येपि कृच्छ्रोदेव्ययुतं चैव प्राणायामशतद्वयम् तिलहोमसहस्रं तु वेदपारायणं तथेत्यादयः प्रत्याम्नायाश्चतुर्विंशतिमन्वा
दिशास्त्राभिहिताः षष्ट्यधिकत्रिशतगुणितमहापातकेषु बोद्धव्याः अतिपातकेषु सप्तत्यधिकशतद्वयं प्राजापत्यानां कर्त्तव्यं तावं
तो वा धेन्वादयः प्रत्याम्नायाः पातकेषु साशीतिशतं प्राजापत्याः प्रत्याम्नायाः धेन्वादयस्तावंत एव वा तथा च चतुर्विंशतिमतेभिहितं
जन्मप्रभृति पापानि बहूनि विविधानि च कृत्वा वा ब्रह्महत्यायाः षडब्दं व्रतमाचरेत् प्रत्याम्नाये गवां देयं साशीतिधनिनाशतम् तथा ष्ट
दशलक्षाणि गायत्र्या वा जपेद्बुधइति इदमेव च द्वादशवार्षिके व्रते द्वादश द्वादशादिनैरेकैकप्राजापत्यकल्पनायां लिंगम् एवमुपपातके-
षु त्रैवार्षिकप्रायश्चित्तविषयभूतेषु नवतिप्राजापत्यास्तावंतः प्रत्याम्नायाः त्रैमासिकविषये पुनः सार्धसप्तप्राजापत्याः प्रत्याम्नायाश्च-
धेनूदवासादयस्तावंत एव मासिकव्रतविषये तु सार्द्धं प्राजापत्यद्वयम् तावानेव प्रत्याम्नायः चांद्रायणविषयभूतेषु पुनरुपपातकेषु
प्राजापत्यत्रयम् तदशक्तस्य प्रत्याम्नायस्तावानेव यत्तु नश्चतुर्विंशतिमतेभिहितम् अष्टौ चांद्रायणे देव्याः प्रत्याम्नायविधौ सदेति
तदपि धनिनः पिपीलिकामध्यादिचांद्रायणप्रत्याम्नायविषयम् मासानि कृच्छ्रविषयभूतेषु पुनरुपपातकेषु सार्द्धसप्तप्राजापत्याः प्र

त्याम्नायाश्च धेन्वादयस्तावंत एव प्राजापत्ये तु गामेकां दद्यात् सांतपने द्वयम् पराक तप्तकृच्छ्रातिकृच्छ्रे तिस्रस्तु गास्तथेति चतुर्विंशि
तिमतेभिधानात् एतच्चैकैकं ग्रासमश्नीयादित्यामलकपरिमितैकैकग्रासपक्षे वेदितव्यम् पाणिपूरान्नभोजनपक्षे पुनर्धेनुद्वयमेव प्रा
जापत्यस्य षडुपवासतुल्यत्वात् द्विगुणत्वाच्चातिकृच्छ्रस्य यद्यपि नवसु दिवसेषु पाणिपूरान्नभोजनं तथापि नैरंतर्येण द्वादशदिवसा-
नुष्ठाने क्लेशातिशय षडह्नोपवाससमान प्राजापत्य द्वयतुल्यत्वमेव प्राजापत्यस्य षडुपवासतुल्यत्वं युक्तमेव तथाहि प्रथमे त्र्यहे सा
यंतनभोजनत्रयनिवृत्तावेकोपवाससंपत्तिः द्वितीये त्र्यहे प्रातःकालभोजनत्रयवर्जने परस्य तथा अयाचितत्र्यहेपि सायंतनभोजन
त्रयवर्जनेन्यस्येत्येवं नवभिर्दिनैरुपवासत्रयम् ततश्चांत्यत्र्यहोपवासत्रयमिति युक्तं षडुपवासतुल्यत्वम् ऋषभैकादशगोदानस
हितत्रिरात्रोपवासात्मकगोव्रते तु सार्द्धैकादश प्राजापत्यास्तावत्संख्याकाश्चोपवासादयः प्रत्याम्नायाः मासपयोव्रते तु सार्द्धं प्राजाप
त्यद्वयम् पराकात्मके तूपपातकव्रते प्राजापत्यत्रये पराकतप्तातिकृच्छ्रस्थाने कृच्छ्रत्रयं चरेत् सांतपनस्य चाप्यर्द्धमशक्तो व्रतमा
चरेदिति षट्त्रिंशन्मतेभिधानात् चांद्रायणपराककृच्छ्रातिकृच्छ्रास्तु प्राजापत्यत्रयात्मकद्वादशवार्षिकव्रतस्थाने विंशत्युत्तरशतसं-
ख्या अनुष्ठेयाः तत्सत्याम्नायास्तु धेन्वादयस्त्रिगुणाः अतिपातकेषु नवतिसंख्याकाश्चांद्रायणादयः तत्समेषु पुनः पातकपदाभि
धेयेषु षष्टिसंख्याः उपपातकेषु त्रैवार्षिकविषयेषु त्रिंशत्संख्याः त्रैमासिकेषु गोव्रतस्थानेषु गोमूत्रस्थानादीनि कर्त्तव्यता बाहुल्या-
च्चांद्रायणादित्रयम् मासिकव्रते तु योगीश्वरोक्त एकमेव चांद्रायणम् धेनूदवासादिप्रत्याम्नायस्तु सर्वत्र त्रिगुण एव प्रकीर्णकेषु पुनः

प्रतिपदोक्तप्रायश्चित्तानुसारेण प्राजापत्यं पादादिकस्य योजनीयम् आवृत्तौ पुनश्चांद्रायणादिकमिति एतद्विगवलंबनेनान्यत्रापि-
कल्पना कार्या यत्तु नर्त्तहस्तिनोक्तम् जन्मप्रभृति यत्किंचित्पातकं चोपपातकम् तावदावर्त्तयेत्कृच्छ्रं यावत्षष्टिगुणं भवेदिति त-
द्गुरुपरदार इति गौतमोक्तद्वैवार्षिकसमानविषयम् तथा त्रैमासिकादिविषयभूतोपपातकावृत्तिविषयं वा पातकपदाभिधेयचांडाला-
दिस्त्रीगमने द्विरभ्यासविषयं च तत्र ज्ञानात्कृच्छ्राब्दमुद्दिष्टमज्ञानादेंदवद्वयमिति सकृद्बुद्धिपूर्वगमने कृच्छ्राब्दविधानात् तदभ्यासे द्वि-
वर्षतुल्यषष्टिकृच्छ्रविधानं युक्तमेव यत्तु सुमंतुनोक्तम् यदप्यसकृदभ्यस्तं बुद्धिपूर्वमघं महत् तच्छुद्ध्यत्यब्दकृच्छ्रेण महतः पातका-
दृत इति तदप्युपपातकाद्यावृत्तिविषयं तथाऽज्ञानादेंदवद्वयमिति यमोक्तैंदवद्वयविषयभूतपातकावृत्तिविषयं वा यस्तु तपस्यस-
मर्थो धान्यसमृद्धश्च स कृच्छ्रादिव्रतानि द्विजाग्र्येभ्यो भोजनदानेन संपादयेत् तथा हि स्मृत्यंतरं कृच्छ्रोऽयं चातिकृच्छ्रे त्रिगुणमहरह-
स्त्रिंशदेव तृतीये चत्वारिंशच्चतस्रो त्रिगुणितगुणिता विंशतिः स्यात्पराके कृच्छ्रे सांतापनाख्ये भवति षडधिका विंशतिः सैव हीना द्वाभ्यां चा-
न्द्रायणे स्यात्तपसि कृशबलो भोजयेद्द्विप्रमुख्यानिति अहरहरिति सर्वत्र संबंधनीयम् तृतीयः कृच्छ्रातिकृच्छ्रः अत्र प्राजापत्यादिक-
संकल्पनया विद्वद्विप्राणां षष्टिभोजनं भवति यत्तु चतुर्विंशतिमतेभिहितम् विप्रा द्वादश वा भोज्याः पावकेष्टिस्तथैव च अन्यावापा-
वनीकाचित्स मान्याहुर्मनीषिण इति प्राजापत्यस्थाने द्वादशानां विप्राणां भोजनमुक्तं तन्निर्धनविषयम् यच्चांद्रायणस्थापि तत्रैव प्रत्या-
म्नायेनोक्तम् चांद्रायणं मृगारिष्टिः पावनेष्टिस्तथैव च मित्रविंदा पशुश्चैव कृच्छ्रं मासत्रयं तथा नित्यनैमित्तिकानां च काम्यानां चैव

कर्मणाम् इष्टीनां पशुबंधानाम भावे चरवः स्मृता इति तदपि चांद्रायणाशक्तस्य यत्तु कृच्छ्रं मासत्रयं तथेति कृच्छ्राष्टकं भृत्याम्ना- तं तदपि बलरमूर्खविषयम् चांद्रायणं त्रिभिः कृच्छ्रैरिति दर्शितत्वादलमतिप्रसंगेन प्रकृतमनुसरामः यस्त्वभ्युदयकामो धर्मा- र्थकाम्यनियोगनिष्पत्त्यर्थं एतच्चांद्रायणमनुतिष्ठति न पुनः प्रायश्चित्तार्थं मसौ चंद्रसालोक्यं स्वर्गविशेषं प्राप्नोति एतच्च संवत्सराद्य- त्यभिप्रायेण एकमासाद्विपापो विपाप्मा सर्वमेनो हंति द्वितीयमासाद्दश पूर्वान् दशापरान् आत्मानं चैकविंशं पंक्तिं च पुनाति

कृच्छ्रकृत्धर्मकामस्तु महतीं श्रियमाप्नुयात् तथा गुरुक्रतुफलं प्राप्नोति सुसमाहितः ३२८

संवत्सरं चाप्त्वा चंद्रमसः सलोकतां व्रजतीति गौतमस्मरणात् ३२७ किंचाह यस्त्वभ्युदयकामः प्राजापत्यादिकृच्छ्रानुतिष्ठति स महतीं राज्यादिलक्षणां श्रियमनुभवति यथा गुरुक्रतूनां राजसूयादीनां कर्त्ता तत्फलं स्वराज्यादिलक्षणं महत्फलं लभते तथायम् अपि समाहितः सकलांगकलापमविकलमनुतिष्ठतीति फलमिह प्रकाशनार्थं क्रतुदृष्टांतकीर्त्तनम् स सुसमाहित इत्यनेनाविकलशा

स्त्रार्थानुष्ठानवत्काम्यकर्मतयांगवैकल्ये फलासिद्धिं द्योतयति अतो नान्यत्र प्रायश्चित्तेष्वेव यावत्संभवांगानुष्ठानमंगीकरणीयमि
ति दूरोत्सारितं प्रत्याम्नायोपादानम् कृच्छ्राद्यनुष्ठानावृत्तौ त्वधिकारिणः फलावाप्तिः कर्मण्यारंभभाव्यत्वादिति न्यायलभ्यास्थितेनेवे
ति तदत्र विवक्षितम् ३२८ प्रागुदिताखिलार्थोपसंहारव्याजेन धर्मशास्त्रसाधारणादिविधीन् सार्थवादान् प्रार्थनावरदानरूपेण प्र-

श्रुत्वैतानृषयो धर्मान्याज्ञवल्क्येन भाषितान् इदमूचुर्महात्मानं योगींद्रममितौजसम् ३२९

तिपादयितुमाह अत्र हि वर्णाश्रमादिव्यावृत्त्या धर्माः षट् प्रकाराः प्रतिपादिताः तानखिलान् योगीश्वरप्रतिपादितान् ऋषयः श्रुत्वा प्रहर्षो
त्फुल्ललोचनास्तं महिमगुणशालिनमचिंतनीयशक्तिविषयमिदमभिधास्यमानमूचिवांसः ३२९ ॐ ॐ ॐ ॐ

इत्यमृज्वर्थैः श्लोकैः सामश्रवःप्रभृतयोनेकधाप्रार्थयंनेस्म ३३० ३३१ ३३२ ३३३ अपरामपिप्रार्थनामाह यस्त्विदंधर्मशास्त्रं प्रतिपर्वविद्वान्द्विजान्श्रावयेत् तस्याश्वमेधफलंभवेदितिश्रावणविध्यर्थवादः तदेतदस्मत्प्रार्थितमर्थंस र्वमित्रभवाननुमन्यताम्

यइदंधारयिष्यंतिधर्मशास्त्रमतंद्रिताः इहलोकेयशःप्राप्य तेयास्यंतित्रिविष्टपम् ३३० विद्यार्थीप्राप्नुयाद्विद्यां धनकामोधनंतथा आयुःकामस्तथावायुःश्रीकामोमहतींश्रियम् ३३१ श्लोकत्रयमपित्वस्माद्यःश्राद्धेश्रावयि ष्यति पितृणांतस्यतृप्तिःस्यादक्षय्यानात्रसंशयः ३३२ ब्राह्मणःपात्रतांयातिक्षत्रियोविजयीभवेत् वैश्यश्चधा न्यधनवानस्यशास्त्रस्यधारणात् ३३३ यइदंश्रावयेद्विद्वान्द्विजान्पर्वसुपर्वसु अश्वमेधफलंतस्यतद्भवाननु मन्यताम् ३३४ श्रुत्वैतद्याज्ञवल्क्योपिप्रीतात्मामुनिभाषितम् एवमस्त्वितिहोवाचनमस्कृत्वास्वयंभुवे ३३५

३३४ वरदानमाह एतदृषिभिर्भाषितंश्रुत्वायोगींद्रोपिनिर्मितधर्मशास्त्रसाधारणादिफलप्रार्थनोन्मीलितमुखपंकजःस्वयंभुवेब्रह्मणे नमस्कृत्वाप्रणम्यभवत्प्रार्थितंसकलमित्थंभवत्वित्येवकिलभगवान्बभाषे ३३५ इतिश्रीभारद्वाजपद्मनाभभट्टोपाध्यायात्मजस्य

श्रीमत्परमहंसपरिव्राजकविज्ञानेश्वरभट्टारकस्य कृतौ ऋजुमिताक्षरायां याज्ञवल्क्यधर्मशास्त्रविवृत्तौ तृतीयोऽध्यायः ३ ॥ ७ ॥
अथात्राध्यायानुक्रमणिका लिख्यते तत्राद्यं सूतकप्रकरणम् १ आपद्धर्मप्रकरणं २ वानप्रस्थप्रकरणं ३ अध्यात्मप्रकरणं ४ ततः
प्रायश्चित्तप्रकरणं ५ तत्रादौ कर्मविपाकः ६ महापातकादिनिमित्तपरिगणनम् ७ महापातकप्रायश्चित्तान्यातिदेशिकसहितानि
८ उपपातकप्रायश्चित्तानि ९ प्रकीर्णकप्रायश्चित्तप्रकरणं १० पतितत्यागविधिः ११ व्रतग्रहणविधिः १२ रहस्यप्रायश्चित्ताधिकारः
१३ कृच्छ्रादिलक्षणम् १४ इति प्रकरणानि उत्तमोपपदस्येयं शिष्यस्य कृतिरात्मनः धर्मशास्त्रस्य विवृतिर्विज्ञानेश्वरयोगिनः
१ इति याज्ञवल्क्यमुनिशास्त्रगता विवृत्तिर्न कस्य विहिता विदुषः प्रमिताक्षरापि विपुलार्थवती परिषिंचति श्रवणयोरमृतम् २ गंभी
राभिः प्रसन्नाभिर्वाग्भिर्न्यस्ता मिताक्षरा अनल्पार्थाभिरल्पाभिर्विवृतिर्विहिता मया ३ नासीदस्ति भविष्यति क्षितितले कल्याणक-
ल्पं पुरं नो दृष्टः श्रुत एव वा क्षितिपतिः श्रीविक्रमार्कोपमः विज्ञानेश्वरपंडितो न भजते किंचान्यदन्योपम आकल्पं स्थिरमस्तु कल्पलतिकाक
ल्पं तदेतत्त्रयम् ४ स्रष्टा वाचां मधुरवपुषां विद्वदाश्चर्यसीम्नां दाता नार्थानामनिशयजुषामर्थिसार्थार्थिनायाः ध्याता मूर्त्तेर्मुररिविजयिनो-
जीवतादार्कचंद्रं जेतारीणां तनुसहभुवां तत्त्वविज्ञाननाथः ५ आसेतोः कीर्त्तिराशेरघुकुलतिलकस्या च शैलाधिराजादा च प्रत्यक्पयो
धेश्चपलतिमिकुलोत्तुंगरिंगत्तरंगात् आ च प्राचः समुद्रान्नतनृपतिशिरोरत्नभाभासुरांघ्रिः पायादाचंद्रतारं जगदिदमखिलं विक्रमा
दित्यदेवः ६ अंतर्मुखानय दिखानि तपस्ततः किं नांतर्मुखानि यदि खानि तपस्ततः किम् अंतर्बहिर्यदि हरिस्तपस्ततः किं नांतर्बहि

यदिहरिश्चतपस्ततःकिम् ७ अथप्रायश्चित्ताध्यायानुक्रमणिका सुवर्णस्तेयप्रायश्चित्तप्रकरणम् १ गुरुतल्पगप्रायश्चि
त्तं २ संसर्गिप्रायश्चित्तं ३ महापातकप्रायश्चित्तप्रकरणम् ४ गोवधप्रायश्चित्तं ५ पारदार्यप्रायश्चित्तम् ६ क्षत्रियादिवधप्रकर
णम् ७ स्त्रीवधप्रायश्चित्तं ८ उपपातकप्रायश्चित्तं ९ भक्ष्याभक्ष्यप्रायश्चित्तं १० प्रकीर्णकप्रायश्चित्तं ११ प्रकाशप्रायश्चित्तप्रक
रणं १२ सुवर्णस्तेयप्रायश्चित्तं १३ गुरुतल्पगमनप्रायश्चित्तं १४ महापातकरहस्यप्रायश्चित्तं १५ रहस्यप्रायश्चित्तं १६ महासां
तपनकृच्छ्रं १७ पर्णकृच्छ्राख्यंव्रतं १८ प्राजापत्यकृच्छ्रं १९ अतिकृच्छ्रं २० कृच्छ्रातिकृच्छ्रं २१ सौम्यकृच्छ्रं २२ चांद्रायणव्रत
म् २३ इतिप्रायश्चित्तसंख्या ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ

पंचाष्टसप्तभूशाकेरुधिरोद्गारिवत्सरे मधुमासासितेतिथ्यांहैरंब्यांपूर्णतामियात् १ इयंमिताक्षरासुंबय्याख्यराजधान्यांहेगिष्टेलु-
पाड्कयैर्वापूर्शोटिभिःस्वशिलायंत्रेमुद्रिता इतिसमाप्तः ॐ ॐ ॐ ॐ ॐ

इति मिताक्षरा प्रायश्चित्ताख्यस्तृतीयोऽध्यायः समाप्तः

